वृद्धवाग्भटत्वेन, अष्टाङ्गसंग्रहसंहिता मध्यवाग्भटत्वेन, अष्टाङ्गहृदयसंहिता लघुवाग्भटत्वेन स्वल्पवाग्भटत्वेन वा, रसरत्नसमुच्चयो रसवाग्भटत्वेन च कथमुच्यन्ते, तत्सर्व्वमेव मूलग्रन्थस्य २७२-२८२ पृष्ठेषु विचारितम्।

भाष्यदीपिकायां भर्त्तृहरिराह—

"हन्तेः कर्म्मण्युपष्टम्भात् प्रातुमर्थे तु सप्तमीम्।
चतुर्थीबाधिकामाहु श्चूर्णिभागुरिवाग्भटाः ॥" इति।

जगदीशतर्कालंकारकृतशब्दशक्तिप्रकाशिकायाः कारकप्रकरणे श्लोकोऽयं भर्त्तृहरे र्नामग्राहं समुद्धृतः। षष्ठखृष्टशताब्द्यां भर्त्तृहरिणेवाद्वितीयशाब्दिकपण्डितेन सुप्राचीनाभ्यां भागुरिमुनि-चूर्णिकृत्पतञ्जलिमुनिभ्यां सह वैयाकरणवाग्भटस्य यतो नामोल्लेखः कृतस्ततो ह्यवगम्यते यद् वाग्भटस्तस्माद् महता कालेन प्राचीन इति। अपि चाष्टाङ्गसंग्रहादुपपद्यते यद् द्वितीयवाग्भटो महाराज-कनिष्कपौत्त्रस्य तृतीयखृष्टशताब्दीयस्य वासुदेवापरनामधेयस्य वसुष्कस्य समकालिक एवेति। एवंविधां चिन्ताधारां समाश्रित्य वाग्भटद्वयस्य स्थितिकालो निर्णीतः।

अष्टाङ्गसंग्रहो गद्यपद्यमयोऽष्टाङ्गहृदयस्तु पद्यमय इति हेतो र्हैर्णले-( Dr. Hoernle )-कीथ् (Keith)-प्रभृतिपाश्चात्यपण्डिता अष्टाङ्गसंग्रहकृद्वाग्भटाष्टाङ्गहृदयकृद्वाग्भटयोरभिन्नत्वं न मन्यन्ते। ईदृशं युक्तिजालमसारमेव प्रतिभात्यस्माकम्। अतो रचनाशैलीं भावव्यक्तिं पुष्पिकाद्वयञ्च परीक्ष्य ग्रन्थयोरुभयोरेककर्त्तृकत्वमस्माभि र्निरूपितम्।

अष्टाङ्गसंग्रहस्य शशिलेखानामकटीकाकार इन्दुपण्डितः काशिकान्यासोपर्य्यनुन्यासप्रणेता चेन्दुमित्र इति द्वयमेवाभिन्नमित्युक्तमस्माभिरुभयोरेवैकस्मिन् समये विद्यमानत्वाद् व्याकरणविषयकाणां तयोः सिद्धान्तानां च तुल्यरूपत्वात्।

इन्दुमित्रो जेज्जटश्च वाग्भटस्य साक्षाच्छिष्यावास्तामिति केचिद् वदन्ति, परं त्वेतेषां स्थितिकालानां दूरं व्यवहितत्वाद् मतवादोऽयमस्माभिः प्रत्याख्यातः। विषयेऽस्मिन्नस्माकं युक्तय उक्तयश्च मूलग्रन्थे द्रष्टव्याः।

रसरत्नसमुच्चयो वाग्भटप्रणीत इति प्रसिद्धिरस्ति। पुष्पिकातोऽप्यस्य सत्यतोपपद्यते। वाग्भटस्य समये यानि रहस्यान्यविदितान्यासन्, ग्रन्थेऽस्मिंस्तेषां विवृतत्वात् कीथ-( Keith )-प्रभृति-पाश्चात्यपण्डितै र्नित्यनाथे चतुर्थवाग्भटे वा ग्रन्थस्यास्य कर्तृत्वं समारोपितम्। अस्माभिस्तु मतवादस्यास्य प्रत्याख्यानपूर्व्वकं मूलग्रन्थस्य वाग्भटप्रणीतत्वमुक्तम्। चतुर्द्दशशताब्दीयेन सोमदेवेन ग्रन्थस्यास्य कालोपयोगिप्रतिसंस्कारं विधाय मूलकारवाग्भटनाम्नैवायं प्रचारितः। न ह्येतत् साहित्यचौर्य्यं ( literary forgery ) यत एतेन सोमदेवस्य महान् स्वार्थत्यागः प्रतिपाद्यते।

११-१२ खृष्टशताब्दीयवैद्यसंहिताकृद्वाभटस्य वाभटव्याकरणमभिलक्ष्य केचिद् वाग्भटं १२ खृष्टशताब्दीयं वदन्ति। जगदीशकृतशब्दशक्तिप्रकाशिकायाः समासप्रकरणारम्भे स्वातन्त्र्येण वाभटस्य नामोल्लेखो वर्त्तते। तत्र लिखितमस्ति—

"पूर्व्वमध्यान्त्यसर्व्वान्यपदप्राधान्यतः पुनः।
प्राच्यैः पञ्चविधः प्रोक्तः समासो वाभटादिभिः॥" इति।

वाभटव्याकरणं वाग्भटव्याकरणात् स्वतन्त्रो ग्रन्थ इति हेतोः प्रागुक्तप्रातिकानां मतवादः प्रत्यादिष्टः।

चरकसुश्रुतवाग्भटानां वृत्तान्तान् प्राधान्येनोपजीव्य रचितेऽपि ग्रन्थेऽस्मिंश्चरकादीनां ग्रन्थेषु येषाम् ऋषिमुनीनां प्रमाणपुरुषाणाञ्च नामान्युपलभ्यन्ते तेषां संक्षिप्तपरिचया यथासम्भवं प्रदत्ताः। अपि च तेषां मूलग्रन्थानां भाष्यकार-वार्त्तिककार-वृत्तिकार-टीकाकारादीनामपि वृत्तान्ता

अत्रोपनिबद्धा वर्त्तन्ते। अतो वृद्धत्रयी भवत्येक ऐतिहासिको ग्रन्थः। ऐतिहासिकग्रन्थत्वेऽप्ययं प्रकरणग्रन्थभेदविशेषो भवति। यतोऽस्य ग्रन्थस्योपकरणानि प्रायशो मूलग्रन्थेभ्यः संगृहीतानि। तथा च शिष्टवचनम्—

"शास्त्रैकदेशसंवद्धं शास्त्रकार्य्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः॥" इति।

अत्राधुना सुधिय एव प्रमाणम्।

अस्य ग्रन्थस्य पाण्डुलिपिरचनानन्तरमतिक्षीणदृष्टिरहं सञ्जातः। अतः पाठलेखनादिकार्य्यं ममाधुना कथमपि न सम्भवति। दिष्ट्या तु मम सोदरकल्पेनोदारहृदयेन ब्राह्मणकुलगौरवेण विद्वद्वर्य्येण एम्-ए, डि-लिट् इत्युपाधिमता श्रीमत्क्षितीशचन्द्रचट्टोपाध्यायशास्त्रिमहोदयेन स्वतःप्रवृत्त्या पाण्डुलिपिस्थितविषयाणां न्यूनताधिक्यपरिवर्त्तनप्रस्तावपूर्व्वकं मुद्रणपत्राणां परीक्षणसंशोधनभारस्य गृहीतत्वाद् आजीवितमृणं मे तस्मै स्वीकर्त्तव्यम्। तस्य प्रियशिष्येण मम कनिष्ठपुत्त्रकल्याणभाजनश्रीमद्भारतीविकाशहालदारेणापि मुद्रणपत्रादीनां संशोधनादिना सविशेषमुपकृतोऽहम्। अनयोः सर्व्वाङ्गीणकुशलं भगवच्चरणेऽहं प्रार्थये।

'निउ-महामाया'-नामकमुद्रणालयस्य तथा च तत्रत्यसुयोग्यकर्म्मिश्रीमत्सुशीलचन्द्रपालस्याविचलितधैर्य्येण कर्म्मकौशलेन च ग्रन्थमुद्रणं सुकरं सञ्जातम्। मम पुत्त्रकल्पकल्याणास्पदश्रीमज्जीवनकृष्णदासस्य चागणितक्लमपरिश्रमेणाचिरं ग्रन्थप्रचारोऽयं सम्भवति। एषाञ्च मङ्गलं विदधातु परमकारुणिकः परमेश्वरः।

ॐ नम श्चण्डिकायै नमः ।

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ १।४२
दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्व्वोपकारकरणाय सदार्द्रचित्ता ॥ ४।१६
सर्व्वमङ्गलमाङ्गल्ये शिवे सर्व्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ११।९
शरणागतदीनार्त्तपरित्राणपरायणे ।
सर्व्वस्यार्त्तिहरे देवि नारायणि नमोऽस्तु ते ॥ ११।११
सर्व्वस्वरूपे सर्व्वेशे सर्व्वशक्तिसमन्विते ।
भयेभ्य स्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ ११।२३
रोगानशेषानपहंसि तुष्टा
रुष्टा तु कामान् सकलानभीष्टान् ।
त्वामाश्रितानां न विपन्नराणां
त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ ११।२८
सर्व्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ।
एवमेव त्वया कार्य्यमस्मद्वैरिविनाशनम् ॥ ११।३६

ॐ नम श्चण्डिकायै नमः ।

# ग्रन्थधृतशास्त्रकृतां नामसूची ।

सङ्केताः ।

खृश = खृष्टशताब्दीयः, खृष्टशताब्दीया, खृष्टशताब्दीयं वा ।

खृपूश = खृष्टपूर्व्वशताब्दीयः इत्यादि ।

संग्रहः = अष्टाङ्गसंग्रहः ।

मध्यवाग्भटः, मध्यसंहिता, संग्रहसंहिता वा = अष्टाङ्गसंग्रहसंहिता ।

लघुवाग्भटः लघुसंहिता, स्वल्पवाग्भटः, स्वल्पसंहिता हृदयं वा = अष्टाङ्गहृदयसंहिता ।

रसवाग्भटः = रसरत्नसमुच्चयः ।

"स्तुवन्ति गुर्व्वीमभिधेयसम्पदं
विशुद्धिमुक्तेरपरे विपश्चितः।
इति स्थितायां प्रतिपूरुषं रुचौ
सुदुर्लभाः सर्व्वमनोरमा गिरः॥"

ॐ

# उत्सर्गः

प्रतिष्ठापयितुं धर्मं पुन र्वङ्गेषु वैदिकम् ।
ये पञ्च ब्राह्मणा मुख्या आहूताः कान्यकुब्जतः ॥
तेषु यो दक्षनामासीत् क्रियादक्षश्च काश्यपः ।
सम्भवस्तस्य वंशेऽभूच्चण्डीवरतपस्विनः ॥
जातः पुण्ये कुले तस्य साधकस्य महात्मनः ।
आगमनिगमाचार्यो भवानीदासनामकः ॥
गुप्तावधूत-पूतात्म-भुवनेश्वरकन्यकाम् ।
उमाख्यामुपयेमे स कालीकुले सुसाधकः ॥
कालीघट्ट-महापीठ-सेवाभृदन्वयस्य तौ ।
अभूतां पितरावाद्यावदितिकश्यपौ यथा ॥
उमादेव्यां समुत्पन्नो राघवेन्द्रो महामतिः ।
तत्पुत्रो रामगोपालस्ततोऽभूद्रामवल्लभः ॥
रमानाथस्ततो जातः सातुरामस्तदात्मजः ।
चितां यस्य समारुह्य पत्या सह मृता सती ॥
आनन्दराम इत्याख्यस्तयोः पुण्यवतोः सुतः ।
हरचन्द्रो द्विजश्रेष्ठो यो हि तस्मादजायत ॥
केनारामो हि तत्पुत्रस्तातो मे शक्तिसाधकः ।
जननी मम हैमाङ्गी पूज्यौ तौ स्वर्गतावुभौ ॥

**नत्वा तातं विमलचरितं मातरं पूतशीलां**
**लब्ध्वा ताभ्यां द्विजगुरुपदेनाशिषं वाञ्छितार्थाम् ।**
**बद्धा स्रग् या त्रिविधकुसुमै र्नाम वृद्धत्रयीति**
**श्रद्धाभक्तिप्रणतशिरसोत्सृज्यते सेयमाभ्याम् ॥**

इति ।

# मङ्गलाचरणम्

वेदमर्मसमुद्धर्ता सम्प्रदायप्रवर्तकः ।
आयुर्वेदोपदेष्टा यो ब्रह्माणं तं नमाम्यहम् ॥
विष्णुरुद्रौ तथा दक्षः क्रियादक्षः प्रजापतिः ।
ये साक्षात्कृतधर्माणस्तांश्च सर्वान् नमाम्यहम् ॥
भास्करं ब्रह्मणः शिष्यं नासत्यौ पद्ममालिनौ ।
प्रवक्तारं तयोः शिष्यं वन्दे नमुचिसूदनम् ॥
धन्वन्तरिं च स्वर्वैद्यं शिष्यं शच्याः पतेः कविम् ।
भरद्वाजमथात्रेयं श्रुतर्षिं प्रणमाम्यहम् ॥
अग्निवेशस्तथा भेलो जतूकर्णः पराशरः ।
क्षारपाणिश्च हारीतश्चेति तन्त्रकृतो हि षट् ॥
तेऽभूवन्नुपदेष्टार आयुर्वेदमहानिधेः ।
आत्रेयस्य प्रियाः शिष्या मुनींस्तान् प्रणमाम्यहम् ॥
नकुलं सहदेवार्की च्यवनं जनकं बुधम् ।
जाबालं जाजलिं पैलं कवथं कलसीसुतम् ॥
चरकं शेषनागञ्च भगवन्तं पतञ्जलिम् ।
धन्वन्तर्युपनामानं दिवोदासं नृणां वरम् ॥
काशीराजं सुसिद्धार्थं सुश्रुतञ्च महामतिम् ।
एतानारोग्यशास्त्राणामाचार्यान् प्रणमाम्यहम् ॥

**चरकं सुश्रुतं चैव वाग्भटञ्च मुनित्रयम् ।**
**संस्मृत्य श्रद्दधानेन वृद्धत्रयी विरच्यते ॥**

इति ।

# वृद्धत्रयी

आयुर्वेदो नामोपवेदविशेषः। कस्य वेदस्येति जिज्ञासाशङ्कायां भगवांश्चरक आह—'तत्र चेत् प्रष्टारः स्युश्चतुर्णां...वेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः? तत्र भिषजा पृष्टेनैवं चतुर्णां वेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या। वेदो ह्याथर्वणः' (सू० ३० अ०) इति। आयुर्वेदमधिकृत्य कश्यप-पराशर-चरक-सुश्रुत-वाग्भटादीनां संहितासु पुराणादौ च ये संवादा दृश्यन्ते त इहोपनिबध्यन्ते।

काश्यपसंहितायां स्मर्यते—'स्वयम्भू ब्रह्मा प्रजाः सिसृक्षुः प्रजानां परिपालनार्थमायुर्वेदमग्रेऽसृजत् सर्व्ववित् ततो विश्वानि भूतानी'ति। पुनरपि स भगवान् परावरतत्त्वज्ञः कश्यप आह—'प्रागेव स्रष्टा स्वयम्भूः सस्मार समग्रमायुर्वेदं ततोऽन्ये' इति। आत्रेयशिष्यपराशरमतेन वैद्य-सम्प्रदायप्रवर्त्तका अष्टादशैव, ते च यथा—ब्रह्मा रुद्रो भास्करो दक्षोऽश्विनौ यम इन्द्रो धन्वन्तरि र्बुधश्च्यवन आत्रेयोऽग्निवेशो भेलो जतूकर्णः पराशरः क्षारपाणि र्भरद्वाजश्चेति।

कल्याणशंसिनो भगवतश्चरकस्य मतेन ब्रह्मणः प्रजापतिः प्रजापतेरश्वि-द्वयमश्विद्वयादिन्द्रस्ततो भरद्वाजस्तत आत्रेयस्ततो वह्निवेशश्चेत्येवंक्रमेण शास्त्रप्रचारो बभूव। तथा हि तत्संहितायाम्—

'ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः॥
अश्विभ्यां भगवाञ्छक्रः प्रतिपेदे ह केवलम्।
ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत्॥'

(सू० १।४-५) इति।

सुश्रुतसंहितायां दिवोदासः प्राह—'ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे तस्मादश्विनावश्विभ्यामिन्द्र इन्द्रादहमि'ति। स पुनश्चाह—'अनुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रञ्च कृतवान् स्वयम्भू'रिति (सु—१।६)।
अष्टाङ्गसंग्रहे सिंहगुप्ततनयो वृद्धवाग्भटस्त्वाह—

'आयुर्वेदामृतं सार्वं ब्रह्मा बुद्ध्वा सनातनम्।
ददौ दक्षाय, सोऽश्विभ्यां, तौ शतक्रतवे, ततः॥
धर्मार्थकाममोक्षाणां विघ्नकारिभिरामयैः।
नरेषु पीड्यमानेषु पुरस्कृत्य पुनर्वसुम्॥
धन्वन्तरि-भरद्वाज-निमि-काश्यप-कश्यपाः।
महर्षयो महात्मानस्तथाऽऽलम्बायनादयः॥
शतक्रतुमुपाजग्मुः शरण्यममरेश्वरम्।
तान् दृष्ट्वैव सहस्राक्षो निजगाद यथागमम्॥
आयुषः पालनं वेदमुपवेदमथर्वणः।
कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषैः॥
गतमष्टाङ्गतां पुण्यं बुबुधे यं पितामहः।
गृहीत्वा ते तमाम्नायं प्रकाश्य च परस्परम्॥
आययु र्मानुषं लोकं मुदिताः परमर्षयः।
स्थित्यर्थमायुर्वेदस्य तेऽथ तन्त्राणि चक्रिरे॥
कृत्वाऽग्निवेशहारीतभेडमाण्डव्यसुश्रुतान्।
करालादींश्च तच्छिष्यान् ग्राहयामासुराद‍ृताः॥
स्वं स्वं तन्त्रं ततस्तेऽपि चक्रुस्तानि कृतानि च।
गुरून् संश्रावयामासुः सर्षिसङ्घान् सुमेधसः॥
तैः प्रशस्तानि तान्येषां प्रतिष्ठां भुवि लेभिरे।'

(सू० १।३-१२) इति।

अष्टाङ्गहृदयेऽपि तत्रभवता संक्षेपेणोक्तम्—

'ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत् ।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन् ॥
तेऽग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे ॥'

( सू० १।३-४ ) इति ।

भास्करसंहितादिस्रष्टुः सर्वव्याधिहर्त्तु स्त्रिमूर्त्तिधाम्नो विवस्वत आयुर्वेद-प्रतिपत्तौ सम्प्रदायो जोषमास्ते। पौराणिकास्तु तं वैद्यागमिकमाहुः। ऋग्वेदोऽपिताननुकूलयति। तत्राम्नायते—'हृद्रोगं मम सूर्य हरिमाणं च नाशय' ( १।५०।११-१३ ) इति। भवति च श्रुत्यनुवादिनी स्मृतिरपि—'आरोग्यं भास्करादिच्छेदि'ति। जनश्रुतिश्च वर्तते सूर्यशतकक्कुद्-मयूर-भट्टादयः सूर्योपासनेन दुश्चिकित्सेभ्यो व्याधिभ्योऽमुच्यन्तेति।

विवस्वानिति भास्करस्य नामान्तरं भवति। मनुरश्विनीपुत्रौ यमश्चेत्येते विवस्वतः पुत्रा एव। तेन संज्ञायां मनुरश्विन्यां दस्रौ सरण्य्वां यमश्चोत्-पादिताः। वैद्यागमे मनोरौदासीन्याद् दस्रौ यमश्च पितुर्विवस्वत आयुर्वेद-शिक्षां लेभिरे।

बहवो लोका भास्करं सूर्यनारायणं व्याहरन्ति। यतो विष्णुधर्मोत्तरे शिववाक्यमस्ति—

मया समर्पितं तेजः सकलं त्वयि भास्कर।
मत्तस्त्वं न हि भिन्नोऽसि न च देवाज्जनार्दनात् ॥
अहं विष्णु र्भवान् विष्णु र्ब्रह्मा विष्णुः प्रभाकर।
अस्माकं सकलं धाम त्वयि तिष्ठति भास्कर ॥'

( १।३०।१३-१४ ) इति।

भास्करसंहिता कुत्रापि नेदानीमुपलभ्यते। भास्करसिद्धान्तस्तु १६५६-खृष्टाब्दीय-कवीन्द्रसूच्यामुल्लिखितो वर्तते। नानाविधान्यौषधानि भास्करनाम्ना

प्रचलन्ति, यथा—भास्करलवणं भास्करचूर्णमुदर्करस इत्येवमादीनि। श्रूयते हि भास्करारुणयो र्ज्ञानभास्करनामको वैद्यकग्रन्थः इंलण्डदेशस्थे 'इण्डिया अफिस्'नामके ग्रन्थागारे सुरक्षितो वर्त्तते।

पुराणमतेन भास्करस्य षोडश शिष्या प्रसिद्धा आसन्। तथा हि ब्रह्मवैवर्तपुराणीयषोडशाध्याये स्मर्यते—

'ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः।
विचिन्त्य तेषामर्थञ्चैवायुर्वेदं चकार सः॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः।
स्वतन्त्रसंहितां तस्माद् भास्करश्च चकार सः॥
भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम्।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः॥
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च।
व्याधिप्रणाशबीजानि साध्वि मत्तो निशामय॥
धन्वन्तरि र्दिवोदासः काशीराजोऽश्विनीसुतौ।
नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः॥
जाबालो जाजलिः पैलः कवथोऽगस्त्य एव च।
एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः॥
चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोरमम्।
धन्वन्तरिश्च भगवांश्चकार प्रथमे सति॥
चिकित्सादर्पणं नाम दिवोदासश्चकार सः।
चिकित्साकौमुदीं दिव्यां काशीराजश्चकार सः॥
चिकित्सासारतन्त्रं च भ्रमघ्नं चाश्विनीसुतौ।
तन्त्रं वैद्यकसर्वस्वं नकुलश्च चकार सः॥

चकार सहदेवश्च व्याधिसिन्धुविमर्दनम् ।
ज्ञानार्णवं महातन्त्रं यमराजश्चकार सः ॥
च्यवनो जीवदानं च चकार भगवानृषिः ।
चकार जनको योगी वैद्यसन्देहभञ्जनम् ॥
सर्वसारं चन्द्रसुतो जावालस्तन्त्रसारकम् ।
वेदाङ्गसारं तन्त्रं च चकार जाजलि र्मुनिः ॥
पैलो निदानं कवथस्तन्त्रं सर्वधरं परम् ।
द्वैधनिर्णयतन्त्रं च चकार कुम्भसम्भवः ॥
चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोडश ।
व्याधिप्रणाशबीजानि बलाधानकराणि च ॥
मथित्वा ज्ञानमन्थनैरायुर्वेदपयोनिधिम् ।
ततस्तन्त्राण्युज्जहरु र्नवनीतानि कोविदाः ॥
एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम् ।
आयुर्वेदं सर्वबीजं सर्वं जानामि सुन्दरि ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद् वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥
आयुर्वेदस्य विज्ञाता चिकित्सासु यथार्थवित् ।
धर्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्त्तितः ॥'

(१६ अ०) इति ।

प्रजापतिरिह पितामहो न तु चिकित्सादर्शनकृद् दक्षः प्रजापतिः । आर्किः सूर्यपुत्रो यमः । च्यवनप्रसङ्ग उपरिष्टाद् द्रष्टव्यः । बुधश्चन्द्रसुतो बृहस्पतेः क्षेत्रजपुत्रश्च । अनयोः प्रसङ्गे प्रथमखृष्टशताब्दीयः साकेतवास्तव्यः सुवर्णाक्षीपुत्रः कनिष्कसभ्यः कविरश्वघोष आह—

'उतथ्यस्य च भार्यायां ममतायां महातपाः ।
मारुत्यां जनयामास भरद्वाजं बृहस्पतिः ॥
बृहस्पते र्महिष्यां च जुह्वत्यां जुह्वतां वरः ।
बुधं विबुधकर्माणं जनयामास चन्द्रमाः ॥'
(बुद्धचरितम्—४।७४-५) इति ।

कुम्भसम्भवः कलसीसुतोऽगस्त्यस्तस्योपाख्यानमुपरिष्टाद् द्रष्टव्यम् । उज्जह्रुरिति वक्तव्ये उज्जहरुरित्यार्षः ।

हेमाद्रे र्लक्षणप्रकाशादवगम्यते पुराकल्पे वसिष्ठादीनां नामभिः साकमन्येषामपि साङ्गायुर्वेदकर्तॄणां नामानि संस्मृत्य विद्याप्रदानान्ते तत्त्वावगन्तार आचार्याः प्रतिस्नातान् स्वशिष्यानभिषिञ्चन्ति स्मेति । तत्र लिखितमस्ति—

'वसिष्ठो वामदेवश्च च्यवनो भारविस्तथा ।
विश्वामित्रो जमदग्नि र्भरद्वाजश्च वीर्यवान् ॥
असितो देवलश्चैव कौशिकश्च महाव्रतः ।
सावर्णि र्गालवश्चैव मार्कण्डेयस्तु वीर्य्यवान् ॥
गौतमश्च महाभाग आगस्त्यः काश्यपस्तथा ।
आत्रेयः शाण्डिलश्चैव तथा नारदपर्वतौ ॥
काण्वगो नहुषश्चैव शालिहोत्रश्च वीर्यवान् ।
अग्निवेशो मातलिश्च जतूकर्णः पराशरः ॥
हारीतः क्षारपाणिश्च निमिश्च वदतां वरः ।
अदालिकश्च भगवान् छ्वेतकेतु र्भृगुस्तथा ॥
जनकश्चैव राजर्षिस्तथैव हि विनग्नजित् ।
विश्वेदेवाः समारुता भगवांश्च बृहस्पतिः ॥

इन्द्रश्च देवराजो हि सर्व्वलोकचिकित्सकाः ।
एते चान्ये च वहव ऋषयः संशितव्रताः ॥
आयुर्व्वेदस्य कर्त्तारः सुस्नातं तु दिशन्तु ते ॥'

वसिष्ठ आयुर्व्वेदकर्त्तेति मान्त्रिकाः । तदुत्पत्तिमधिकृत्य बृहद्देवतायां समाम्नातम्—

'तयोरादित्ययोः सत्रे दृष्ट्वाऽप्सरसमुर्वशीम् ।
रेतश्चस्कन्द तत् कुम्भे न्यपतद् वसतीवरे ॥
तेनैव तु मुहूर्त्तेन वीर्य्यवन्तौ तपस्विनौ ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संवभूवतुः ॥
वहुधा पतितं रेतः कलसे च जले स्थले ।
स्थले मुनि र्वसिष्ठस्तु संवभूवर्षिसत्तमः ॥
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः ।'

इत्यादि ।

वामदेवो गौतमगोत्रसम्भूत ऋषि र्यमधिकृत्य पञ्चदशीकारभारतीतीर्थ-विद्यारण्यमुनी आहतुः—

आगामिप्रतिबन्धश्च वामदेवे समीरितः ।
एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः ॥'

( ६।४५ ) इति ।

भारविमुनिरायुर्व्वेदकर्त्तेति प्रसिद्धिः । न खल्वसौ किरातकृत् कवि र्भारविः । सवर्णाया अपत्यं सावर्णिरष्टममनुः, स च सूर्य्यपुत्रः । शाण्डिल-मुनिश्चायुर्व्वेदकर्त्ता यस्यैव वंशधरो गोत्रप्रवर्त्तकः शाण्डिल्यसूत्रनामक-भक्ति-शास्त्रकारः शाण्डिल्य एव । नारदपर्व्वतौ सुरर्षी । ऋङ्मन्त्रद्रष्टा पर्व्वतो नारदसख आयुर्व्वेदाचार्य्यश्चासीत् । अग्निपुराणे तु स्मर्य्यते—

'कश्यपान्नारदश्चैव पर्व्वतोऽरुन्धती तथा' इति ।

अतस्तन्मते नारदः कश्यपपुत्रो न तु ब्रह्मपुत्र इति, नारदपर्व्वतौ द्वौ भ्रातरौ न तु सखायाविति, अरुन्धती कश्यपकन्या न तु कर्द्दमकन्या भृगुभार्य्यायाः ख्याते र्भगिनीति। काण्वग आयुर्व्वेदाचार्य्यविशेषः। पुरूरवसः पुत्र आयुः स्वभार्य्यायां राहुदुहितरि प्रभायां नहुषमुत्पादितवान्। आयुपुत्रेण नहुषेण पुनस्तद्भार्य्यायामशोकसुन्दर्य्यां ययातिरुत्पादितः। अतो नहुषः पुरूरवसः पौत्र आयोः पुत्रो ययातेः पिता च। स चागस्त्यशापात् सर्पतामाप्तो धर्म्मराजेन युधिष्ठिरेण तस्माद् विमोचित इति कथानकं महाभारते वर्णितमस्ति (वन० १८१ अ०)। लक्षणप्रकाशादवगम्यते यदसौ नृपतिरायुर्व्वेदप्रवर्त्तकश्चासीदिति। राजर्षिः शालिहोत्रो हयायुर्व्वेदप्रवर्त्तक आसीत्। स हयायुर्व्वेदवित् सुश्रुतस्य पिता। अस्य राजर्षेः संहितामुपजीव्य पाण्डवकुमारो नकुलो धाराधिपति र्भोजश्चाश्ववैद्यकग्रन्थौ चक्रतुः। लक्षणप्रकाशादवगम्यते यदसौ राजर्षि र्नरायुर्व्वेदप्रवर्त्तकश्चासीदिति। मातलिः कश्चिदायुर्व्वेदाचार्य्य इति मन्यते। अदालिकश्च कश्चिदायुर्व्वेदाचार्य्य इति मन्यते। श्वेतकेतुरौद्दालकिरायुर्व्वेदप्रवर्त्तक इति लक्षणप्रकाशः। विनग्नजिन्नग्नजिद्वा गान्धारराज आत्रेयशिष्य आयुर्व्वेदीयरसशास्त्रप्रवर्त्तक आसीत्। विश्वेदेवा गणदेवताविशेषाः, यथोक्तम्—

"क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथा ध्वनिः।
रोचकश्चाद्रवाश्चैव तथा चान्यः पुरूरवाः।
विश्वेदेवा भवन्त्येते दश सर्व्वत्र पूजिताः॥"

(वह्निपुराणम्) इति।

शिष्टांस्तु क्रमश उपरिष्टाद् वक्ष्यामः।

'वृद्धवाग्भट'शब्दः संग्रह-हृदयादिप्रणेतरि सिंहगुप्तसूनौ द्वितीयवाग्भटे रूढो न तु सिंहगुप्तपितरि प्रथमवाग्भटे। वृद्धवाग्भट-मध्यवाग्भट-लघुवाग्भट-रसवाग्भटशब्दास्तु सिंहगुप्तसूनुद्वितीयवाग्भटप्रणीतेषु संग्रह-

मध्यसंहिता-हृदयसंहिता-रसरत्नसमुच्चयनामकग्रन्थेष्वेव रूढा वर्त्तन्ते। वृद्ध-सुश्रुतो वैश्वामित्रि र्धान्वन्तरसुश्रुतः सौश्रुततन्त्रप्रणेता न तु प्रथमद्वितीय-खृष्टशताब्दीयः कनिष्कसभ्यः सुश्रुततन्त्रप्रतिसंस्कर्त्तृत्वात् सुश्रुतसंहिता-कारत्वेन गृहीतो नवीनसुश्रुत एव। वृद्धचरकः कृष्णयजुर्व्वेदटीका-कृदग्निवेशतन्त्रटीकाकारो मूलचरकसंहिताकारश्च चरकमुनि र्न तु कनिष्कसभ्यश्चरक-संहितासंस्कर्त्ता प्रथम-द्वितीयखृष्टशताब्दीयः कपिल-बलनामको नवीनचरक एव। अतो वृद्धत्रयीशब्देन लोके वृद्धचरक-वृद्धसुश्रुत-वृद्धवाग्भटा गृह्यन्ते। लोकशब्देन किमुच्यते?

'लोक्यते येन शब्दार्थो लोकस्तेन स उच्यते।
व्यवहारोऽथवा वृद्धव्यवहर्त्तृपरम्परा॥'

इति।

अत एव लोकशब्देन व्यवहारो व्यवहर्त्तारश्चोच्यन्ते। अथेदानीं प्रागेव वृद्धचरकीयवृत्तमुपादीयते। कः पुनराशय स्तद्वृत्तोपादानस्य? मुनिचरित-वर्णनेन स्वकीयं परकीयञ्च हितं साध्यत इति। उक्तञ्च—

"गुरुपूजा तपः शौचं सत्यमिन्द्रियनिग्रहः।
प्रवर्त्तनं हितानाञ्च तत्सर्व्वं वृत्तमुच्यते॥"

इति।

चक्रपाणिकृतेरायुर्व्वेददीपिकाया उपोद्घाते हरिदत्तशास्त्रिमहोदयेन लिखितम्—' "कठचरकाल्लुग्" (४।३।१०७) इति पाणिनीयसूत्रे चरकशब्दः पठ्यते, उपलभ्यते च चरकनाम्नी वेदसंहिताशाखा च। तत्र कठसाहचर्य्या-च्चरकशब्दोऽपि शाखापरक एवास्ति न व्यक्तिवाचीति वेदाङ्गतया पाणिनीय-व्याकरणेऽपि चरकशब्दो वेदशाखावाचीत्येव स्थिरीभवति' इति। अस्माभिस्तु व्याख्यैषा नाद्रियते। यतः सूत्रे चरकशब्दो व्यक्तिवाची न तु

शाखापरो भवति 'छन्दोब्राह्मणानि च तद्विषयाणी'ति ( ४।२।६६ ) सूत्रेण प्रोक्तप्रत्ययान्तानां छन्दसां ब्राह्मणानां चाध्येतृवेदितृप्रत्ययं विना प्रयोगानर्हत्वात्। चरकशब्दस्य शाखापरत्वे सति पाणिनिनाऽपि 'चारक'पदं प्रायोक्ष्यत, किन्तु शाखापर'चारक'शब्दस्याप्रयोज्यत्वात् सूत्रे व्यक्तिवाचि-'चरक'शब्द एव उपात्तः। एवं च चरकेण प्रोक्तमधीयते चरका इत्येवं चरकशब्दस्य लुप्तप्रोक्तप्रत्ययान्तस्याध्येत्रणा सहैवाप्रयोगार्हता, न तु तेन विना केवलप्रोक्तप्रत्ययान्तस्यैव। तथा हि बालमनोरमायां 'पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम्। पाणिनीया स्तदध्येतारो वेदितारो वेतिवदध्येतृप्रत्ययं विनापि प्रयोगे प्राप्ते नियमार्थमिदम् [ 'छन्दोब्राह्मणानि च तद्विषयाणि' ( ४।२।६६ ) ] इति।

केचिदाहुः—'कठचरकाल्लुगि'ति सूत्रोक्तश्चरक आयुर्वेदीयसंहिताकारश्चरक एव। तथाहि हरिनामामृतव्याकरणस्य तद्धितप्रकरणे ५५५ सूत्रीयटीकायामुक्तम्—'कठो मुनिस्तेन प्रोक्तं कठवल्ल्यादिच्छन्दोविशेषमधीयते विदन्ति वा कठा इति। चरकोऽपि मुनि स्तेन प्रोक्तं चरकं वैद्यकशास्त्रमधीयते विदन्ति वा चरका इती'ति। एतदपि चिन्त्यम्, अन्यत्र कुत्रापि ग्रन्थान्तरे एवंविधसमाधानानुपलम्भात्। किं च, कठचरकाल्लुक् प्रोक्ते छन्दसीत्येव। चरकेण कृताया न तु प्रोक्तायाः संहितायाश्छन्दोभिन्नत्वादध्येतृविषयताऽपि नास्ति। अतएव नास्माभिरयमपि पक्ष आद्रियते।

अन्ये पुनराहुः—'कठचरकाल्लुगित्यनेन कपिष्ठलचरकनामा कश्चित् पुराणश्छन्दःप्रवक्ता लक्षितो यो हि पञ्चनदस्योत्तरत इरावती-चन्द्रभागयोरन्तरालवर्त्तिनि कपिस्थलनाम्नि जनपदे प्रतिवसति स्म। कठचरकयो र्वंशे स एव बीजी पुरुषो यतः संहिताकारः समजनी'ति। यद् वा भवतु, कापिष्ठलि र्यस्य पुत्रः स कपिष्ठलो नाम गोत्रस्य प्रवर्त्तक इत्येतद् वर्णितचरं व्याकरणे प्रवरमालायां च। वेदवेदाङ्गपारगाः प्रतिपत्तार आहु

र्यदसौ वैद्यसंहिताकारः कृष्णयजुर्व्वेदीयकपिष्ठलकठादिशाखानां टीका-मेकामकरोदिति। See Mss. OXF. 187 (b). See also G. O. M. p. 13092. See also History of Indian Medicine Vol. III. p, 617. किन्तु स ऋषेः कपिष्ठलस्य गोत्रे सञ्जातो न वेत्यत्र किमपि निश्चयात्मकं प्रमाणान्तरमिदानीं नोपलभामहे।

अस्माकं संहिताकारश्चरको मुनिरेक आसीत्, न तु कश्चिदृषिरेव। कः पुनर्भेद ऋषिमुन्योः? शास्त्रकाराः समामनन्ति—'ऋषयो मन्त्रद्रष्टारो मुनिः संलीनमानस' इति। तथा हि निरुक्ते भगवान् यास्कः स्मरति—'साक्षात्कृतधर्म्माण ऋषयः' इति। श्रवणमन्तरेण तत्त्वाधिगन्तार इत्याशयः। मुनित्वं बृहदारण्यके वर्णितम् —'ब्राह्मणः पाण्डित्यं निर्व्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्व्विद्याथ मुनिरि'ति (३।५)। गीयते च—

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधी मुनिरुच्यते॥'

(२।५६) इति। 'मननान् मुनिरुच्यते' इति च।

अष्टाङ्गहृदयसंहितायां राजर्षि र्वाग्भटोऽप्याह—

'ऋषिप्रणीते प्रीति श्चेद् मुक्त्वा चरकसुश्रुतौ।
भेडाद्याः किं न पठ्यन्ते, तस्माद् ग्राह्यं सुभाषितम्॥'

(उ० ४०।८७) इति।

अस्य सर्व्वाङ्गसुन्दरव्याख्यायामरुणदत्तेनोक्तम्—'यदि ऋषिप्रणीते प्रीतिस्ततश्चरकसुश्रुताख्यौ हित्वा भेडजतूकर्णादिमुनिप्रणीतानि किमिति न पठ्यन्ते सर्वेणैव वैद्यवृन्देन? अपि तु सुभाषितप्रियतया चरकसुश्रुतौ बाहुल्येन यथा पठ्येते* न तथा भेडादय स्तस्मात् स्थितमेतत् सुभाषितं ग्राह्यम्, न तु मुनिप्रणीतमेव तन्त्रम्। अतश्चरकसुश्रुतवदनार्षमपीदं

* मुद्रिते पुस्तके 'पठ्यन्ते' इति दृश्यते, तच्च व्यक्तमेव प्रामादिकम्।

गुणवत्त्वाद् मतिमद्भि र्ग्राह्यमेवे'ति। यद् वा भवतु, संहिताकारस्य चरकस्य मुनिरिति ख्यातिः कथं बाधनीया स्यात्? यतोऽस्य मुनित्वव्यवहारः सर्वत्रैव दृश्यते। किमत्राधिक्येन वाच्यं यदा तावत् सर्व्वाङ्गसुन्दरस्य निदानस्थानीय-षष्ठश्लोकव्याख्यायामरुणदत्तेन स्वयमपि 'मुनिरप्यवोचते'त्युक्त्वा चरकस्य श्लोक एक उद्धृतः—

'ज्वरकालं च वेगं च चिन्तयञ् ज्वर्य्यते तु यः।
तस्येष्टैस्तु विचित्रैश्च विषयै र्नाशयेत् स्मृतिम् ॥'

(चि० ३।२२४) इति।

केचिदस्माकं संहिताकारं वामदेवादिवदनुपासितगुरुत्वेन निरूपयन्ति। तदपि न। ग्रन्थारम्भे हि ब्रह्मदत्तादिकं विहाय भगवत आत्रेयस्य नामसङ्कीर्त्तनात् तेन स आत्रेय एव गुरुत्वेन वृत उपासितश्चेति मन्यामहे। अत्रार्थे व्याचष्टे चक्रपाणिरपि तट्टीकायाम्—'अजानंश्च व्याचक्षाणः कथमुपादेयवचन इति कृत्वा गुरोराप्तात् प्रतिपन्नं प्रतिपादयिष्याम इति दर्शयंस्तामिमां शङ्कां निराचिकीर्षु र्गुरूक्तानुवादरूपतां स्वग्रन्थस्य दर्शयन्नाह—'इति ह स्माह भगवानात्रेय इती'ति। ततः पुनरप्युक्तम्—'भगवानात्रेय इत्यत्र त्वेकवचननिर्द्देशः कृतो भगवानित्यनेनैवात्रेयस्य गुरो र्गौरवस्य दर्शितत्वादि'ति।

पौराणिकीं वार्त्तामनुस्मरता भावप्रकाशकारेणैवमुपवर्णितश्चरकः—

'यदा मत्स्यावतारेण हरिणा वेद उद्धृतः।
तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ॥
अथर्व्वान्तर्गतं सम्यगायुर्व्वेदं च लब्धवान्।
एकदा स महीवृत्तं द्रष्टुं चर इवागतः ॥
तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीडितान्।
स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ॥

तान् दृष्ट्वाऽतिदयायुक्तस्तेषां दुःखेन दुःखितः।
अनन्तश्चिन्तयामास रोगोपशमकारणम् ॥
सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह।
प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ॥
यतश्चर इवायातो न ज्ञातः केनचिद् यतः।
तस्माच्चरकनाम्नाऽसौ विख्यातः क्षितिमण्डले ॥
स भाति चरकाचार्य्यो वेदाचार्य्यो यथा दिवि।
सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः ॥
आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन्।
मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् ॥
तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता।
चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥'

इति।

केषाञ्चिन्मते भावप्रकाशवचनादुपपद्यते 'विशुद्ध'नामधेयात् कुतश्चिद् मुनेरयं चरक उत्पन्न इति। एवंविधं समाधानं तु न सम्यङ् निर्भरयोग्यं भवति प्रमाणान्तराभावात्। यतः प्रसिद्धादिशब्दवद् विशुद्धशब्दोऽपि 'मुने'र्विशेषणत्वेन ग्रहीतुं शक्यम्।

सिल्भ्याँ लेभि—Sylvain Levi—महोदयेन बौद्धत्रिपिटकं दृष्ट्वा सिद्धान्तितं यत् प्रथमद्वितीयखृष्टशताब्दीकाले शककुषाणाधिपतेः कनिष्कस्य सभायां चरकनामा कश्चिदेकः सद्वैद्य आसीत् *। अनेनैव प्राचीन-

* Vide Sylvian Levi's Chinese Translation of the Buddhist Tripitak, Journal Asiatique July to December 1896, pp. 444 to 484, Indian Antiquary Vol. XXXII, 1903, p. 382 ; Vienna Oriental Journal Vol. XI. p 164.

ग्रन्थानां सारमाकृष्य स्वनाम्ना संहितैका प्रणीता। अत एव ग्रन्थोऽयं खृष्टजन्मतः प्राक्कालिको नैवेति। सिद्धान्तोऽयं कीथ्महोदयेनापि समर्थितः ( H. S. L. p. 506 )। स तात्पर्य्यत आह—अधुना या याः संहिता अस्माकं दृष्टिपथं प्राप्तास्तासां मध्ये चरकीयैव प्राचीनतमा भवति। अस्याः प्रणेता चरकः कनिष्कस्य वैद्य आसीदिति किंवदन्ती वर्त्तते' इति।

अत्र बहूनामपि पुरातत्त्वविदां वैमत्यं दृश्यते। त आहुश्चरकसंहिता खल्वैतिहासिकसमयात् सुतरां पूर्व्ववर्त्तिन्येव, सा च प्रथम-द्वितीयखृष्टशताब्द्यो-'श्चरक'इत्युपाधिभूषितेन केनचित् कनिष्कसभ्येन प्रथमतः संस्कृता, तदनन्तरं कपिलबलपुत्रेण कापिलबलेन यथाक्रमं विन्यस्ता, ततश्च कपि-बलतनयेन दृढबलेन प्रतिसंस्कृता नष्टभागानां च पूरणेन सम्पूर्णतां नीता ततोऽपि परं तीसटपुत्रेण चन्द्रटाचार्य्येणास्याः कालदुष्टाः पाठा विशुद्धीकृता इति।

केषाञ्चित् पुरातत्त्वविदां मते खृष्टजन्मतः पूर्वं पञ्चमशताब्द्यां यवन-चिकित्सकानामादिगुरुणा (Hippocrates) हिपोक्रेटिस्महोदयेन चरक-सुश्रुतयो श्चिकित्साधिकृतं प्रतिज्ञासूत्रं तात्पर्य्यतो गृहीतम्। अत्र विषये हि चरक-संहितायाः कल्पस्थानीयस्य चरमभागः, सुश्रुतस्य सूत्रस्थानीय-द्वितीयाध्यायस्य पूर्व्वभागः, जोन्स् ( Jones ) महोदयस्य 'The Doctor's Oath, 1924' नामकग्रन्थश्च द्रष्टव्याः।

श्रीमद्भागवतस्य द्वादशस्कन्धस्थितषष्ठाध्यायादवगम्यते यच्चरक-याज्ञवल्क्यौ व्यासदेवसमकालिकस्य वैशम्पायनस्य शिष्यावास्ताम्। याज्ञ-वल्क्यस्य शतपथब्राह्मणे चरकनाम सन्दृश्यते। षष्ठखृष्टपूर्व्वशताब्दीय-बुद्धदेवसमकालिक-ललित-विस्तरपुराणे चरकस्य नामोल्लेखो वर्त्तते। प्राचीनेतिहासज्ञेन मजुमदारमहोदयेन तदीय 'Hindu History' नामक

ग्रन्थस्य ४७६ पृष्ठे लिखितं यदसौ चरकः खृष्टजन्मनः प्राक् चतुर्द्दश-शताब्दीतोऽपि पूर्व्वमेवाभवदित्युक्ते न कश्चिद् दोषः प्रसज्यते, यतो महाभारतेऽपि तस्य नामोल्लेख उपलभ्यत इति। अतः प्रथम-द्वितीय-खृष्टशताब्दीय-कनिष्कसभ्येन चरकेण मूलचरकसंहिता प्रणीतेति सिलूभ्याँ लेभि ( Sylvain Levi ) महोदयस्य मतं निरस्तम्।

सिद्धान्तमिमं द्रढयितुं पुनरप्येवं ब्रूमः। अस्ति काचित् प्रसिद्धि र्यन्नवमखृष्टशताब्दीय आषाढवर्मा तदीय'परिहारवार्त्तिक'नामकचरकटीकायां चरकोपरि पतञ्जलिकृतं वार्त्तिकमदूदुषदिति। पतञ्जलिचरिते रामभद्रदीक्षितः पतञ्जलिं चरकवार्त्तिककारमाह। लघुमञ्जूषायाम्—'आप्त'लक्षणनिर्णय-चिकीर्षुणा नागेशभट्टेनोक्तम्—'आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलिरि'ति। एतेभ्यश्च प्रतीयते पतञ्जलिश्चरकसंहितायाः कञ्चिद् व्याख्याग्रन्थं प्रणिनायेति। अत एतदपि स्वतो व्यज्यते यत् संहिताकारश्चरकः पतञ्जलितः प्राचीन एवेति। प्रत्नतत्त्वविद एनं महाभाष्यकारं पतञ्जलिं खृष्टपूर्व्व-तृतीय-द्वितीयशताब्द्योरनुमिन्वन्ति, यतः खृष्टपूर्व्वद्वितीयशताब्दीयस्य महाराज-पदभाजः पुष्पमित्रस्य हयमेधयागे स धर्म्माध्यक्षतामकरोत्। अत एव द्वितीयखृष्टशताब्दीयात् कनिष्कसभ्याच्चरकात् पतञ्जलिमुनि र्वर्षाणां शतत्रयेण पूर्व्वमभवत्। एवं स्थिते कनिष्कसमकालिकस्य चरकस्य महाभाष्यकारापेक्षया प्राचीनत्वं प्रख्यापयितुं कस्य वा साधीयसी प्रवृत्तिः स्यात्?

केचिन् मन्यन्ते—यथा कौटिल्यः स्वनाम्नैवार्थशास्त्रं कृत्वा वात्स्यायन-नाम्ना न्यायभाष्यं कामशास्त्रं चाकरोत्, एवं चरकोऽपि स्वनाम्ना संहिता-मेकां प्रणीय पतञ्जलिनाम्ना योगसूत्रं महाभाष्यं च प्रणिनायेति। तदुक्तं चरकपञ्जिकायां स्वामिकुमारेण—

'वाचो व्याकरणेन शुद्धिमकरोद् योगेन चित्तस्य यः।
तं वन्दे चरकं हिताय जगतां व्याख्यातवैद्यागमम् ॥' इति।

विषम उपन्यासः। द्वावास्तां पतञ्जली। तत्रैको योगसूत्रकृदपरः सिद्धान्तसारावलीनामकवैद्यकग्रन्थकारः पाणिने र्महाभाष्यकारश्च। पाणिनिसूत्राणां महाभाष्यस्य कर्त्तुः पतञ्जलेः पाणिनिपरभवत्वे काऽस्ति वक्तव्यता ? न कापि। बादरायण-व्यासाद्यपरपर्य्याय-पाराशर्य्य-(४।३।११०)-वासुदेवार्जुन-( ४।३।९८ )-वैशम्पायन-( ४।३।१०४ )-प्रभृतयो न केवलं पाणिनेः परिचिताः परं तु पौर्व्वभविका एवासन्। पाणिनिना सूत्रितम्—'पाराशर्य्य-शिलालिभ्यां भिक्षुनटसूत्रयोः' (४।३।११०) इति। सिद्धान्तकौमुदीकृद् भट्टोजिराह—'पाराशर्य्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः' ( १४९० सि. कौ ) इति। बालमनोरमायां सूत्रमेतद् व्याख्यातम्—'पाराशर्य्येण प्रोक्तं भिक्षुसूत्रमित्यर्थे तृतीयान्ताणिणनिः स्यादिति यावत्। भिक्षवः सन्न्यासिनः' इति। पराशरशब्दादनन्तरापत्ये गोत्रत्वोपचाराद् गर्गादिभ्य इति यञि पाराशर्य्यो व्यासो बादरायणो वा।

पाणिनिसमये यान्येव भिक्षुसूत्राणीति प्रथितानि तान्येव पूर्व्वं ब्रह्मसूत्राणीति प्रसिद्धान्यासन्। तथा हि हरिगीतायाम्—

'ऋषिभि र्बहुधा गीतं छन्दोभि र्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भि र्विनिश्चितैः ॥
( १३।४ ) इति।

अत्र श्रीधरस्वामी—'अथातो ब्रह्मजिज्ञासे'त्यादीनि ब्रह्मसूत्राणि तान्येव ब्रह्म पद्यते निश्चीयत एभिरिति, पदानि हेतुमद्भिः 'ईक्षते र्नाशब्दम्' 'आनन्दमयोऽभ्यासादि'त्यादिभि र्युक्तिमद्भि र्विनिश्चितार्थै रि'ति। आनन्दगिरिरप्याह—'अथातो ब्रह्मजिज्ञासे'त्यादीन्यपि सूत्राण्यत्र गृहीतानि ; अन्यथा 'छन्दोभिरि'त्यादिना पौनरुक्त्यादिति मत्वा विशिनष्टि—'हेतुमद्भिरि'ति।

पाणिनिसूत्रलक्षितं यद् भिक्षुसूत्रं तदिदानीं शारीरकसूत्रं बादरायणसूत्रं वेदान्तसूत्रमिति वा व्यपदिश्यते। वाचस्पतिमिश्रस्तु वेदान्तसूत्रं भिक्षुसूत्रमित्याह।

वेदान्ते पाराशर्य्येण सूत्रितम्—'एतेन योगः प्रत्युक्तः' (२।१।३) इति। अत्र भगवाञ्छङ्कराचार्य्य आह—'एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रत्याख्याता' इति। एतत् स्पष्टयितुं भामत्यां वाचस्पतिमिश्रेणोक्तम्—'नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्व्वथा प्रामाण्यं निराक्रियते, किन्तु जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदहंकारपञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते' इति। पाराशर्य्योपलक्षितेन योगशब्देन पतञ्जले र्योगशास्त्रमवश्यं ग्रहणीयम्, यतः पातञ्जलादृते कश्चिदुपस्थापनीयः पुरातनो योगग्रन्थो नासीत्। पतञ्जलेरपि 'अथ योगानुशासनमि'ति प्रथमसूत्रस्य व्याख्यायां वाचस्पतिमिश्र आह—"ननु, 'हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन' इति योगियाज्ञवल्क्यस्मृतेः कथं पुनः पतञ्जले र्योगशास्त्रकर्त्तृत्वमित्याशङ्क्य सूत्रकारेण 'अनुशासनमि'त्युक्तमिति।

पातञ्जलस्य प्राचीनत्वे न कश्चित् सन्देहो वर्त्तते। यत एव वेदव्यासापरपर्य्यायेण स्वयं पाराशर्य्येणास्य प्रसन्नगम्भीरं भाष्यमेकं प्राणायि। न च कश्चिदन्योऽर्व्वाचीनो व्यास एनत् प्राणैषीदिति वाच्यम्। तथा हि योगशास्त्रस्य सूत्रभाष्ययो स्तत्त्ववैशारदीटीकायाः प्रारम्भे परावरतत्त्वज्ञेन वाचस्पतिमिश्रेणोक्तम्—

'नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधीयते॥'

इति।

तत्रभवता विज्ञानभिक्षुणाऽपि योगभाष्यकारं वेदव्यासमादौ प्रणम्य योगसूत्राणां वार्त्तिकारम्भे लिखितम्—'तदिदं सूत्रमारभ्य समग्रं शास्त्रं सर्व्व-

लोकहिताय भगवान् बादरायणो व्याचष्टे…' इत्यादि। अत एव सकल-शास्त्रपारगामिभ्यां मिश्रभिक्षुभ्यां योगभाष्यकारो व्यासः पाराशर्य्यत्वेन गृहीत एव। अतश्च प्रतिपद्दिणः पाश्चात्त्यसमालोचकान् दण्डिवचनेन ब्रूमः—किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिष्विति।

एकतः प्रात्निकानां मते पाणिनिजन्मतोऽन्यूनपञ्चशताब्द्यन्तरे जातोऽयं महाभाष्यकारः पतञ्जलिः, अन्यतः पाणिनेः पूर्व्वभवो वैशम्पायनस्ततोऽपि प्राक्तनस्तद्गुरु र्योगभाष्यकारः पाराशर्य्यव्यास स्ततोऽपि प्राचीनो योग-सूत्रकारः पतञ्जलिरिति स्फुटम्। वस्तुगतेरेवंविधत्वे कथं प्राचीनतमेन योगसूत्रकृता पतञ्जलिना ततश्चातिमात्रं परवर्त्तिनां पाणिनिसूत्राणां महाभाष्यं कर्त्तुं प्रभूयेत? अत एव स्वामिकुमारीयो मतवादः प्रत्याख्यायते।

अपरे पुनः केचित् प्रत्यवस्थातारः कैयटमुखेन विज्ञानभिक्षुमुखेण वा पठन्ति—

'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥'
इति।

त आहुः—* षड्गुरुशिष्येणापि सिद्धान्तितम्—

'योगाचार्य्यः स्वयं कर्त्ता महाभाष्यनिदानयोः' इति।

वयं त्वत्र नामैक्यमूलको विभ्रम इति निश्चिनुमः। अत एव स्वामि-कुमारोक्तिनिरसनन्यायकलापेन कैयट-भिक्षु-षड्गुरुशिष्याणामपि मतवादो निराकृत इति वेदितव्यम्। यद् वा भवतु, एते सर्व्वे स्वामिकुमारादय ऐतिहासिकांशेऽलीकवक्तार एव।

पतञ्जलिचरिते ह्यष्टादशखृष्टशताब्दीयेन रामभद्रदीक्षितेन लिखितम्—

* विनायक-शूलपाणि-गोविन्द-सूर्य्य-व्यास-शिवयोगिन इति षड्गुरवः। तन्मतानुगामित्वादयं षड्गुरुशिष्य इत्युच्यते।

'सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्त्तिकानि ततः ।
कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम् ॥'
( ५।२५ ) इति ।

'वार्त्तिकानि तत' इत्यत्र 'संहितामतुलामि'ति पाठः प्रामादिक एव । यदुक्तं महाभाष्यकृत्पतञ्जलि-योगसूत्रकृत्पतञ्जल्योरैक्यमिति, तत्र नामैक्यमेव बीजमनुगच्छामो नान्यत् किंचनैवेति । महाभाष्ये तत्र तत्र नानाविधवैद्यकशब्दप्रयोगान्महर्षेः पतञ्जलेः वैद्यकशास्त्रपारगामित्वं प्रतीयते । न केवलमेतावदेव, वैद्यकशास्त्रे 'वातस्कन्ध-पैत्तस्कन्धोपेतसिद्धान्तसारावली'-नामकग्रन्थोऽपि तेन भगवता प्रणीतः । इदानीमपि स ग्रन्थो विलसत्येव । ( See Trien. Cat. of Mss. 1916-19, Vol. III, Part I, Sanskrit B. R. No. 2371, p. 3271 ). अत एव चरकसंहितायां तस्य वार्त्तिकप्रणेतृत्वस्वीकरणे नास्ति कश्चिद् दोषलेश इति मन्यामहे । माधवनिदानीयमधुकोषनाम्न्या व्याख्याया स्त्रिंशे पृष्ठे महाराजकेशवसेनस्य दौहित्रेण द्वादशत्रयोदशखृष्टशताब्दीयेन विजयरक्षितेन चरकसंहिताया श्चिकित्सास्थानीयः 'कट्वम्लमुष्णं विरसं च पूतिपित्तेन विद्याल्लवणं च वक्त्रम्' ( २६।१८२ ) इत्येष श्लोको वार्त्तिकत्वेन गृहीतः । श्रूयते च नवमखृष्टशताब्दीय आषाढवर्म्मा तदीय'परिहारवार्त्तिक'समाख्यायां चरकटीकायां चरकोपरि पतञ्जलिकृतं वार्त्तिकमदूदुषदिति । मञ्जूषायामाप्तलक्षणं निरूपयता नागेशभट्टेनापि कथितम्—'आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलिरि'ति । अतो हि महाभाष्यकारस्य चरकवार्त्तिककर्तृत्वं सुतरां समर्थ्यते ।

षष्ठसप्तमखृष्टशताब्दीये वाक्यपदीये भर्तृहरिणा लिखितम्—

'कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥'

इति ।

लक्षणं सूत्रम् । स्मरति च पाणिनीयवार्त्तिकपाठे भगवान् कात्यायनः—'लक्ष्यलक्षणे व्याकरणमि'ति । तत्र महाभाष्यकार आह—'लक्ष्यं च लक्षणं चैतत् समुदितं व्याकरणं भवतीति । किं पुन र्लक्ष्यं किं च लक्षणम् ? शब्दो लक्ष्यः सूत्रं लक्षणमि'ति ( पस्पशाह्निकम् ) ।

योगशास्त्रस्य राजमार्त्तण्डवृत्तेः पातनिकायामेकादशखृष्टशताब्दीयो धाराधिपति र्भोजदेव आह—

'शब्दानामनुशासनं विदधता पातञ्जले कुर्व्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके ।
वाक्चेतोवपुषां मलः फणभृतां भर्त्त्रेव येनोद्धृत-
स्तस्य श्रीरणरङ्गमल्लनृपते र्वाचो जयन्त्युज्ज्वलाः ॥'

इति ।

'फणिभृतां भर्त्त्रेव येनोद्धृत' इति पाठः प्रामादिक एव । यत एतस्या वृत्तेः पुष्पिकायां लिखितमस्ति—'स श्रीभोजपतिः फणाधिपतिकृतसूत्रेषु वृत्तिं व्यधादि'ति ।

चरकसंहिताया आयुर्व्वेददीपिकानाम्न्यां व्याख्यायां चरकचतुरानन-सुश्रुतसहस्रनयनादिमानपत्रभूषित श्चक्रपाणिदत्त आह—

'पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः ॥'

इति ।

आयुर्व्वेददीपिकासम्वलिता चरकसंहिता प्रकाशिता। तस्या उपोद्घाते हन्त प्रकाशकारेण महोदयेनालेखि—'तथा चक्रपाणिना च चरकारम्भे लिखितमस्ति यत् पतञ्जलि योगेन मनसो दोषानपाकर्त्तुं योगदर्शनम्, व्याकरणे महाभाष्यनिर्म्माणद्वारा वाचो दोषं तथाऽग्निवेशतन्त्रस्य प्रतिसंस्कारद्वारा शारीरदोषं च दूरीकर्त्तुं यत्नमकरोदि'ति (४र्थ-पृष्ठे)। तत्त्वनिकषग्रावणि प्रावण्यमूलकं वाक्यमिदं प्रकृतेन सम्यक् परीक्षितं प्रयोक्तरि वचनीयरूपेण व्यवस्थितं स्यात्, मूलेन सह प्रकाशकारवचनस्य विसंवादात् (Traduttore Traditore)। इत्यास्ताम्। अधुना सर्व्वं विवेचयन्तु सुधियः।

भर्त्तृहरिभोजदेवचक्रपाणीनां मतवाद आदरातिशयेनास्माभिः परिगृहीतः। तथा हि ते व्याहरन्ति यद् अनन्तदेवापरपर्य्यायेण भगवता शेषेण भिन्नभिन्नकालेषु त्रिरेव शरीरग्रहणेन योगसूत्र-चरकसंहिता-महाभाष्यात्मकानि त्रिविधानि कार्य्याणि सम्पादितानीति। योगसूत्रकृत्-पतञ्जलिः संहिताकृच्चरको महाभाष्यकृत्पतञ्जलिश्च भगवतः शेषस्यावतार-विशेषा इति प्रसिद्धिरतीव प्रबला वर्त्तते। तत्र योगसूत्रकृतः पतञ्जले-राविर्भावो नास्माभिरवगम्यते। चरकप्रादुर्भावो भावप्रकाशे स्फुटं वर्णित एव। कथं महाभाष्यकृत्पतञ्जलिरवतीर्ण इत्येतद्विषये काचिदाख्यानिका वेङ्कटाचलकृत-त्रिमुनिकल्पतरावुपलभ्यते। इदानीमस्याः सारो वाचकेभ्यः समुपह्रियते—

एकदा भगवाननन्तशयनमधिशिश्ये। तत्र कदाचिद् यौगिकीं निद्रा-मास्थितस्य तस्य वपु गौरवमाप। ततो गुरुभारक्लिष्टः शेषो लक्ष्मीं ददर्श स्वकीयं क्लेशहेतुं च तस्यै निवेदयामास। तेन गौरवेण दोलायितशिरोवृन्दं शेषमभिवीक्ष्य लक्ष्मीश्च भगवत्करे स्वकरं निदधौ। अतः स चक्षुषी उन्मीलयामास। शेषोऽपि तं प्रणिपत्य तद्वपुषो गौरवहेतुं पप्रच्छ। स

च तमवादीत्। नटराजस्य महनीयं विचित्रतरं नृत्तं दृष्ट्वा निरुद्धनिःश्वासतया गौरवान्वितोऽहं सञ्जातो येन त्वमपि क्लेशं प्राप्नोः। यद् वा भवतु, नृत्तावसाने स नटराजराजो मन्मुखेन त्वां सवार्त्तिकपाणिनीयसूत्राणां महाभाष्यस्य विरचनाय समाज्ञापयति स्मेति।

एवमादिष्टो भगवाञ्छेषः स्वावतरणयोग्यं स्थानमन्विष्यन् गोनर्द्दान्तर्गतं कञ्चिद् ग्राममद्राक्षीत्। तत स्तं ग्रामं प्रविश्य प्राज्ञपुत्रलाभाय चिरात् तपस्यन्तीं गोणिकादेवीं स्वमातरं विचिन्त्य प्रवेशावसरमन्विष्य स्तस्थौ। सा च सूर्य्यार्घ्यदानाय यदा हस्ताभ्यां जलाञ्जलिं गृहीत्वा स्वेष्टोद्देशेन मन्त्रमपाठीत् तदा तेन सूर्य्येण प्रेरितोऽयमनन्तदेव स्तत्करधृतमर्घ्यसलिलं प्राविशत्। तं दृष्ट्वा गोणिकादेवी सन्त्रस्ता को भवानिति पप्रच्छ। शेषोऽपि चातुर्य्येण सपोऽहमिति प्रत्युवाच। सर्पोऽहमिति वक्तव्ये रेफं विहाय तथोक्तेः कारणं किमित्याशयेन रेफस्ते क्व गत इति पृष्टः स उवाच—'मात र्यथा त्वं भयं नाप्नुया स्तदर्थं रेफवर्जित स्त्यक्तफणोऽहमहिपतिः पुत्ररूपेण त्वां समुपागतोऽस्मि' इति। तत स्तमर्कदत्तं सत्पुत्रं मन्वाना शिर उपाघ्राय परां कोटिं हर्षस्यानुभूय सर्व्वं तपःक्लेशं सा विसस्मार। सोऽपि मातरं पतञ्जलिनाम्ना प्रणनाम।

अथ कियतिचित् काले व्यतीते शिवप्रसादलुब्धः स तपसे प्रतिष्ठासु र्मातरं समाश्वास्य दक्षिणोदधितटं गत्वा तीव्रं तपश्चचार। तत आराधनातुष्टं महादेवं प्राञ्जलि र्बहुधा स्तुत्वा कमलासनोक्तं सर्व्वं विज्ञाप्य सवाक्यपाणिनीयव्याकरणस्य भाष्यरचनायां पाटवं प्रार्थयामास। सोऽप्येवमस्त्विति वरं दत्त्वाऽन्तरधात्। अथ स पतञ्जलिरनायासेन महाभाष्यं व्यररचत्। एकदा तत्पिपठिषुभिः शिष्यैरभ्यर्थितेन मुनिना 'मया यवनिकाऽभ्यन्तरस्थेन यूयं महाभाष्यमध्यापयितव्याः, परं तदाऽहं केनापि कदापि न द्रष्टव्य इति समयोऽभ्यधायि। अथ तिरस्करणीं प्रसार्य्य बहिरुपविष्टान् सहस्रं शिष्यान्

बहुभिराननै युगपत् पाठयति स्म । कति वा मुखान्यस्य सन्तीति द्रष्टव्यमिति निश्चित्य केचन शिष्या यदा तां तिरस्करणीमपनीय विततफणासहस्रमण्डितमुग्रदंष्ट्रं मुखजातं द्रष्टुमयतन्त तदा ते विषमविषज्वालया भस्मीबभूवुः। पतञ्जलिश्च मनुष्यमूर्त्तिं परिगृह्य तीव्रं दुःखं चानुभूय ततः प्रभृति भाष्याध्यापनाया आदावन्ते च शान्तिमन्त्रमपाठीत्। एकदा पाठान्ते कश्चिदुपदेशकदेशीयः शिष्यः शान्तिमन्त्रमशृण्वन् वहि र्जगाम । पतञ्जलिरपि तं प्रत्यागच्छन्तं दृष्ट्वा 'ब्रह्मराक्षसो भवे'ति शशाप। अनेनाभिशप्तेन शिष्येण स फणिपति र्बहुधा स्तुतिभिः प्रसादितः प्रोवाच—शापेनानेन मा विषदः, यत्र त्वयोष्यते तत्र यः कोऽप्यागच्छेत् स एव पचे र्निष्ठायां किं रूपमिति प्रष्टव्यः। यो हि पक्कः पक्कवानिति प्रत्युत्तरयेत् स त्वया मदीयं महाभाष्यमध्याप्यः। एवं तस्याध्यापनेन त्वमपि शापान्मोक्ष्यसे। तदनन्तरं तृतीय-द्वितीयखृष्टपूर्व्वशताब्दीयस्य राज्यलिप्सोः स्वामिहन्तुः पुष्पमित्रस्य * हयमेधीयमाध्यक्ष्यं समाप्य पतञ्जलिश्चान्तरधात्।

वैद्यसंहिताकारश्चरकमुनि र्महाभाष्यकर्त्ता भवितुं नार्हति। यतो महाभाष्यकर्त्ता चरकसंहिताया व्याख्यातृविशेषत्वेन प्रतिभाति। न च स

---

* शुङ्गवंशीयब्राह्मणः पुष्पमित्रो राज्ञो बृहद्रथमौर्य्यस्य सेनापतिरासीत्। एकदा स सेनानामस्त्राभ्यासप्रदर्शनाय स्वस्वामिनमाहूय सहसा तं शाठ्येन जघान। तदुक्तं बाणभट्टेन हर्षचरिते—'प्रज्ञादुर्बलञ्च बलदर्शनव्यपदेशदर्शिताशेषसैन्यः सेनानीरनार्य्यो मौर्य्यं बृहद्रथं पिपेष पुष्पमित्रः स्वामिनम्' इति। इत्थं सिंहासनमधिगम्य स कलङ्कप्रक्षालनाय हयमेधयज्ञं कर्त्तुमारेभे। तस्मिंश्च यज्ञे पतञ्जलिरध्यक्षतामकरोत्। पापमूर्त्तें राजघस्य यागकर्म्मण्याध्यक्ष्यस्वीकरणे मुनेरौचित्यं मुनिरेव जानाति। वयं तु भारतीवचनेन ब्रूमः—

विवेकरहितो लोके मुनिभिरुपदिश्यते ।
मुनीनामविवेकिनां को भवेदुपदेशकः ॥ इति ।

योगशास्त्रकृद् भवितुमर्हति। यतो महाभाष्यस्य कुतश्चिदपि स्थले 'यच्छेद् वाङ्मनसी प्राज्ञ' इत्यादिश्रुतिसिद्ध'स्त्रिरुन्नतं स्थाप्य समं शरीरमि'त्यादिश्रुतिगम्यो 'योगी युञ्जीत सततमात्मानमि'त्यादिगीतावाक्यसूचितो हिरण्यगर्भादिगुरूक्तो वा कोऽपि योगविषयो नोपात्तो नोपस्थापितो नोल्लिखितो नालोचितो वा।

अस्मन्मते हि संहिताकारश्चरकमुनि वैंशम्पायनस्य शिष्यत्वाद् याज्ञवल्क्यस्य सतीर्थ्य आसीत्। श्रीमद्भागवतस्य द्वादशस्कन्धस्थितषष्ठाध्याये स्मर्यते—

'वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन्।......
याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन् कियत्।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम्॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया।
विप्रावमन्त्रा शिष्येण, मदधीतं त्यजाश्विति॥
देवरातसूतः सोऽपि च्छर्दित्वा यजुषां गणम्।
ततो गतः......' इत्यादि।

अतः परं वाजसनेयिमाध्यन्दिनशुक्लयजुर्वेदः प्रादुर्भविष्यति।

कृष्णयजुर्वेदस्य षडशीति भेदाः सन्ति। तत्र चरका नाम द्वादश भेदा यथा—कपिष्टलकठाश्चरका आह्वरकाः कठाः प्राच्यकठाश्चारायणीया वार्त्तान्तरीयाः श्वेताश्वतरीया वाराहा औपमन्यवश्छागलेया मैत्रायणीयाश्चेति। वैशम्पायनस्य प्रियशिष्यत्वादसौ वैद्यसंहिताकारश्चरकः कृष्णयजुर्वेदीयचरकशाखान्तर्गतानां कपिष्ठलकठादिशाखानां * टीकामेकामग्निवेशटीकां चाकरोदिति प्रामाणिकाः। केषांचिन्मते याज्ञवल्क्यस्य शतपथ-

---

* See Mss. Oxf. 187 (b). See also G. O. M. L. 13092. See also History of Indian Medicine Vol. III. p. 617 by Girindra Nath Mukerjee M. D.

ब्राह्मणे यश्च चरक उल्लिखितः (१४) स एष कृष्णयजुर्वेदटीकाकारो वैद्यसंहिताकारश्च भवति। अष्टाध्याय्यां 'कलापिवैशम्पायनान्तेवासिभ्यश्च' (४।३।१०४) इति सूत्रदर्शनाद् वक्तुं शक्यते यदसौ वैशम्पायनशिष्यः कृष्णयजुष्टीका-वैद्यसंहिताकारश्चरकः पाणिनिपूर्व्वज एवेति।

'यतश्चर इवायातो न ज्ञातः केनचिद् यतः।
तस्माच्चरकनाम्नाऽसौ विख्यातः क्षितिमण्डले॥'

इति प्राचीनाख्यानेषु वार्त्ता। ताञ्च नानपेक्ष्य तथा व्यवहरता पाणिनिना सूत्रितम्—'माणवचरकाभ्यां खञ्' (५।१।११) इति। अस्य वृत्तौ प्रभाख्यायामुक्तम्—'चरको मुनिस्तस्मै हितं (वह्निवेशादितन्त्रमिति यावत्) चारकीणमि'ति।

अत एव पाणिनेः पूर्व्वभवश्चरको (५।१।११) यो ह्यचिरकालस्य प्रवक्तु र्याज्ञवल्क्यस्य सतीर्थ्य एव, चरकस्य पूर्व्वजो वैशम्पायनस्तयोर्गुरुशिष्य-सम्बन्धात्; वैशम्पायनस्य पूर्व्वभवस्तद्गुरुः पाराशर्य्यापरपर्य्यायो (४।३।११०) व्यासः, व्यासतोऽपि पूर्व्वभवो दर्शनशास्त्राविर्भावकालिको योगसूत्रकृत् पतञ्जलि र्यस्य शास्त्रोपरि व्यासभाष्यमिदानीमपि जागर्त्ति। वस्तुगतेरेवंविधत्वे बहूत्तरभवश्चरकसंहिताकारो महता कालेन पूर्व्ववर्त्ती योगसूत्रकृत् पतञ्जलि र्भवितुं नार्हत्येव। तथापि यदि कश्चिद् व्यत्ययविभिन्न-वादी संहिताकारस्य चरकस्य योगसूत्रकर्त्तृत्वं महाभाष्यकर्त्तृत्वं च प्रतिपादयितुमुत्सहते, प्रतिपादयतु नाम; प्रमत्तप्रलापेन का नः क्षतिः?

पुनरिह केचित् पूर्व्वापरदर्शिनः प्राश्निकाः पर्य्यनुयुञ्जीरन् यत् पातञ्जल-भाष्यकार-वेदान्तसूत्रकारयोरभिन्नत्वं न वाच्यं यत उभौ चेदभिन्नौ स्याताम्, तर्हि योगसूत्राणां भाष्यं प्रणीय कथं स्वेषु ब्रह्मसूत्रेषु स एव योगनिरसनं कर्त्तुं यतेतेति। अत्र किञ्चित् क्रियते विमर्शः। न हि योगस्मृते र्वैयर्थ्य-दोषात् तस्या निराकृतिः (२।१।३), किन्तु तत्र प्रकृतिस्वातन्त्र्यमात्रांशः

श्रुतिविरुद्ध इति वित्रासात् सूत्रितम्—'एतेन योगः प्रत्युक्तः' (२।१।३) इति। योगः खलु श्रौतः, 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणामि'त्यादिषु कठादिषु योगविषयकबहुलिङ्गलाभात्, 'त्रिरुन्नतं स्थाप्य समं शरीरमि'त्यादियोगाङ्गाभिधानाच्च। ततश्च योगेन जगद्दुःखं परिजिहीर्षुराप्ततमो भगवान् पतञ्जलिः स्मृतिं निबबन्ध—'अथ योगानुशासनम्', 'योगश्चित्तवृत्तिनिरोधः' इत्यादिभिः। तदुक्तं भामत्यां वाचस्पतिमिश्रेण—'नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्व्वथा प्रामाण्यं निराक्रियते, किन्तु जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदहंकारपञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते' इति (२।१।३)। नन्विदानीं पूर्व्वापरदर्शिनः प्राश्निका अपि प्रतिप्रष्टव्याः कथं वेदान्ते द्वैताद्वैतवादमद्वैतवादं वा प्रतिपादयता व्यासेन श्रीमद्भागवते पुन र्द्वैतवाद उपस्थापितः, कथं वा कर्म्ममीमांसायां जैमिनिना मन्त्रमयी देवतेति प्रतिपाद्य पुनर्भक्तिमीमांसायां प्रतीकोपास्ति र्विहितेति। सम्प्रदायानुरोधादिति ब्रूमः।

महर्षेरात्रेयस्य षट् शिष्याः प्रसिद्धा आसन्—अग्निवेशतन्त्रकृद् अग्निवेशो वह्निवेशो वा, भेडतन्त्रकृद् भेडो भेलो वा, जतूकर्णतन्त्रप्रणेता जतूकर्णः, पराशरतन्त्रकृत् पराशरः, क्षारपाणितन्त्रकृत् क्षारपाणिः क्षीरपाणि र्वा, हारीततन्त्रप्रणेता हारीतश्चेति। ते सर्व्वे स्वस्वनाम्ना तन्त्राणि चक्रुः। तेभ्यस्तन्त्रेभ्यः सारवस्तूनि समाहृत्य चरकमुनिरग्निवेशतन्त्रं प्रतिसंचस्कार, प्रतिसंस्कृत्य च स्वनाम्ना मनोरमामेकां संहितां प्रचारयामास। इदानीं संहितेयं सर्व्वैरेव वैद्यवृन्दैराद्रियते। सामर्थ्येन चिकित्साप्रयोगे हि भेडहारीतादिभ्योऽधिकतरः प्रामाणिको भगवांश्चरक एव। तदुक्तम्—

'निदाने माधवः श्रेष्ठः सूत्रस्थाने तु वाग्भटः।
शारीरे सुश्रुतः प्रोक्तश्चरकस्तु चिकित्सिते॥'

इति।

चरकसंहिता ह्यष्टधा विभक्ता—सूत्रस्थानं निदानस्थानं विमानस्थानं शारीरस्थानमिन्द्रियस्थानं चिकित्सितस्थानं कल्पस्थानं सिद्धिस्थानं चेति। एतेषां विवरणमाकरे द्रष्टव्यम्। अस्याः संहिताया व्याख्याग्रन्था बहुविधाः सन्ति, यथा—

(१) तृतीयद्वितीयखृष्टपूर्व्वशताब्दीय-पतञ्जलिमुनिकृतः कश्चिद् वार्त्तिक-पाठः। चरकवार्त्तिककृत्-पतञ्जलिरित्यभिधाने केचित् पुनः प्रत्यवतिष्ठन्ते वैयाकरणस्य पतञ्जले वैद्यागमे का प्रतिपत्तिरिति? मैवं मंध्वम्। तस्य 'वातस्कन्ध-पैत्तस्कन्धोपेतसिद्धान्तसारावली'नामको वैद्यकग्रन्थ इदानीमपि विलसत्येव (See Trien. Cat. of Mss. 1916-19, Vol III, Part 1. Sanskrit B. R. No 2371, p. 3271)। न केवलं सिद्धान्तसारावलीकर्त्तृत्वात् पतञ्जलिमुनि वैद्यागमिक एव, परं तु स आयुर्व्वेदान्तर्भूतेषु रसरसायनधातुव्यापारेष्वपि महासिद्धपुरुष आसीत्। चक्रसंग्रहस्य तत्त्वचन्द्रिकायां लिखितमस्ति—'यदाह पतञ्जलिः—'दिव्यं दावं समादाय लौहकर्म्म समाचरेद्' इति। किं बहुना, पुरा विघ्नहारि-गणेशादिदेवता अभ्यर्च्चय रासायनिकवर्य्या धन्वन्तरिपतञ्जलिभ्यां सोपचारं बलिं दत्त्वा लोहपाकप्रक्रिया आरेभिरे। लोहं न केवलमयःपिण्ड एव, हेमाद्यपि लोहम्, यदाहुः—

'सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु।
सीसं च वीमरं चैव ह्यष्टौ लोहानि चक्षते॥'

इति।

रीतिः ferrous oxide; वीमरम् steel। तथाहि तत्त्वचन्द्रिकायां शिवदासेन प्राचीनः कश्चन श्लोक उद्धृतः—

'अर्च्चयित्वा विधानेन हेरम्बं गुरुभास्करौ।
लोकपालान् ग्रहांश्चैव क्षेत्रपालानथौषधम्॥

आदित्यदेवताश्चेष्ट्वा धन्वन्तरिपतञ्जली ।
दद्याद् बलिं च सर्व्वेभ्यो नानाभक्ष्योपचारतः ॥'
इति ।

एवंविधं वस्तुवृत्तमुपलभ्य वक्तुं शक्यते यत् पतञ्जलौ चरकवार्त्तिककर्त्तृत्वं चरकप्रतिसंस्कर्त्तृत्वं वा नानुपपन्ने भवतः । अत्रार्थे चक्रपाणिराचष्टे—

'पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः ॥'
इति ।

पतञ्जलिचरिते रामभद्र आह—'वैद्यकशास्त्रे च वार्त्तिकानि ततः' इति । चरकसंहितायाश्चिकित्सितस्थानीयः 'कट्वम्लमुष्णं विरसम्···' (२६।१८२) इत्येष श्लोको मधुकोषे विजयरक्षितेन वार्त्तिकत्वेनोक्तः' (मुम्बइ सं ३० पृष्ठम् ) इति । श्रूयते च यत् परिहारवार्त्तिके नवमखृष्टशताब्दीय आषाढवर्म्मा चरकोपरि पतञ्जलिकृतानि वार्त्तिकान्यदूदुषदिति ।

चरकोपरि पतञ्जलेः कश्चिदपि व्याख्याग्रन्थ आसीदिति मतवादं हि प्रतीम एव वयम् । लघुमञ्जूषायामाप्तलक्षणकथनावसरे नागेशभट्ट आह—'आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलि'रिति । चरकसंहिताया एकादशाध्याये लिखितमस्ति—'आप्तास्तावत्—

रजस्तमोभ्यां निर्म्मुक्ता स्तपोज्ञानबलेन ये ।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा ॥
आप्ताः शिष्टा विबुद्धास्ते, तेषां वाक्यमसंशयम् ।
सत्यं, वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः ॥'
( १८।१६—सूत्र० ) इति ।

पुनरपि विमानस्थानीयचतुर्थाध्यायारम्भे स भगवानाह—'आप्ता ह्यवितर्क-स्मृतिविभागविदो निष्प्रीत्युपतापदर्शिनश्च' (४) इति। नागेशवचनात् प्रतीयते यत् पतञ्जलेराप्तस्वरूपनिर्णयः प्रागुद्धृतचरकीयवचसां संक्षिप्त-व्याख्याविशेषत्वेन ग्रहीतुं शक्यमिति।

पतञ्जले र्मूलवार्त्तिकपाठो नास्माभि र्दृष्टः। ६-७ खृष्टशताब्दीयचरक-टीकाकारेण भट्टारहरिचन्द्रेणापि स दृष्टो वा न वेति सन्दिह्यते। यतः प्रथमखृष्टशताब्द्यां वैद्यागमिकः कश्चित् कनिष्कसभ्यः पातञ्जलवार्त्तिकानि चरकसंहिताया योग्येषु स्थानेषु सन्निवेशयंश्चरकोपाधिभूषित आसीत्। मन्ये—चरकोपाधिभूषितस्यास्य प्रकृतं नाम कपिलवल इति। यथा चूल्लिभट्टि-नल्लूरादिकृता वृत्तयः काशिकायां प्रविष्टा अदर्शनं प्राप्ता स्तथा मूलसंहितायां पातञ्जलवार्त्तिकानामपि प्रविलयात् स्वतन्त्रवार्त्तिकपाठस्यापि विलोपः सञ्जातः ; तथा विलोपश्च नासम्भव एव।

अस्य नवीनचरकस्य वृत्तान्तं चैनेयबौद्धत्रिपिटकग्रन्थत उपलभ्य सिल्भ्याँ लेभि (Sylvain Levi) नामक—पाश्चात्यगवेषिणा सिद्धान्तितं यदेष एव संहिताकारो वृद्धचरकमुनिरिति। तत्र केचिद् भारतीया अपि तन्मतानुसारिणो जाता इति तु महच्चित्रम्। प्राचीनचरक-नवीनचरकयो-रैकत्वविषये भारतीयपण्डितेषु सिद्धान्तभ्रष्टेषु सत्स्वेव पाश्चात्त्या अस्माकं संहिताकारं वृद्धचरकमुनिं पञ्चदशशतवर्षैरर्वाचीनं प्रतिपादयितुमलं भवेयुरित्यत्रावधेयम्।

(२) नवीनचरकप्रतिसंस्कृतचरकसंहिता। द्वौ चरकावास्ताम्। एको वैशम्पायनशिष्यो याज्ञवल्क्यसतीर्थ्यः कृष्णयजुर्वेदटीकाकारो वृद्धश्चरक-मुनि र्यः स्वनाम्ना संहितां चकार, अन्यः कनिष्कसभ्यः प्रथमद्वितीयखृष्ट-शताब्दीयो नवीनश्चरको यः प्रकृतस्य योग्यस्थलेषु पातञ्जलवार्त्तिकादि-सन्निवेशेन मुनिप्रणीतां प्राचीनसंहितां प्रतिसंचस्कार। साम्प्रतिकै र्यः

कनिष्कसभ्यो नवीनचरक इत्यभिधीयते तस्य यथार्थं नाम कपिलबल इति मन्यामहे। कपिलबलः कपिलतन्त्रमपि प्रणैषीत्। तस्य पुत्रेण कापिलबलेन चरकसंहिताया आंशिकप्रतिसंस्कारः कृत इति दृढबलवचनादवगम्यते।

(३) कापिलबलप्रतिसंस्कृतचरकसंहिता। कपिलबलतन्त्रकृत् कपिलबलतनयो द्वितीयखृष्टशताब्दीवर्त्ती कापिलबलश्चरकसंहितामंशतः प्रतिसंचस्कार। तदुक्तं दृढबलेन चिकित्सितस्थानीयत्रिंशाध्याये—

'तानेतान् कापिलबलः शेषान् दृढबलोऽकरोत्'।

इति।

कापिलबलजनकः कपिलबलः प्रथमद्वितीयखृष्टशताब्दीयकनिष्कसभ्य नवीनचरक इति मन्यामहे। तस्य नाम्ना कपिलबलतन्त्रं प्रचलितमासीत्। स द्वितीयतृतीयखृष्टशताब्दीय-वागभटस्य पूर्व्वाचार्य्यः। तदुक्तं संग्रहनाम्न्यां द्वादशसाहस्र्याम्—'कपिलबलस्तेषां स्वलक्षणानि रसतो निर्द्दिदेश—

कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः।
कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः॥

इती'ति। अस्याः शशिलेखायां टीकाकार इन्दुपण्डित आह—'आचार्य्यः कपिलबलस्तेषां रसस्वरूपेणैव निर्द्दिदेश, न तु शीतादिगुणान्तरस्वरूपेणेत्यर्थः। तच्च कपिलबलतन्त्रं कट्वम्लेत्यादिना पठती'ति। कपिलबलतनयस्य कापिलबलस्य द्वितीयखृष्टशताब्दीयत्वमनुमातुं शक्यम्। दृढबलपितुः कपिबलात् कपिलबलः स्वतन्त्रः प्राचीनतरश्च।

(४) षष्ठसप्तमखृष्टशताब्दीयभट्टारहरिचन्द्रकृता चरकव्याख्या। ग्रन्थस्तु नास्माभि र्दृष्टः। श्रूयते हि सूत्रस्थानस्य कियांश्चनांश उपलब्ध इति। अस्य व्याख्याग्रन्थस्य प्रशंसायां चन्द्रटाचार्य्येणोक्तम्—

'व्याख्यातरि हरिचन्द्रे श्रीजेज्जटनाम्नि सति सुधीरे।
अन्यस्यायुर्व्वेदे व्याख्या धार्ष्ट्यं समावहति॥'

इति।

अन्येनोक्तम्—

'हरिचन्द्रकृतां व्याख्यां विना चरकसम्मतम्।
य स्तनोत्थकृतप्रज्ञः पातुमिच्छति सोऽम्बुधिम्॥'

इति।

हरिचन्द्र आर्द्रदेवनामधेयात् पितुः समजनि। स षष्ठसप्तमखृष्टशताब्दीय-गौडाधिपतेः शशाङ्कापरनाम्नो नरेन्द्रदेवस्य वैद्यः सभापण्डितश्चासीत्। अस्य धर्म्मशर्म्माभ्युदयनाटकं सुप्रसिद्धमेव। श्रूयते हि यदनेन जीवन्धर-चम्पूः * प्रणीता। अस्य भाषासरणि र्बाणभट्टस्यापि चित्तमावर्ज्जयत्। हर्षचरितारम्भे तेन लिखितम्—

'पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते॥'

इति।

केचिदाहुः स गद्यपद्यविद्यानिधिरित्युपाधिभूषित आसीदिति।

हरिचन्द्रेण खरनादसंहितायाः प्रतिसंस्कारः कृतः। ग्रन्थस्तु नास्माभि र्दृष्टः। शशिलेखायां दशमैकादशखृष्टशताब्दीय इन्दुपण्डित आह— 'या च खरनादसंहिता भट्टारहरिचन्द्रकृता श्रूयते सा चरकप्रतिबिम्बरूपैव लक्ष्यत' इति। हरिचन्द्रस्यैकः श्लोको वल्लभदेवेन सुभाषितावल्यामुद्धृतः—

'अव्यापाररता वसन्तसमये ग्रीष्मे व्यवायप्रियाः
सक्ताः प्रावृषि पल्वलाम्भसि नवे कूपोदकद्वेषिणः।

* गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते।

कट्वम्लोष्णरताः शरद्दधिभुजो हेमन्तनिद्रालसाः
स्वै दोषैरपचीयमानवपुषो नश्यन्तु ते शत्रवः ॥'

इति ।

सदुक्तिकर्णामृते श्रीधरदासेन तस्यैकः श्लोक उद्धृतः । तत्र सुबन्धु-कालिदासहरिचन्द्रादीनां गुणजातं वर्णयितुं कश्चित् कविवर आह—

सुबन्धौ भक्ति र्नः क इह रघुकारे न रमते
धृति र्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम् ।
विशुद्धोक्तिः शूरः प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूति र्वितनुते ॥'

इति ।

हरिचन्द्रो विश्वप्रकाशकोषकृतो महेश्वरवैद्यस्य पूर्व्वपुरुषः । अतः सोऽपि वैद्य आसीदिति ज्ञायते ।

कश्चित् कविदेश्य आह । मीमांसाभाष्यकारिणः शबरस्वामिनः षट् पुत्राः—वराहमिहिरो महाराजो भर्त्तृहरिस्तद्भ्राता विक्रमादित्यो भट्टार-हरिचन्द्रः शंकुरमरसिंहश्चेति । एतत् सर्व्वं मनसि निधाय तेनैकः श्लोकः प्रणीतः—

'ब्राह्मण्यामभवद् वराहमिहिरो ज्योतिर्व्विदामग्रणी
राजा भर्त्तृहरिश्च विक्रमनृपः क्षत्त्रात्मजायामभूत् ।
वैश्यायां हरिचन्द्रवैद्यतिलको जातश्च शंकुः कृती
शूद्रायाममरः षडेव शबरस्वामिद्विजस्यात्मजाः ॥'

इति ।

विचित्र उपन्यासः । तदत्र किञ्चित् क्रियते विमर्शः । शबरस्वामी प्रथम-द्वितीयखृष्टशताब्दीयनागार्जुनात् प्राक्तनत्वात् तृतीय-द्वितीयखृष्टपूर्व्व-शताब्दीयपतञ्जलेः परवर्त्तित्वात् प्रथमखृष्टपूर्व्वशताब्दीवर्त्तीत्यनुमीयते । वराह-

मिहिरः ५०५ खृष्टाब्दे पितुरादित्यसेनादाविर्भूय ५८७ खृष्टाब्दे तिराऽभवत्। वैराग्यशतकादिप्रणेता महाराजो भर्त्तृहरि र्मालवान्तर्गतायामुज्जयिन्यां क्षत्रियकुलोत्पन्नगन्धर्व्वसेनात् समजनि। उच्छृङ्खलायां महिष्यां जातनिर्व्वेदः सन्—

'यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च ॥'

इत्युक्त्वा संसारे विरक्तिमापद्यमानः स चरणाद्रौ (चूणारपर्व्वते) विश्रान्तिभूमिमेकां रचयित्वा तत्र तपोऽतप्यत। स चैकदा सानुशयः प्राह—

'भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥'

इति।

ज्येष्ठभ्रातुरेतन्निर्वेदवाक्यमाकर्ण्य दैवाधिगतं स्वराज्यं निष्कण्टकं कर्त्तुमिच्छता कनिष्ठेन भ्रात्रा यशोधर्म्मविक्रमादित्येन षष्ठखृष्टशताब्द्या द्वितीयपादान्ते तृतीयपादारम्भे वा त्यक्ताधिकारो राजा भर्त्तृहरि र्व्यापादित इत्येका प्रसिद्धिः कुतश्चिदितिहासत उपलभ्यते। श्रूयते हि यद् व्यापादनात् प्राक् स तेनोक्तः—

'क्रोधो वैवस्वतो राजन्नाशा वैतरणी नदी।
विद्या कामदुघा धेनुः सन्तोषो नन्दनं वनम् ॥'

इति।

षष्ठखृष्टशताब्द्या मध्यमोपान्ते भट्टारं हरिचन्द्रं रथ्यादेव्यामार्द्रदेवो जनयामास। अतः प्राज्ञिका स्तस्य स्थितिकालं षष्ठसप्तमखृष्टशताब्द्यो-रभ्यन्तरे निर्णयन्ति स्म। स हि कर्णसुवर्णे राज्ञः शशाङ्कापरनाम्नो नरेन्द्रदेवस्य राजवैद्य आसीत्। हर्षचरितादवगम्यते यदेष बाणभट्टस्य समकालिक इति। भुवनाभ्युदयप्रणेता शंकुकवि र्नवमखृष्टशताब्द्यां प्रादुर्भूतः। अमरसिंहस्य स्थितिकालः पञ्चमीतः षष्ठखृष्टशताब्द्या अन्तरे निरूप्यते। इतिवृत्तवेदिनः कवेरीदृशं पुरातत्त्वनिरूपणं प्राज्ञिकानामैति-हासिकानां च हास्योद्रेकं जनयत्येव। द्रष्टव्यं च किञ्चिदुद्ग्रन्थाभिधानम्।

(५) दृढबलाचार्य्येण चरकसंहिताया न्यूनतापरिहारेण चरमप्रति-संस्कारः कृतो ग्रन्थश्च व्याख्यातः।

'विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम्।
संस्कर्त्ता कुरुते तन्त्रं पुराणं च पुन र्नवम्॥'

इत्युक्तदिशा संहिताया अस्याश्चिकित्सितस्थानीयाः सप्तदशाध्याया-स्तथा सिद्धिस्थानस्य द्वौ चरमाध्यायौ च प्रतिसंस्कर्त्रा रचिताः प्रकृते सन्निवेशिताश्च। दशमैकादशखृष्टशताब्दीय-चन्द्रटाचार्य्यस्य वचनादव-गम्यते यदयं ग्रन्थांशो वैद्यसम्प्रदाये 'चरकोत्तरमि'ति नाम्ना प्रसिद्ध आसीदिति। ग्रन्थान्ते लिखितमस्ति—

'सिद्धिस्थानेऽष्टमे प्राप्ते तस्मिन् दृढ़बलेन तु।
सिद्धिस्थानं स्वसिद्धयर्थं समासेन समापितम्॥'

इति।

इमं श्लोकं दृष्ट्वा जल्पकल्पतरुकृद् गङ्गाधर आह—'समग्रं सिद्धिस्थानं दृढबलेन रचितं संयोजितं चे'ति। जेज्जटचक्रपाणी त्विह जोषमासाते।

सिद्धिस्थानीयद्वादशाध्यायस्य प्रान्तभागे ग्रन्थप्रशंसनार्थं त्रयः श्लोकाः सन्निवेशिता दृश्यन्ते—

'यस्य द्वादशसाहस्री हृदि तिष्ठति संहिता ।
सोऽर्थज्ञः स विचारज्ञश्चिकित्साकुशलश्च सः ॥
रोगांस्तेषां चिकित्सां च स किमर्थं न बुध्यते ।
चिकित्सा वह्निवेशस्य स्वस्थातुरहितं प्रति ॥
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ।
अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ॥'

इति ।

पाश्चात्त्याः खल्वत्र वक्तुमर्हन्ति यदेते श्लोकाः प्रतिसंस्कारात् परं केनचिदल्पधिया प्रक्षिप्ता इति । सुसंयमी चक्रपाणिस्त्वाह—'यस्य द्वादशसाहस्रीत्यादिश्लोकत्रयं केचित् पठन्ति, तच्चाप्रस्तुतमि'ति । युक्तमुक्तम् । स्मरति च भगवान् व्यासदेवः—

'अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमवमानं च भारत ॥'

इति ।

अयमेव चक्रपाणेर्हृद्गत आशयः । 'यस्ये'त्यादितः प्रागेवोक्तम्—

'इदमखिलमधीत्य सम्यगर्थान्
विमृशति योऽविमनाः प्रयोगनित्यः ।
स मनुजसुखजीवितप्रदाता
भवति धृतिस्मृतिबुद्धिधर्म्मवृद्धः ॥'

इति ।

इमं श्लोकं पठन् पुनरपि 'यस्ये'त्यादिश्लोकानां पाठो न कदाचित् सुसंश्लिष्टो भवतीति ।

'सोऽर्थज्ञः स विचारज्ञ श्चिकित्साकुशलश्च स' इत्यत उत्तरम्—

'ऊर्द्ध्वबाहु र्विरौम्येवं न च कश्चिद् वृणोति मे'

इत्यधिकपाठो गङ्गाधरसम्मत एव। मन्ये—चक्रपाणेरुत्तरकाले केनचिदावेगशीलेन सन्निवेशितोऽयमप्रासङ्गिकोऽंश इति। यद् वा भवतु, रुचिवैचित्र्यं दृष्ट्वा केनचिद् वक्तुं शक्यते—

'इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः'। इति।

कस्य सूनु र्दृढबल इत्यस्मिन् विषये वर्त्तन्ते बहुविधा विप्रतिपत्तयः। A History of Sanskrit Literature नामकग्रन्थे कीथ्महोदयेन लिखितम्—'Dṛḍhabala ( दृढबलः ) who was a Kashmirian, son of Kapilabala ( कपिलबलः ) is ascribed to the eighth or ninth century' ( ५०६ पृष्ठे )। अयमस्यानुवादः—'दृढबलः काश्मीरक आसीत्। स कपिलबलस्य तनयः। अष्टमखृष्टशताब्दी नवमखृष्टशताब्दी वा तस्य स्थितिकाल इति ब्रुवन्ति' इति। आयुर्व्वेददीपिकादिसहितचरकसंहिता-प्रकाशकृता श्रीहरिदत्तशास्त्रिमहोदयेन ग्रन्थस्योपोद्घाते लिखितम्—'कपिलबलो नाम आचार्य्य आयुर्व्वेदतन्त्रप्रणेताऽऽसीदिति तन्नाम्ना समुद्धृतेभ्यः प्राचीनटीकावचनेभ्यः प्रतीयते। चरकप्रतिसंस्कर्त्रा दृढबलेन चिकित्सितस्थाने ३० अध्याये प्रोक्तम्—

'तानेतान् कापिलबलः शेषान् दृढबलोऽकरोत्।'

इति।

अत्र च कपिलबलस्यापत्यं कापिलबल इति व्युत्पत्त्या कपिलबलो नाम दृढबलस्य पितेति ज्ञायते। तेन कपिलबलोऽपि दृढबलकालिक एवेती'ति। 'New Light on Vaidyaka Literatureनामकप्रबन्धे श्रीयुक्तदीनेशचन्द्रभट्टाचार्य्यमहोदयेन लिखितं यत् कपिल एव दृढबलस्य पितेति।

अधुना वयं कीथ्महोदयस्य, चरकसंहिताप्रकाशकृतः शास्त्रिमहोदयस्य, प्रात्निकप्रवरभट्टाचार्य्य-महोदयस्य च मतवादान् समालोचयिष्यामः। को दृढबलस्य पितेत्यत्र विषये दृढबलस्य काचित् साक्षादुक्ति र्नास्माभिरधिगम्यते।

मन्यामहे कीथ्महोदयेन यथाऽऽकर्णितं तथैव लिखितमिति। अत एव तदुक्तौ कथमपि निर्भरो न युज्यते।

हरिदत्तशास्त्रिणः सिद्धान्तो नास्माकं हृदयसौख्यमावहति, निरुपपत्तिकत्वात्। 'तानेतान् कापिलबलः शेषान् दृढबलोऽकरोदि'त्येतावन्मात्रदृढबलवचनेन कापिलबल-दृढबलयोः पितापुत्रीयसम्बन्धः कथं प्रतिपाद्यते? कपिलबलस्यापत्यं कापिलबल इत्येतत् स्वतः सिद्धमिव; किन्तु तादृग्व्युत्पत्त्या कथं कापिलबल-दृढबलयोरेकत्वं समाधीयते? तुष्यतुन्यायेन यदि तयोरभेदः स्वीक्रियते, तर्हि 'तानेतान् कापिलबलःशेषान् दृढबल' इत्येवंविप्रयुक्तवचनात् किमाधिक्येन लभ्यते? यदि केनचिदुच्यते—महाभारतस्य प्रथमार्द्धं पाराशर्य्यं उत्तरार्द्धं कृष्णद्वैपायनोऽकरोदिति, तर्हि तस्मिन् वक्तरि नूनं बुद्ध्यवज्ञानं प्रसज्येत। न हि व्यसनितया शब्दः प्रयुज्यते, अपि त्वर्थाभिधानायैव। स एवार्थो यदि केनचिदपि शब्देन व्यज्यते, तर्हि किमिति शब्दान्तरं प्रयुज्यते? तदुक्तमभियुक्तैः—

'पर्य्यायाणां प्रयोगो हि यौगपद्यन नेष्यते।
पर्य्यायेणैव ते यस्माद् वदन्त्यर्थं न संहताः॥'
इति।

अत एव शास्त्रिमहोदयस्य सिद्धान्तं कथमपि ग्रहीतुं नोत्सहामहे।

कपिलः सांख्यप्रवक्ता प्रागितिहासिको वैदिकः पुरुषः। स हि दृढबलस्य पिता भवितुं नार्हति। ऐतिहासिककाले कपिलनाम्ना कश्चिद् वैद्य आसीद् वा न वेत्यस्माभि र्न ज्ञायते। मन्यामहे दीनेशचन्द्रमहोदयः कपिबल इति वक्तव्ये प्रमादतः कपिल इत्याहेति। यद् वा भवतु, तक्षशिलातः प्रेतशिलापर्य्यन्तं मृग्यमाणोऽपि कपिलवैद्यो नास्माभिः कुत्रचित् प्राप्त इति प्रबन्धकृतो निर्णये न स्थास्यामः।

वयं पूर्वमवादिष्म यत् कपिबल एव दृढबलस्य जनक इति। स षष्ठसप्तमखृष्टशताब्दीय-काश्मीरकपण्डित आसीत्। तेन कश्चिद् वैद्यक-ग्रन्थोऽपि प्रणीतः। वृन्दकृतसिद्धयोगस्य कुसुमावलीटीकायाः स्वस्थाधिकारे विजयरक्षितशिष्येण मधुकोषपूर्त्तिकृता श्रीकण्ठदत्तेन नामग्राहं लिखितम्—

मधौ सहसि नभसि मासि दोषान् प्रवाहयेत्।
वमनैश्च विरेकैश्च निरूहैः सानुवासनैः॥'

(८१।४२) इति।

अष्टाङ्गसंग्रहसूत्रस्थानीयस्वस्थवृत्तपरिशिष्टटीकायां च टीकाकृता कपिबलनाम्ना श्लोकोऽयमुद्धृतः (द्वितीयखण्डस्थ १६६ पृष्ठे—किंजवडेकरसंस्करणम्)।

अस्मात् कपिबलात् पितु र्दृढबलः सञ्जात इत्यस्माभिरापाततः सिद्धान्तितम्। कपिबलस्य कोऽपि ग्रन्थो नास्माभि र्दृष्टः।

कतमं देशं निजजनुषा दृढबलाचार्य्यो भारतभूमौ भूषयामासेति विषये व्याख्यातृप्रात्निकयोरैकमत्यं नोपलभ्यते। चरकसंहितायां सिद्धिस्थानीय-द्वादशाध्यायस्य प्रान्तभागे लिखितमस्ति—

'संस्कृतं तत्त्वसम्पूर्णं त्रिभागेणोपलक्ष्यते।
तच्छङ्करं भूतपतिं सम्प्रसाद्य समापयत्॥
अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे।'

इति।

भूतपतेः शङ्करस्य प्रसादाद् दृढबलेन साध्यस्य सिद्धिराप्तेति वक्तुमारभते—'तच्छङ्करमि'त्यादि। कुत्रत्यश्च स दृढबलस्तदाह—'पञ्चनदे पुरे जात' इति। अत्र जल्पकल्पतरुकृद् गङ्गाधरस्तात्पर्य्यत एवमाह—पञ्चनदे पुरे वाराणस्यामिति यावत्। तत्र दृढबलः संहिताप्रतिसंस्कारकरणे स्वात्मनः शक्तिविरहमनुभूय शङ्करं शुभङ्करं भूतपतिं विश्वनाथमाराधयामास, शङ्करश्च तत

आराधनातुष्टस्तस्मै चरकसंहिताप्रतिसंस्कारकरणे पाटवं ददाविति। पञ्चनदपुरे वाराणस्यामिति व्याख्याने क आशयः? वाराणस्यां पञ्चनद्यः सन्ति। काशीखण्डे लिखितमस्ति—

'किरणाधूतपापा च पुण्यतीर्थे सरस्वती।
गङ्गा च यमुना चैव पञ्चनद्यः प्रकीर्त्तिताः॥'

( ५९ अ० ) इति।

अत एव पञ्चनदपुरं काशीपुरीत्यभिप्राय इति।

गङ्गाधरव्याख्याने प्राश्निकाः प्रत्यवतिष्ठन्ते। त आहुः। 'पञ्चनद'शब्दो वाराणस्यां न रूढः, रूढस्तु वर्त्तमान'पाञ्जाव'प्रदेशार्थके पञ्चनदे ह्येव। एतत्प्रदेशीयाः पञ्चनद्यश्चिरमेव वाराणसीस्थपञ्चनदीभ्यो लोके प्रसिद्धतरा वर्त्तन्ते। महाभारत-कूर्म्मपुराण-वह्निपुराणादिमते ताश्च—

वितस्तिश्चन्द्रभागा च विपाशेरावती तथा।
शतद्रुश्चेति विज्ञेयाः पञ्चनद्यः प्रकीर्त्तिताः॥

इति।

वितस्तिः—Jhellum. चन्द्रभागा—Chenub. विपाशा—Bias. इरावती—Ravi. शतद्रुः—Sutlej. अस्य प्रदेशस्य प्रधानपत्तनं श्रीरामचन्द्रपुत्रलवप्रतिष्ठितं लवपुरं वर्त्तमान-'लाहोर'नगरम्। अत एव पञ्चनदपुरं लवपुरम्। 'पुर'शब्देन सूच्यते यदिदं पञ्चनदपुरं लवपुरमेव, न तु काशीपुरी वाराणसीपुरी वेति। व्यवहर्त्तारः काशीप्रभृतिशब्दैः पुरीशब्दं योजयन्ति, न तु पुरशब्दम्। काशीखण्डेऽपि स्मर्य्यते—

'काशीपुर्य्यां पुरा ब्रह्मन्नासीद् राजा सुधार्म्मिकः।
पारिभद्र इति ख्यातस्तस्य पुत्रो बृहद्रथः॥'

इति।

अत एव पञ्चनदपुरं लवपुरं न तु काशीपुरी। सम्प्रदायस्य तु गङ्गाधर-मतख्यापने परिकरबन्धो दृश्यते। प्रात्निकेष्वैतिहासिकेषु वा साम्प्रदायिकी सङ्कीर्णता पदं नाधत्ते।

खृष्टजन्मनः परं वाराणसीतः पञ्चनदप्रदेशश्चिकित्सकबहुलस्थान-मासीत्। तदारभ्य पञ्चमीपर्य्यन्तायाः खृष्टशताब्द्या अभ्यन्तरे नागार्जुन-कपिलबलापरनामकनवीनचरक-कापिलबल-नवीनसुश्रुतादयश्चिकित्सकाः शस्त्रोप-चारकाश्चादौ शकाधिपतिकनिष्कसभामलंचक्रुः। ततश्च प्रथमवाग्भट-सिंहगुप्त-द्वितीयवाग्भट-धन्वन्तरि-जयदेवादय श्चिकित्सकाः शकाधिपति-वासुदेवादीनां शासनावसरे पञ्चनदप्रदेशस्य गौरवमुपचाययामासुः। तदनन्तरं चीनकपर्य्यटकः सप्तमखृष्टशताब्दीय इचिं-( I. tsing )-महोदयः पञ्चनदापरनाम्नः 'पाञ्जाव'-प्रदेशस्य समृद्धिं व्यालुलोके।

एतत् सर्व्वं वस्तुवृत्तमुपलभ्य वयमपि प्रात्निकानां निर्णयमनुवर्त्तिष्यामहे। मन्यते चास्माभि र्यत् कपिबलपण्डितः काश्मीरादागत्य लवपुरनामक-पञ्चनदपुरे वसतिं कृतवान्, दृढबलश्च कपिबलात् पितु र्जनिं लब्ध्वा तत्रैव कृतावस्थान आसीद् न तु वाराणस्यामवतस्थ इति। 'Hindu History'नामकग्रन्थस्य ७६१ पृष्ठे प्रात्निकप्रवरेण मजुमदारमहोदयेन लिखितं यद् दृढबलाचार्य्यः 'पाञ्जाव'प्रदेशे प्रतिवसति स्मेति।

कश्च कालस्तस्य दृढबलस्येतिविषये प्रात्निकानामपि वैमत्यमस्ति। आयुर्व्वेददीपिकादिसहितचरकसंहिताप्रकाशकृत आयुर्व्वेदाचार्य्यहरिदत्त-शास्त्रिणो मते दृढबलस्य समयः खृष्टचतुर्थी शताब्दीति। A History of Sanskrit Literature-नामकग्रन्थकृता कीथ्महोदयेनोक्तं यदष्टमीतो नवमीपर्य्यन्तायाः खृष्टशताब्द्या अभ्यन्तरे दृढबलाचार्य्यस्य स्थितिरनुमातुं शक्येति। इतिहासज्ञा श्रीमत्यन्नयकुमारी देवी दृढबलस्य षष्ठखृष्टशताब्दीयत्वमनुमिमीते ( A History of Sanskrit

Literature, p. 139 )। 'New Light on Vaidya Literature-नामकप्रबन्धकृत् प्राज्ञिकप्रवरश्रीदीनेशचन्द्रभट्टाचार्य्यमहोदय आह—दृढवलः सप्तमाष्टमखृष्टशताब्दीय आसीदिति। अस्माकमप्यापातत-स्तथैव सिद्धान्तः।

(६) नवमखृष्टशताब्दीय आषाढवर्म्मा चरकसंहितायाः 'परिहार-वार्त्तिक'नामानं व्याख्याग्रन्थं प्रणिनाय। ग्रन्थोऽयं नास्माभि र्दृष्टः। १६५६ खृष्टाब्दीयकवीन्द्रसूच्यामपि 'परिहारवार्त्तिक'ग्रन्थस्योल्लेखो नोप-लभ्यते। एतस्मात् प्रतीयते यदेष ग्रन्थः १७ खृष्टशताब्दीतः पूर्व्वमेव विलोपमाप्त इति। तथा विलोपश्च नासम्भवः, मुनिना सह विरोधादशिष्ट-व्यवहाराच्चेति मन्यामहे। श्रूयते हि यदनेन ग्रन्थकारश्चरकोपरि पतञ्जलि-कृतानि वार्त्तिकान्यदूदुषदिति।

(७) नवमखृष्टशताब्दीत ईषत् पूर्व्वं हिमदत्तापरपर्य्यायेण सर्व्वहित-मित्रदत्तेन चरकसंहिताया एका टीका प्राणायि। अष्टाङ्गहृदयटीकाऽप्यनेन प्रणीता। टीकाद्वयं तु नास्माभि र्दृष्टम्। नवमदशमखृष्टशताब्दीयेन जेज्जटाचार्य्येण हृदयटीका प्रसङ्गत उल्लिखिता। तस्मादनुमीयते यदयं हिमदत्तो नवमखृष्टशताब्दीतः पूर्व्ववर्त्त्येव।

(८) भाष्यप्रदीपकृतः कैयटापरनाम्नः कज्जटस्य पित्रा नवमदशमखृष्ट-शताब्दीयेन जेज्जटेन 'निरन्तरपदव्याख्या'नाम्नी चरकटीका प्रणीता। त्रयोदशखृष्टशताब्दीय-डल्लनाचार्य्यकृतनिवन्धसंग्रहादवगम्यते यद् महाचार्य्य इत्यपि ख्यातिरस्य सञ्जातेति।

कैयटो जेज्जटपुत्र इत्युक्तौ प्राज्ञिकानां वैमत्यमस्ति। काव्यप्रकाशस्य टीकायामष्टादशखृष्टशताब्दीयेन भीमसेनेन लिखितम्—'श्रीमान् कैयट औ ढ्वटो ह्यवरजः......' इति। एतदुपलभ्य पूर्व्वैः प्राज्ञिकैः कैयट उवट-पुत्रत्वेन गृहीतः। तदनन्तरं भाष्यप्रदीपस्य प्रारम्भे 'कैयटो जैयटात्मजः' इति

साक्षात् कैयटवचने प्रामाण्यमधिकतरमिति मत्वा साम्प्रतिकैः प्राज्ञिकैः सिद्धान्तितं कैयटो जैयटपुत्र इति। यथा केज्जठः कैयटस्योपनाम तथा जेज्जटोऽपि जैयटस्येति कृत्वा तैरनयोः पितापुत्रसम्बन्धो निरूपितः। इदानीमस्माभिरपि प्राचीनमतं विहाय नवीनमतमाश्रीयते।

केचन वैद्या जज्जटापरपर्य्यायं जेज्जटं वृद्धवाग्भटशिष्यत्वेन वर्णयन्ति। निरन्तरपदव्याख्यायाश्चरमभागेऽपि लिखितमस्ति—'इति श्रीवाग्भटशिष्य-श्रीजज्जटाचार्य्यरचितायां निरन्तरव्याख्यायां काशीस्थधन्वन्तरिकल्प-श्रीत्र्यम्बक-शास्त्रिणां प्रशिष्येण भिषग्वरेण्यपण्डितश्रीशिवदत्तमिश्राणामन्तेवासिना जालन्धरमण्डलान्तर्गतजाडलाग्रामनिवासिना आयुर्व्वेदाचार्य्यपण्डित-हरिदत्तशास्त्रिणा निखिलभारतीयायुर्व्वेदविद्यापीठमन्त्रिणा पूरितत्रुटि-तांशायां चरकटीकायां सिद्धिस्थानं समाप्तम्। (वैक्रम सं० १९९७ श्रावण-पूर्णिमायाम्)।' इति। एष खलु बहुकौतुक उपन्यासः। अतोऽत्र किञ्चित् क्रियते विमर्शः।

अस्मन्मते संग्रहकारो वाग्भटो द्वितीय-तृतीयखृष्टशताब्दीय एव। यतः षष्ठखृष्टशताब्द्यां महाभाष्यदीपिकादिकृता भर्त्तृहरिणा 'चतुर्थीबाधिका-माहुश्चूर्णिभागुरिवाग्भटाः' इत्यत्र प्राचीनतम-स्मृतिसारसमुच्चयकृद्-भागुरिमुनि-प्राचीनतरचूर्णिकृत्पतञ्जलिमुन्यो र्नामभ्यां सह प्राचीनवाग्भट-स्यापि नाम गृहीतम्। असौ वाग्भटः संग्रहकृतो वाग्भटस्य पितामहो यस्य व्याकरणं तदानीं नितरां प्रामाणिकमासीत्। किं च, अष्टाङ्ग-संग्रहस्योत्तरतन्त्रस्थित ऊनपञ्चाशाध्याये वाग्भटेन स्वयं कथितम्—

'रसोनानन्तरं वायोः पलाण्डुः परमौषधम्।
साक्षादिव स्थितं यत्र शकाधिपतिजीवितम्॥'

इत्यादिश्लोकतोऽवगम्यते यदसौ ग्रन्थकारो द्वितीय-तृतीयखृष्टशताब्दीयस्य शकाधिपते र्वासुदेवस्य समकालिकः, उभयोः सिन्धुदेशवासित्वादनुमीयते च

स राजवैद्योऽप्यासीदिति। एतत् सर्व्वं विस्तरत उपरिष्टाद् वाग्भटप्रस्तावे वक्ष्यामः।

'वायोयार'पाण्डुलिपे भूमिकायां डाक्तार-हैर्ण्लिमहोदयः, History of Sanskrit Literature ग्रन्थे कीथ्-महोदयस्तथाऽन्येऽपि पाश्चात्त्य-पण्डिताः सप्तमखृष्टशताब्दीप्रारम्भे वाग्भटस्य स्थितिकालमनुमिन्वन्ति। संग्रहभूमिकायामायुर्व्वेदसेवकेन वैद्यपण्डित-रामचन्द्रपट्टवर्द्धनेन तु लिखितम् 'We may place him ( वाग्भट ) in the 4th or 5th C. A. D. at the latest and we should be prepared to accept a date which is even prior to the period suggested.' अस्य तात्पर्य्यार्थः—'वयं हि चतुर्थखृष्टशताब्द्यां पञ्चम-खृष्टशताब्द्यां वा वाग्भटं स्थापयितुं प्रभवामः, किन्तु यदि तावत् कश्चिदस्य ततोऽपि पूर्व्ववर्त्तित्वं कारणोपन्यासपुरःसरं प्रतिपादयितुमुत्सहते, तर्हि वयमपि तन्मतं शिरसा गृह्णीमः ( किंजवडेकरप्रकाशिताष्टाङ्गसंग्रहस्य प्रथम-प्ररोहे मुखबन्धः ) इति।

अष्टाङ्गसंग्रहः पुण्यपत्तननगर्य्यामष्टात्रिंशदधिकोनविंशशततमे खृष्टवर्षे वैद्यपण्डित-श्रीरामचन्द्रशास्त्रि-किंजवडेकरभिषगाचार्य्येण सटीकं सटिप्पणं च मुद्रितः प्रकाशितश्च। तत्रैकश्चित्रपटः संयोजितो यत्र जेज्जटेन्दू वाग्भटात् पाठं गृह्णाते इव। अस्य चित्रपटस्याधस्तात् प्रकाशकेन रचित एकः श्लोकः सन्निवेशितः —

'लम्बश्मश्रुकलापमम्बुजनिभच्छायाद्युतिं वैद्यका-
नन्तेवासिन इन्दुजेज्जटमुखानध्यापयन्तं सदा।
आगुल्फामलकञ्चुकाञ्चितदरालक्ष्योपवीतोज्ज्वलत्-
कण्ठस्थागरुसारमञ्जितदृशं ध्याये * दृढं वाग्भटम्॥' इति।

* आत्मनेपदमत्र प्रामादिकम्।

निरन्तरपदव्याख्यासंवलिता चरकसंहिता लवपुरनगर्य्यामेकचत्वारिंशदधिकोन-विंशशततमे खृष्टवर्षे पण्डितप्रवरश्रीहरिदत्तशास्त्रिणा संशोधिता श्रीमोतीलाल-वनारसीदासेन प्रकाशिता च। सम्भाव्यते च यदष्टाङ्गसंग्रहस्थचित्रपटादि-दर्शनानन्तरं श्रीहरिदत्तशास्त्रिमहोदयोऽपि गतानुगतिकन्यायेन जेज्जटो वागभटशिष्य इति कृत्वा निरन्तरपदव्याख्यायाः पुष्पिकायां स्वमत-प्रावण्यादलेखीत्—'इति श्रीवागभटशिष्यश्रीजेज्जटाचार्य्य-रचितायां निरन्तर-पदव्याख्यायाम्…' इत्यादि। अत एतज् जेज्जटलेखनीप्रसूतमिति न बोध्यम्। यद् वा भवतु, विचित्रोऽसौ चित्रपटः, यत ऐतिहासिकी विप्लुति-(historical anarchism)-रेनं प्राप्य सनाथा भविष्यति।

(९) सुधीश्वरवैद्यापरनाम्ना सुधीरवैद्येन माधवीयनिदानव्याख्या चरकटीका च प्रणीते। अस्य चरकटीकातिमात्रमुत्तमो ग्रन्थ आसीदिति श्रूयते। दशमैकादशखृष्टशताब्दीयेन चन्द्रटाचार्य्येणोक्तम्—

'व्याख्यातरि हरिचन्द्रे श्रीजेज्जटनाम्नि सति सुधीरे च।
अन्यस्यायुर्व्वेदे व्याख्या धार्ष्ट्यं समावहति॥' इति।

दशमखृष्टशताब्दीयश्चन्द्रटपिता तीसटाचार्य्यः सुधीरं तद्ग्रन्थं वा नाज्ञासीत्। एतस्माचावसीयते यदसौ दशमखृष्टशताब्द्यां प्रादुर्भूत इति। सुधीरतो जेज्जटाचार्य्यः किञ्चित् पुरोगामीति प्रतीयते।

(१०) नवमखृष्टशताब्द्यां दशमखृष्टशताब्द्यां वा कार्त्तिककुण्डनामा कश्चिद् वैद्यपण्डितश्चरकटीकामेकां प्रणिनाय। सम्भाव्यते यदसौ टीकाकारः सिद्धयोगादिप्रणेतु र्वृन्दकुण्डस्य वान्धवो ज्ञाति र्वासीदिति। वृन्दस्य सिद्ध-योगादिवैद्यकग्रन्थाः सुप्रसिद्धा एव।

(११) अमृतप्रभो नाम कश्चिद् वैद्यश्चरकन्यासं रचयामास। अस्य न्यासो नितरामुत्कृष्टो ग्रन्थ आसीदिति श्रूयते। दशमैकादशखृष्ट-शताब्दीयेन चन्द्रटाचार्य्येणायमुल्लिखित एव। चन्द्रटस्य पिता दशम-

खृष्टशताब्दीयस्तीसटाचार्य्यस्त्वस्य नामादि न जज्ञौ। अत उपपद्यते यदस्य कालो दशमखृष्टशताब्दीति। सम्भाव्यते यदेष ग्रन्थकारः कुत्रचिद् वैद्यबहुलस्थाने वसतिं कृतवानिति।

(१२) दशमैकादशखृष्टशताब्दीयेन नरदत्तेन 'बृहत्तन्त्रप्रदीप'नाम्नी चरकटीका प्रणीता। गोवर्द्धनदत्तो भानुदत्तश्चक्रपाणिदत्तश्चास्य शिष्या आसन्। गोवर्द्धनदत्तो वृहत्तन्त्रप्रदीपस्य तन्त्रप्रदीपनाम्नीं टीकां प्रणिनाय। भानुदत्तश्चक्रपाणे ज्येष्ठभ्राता। तेन 'कुमारभार्गवीय'नामकवैद्यकग्रन्थः प्रणीतः। चक्रपाणिरतितरां सुप्रसिद्ध एव।

(१३) श्रूयते हि यद् दशमखृष्टशताब्द्यां गयदासेन चरकसंहिताया-ष्टीका प्रणीतेति। अस्य सौश्रुतपञ्जिकाऽपरपर्य्यायबृहत्पञ्जिका नितरां शोभनो ग्रन्थः। अस्याः पञ्जिकाया नामान्तरे न्यायचन्द्रिका चन्द्रिका चेति।

गयदासः खलु महाविशिष्टो वैद्य आसीत्। समग्रं चिकित्साशास्त्र-मस्य जिह्वाग्रे नरीनृत्यते स्मेत्येका प्रसिद्धिरस्ति। श्रूयते हि विद्यातिरेकाद् महाचार्य्य इत्यपि ख्यातिरस्य सञ्जाता। चक्रपाणि-विजयरक्षित-डल्लणा-चार्य्यादिभिः प्राचीनग्रन्थकारैः ससम्मानमस्य नाम गृहीतमेव। चिकित्सा-संग्रहस्य 'रत्नप्रभा'नाम्न्यां टीकायां निश्चलकरेणोक्तम्—'गौडेश्वरान्तरङ्ग-श्रीगयदासेन दर्शितम्' इत्यादि। एतस्मादुपपद्यते यदसौ गौडराजवैद्य आसीदिति। खृष्टजन्मतो दशमैकादशशताब्द्योरिमं गौडदेशं भूषयामास स गयदासमहाचार्य्यः। एतस्मादनुमीयते यदसौ महाराजनयपालपितु गौंडाधिपते र्महीपालस्य राजत्वसमकाल स्तत्र राजवैद्यश्चासीदिति।

(१४) दशमखृष्टशताब्दीय-तीसटाचार्यस्य पुत्रश्चन्द्रटाचार्य्यो दश-मैकादशखृष्टशताब्दीय एव। एष दृढबलकृतां व्याख्यामुपजीव्य प्रति-संस्कृतचरकसंहितायाः कालदुष्टान् पाठानशोधयत्। अनेन च जेज्जट-

व्याख्यानुसारतः सुश्रुतसंहिताया अपि पाठशुद्धि व्यंधायि। चन्द्रटो हि चरकसुश्रुतयोः पाठशुद्धिकारक एव, न तु प्रतिसंस्कर्त्ता न वा व्याख्याकर्त्तेति ज्ञेयम्।

चन्द्रटेन विविधा वैद्यकग्रन्थाः प्रणीताः, यथा—चन्द्रटसारोद्धारः, योगरत्नसमुच्चयः, द्रव्यावली, चिकित्साकलिकाविवृतिः, वैद्यत्रिंशट्टीकेत्येवमाद्याः। तस्य ग्रन्थेभ्यो नानाग्रन्थ-ग्रन्थकाराणां नामान्युपलभ्यन्ते, यथा—अग्निवेशः, (आयुर्व्वेदसारादिप्रणेता नवमदशमखृष्टशताब्दीयः) अच्युतः, (चरकन्यासप्रणेता दशमखृष्टशताब्दीयः) अमितप्रभः, (नवमखृष्टशताब्दीया) अमृतमाला, अश्विनीसंहिता, (अत्रिपुत्रो महर्षिः) आत्रेयः, (तीसटप्रणीतः) आर्य्यसमुच्चयः, कालपादः, कृष्णात्रेयः, क्षारपाणिः, खरनादः, गोपुरः, चरकः, (दृढबलकृतम्) चरकोत्तरतन्त्रम्, चक्षुःष्येणः, (चिकित्साकलिकाकृत्) तीसटः, जतूकर्णः, (स्वकृतकोषग्रन्थः) द्रव्यावली, नागार्जुनः, नावनीतकम्, पराशरः, वृद्धवाहडः, वृद्धविदेहः, वृद्धसुश्रुतः, भद्रवर्म्मा, भेडः, भिषग्मुष्टिः, योगयुक्तिः, (सिद्धसारप्रणेता अष्टमखृष्टशताब्दीयः) रविगुप्तः, (बिन्दुसारप्रणेता दशमखृष्टशताब्दीयः) बिन्दुभट्टः, (दशमखृष्टशताब्दीयबिन्दुभट्टप्रणीतः) बिन्दुसारः, (अष्टमखृष्टशताब्दीय-रविगुप्तकृतः) सिद्धसारः हारीत इत्येवमाद्याः।

आयुर्व्वेददीपिकादिसंबलितायाश्चरकसंहिताया उपोद्घाते श्रीहरिदत्तशास्त्रिमहोदयेन लिखितम्—'परतस्तु वाग्भटादर्व्वाचीनेनानुमानतो वाग्भटपुत्रेण तीसटेन किलाग्निवेशं चरकं चोभावपि स्मरता स्पष्टीकृतेत्यादि (ञ पृष्ठे)। अत उपपद्यते यद् वाग्भट-तीसटयोः पितापुत्रसम्बन्धः शास्त्रिमहोदयेनानुमीयत इति। अतोऽत्र किञ्चित् क्रियते विमर्शः।

तीसट-चन्द्रटयोः पितापुत्रसम्बन्धः सुप्रसिद्ध एव। कस्तावत् तयोः कालपरिचय इत्यत्र हरिदत्तमहोदयो जोषमास्ते। श्रीरामचन्द्रशास्त्रि-

किंजवडेकरप्रकाशितसंग्रहस्य भूमिकायामायुर्व्वेदसेवकेन श्रीरामचन्द्रमहोदयेन संग्रहकारो वागभटश्चतुर्थपञ्चमखृष्टशताब्द्यो र्मध्ये स्थापितः। अत एतन्मते तीसटः पञ्चमखृष्टशताब्दीयो भवितुमर्हति। History of Sanskrit Literature नामकग्रन्थस्य ५११ पृष्ठे प्रात्निकप्रवरः कीथ्-महोदय आह—चिकित्साकलिकाकृत् तीसटश्चतुर्दशखृष्टशताब्दीय एवेति। चन्द्रटेन चिकित्साकलिका विवृता। तीसटकृतचिकित्सासमुच्चयस्योल्लेखा-वसरे तेन प्रायश आर्य्यसमुच्चय इत्युक्तम्। आर्य्यशब्देन टीकाकारमते पिता तीसटो लक्षितः। अत एव कीथ्महोदयसूचितं तीसटकालपरिचयमव-लम्ब्य चन्द्रटस्य चतुर्दशखृष्टशताब्दीवर्त्तित्वं वक्तुं शक्यते। इमे तु प्रात्निकाः सर्व्वे विभ्रान्ताः। अस्मन्मते पुनः संग्रहकृद् वागभटो द्वितीय-तृतीयखृष्ट-शताब्दीयस्तीसटाचार्य्यो दशमखृष्टशताब्दीयश्चन्द्रटाचार्य्यो दशमैकादश-खृष्टशताब्दीयश्चासन्। इदानीं वयमप्येतत् प्रतिपादयितुं प्रयतामहे।

नवमदशमखृष्टशताब्दीयः सिद्धयोगादिकृद्वृन्दकुण्डस्तीसट-चन्द्रटौ नाज्ञासीत्, अज्ञासीत् त्वेकादशखृष्टशताब्दीयश्चक्रपाणिरेव। पञ्चमीतो नवमीपर्य्यन्तायाः खृष्टशताब्द्या अभ्यन्तरे यदि तीसट-चन्द्रटयो र्विद्यमानत्वम-भविष्यत् तर्हि वैद्यकग्रन्थनिचये तयो र्नामोल्लेखश्चावश्यमस्थास्यत्। अत उपपद्यते यद् दशमैकादशखृष्टशताब्द्योरन्तर्वर्त्तिनि कुत्रचित् काले तौ विरेजाते इति।

एकादशखृष्टशताब्दीयस्य चक्रपाणेश्चिकित्सासंग्रहे तीसटचन्द्रटयो र्नामनी तीसटीयचिकित्साकलिकातः प्रमाणवचनानि चोपलभ्यन्ते। १२-१३ खृष्ट-शताब्द्यो र्विजयरक्षितेन मधुकोषे निश्चलकरेण रत्नप्रभायां च तौ पितापुत्रौ नामत उल्लिखितावेव। अतः कीथ्महोदयस्य मतवादः कथमपि स्थैर्य्यं न लभते।

चन्द्रटेन तत्कृतेषु ग्रन्थेषु दशमखृष्टशताब्दीययोश्चरकन्यासकृदमित-प्रभ-बिन्दुसारकृद्बिन्दुभट्टयो र्नामनी गृहीते, बिन्दुसारात् प्रमाणं च

समुद्धृतम्। दशमखृष्टशताब्दीययो ग्रन्थकारयो र्नामनी येन परिज्ञाते, दशमखृशताब्दीयो 'बिन्दुसार'ग्रन्थश्च येन पठितस्तस्य पिता नवमखृष्टशताब्दीतो महता कालेन व्यवहितस्य वाग्भटस्य पुत्र इति प्रतिपादयितुं केऽपि पण्डिताः प्राश्निका वा नालं भवेयुः। अत एव येनैव युक्तिकलापेन वाग्भट-जेज्जटयो र्गुरुशिष्यसम्बन्धो निराकृतस्तेनैव वाग्भटतीसटयोः पितापुत्रसम्बन्धोऽपि निराक्रियते।

(१५) चक्रपाणिदत्त एकादशखृष्टशताब्द्यां 'बृहत्तन्त्रप्रदीप'रचयितु र्नरदत्ताद् गुरोः शिक्षां लेभे। तेन चरकसंहिताया 'आयुर्व्वेददीपिका'-ऽपरनाम्नी चरकतात्पर्य्यटीका प्रणीता। अस्याः प्रसन्नतां गाम्भीर्य्यं च दृष्ट्वा तात्कालिकभारतीयवैद्यकवृन्दा एनं 'चरकचतुरानन'इत्युपाधिभूषितं चक्रिरे। सा च टीका जेज्जटकृतनिरन्तरपदव्याख्यायाः कियदंशेन सह श्रीयुक्तहरिदत्तशास्त्रिमहोदयेन १९४० खृष्टाब्दे लवपुरात् प्रकाशिता।

वङ्गदेशीय'वीरभूम'विभागान्तर्वर्त्तिनि मयूरग्रामे लोध्रवंशसम्भूतनारायणदत्तात् पितुरयं समजनि। गौडाधिपते र्नयपालस्य महानसे नारायणः सूदाध्यक्षतामकरोत्। पितरि दिवं प्रयाते चक्रपाणिरादौ तदधिकृतं स्थानमशून्यं विदधे। ततो विद्याबुद्धिप्राचुर्य्यात् स राज्ञा प्रधानमन्त्रित्वपदे न्ययोजि।

चिकित्साशास्त्रे चक्रपाणिः सूक्ष्मशेमुषीं प्राप। चक्रसंग्रह एव तस्याः प्रमाणमावहति। एष ग्रन्थो वैद्यवृन्दै र्नितरामाद्रियते। श्रूयते हि न केवलं शास्त्रे परं तु प्रयोगेऽपि स निपुणधीरासीदिति। वैद्यागमे बहव उत्कृष्टग्रन्था स्तेन प्रणीताः, यथा—'भानुमती'नाम्नी सौश्रुतटीका, 'आयुर्व्वेददीपिका'-ऽपरनाम्नी चरकतात्पर्य्यटीका, 'चक्रदत्तसंग्रहा'ऽपरनामा चिकित्सासंग्रहः, चिकित्सास्थानटिप्पणम्, व्यग्रदरिद्रशुभङ्करं शुभङ्करं वा, सर्व्वसारसंग्रहः, द्रव्यगुणसंग्रहः, वैद्यकोष इत्येवमाद्याः।

भानुमत्यां टीकाकृतः पण्डातिशयं दृष्ट्वा वैद्यागमिकास्तं 'सुश्रुतसहस्रनयन'इति-मानपत्रभूषितमकुर्व्वन्। निश्चलकरनामा कश्चित् सद्वैद्यस्त्रयोदशखृष्टशताब्द्यां चिकित्सासंग्रहस्य 'रत्नप्रभा'ऽभिधानां टीकामकरोत्। १५-१६ खृष्टशताब्दीयशिवदासेन पुना रत्नप्रभामुपजीव्य 'तत्त्वचन्द्रिका'-नाम्नी काचिदपरा टीका प्रणीता। तत्त्वचन्द्रिका रत्नप्रभाया न्यूनतामपूरयदित्येष ग्रन्थो वैद्यवृन्दैः समधिकमाद्रियते। १५ खृष्टशताब्दीय उत्कलदेशीयराजवैद्यः श्रीविश्वनाथसेनः सर्व्वसारसंग्रहस्य 'सारसंग्रह'नाम्नीं टीकां प्रणिनाय। मन्ये ग्रन्थकारो राज्ञो गजपतिप्रतापरुद्रस्य सभापण्डित आसीत्। एष विश्वनाथसेनः साहित्यदर्पणप्रणेतुः पथ्यापथ्यनिघण्टुकृतो विश्वनाथकविराजादर्व्वाचीन एव।

११ खृष्टशताब्दीयचिकित्सासंग्रहतो नानाविधग्रन्थानां नामानि समुपलभ्यन्ते, यथा—( अच्युतप्रणीतः ) आयुर्व्वेदसारः, ( जयदत्त-दीपंकर-श्रीज्ञानप्रणीतम् ) अश्ववैद्यकम्, ( पृथ्वीसिंहविरचितम् ) गन्धशास्त्रम्; ( दृढवलप्रणीतम् ) चरकोत्तरतन्त्रम्, ( तीसटकृता ) चिकित्साकलिका, ( नरदत्तप्रणीतः ) बृहत्तन्त्रप्रदीपः, ( गोवर्द्धनकृता ) रत्नमाला, ( रविगुप्तप्रणीतः ) सिद्धसारः, ( नलनृपकृतम् ) सूदशास्त्रम्, ( स्वकृतम् ) व्यग्रदरिद्रशुभङ्करम्, ( अष्टाङ्गसंग्रहापरपर्य्यायः ) वृद्धभागभटः, ( अष्टाङ्गहृदयसंहिताऽपरपर्य्यायः ) स्वल्पवागभटः, शिवसिद्धान्ततन्त्रम्, लोहशास्त्रम्, नावनीतकसंहिता, भिषगमुष्टिरित्येवमाद्याः। ग्रन्थकाराणां च नामानि तत उपलभ्यन्ते, यथा—( चरकन्यासप्रणेता ) अमितप्रभः, ( कल्याणसिद्धिकारक उग्रादित्यापरपर्य्यायः ) उग्रसेनः, ( कालज्ञानप्रणेता शम्भुनाथापरपर्य्यायः ) कालपादः, ( कृष्णात्रेयतन्त्रकृदत्रिपुत्रः ) कृष्णात्रेयः, ( कृष्णात्रेयापरपर्य्यायः ) कृष्णात्रिपुत्रः, ( क्षारपाणितन्त्रकृत्परमर्षिः ) क्षारपाणिः, ( खरनादतन्त्रकृत् ) खरनादः, चरकः,

सुश्रुतः, आत्रेयः, दृढबलः, ( प्राचीन आयुर्व्वेदाचार्य्यः ) चक्षुःष्येणः, ( चिकित्साकलिकादिप्रणेता ) तीसटः, ( चिकित्साकलिकाविवृतिप्रणेता ) चन्द्रटः, ( जतूकर्णतन्त्रकृत् परमर्षिः ) जतूकर्णः, ( गन्धशास्त्रकृत् ) पृथ्वीसिंहः, भद्रवर्म्मा, ( भालुकितन्त्रकृत्प्राचीनायुर्व्वेदविन्मुनिः ) भालुकिः, ( भेलतन्त्रकृत् परमर्षिः ) भेलः, ( धाराधिपतिः ) भोजः, ( निदानप्रणेता ) माधवकरः, ( सिद्धसारादिप्रणेता ) रविगुप्तः, ( संग्रहादिकृत् ) वाग्भटः, ( हयशास्त्रविशारदो राजर्षिः ) शालिहोत्रः, ( ऋक्प्रातिशाख्य-शौनक-तन्त्रकार-नेत्ररोगचिकित्सकः ) शौनकः, ( हारीततन्त्रकृत्परमर्षिः ) हारीत इत्येवमाद्याः ।

चिकित्सासंग्रहस्य निश्चलकृत १३ खृष्टशताब्दीय 'रत्नप्रभा'टीकायां ये ये ग्रन्था उल्लिखिता स्तेषां नामानि वर्णानुक्रमश उपरिष्टात् प्रदीयन्ते, यथा— अमृतघटः, अमृतमाला, ( १३ खृष्टशताब्दीयश्रीकण्ठकृता ) अमृतवल्ली, ( द्वादशखृष्टशताब्दीवर्त्यमोघवैद्यकृतम् ) अमोघज्ञानतन्त्रम्, ( एकादशखृष्ट-शताब्दीवर्त्तिजयदत्तदीपङ्करप्रणीताश्वायुर्व्वेदापरनाम ) अश्ववैद्यकम्, ( अश्वि-द्वयस्मृता ) अश्विनीसंहिता, (७-८ खृष्टशताब्दीयमाधवकरकृतः) आयुर्व्वेद-प्रकाशः, ( एकादशखृष्टशताब्दीवर्त्तीन्दुपण्डितकृत-शशिलेखाऽपरनाम्नी ) इन्दुमती, ( द्वादशखृष्टशताब्दीवर्त्तिजिनदासप्रणीतः ) कर्म्मदण्डी, अक्षदेव-कृता ) कर्म्ममाला, ( सप्तमखृष्टशताब्दीवर्त्तिन उग्रादित्यस्य कृतिः ) कल्याणसिद्धिः, ( चतुर्थखृष्टपूर्व्वशताब्दीयवात्स्यायनकृतकामसूत्रापरनाम ) कामशास्त्रम्, ( एकादशखृष्टशताब्दीयगोवर्द्धनदत्तप्रणीता ) कौमुदी, ( एकादशखृष्टशताब्दीवर्त्ति-भव्यदत्तकृतम् ) गन्धतन्त्रम्, ( द्वादशखृष्ट-शताब्दीयभवदेवभट्टप्रणीतम् ) गन्धशास्त्रम्, ( एकादशखृष्टशताब्दीय-पृथ्वीसिंहकृतः ) गन्धशास्त्रनिघण्टुः, ( द्वादशखृष्टशताब्दीवर्त्तिध्रुवपाद-प्रणीता ) चन्द्रकला, ( दशमखृष्टशताब्दीवर्त्तिगयदासमहाचार्य्यप्रणीत-

सौश्रुतपञ्जिकाऽपरनाम्नी ) चन्द्रिका, ( दशमखृष्टशताब्दीयतीसटप्रणीता ) चिकित्साकलिका, ( दशमैकादशखृष्टशब्दीयनरदत्तकृतबृहत्तन्त्रप्रदीपापरपर्य्यायः ) तन्त्रप्रदीपः, ( एकादशखृष्टशताब्दीयचक्रकृतायुर्व्वेददीपिकाऽपरनाम्नी ) दीपिका, ( ११ खृष्टशताब्दीयचक्रकृतद्रव्यगुणसंग्रहापरपर्य्यायः ) द्रव्यगुणः, ( दशमैकादशखृष्टशताब्दीयचन्द्रटकृतवैद्यककोषापरनाम्नी ) द्रव्यावली, धनुर्व्वेदः, ( त्रयोदशखृष्टशताब्दीवर्त्तिमेदिनीकरप्रणीतनानार्थकोषापरपर्य्यायः ) नानार्थः, ( वृद्धसुश्रुतोक्तं मतान्तरे प्रथमखृष्टशताब्दीयनवीनसुश्रुतोक्तं नावनीतकं प्रमादतो मुद्रितम् ) नामनीतकम्, ( एकादशखृष्टशताब्दीयगोवर्द्धनदत्तप्रणीता ) न्यायसारावली, ( सप्तमाष्टमखृष्टशताब्दीयमाधवकरप्रणीतसुश्रुतश्लोकवार्त्तिकापरनामकम् ) प्रश्नसहस्रविधानम्, ( षष्ठसप्तमखृष्टशताब्दीयभट्टारहरिचन्द्रकृता ) भट्टारसंहिता, ( द्वितीयतृतीयखृष्टशताब्दीयसिंहगुप्तसूनुवाग्भटकृताष्टाङ्गसंग्रहसंहिताऽपरनाम्नी ) मध्यसंहिता, ( प्रथम-द्वितीयखृष्टशताब्दीयनागार्जुनकृता ) योगमञ्जरी, ( एकादशखृष्टशताब्दीवर्त्तिभव्यदत्तप्रणीतः ) योगरत्नाकरः, ( द्वादशखृष्टशताब्दीपूर्व्ववर्त्तिबुद्धभट्टकृता ) रत्नपरीक्षा, ( ७-८ खृष्टशताब्दीयमाधवकरप्रणीतपर्य्यायरत्नमालाऽपरनाम्नी ) रत्नमाला, रससागरतन्त्रम्, ( शिवोक्तम् ) लोहशास्त्रतन्त्रम्, ( द्वादशखृष्टशताब्दीपूर्व्ववर्त्तिसनातनकृत-योगशास्त्रटीकाऽपरनाम्नी ) वल्लभा, ( ११-१२ खृष्टशताब्दीयवङ्गसेनविरचितः ) वङ्गसेनसंग्रहः, ( ५ खृष्टशताब्दीय-संसारावर्त्तकोषकृद्-महाराज-द्वितीयचन्द्रगुप्त-विक्रमादित्यप्रणीतः ) विक्रमपराक्रमः, ( ८-९ खृष्टशताब्दीयमहीधरकृतयोगशतटीकाऽपरनाम्नी ) विश्ववल्लभा, विष्णुपुराणम्, ( २-३ खृष्टशताब्दीयद्वितीयवाग्भटप्रणीतसंग्रहापरपर्य्यायः ) वृद्धवाग्भटः, ( सुश्रुततन्त्रापरनामकम् ) वृद्धसुश्रुतम्, ( ११ खृष्टशताब्दीवर्त्तिभव्यदत्तप्रणीतः ) वैद्यप्रदीपः, ( ११-१२ खृष्टशताब्दीयकलापपञ्जीकृत्त्रिलोचनपुत्रगदाधरदास-

कृतः ) वैद्यप्रसारकः, ( ११ खृष्टशताब्दीयचक्रपाणिकृतम् ) व्यग्रदरिद्र-शुभङ्करम्, ( ११-१२ खृष्टशताब्दीयवकुलकरप्रणीतः ) सारोच्चयः, ( ६-१० खृष्टशताब्दीय-वृन्दकुण्डप्रणीतः ) सिद्धयोगः, ( ८ खृष्टशताब्दीय-रविगुप्तकृतः ) सिद्धसारः, ( २-३ खृष्टशताब्दीयद्वितीयवाग्भटकृतहृदय-संहिताऽपरनाम्नी ) सूक्ष्मसंहिता, ( प्राकृतभाषायां माहुककृता ) हरमेखला, इति। ग्रन्थकाराणां च नामानि तत उपलभ्यन्ते, यथा—( ६-१० खृष्टशताब्दीयायुर्व्वेदसारकृत् ) अच्युतः, ( १० खृष्टशताब्दीयचरक-न्यासकृत् ) अमितप्रभः, ( ११-१२ खृष्टशताब्दीयकर्म्ममालाकृत् ) अक्षदेवः, ( ६ खृष्टशताब्दीयचरकटीकाकृत् ) आषाढवर्म्मा, ( ११-१२ खृष्टशताब्दीयचरक-माधवनिदानटीकाकृत् त्रिपुराधिपतिः ) ईशानदेवः, ( ११-१२ खृष्टशताब्दीयचरक-हृदयसंहिताटीकाकृत् ) ईश्वरसेनः, (११-१२ खृष्टशताब्दीयमहाराजलक्ष्मणसेनसभासत् ) उमापतिः, (१-२ खृष्टशताब्दीय-नवीनचरकापरपर्य्यायः ) कपिलबलः, ( १०-११ खृष्टशताब्दीयकरवीरपुर-वास्तव्यः ) करवीरः, ( ११-१२ खृष्टशताब्दीयजम्बुस्वामिचरितकृत् ) जिनदासः, ( १० खृष्टशताब्दीयकोलहसंहिताकृत् कोलहदासः प्रमादतो मुद्रितः ) कलहदासः, ( वाह्लीकदेशीयवैद्यागमिकमुनिः ) काङ्कायनः, ( शम्भुनाथापरपर्य्यायः ) कालपादः, ( ६-१० खृष्टशताब्दीयसुश्रुतटीकाकृत्) कार्त्तिककुण्डः, ( काश्यपतन्त्रादिस्मर्त्ता ) कश्यपः, ( कृष्णात्रेयतन्त्रकृद-त्रिपुत्रः ) कृष्णात्रेयः, ( अथर्व्वगृह्यसूत्रकृत् ) कौशिकः, ( आत्रेयशिष्य-परमर्षिः ) क्षारपाणिः, ( आयुर्व्वेदाचार्य्यखारनादिपिता ) खरनादः, ( ११ खृष्टशताब्दीवर्त्तिकलापपञ्जीकृत्-कायस्थत्रिलोचनपुत्रवैद्यप्रसारककृत् ) गदाधरदासः, ( १०-११ खृष्टशताब्दीयमहीपालराजवैद्य-सुश्रुतपञ्जिकाकृन् महाचार्य्यः ) गयदासः, ( १२-१३ खृष्टशताब्दीयचरकव्याख्याकृत् ) गुणाकरः, ( प्राचीनवैद्यागमिकमुनिः ) गोपतिः, ( दिवोदासशिष्यसुश्रुत-

सतीर्थ्यगोपुरतन्त्रकृत् ) गोपुररक्षितः, चक्रपाणिः, ( प्राचीनवैद्यागमिकमुनिः ) चक्षुःष्येणः, ( १० खृष्टशताब्दीयपदार्थचन्द्रिकानामक-हृदयटीकाकार-चन्द्रनन्दनः प्रमादतो मुद्रितः ) चन्दनः, ( १०-११ खृष्टशताब्दीयतीसटपुत्र-श्चिकित्साकलिकाविवृतिकारश्च ) चन्द्रटः, ( लोहशास्त्रकृत् ) जीवनाथः, ( जतूकर्णतन्त्रकृत् परमर्षिः ) जतूकर्णः, ( ६-१० खृष्टशताब्दीयचरकसुश्रुत-टीकाकृत् ) जेज्जटः, ( १० खृष्टशताब्दीयविक्रमशिलाऽध्यापकच्छन्दःशास्त्रोप-देष्टा ) ज्ञानश्रीः, (१० खृष्टशताब्दीयचिकित्साकलिकादिकृत् ) तीसटः, (११ खृष्टशताब्दीवर्त्तिकातन्त्रपञ्जीकृत्कायस्थवैद्यः ) त्रिलोचनदासः, ( ७ खृष्ट-शताब्दीवर्त्तिकाव्यादर्शादिकृत् ) दण्डी, ( ७-८ खृष्टशताब्दीयचरकोत्तर-तन्त्रादिकृत् ) दृढबलः, ( ११ खृष्टशताब्दीयदाक्षिणात्यवास्तव्यरसशास्त्रज्ञः ) देन्तकः, (११ खृष्टशताब्दीयधरणिकोषकृत् ) धरणिदासः, (७ खृष्टशताब्दीय-न्यायबिन्दुकृद् बौद्धाचार्य्यः ) धर्म्मकीर्त्तिः, ( १०-११ खृष्टशताब्दीय-बृहत्तन्त्रप्रदीपकृत् ) नरदत्तः, ( नैषधापरपर्य्यायसूदशास्त्रकृत् ) नलनृपः, ( १-२ खृष्टशताब्दीयः ) नागार्जुनः, ( ३ खृष्टपूर्व्वशताब्दीयच्छन्दःसूत्रकृत् ) पिङ्गलः, ( हस्त्यायुर्व्वेदकृन्मुनिः ) पालकाप्यः, ( पौष्कलवतापरपर्य्याय-सुश्रुतसतीर्थ्यः ) पुष्कलावतः, ( ६-१० खृष्टशताब्दीयगन्धशास्त्रकृत् ) पृथ्वीसिंहः, ( ११-१२ खृष्टशताब्दीयगन्धशास्त्रनिबन्धकृत् स्मार्त्तः ) भवदेवः, ( ११ खृष्टशताब्दीयवैद्यप्रदीपकृत् ) भव्यदत्तः, ( भेलतन्त्रकृत् परमर्षिः ) भेलः, ( ९ खृष्टशताब्दीययुक्तिदीपिकादिकृत्-षड्दर्शनटीकाकारवाचस्पति-मिश्राश्रयकान्यकुब्जाधिपति-वृद्धभोजापरपर्य्यायः ) भोजदेवः, ( १२-१३ खृष्टशताब्दीयवङ्गाधिपतिकेशवसेनदौहित्रविजयरक्षितापरपर्य्यायः ) रक्षितपादः, ( ११-१२ खृष्टशताब्दीयदेन्तकशिष्यः ) रम्भारामः, ( ८ खृष्टशताब्दीय-सिद्धसारादिकृत् ) रविगुप्तः, ( ६-१० खृष्टशताब्दीयप्राभाकरसम्प्रदायस्थ-मीमांसकवैद्यः ) वररुचिः, ( ६ खृष्टशताब्दीयगाणितिकवर्य्यः ) वराह-

मिहिरः, ( ११-१२ खृष्टशताब्दीयचरकटीकाकृद् वाष्पचन्द्रापरनामा ) वाप्यचन्द्रः, ( ५ खृष्टशताब्दीयसंसारावर्त्तकोष-विक्रमपराक्रमादिकृद् द्वितीय-चन्द्रगुप्तापरपर्य्यायमहाराजः ) विक्रमादित्यः, ( मिथिलाधिपतिः ) विदेहः, ( १२ खृष्टशताब्दीयधातुशास्त्रज्ञः ) विभाकरः, विश्वामित्रः, ( ९-१० खृष्टशताब्दीयसिद्धयोगादिकृत् ) वृन्दः, ( प्राचीनवैद्यागमिकः ) वैतरणः, ( हयायुर्व्वेदवित्सुश्रुतजनकराजर्षिः ) शालिहोत्रः, ( १२-१३ खृष्टशताब्दीय-व्याख्याकुसुमावलीकारः ) श्रीकण्ठदत्तः, ( ११-१२ खृष्टशताब्दीयराम-चरितकाव्यकृत् ) सन्ध्याकरनन्दी, ( १२ खृष्टशताब्दीयचरकटीकाकृत् ) सुदान्तसेनः, ( १२ खृष्टशताब्दीयनिदानव्याख्याकृत् ) सुधीरः, ( ६-७ खृष्टशताब्दीयखरनादतन्त्रप्रतिसंस्कर्त्ता भट्टारसंहिताकृच्च ) हरिचन्द्रः, ( हारीत-तन्त्रकृत्परमर्षिः ) हारीतः ।

चिकित्सासंग्रहोपरि १६ खृष्टशताब्द्यां शिवदासेन 'तत्त्वचन्द्रिका'नाम्नी टीका प्रणीता । तस्या वङ्गीयमुद्रणे ग्रन्थग्रन्थकाराणां यान्येव नामानि सन्ति तानि चोपरिष्टात् प्रदीयन्ते—रत्नप्रभा, हरिचन्द्रः ( २ पृष्ठे ), भट्टारहरिचन्द्रः ( १३ पृष्ठे ), जेज्जटः ( ११ पृष्ठे ), चन्द्रिकाकारः ( ११ पृष्ठे ), चन्द्रटः ( १६ पृष्ठे ), वृद्धवाग्भटः ( १२७ पृष्ठे ), डल्लणः ( २४ पृष्ठे ), दृढबलः ( १५६ पृष्ठे ), श्रीकण्ठदत्तः ( १८८ पृष्ठे ), किरातकाव्यम् ( २६ पृष्ठे ), भालुकितन्त्रम् ( ३१ पृष्ठे ), क्षारपाणिः ( ३८ पृष्ठे ), हारीतः ( ६६ पृष्ठे ), सिद्धसारः ( ५५ पृष्ठे ), आयुर्व्वेदसारः ( ६१ पृष्ठे ), वृन्दः ( ७६ पृष्ठे ), वैद्यप्रदीपः ( ७६ पृष्ठे ), योगरत्नाकरः ( ८६ पृष्ठे ), निश्चलकरः ( ८६ पृष्ठे ), निघण्टुः ( १०८ पृष्ठे ), कार्त्तिकः ( १३१ पृष्ठे ), भानुमती ( ३२४ पृष्ठे ), सुश्रुतः ( यत्र तत्र ), भोजः ( ३७० पृष्ठे ), विन्ध्यवासी गोविन्दभागवतः ( ४१७ पृष्ठे ), हारावली ( पुरुषोत्तमकृता—६३८ पृष्ठे ), पालकाप्यः ( ७०४ पृष्ठे ), पतञ्जलिः ( ६०३, ६०५, ६१४,

६१७ पृष्ठेषु ), सुदान्तः (५६१ पृष्ठे), मध्यवाग्भटः ( द्वितीयवाग्भटकृत-मध्यसंहिता—६६६ पृष्ठे), विदेहः ( ६६३पृष्ठे ), जीवकः ( ६११ पृष्ठे ), नागार्जुनः ( ६१० पृष्ठे ), पातञ्जलदर्शनम् ( ६१० पृष्ठे ), विन्दुसारः ( ५८७ पृष्ठे ), चरकः ( यत्र तत्र ), नयपालः ( ११ खृष्टशताब्दीयो वङ्गाधिपतिः ) इत्यादि ।

ननु, एकादशखृष्टशताब्दीयचिकित्सासंग्रह-त्रयोदशखृष्टशताब्दीयरत्न-प्रभा-षोडशखृष्टशताब्दीयतत्त्वचन्द्रिकासु समुल्लिखितग्रन्थग्रन्थकाराणामेवं-विधनामकीर्त्तने क आशयः? तेषां ग्रन्थग्रन्थकाराणां पौर्व्वापर्य्यदर्शनेन भविष्यद्गवेषिणां तत्तत्कालनिरूपणे सौकर्य्यं भवेदिति कृत्वा नामान्युल्लिखितानीति ज्ञेयम् । तद् यथा—हिष्ट्रि अफ् संस्कृतलिटारेचर-ग्रन्थस्य ५११ पृष्ठे प्रत्नतत्त्ववित्-कीथ्महोदयेन चिकित्साकलिकाकृतस्तीसटस्य चतुर्दशखृष्टशताब्दीयत्वं सिद्धान्तितम् ; एकादशखृष्टशताब्दीयेन चक्रपाणिना तु तदीयचिकित्सासंग्रहे चिकित्साकलिका नामत उल्लिखिता ( एतद्ग्रन्थस्य ५३ पृष्ठस्थितद्वितीयपंक्ति र्द्रष्टव्या ) ; द्वादशत्रयोदशखृष्टशताब्दीयेन निश्चल-करेण पुनस्तदीयरत्नप्रभायां तीसटपुत्रश्चिकित्साकलिकाविवृतिकारश्चन्द्रट-स्तीसटश्च नामत उल्लिखितौ (एतद्ग्रन्थस्य ५५ पृष्ठस्थचतुर्थसप्तमपंक्ती द्रष्टव्ये) । एतदालोचनेन विस्पष्टमेव प्रतीयते यत् कीथ्महोदयस्य सिद्धान्तः प्रामादिक इति ।

सुश्रुतप्रस्तावे पुनरपि चक्रपाणिप्रसङ्गः समागमिष्यति ।

(१६) एकादशखृष्टशताब्द्यां श्रीकृष्णवैद्येन चरकभाष्यं प्रणीतम् । श्रीकृष्ण एकादश-द्वादशखृष्टशताब्दीयस्य विश्वप्रकाशकृतो महेश्वरवैद्यस्य पितेत्यातङ्कदर्पणप्रणेता वाचस्पतिः । कल्पद्रुमकोषप्रकाशक-रामावतार-शर्म्ममते तु स महेश्वरस्य पितामह एव ।

(१७) एकादशखृष्टशताब्द्यां ब्रह्मदेवः श्रीब्रह्मदेवो वा चरक-सुश्रुतयो

ष्टीके प्रणिनाय। केचिदाहुरस्याः सुश्रुतटीकाया वार्त्तिकत्वप्रसिद्धिरस्तीति। ग्रन्थस्तु नास्माभि र्दृष्टः। निबन्धसंग्रहे डल्लणाचार्य्येण ग्रन्थोऽयमादरातिशयेन पुनः पुनरुल्लिखितः।

(१८) एकादशखृष्टशताब्द्यां वङ्गसेनस्य पित्रा काञ्जिकावास्तव्येन गदाधरेण चरकटीका प्रणीतेति श्रूयते। सम्भाव्यते कालवशेन टीकाया विलोपः सञ्जात इति।

(१९) एकादश-द्वादशखृष्टशताब्द्योरन्तर्वर्त्तिनि कुतश्चित् समये बाष्पचन्द्रापरनाम्ना वाप्यचन्द्रेण चरकसंहिताया ष्टीकैका प्रणीता। टीकाकारो बाष्पचन्द्रतन्त्रं च प्रणिनाय। मन्ये—स कस्मिंश्चिद् वैद्यबहुलस्थाने वसतिं कृतवानिति। तस्य ग्रन्थः १६५६ खृष्टाब्दीयकवीन्द्रसूच्यामुल्लिखितो वर्त्तते।

(२०) त्रिपुराधिपतेः केशवदेवस्य पुत्र ईशानदेवश्चरकटीकां व्यरचयत्। टीकाकार एकादश-द्वादशखृष्टशताब्दीय आसीत्। मधुकोषे विजयरक्षितेन टीकाया बहवो विषया उद्धृताः। ईशानदेवोऽपि त्रिपुराधिपतिरभवदिति बृहद्वङ्ग दीनेशचन्द्रः।

(२१) बकुलेश्वरसेनोऽपि चरकटीकां प्रणिनाय। टीका तु विलोपमापन्ना। मधुकोषे टीकाकृतो नामादि दृश्यते। मन्ये—ग्रन्थकारो वङ्गदेशे कश्चिद् वैद्यवंशीयः पण्डित आसीदिति। असावेकादशखृष्टशताब्द्यां प्रादुर्भूत इत्येके वदन्ति।

(२२) केचिदाहु र्यत् सिद्धश्वरसेनस्य पुत्र ईश्वरसेन एकादश-द्वादशखृष्टशताब्द्योरन्तर्वर्त्तिनि कुतश्चित् काले चरकस्य टीकामेकां प्रणिनाय। मधुकोषे टीकाकृतो वचनमुद्धृतम्। अधुना ग्रन्थस्तु नोपलभ्यते। श्रूयते हि यदनेन हृदयटीकाऽपि प्रणीतेति। वैद्यकुलपञ्जिकाया अवगम्यते यदेष ईश्वरसेनः सिद्धेश्वरसेनस्य पुत्र आसीदिति।

(२३) एकादश-द्वादशखृष्टशताब्द्योरन्तर्वर्त्तिनि कुतश्चित् समये जम्बू-स्वामिचरितप्रणेता शुक्लपटो जिनदासश्चरकोपरि कश्चिद् व्याख्याग्रन्थं निर्मितवान्। रत्नप्रभायामस्य नामोल्लेख उपलभ्यते। अस्य सम्पूर्णं नाम जिनदासगणिमहत्तर इति। जिनदासः प्रद्युम्नक्षमाख्यस्य श्रमणस्य शिष्यः। अनुयोगचूर्णिं कल्पभाष्यचूर्णिं चैष प्राणैषीत्।

(२४) सुदान्तसेनेन चरकस्य कश्चिद् व्याख्याग्रन्थः प्रणीतः। एष हि खृष्टीयद्वादशशताब्द्यां प्रादुर्भूतः। इदानीमस्य ग्रन्थस्य विलोपः सञ्जातः। मधुकोषे विजयरक्षितेन ग्रन्थकारस्य नामोल्लेखः कृतः। तत्त्वचन्द्रिकायां शिवदासेन तस्य वचांसि समुद्धृतानि। श्रूयते हि यदसौ शिल्पविद्यायामपि प्रवीण आसीदिति।

(२५) द्वादशत्रयोदशखृष्टशताब्द्योरन्तर्वर्त्तिनि कुतश्चित् काले गुणाकर-वैद्येन चरकस्य वृत्तिरेका प्रणीता। Dr. Cordier महोदयेनोक्तं गुणाकर इमां वृत्तिं चत्वारिंशदधिक-द्वादशशततमे वर्षे प्रणिनायेति। वृत्तिकारोऽयं द्वादशखृष्टशताब्दीयगुणचन्द्रसूरेः शिष्यो जैनाचार्य्यहेमचन्द्रसूरेः प्रशिष्यः षड्दर्शनसमुच्चयस्य टीकाकारश्चासीत्। भक्तामरस्तोत्रटीकाकृद् गुणाकरोऽन्य एव। चतुर्दशखृष्टशताब्द्यां स आविर्बभूव।

(२६) षोडशखृष्टशताब्द्यामनन्तसेनस्य पुत्रः शिवदाससेन 'चरकतत्त्व-प्रदीपिका'ऽभिधानां चरकटीकामेकामकरोत्। पञ्चदशखृष्टशताब्द्यामनन्त-सेनो वङ्गाधिपते बार्ब्बाकशाहमहोदयस्य राजवैद्य आसीत्। शिवदासेन नानावैद्यकग्रन्थाः प्रणीताः, यथा—चरकतत्त्वप्रदीपिका, अष्टाङ्गहृदय-संहितायास्तत्त्वबोधटीका, भव्यदत्तप्रणीतयोगरत्नाकरस्य टीका, चिकित्सा-संग्रहस्य 'तत्त्वचन्द्रिका'टीका, चक्रकृतद्रव्यगुणसंग्रहस्य 'द्रव्यगुणसंग्रहटीका' इत्येवमाद्याः।

(२७) ऊनविंशखृष्टशताब्द्यां गङ्गाधरकविराजेन 'जल्पकल्पतरु'नाम्नी चरकटीका प्रणीता। एषा टीका नितरां सुप्रसिद्धा। ग्रन्थश्च विपुल एव। वैद्यकशास्त्रे गङ्गाधरो योगरत्नावलीमाग्नेयायुर्व्वेदीयभाष्यं च प्रणिनाय। बहुषु शास्त्रेषु पाण्डित्यातिशयाद् गङ्गाधरः साक्षाद् गङ्गाधर इवेति ख्यातिरस्य सञ्जाता। शास्त्रान्तरेषु तस्य नानाग्रन्था विलसन्ति, यथा—तैत्तिरीयोपनिषद्भाष्यम्, शारीरकसूत्रव्याख्यानम्, गीताव्याख्यानम्, साङ्ख्यपातञ्जलन्यायवैशेषिकदर्शनानां व्याख्याग्रन्थाः, गोभिलगृह्यसूत्रभाष्यम्, शाण्डिल्यसूत्रव्याख्या, भागवतविचारः, 'प्रमादभञ्जनी'नाम्नी मनुटीका, कलापव्याख्या, पाणिनीयवार्त्तिकाना'मुद्धार'नाम्नी वृत्तिः, त्रिसूत्रव्याकरणम्, कुसुमाञ्जलिटीका, हर्षोदयनामकं चित्रकाव्यम्, दुर्गवधकाव्यमित्येवमाद्याः। जल्पकल्पतरुप्रणयनत एष कविराजश्चिरस्मरणीयो जातः। अस्य सर्व्वतोमुखी प्रतिभासीत्। व्याख्यानेषु तैत्तिरीयोपनिषद्भाष्यादिग्रन्था एनं यशस्विनं विदधुः। दर्शनक्षेत्रेऽस्य सर्व्वतन्त्रस्वतन्त्रतया निर्द्देशो नात्युक्ति र्भवति। चिकित्साक्षेत्रे चास्य प्रतिष्ठाबाहुल्यमासीत्। श्रूयते हि यदनेन प्रदत्तं भेषजं नितरां फलप्रदमभूदिति।

१७९८ खृष्टाब्दे गङ्गाधरः यशोहरग्रामे भवानीप्रसादरायाभिधानात् पितुः समजनि। तत्रैव स वैद्यप्रवररामकान्तसेनाद् गुरोरायुर्व्वेदशिक्षां लेभे। मुर्शिदाबादविभागान्तार्गत-सैयदाबादपत्तने स कृतावस्थान आसीत्। कलिकातास्थिता द्वारकानाथसेन-हाराणचन्द्रचक्रवर्त्तिप्रभृतयः सुप्रसिद्धचिकित्सकास्तस्य शिष्या आसन्। उभावेव महाविशिष्टपुरुषावास्ताम्। १८८५ खृष्टाब्दे गङ्गाधरः स्वर्गं प्रयातः।

(२८) विंशखृष्टशताब्द्यां योगीन्द्रनाथसेनवैद्यरत्नेन 'चरकोपस्कारः' प्रणीतः। एष द्वारकानाथसेनमहादयस्य पुत्रो गङ्गाधरकविराजस्य प्रशिष्यश्चासीत्। पितापुत्रावुभावेव कलिकातानगर्य्यां कृतावस्थानावास्ताम्।

चरकसंहितायां सूत्राणि चतुर्व्विधानि सन्ति—गुरुसूत्रं शिष्यसूत्रं प्रतिसंस्कर्त्तृसूत्रमेकीयसूत्रं चेति। तत्र गुरुसूत्रं यथा—'एकोऽपि ह्यनेकां संज्ञां लभते कार्य्यान्तराणि कुर्व्वन्······' ( सूत्र ४।१ ) इत्यादि। शिष्य-सूत्रं यथा—'नैतानि भगवन् पञ्चकषायशतानि पूर्य्यन्ते तानि तानि ह्येवाङ्गानि संप्लवन्ते तेषु तेषु महाकषायेष्विती'ति ( सू० ४।१० )। प्रति-संस्कर्त्तृसूत्रं यथा—'तमुवाच भगवानात्रेयः' इति। एकीयसूत्रं यथा—

'आत्मजः पुरुषो रोगाश्चात्मजाः कारणं हि सः।
स चिनोत्युपभुङ्क्ते च कर्म्म कर्म्मफलानि च॥
न ह्यृते चेतनाधातोः प्रवृत्तिः सुखदुःखयोः॥'
( सू० २५।४ ) इति।

सूत्रस्थानस्य 'दीर्घञ्जीवितीय'नाम्नि प्रथमेऽध्याये लिखितमस्ति—

'विघ्नभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम्।
तपोपवासाध्ययनब्रह्मचर्य्यव्रतायुषाम्॥
तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः।
समेताः पुण्यकर्म्माणः पार्श्वे हिमवतः शुभे॥'
इति।

तपः कृच्छ्रादि। उपवास इन्द्रियनिग्रहः संयमश्च न तु केवलं शरीर-विशोषणम्। तथा हि यमवचनम्—

'उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयो न शरीरविशोषणम्॥'
इति।

भगवान् बौधायनश्चाह—

'अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः।
हवि र्ब्राह्मणकाम्या च गुरो र्वचनमौषधम्॥'
इति।

तप इति। श्रीभाष्ये रामानुजाचार्य्य आह—'हितमितमेध्याशनं तप' इति। योगी याज्ञवल्क्य आह—

अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं दयार्ज्जवम्।
क्षमा धृति र्मिताहारः शौचं त्वेते यमा दश॥

(१।४६) इति।

तपोपवास इति, यथा नावनीतके 'उरोघातेष्वि'ति वक्तव्ये 'उरोद्घातेष्वि'त्युक्तम् विसर्ज्जनीयलोपे पुनः सन्धि र्न भवतीति कातन्त्रजौमरसौपद्ममौग्धबोधादयः। पाणिनिमते तु 'भोभगो-अघो-अपूर्व्वस्य योऽशि' (८।३।१७) इति रो र्यादेशे कृते 'लोपः शाकल्यस्य' (८।३।१९) इति 'य'स्य विकल्पेन लोपो भवति। 'पूर्व्वत्रासिद्धम्' (८।२।१) इति लोपशास्त्रस्यासिद्धत्वाद् नास्ति पुनरत्र 'आद् गुणः' (६।१।८७) इत्यस्य प्रवृत्त्यवकाशः। तदुक्तं पूर्व्वत्रासिद्धीय-सूत्रवृत्तौ—'सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्व्वं प्रति परं शास्त्रमसिद्धं स्यादि'ति। अतः पुनः सन्धि र्न भवति। आयुर्व्वेद-दीपिकायां तु चक्रपाणिराह—" 'तपोपवास' इति प्रयोगः पूर्व्वत्रासिद्धविधे-रनित्यत्वेन तपःसकारस्थानिभूत'य'लोपस्य सिद्धत्वाज् ज्ञेयः, यथा—'नोपधायाः' (पा० ६।४।७) इती"ति। 'नः उपधायाः' इति स्थिते विसर्गलोपे पूर्व्वत्रासिद्धशास्त्रस्यानित्यत्वात् पुनः सन्धौ नोपधाया इति सञ्जातमित्याशयः।

'नोपधायाः' (पा० ६।४।७) इत्यत्र सम्प्रदायविद्भिरुक्तम्—'नेति लुप्त-षष्ठीकमङ्गस्य विशेषणमि'ति। शब्दतत्त्वज्ञाः प्रतिपत्तारश्चाहुः—सम्प्रदाय-सिद्धान्तमनादृत्य पूर्व्वत्रासिद्धमित्यस्यानित्यत्वं न कल्पनीयम्, कल्पिते तु वहुषु स्थलेषु विसर्ज्जनीयस्य सन्धिकार्य्याणि दुष्येयुरि'ति। एवंविधं' वस्तु-वृत्तमुपलभ्य वयं पुनरिह ब्रूमः—छन्दोवत् सूत्राणि भवन्तीति न्यायेन लुप्तषष्ठीकसौत्रप्रयोगो हि लोके न प्रवर्त्तनीय इति। अत एव यस्तु 'तपोपवास'

इति मुनिप्रयोगः स पाणिनिस्मृत्या न समर्थनीयः। न हि पाणिनिस्मृतिश्चरकादिमुनीनधिकृत्य कृता। ते हि भगवन्तो वाग्विषये बहुत्र स्वतन्त्रा इति प्रामाणिकाः। अत एव ब्रूमः—सन्धिरघोपहासे मनोन्मथिन्यां वा यथा छान्दस स्तथा तपोपवासेऽपि ज्ञेय इति।

अनुक्रोशमिति। अनुक्रोशमित्यनुकम्पाम्। 'कृपा दयानुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः। [ क्रोशं विलापम् ] अनु अनुलक्ष्य क्रोशः विलाप इत्यक्षरार्थः। उक्तं च मेघे—

'एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्तिनो मे
सौहार्द्दाद् वा विधुर इति वा मय्यनुक्रोशबुद्ध्या' इति।

शाकुन्तले च—'येन सानुक्रोशोऽपि आर्य्यपुत्रो मयि तथाविधः संवृत्तः' ( ७ अंकः ) इति।

महर्षय इति। चक्रपाणिराह—'अनेन चतुर्व्विधा अपि ऋषयः—ऋषिका ऋषिपुत्राश्च देवर्षयो महर्षयश्च गृह्यन्ते। महर्ष्यनुगामित्वादृषिकादीनामपि ग्रहणमि'ति। तथाहि मात्स्ये—

'ऋषिपुत्रा ऋषीकास्तु मैथुनाद् गर्भसम्भवात्।
परत्वेनर्षयस्ते वै भूतादि ऋर्षिकास्ततः॥
ऋषीकाणां सुता ये वै विज्ञेया ऋषिपुत्रकाः।
( १२० अ० ) इति।

शास्त्रान्तरे पुन ऋर्षिभेदा उक्ताः—

'सप्त ब्रह्मर्षिदेवर्षिमहर्षिपरमर्षयः।
काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावराः॥'
इति रत्नकोषे।

क्रमावराः क्रमशोऽवरा इत्याशयः। सप्तब्रह्मर्षयस्तावत्—

'मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः ।
वशिष्ठश्च महाभाग ब्रह्मणो मानसाः सुताः ॥'
इति ।

केषांचिन्मते भृग्वादयोऽपि ब्रह्मर्षित्वेन ग्राह्याः । देवर्षयो तुम्बुरपर्व्वत-नारदादयः । महर्षय आत्रेय-व्यासादयः । परमर्षयो वह्निवेशभेलहारीतादयः । वह्निवेशस्य नामान्तरमग्निवेश इति । काण्डर्षयो जैमिन्यादयः । श्रुतर्षयः कपिष्ठलकठचरकादयः, सुश्रुतादयश्चेति त्रिकाण्डशेषः । राजर्षय ऋतुपर्ण-जनकादयः ।

चरके लिखितमस्ति—'पुरा प्रत्यक्षधर्म्माणं भगवन्तं पुनर्व्वसुम् ।
( सू० २५ अ० ) इति ।

निरुक्ते भगवान् यास्कः स्मरति—'साक्षात्कृतधर्म्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्म्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे विल्मग्रहणायेमं ग्रन्थं समाम्नासिषु र्वेदं च वेदाङ्गानि च । विल्मं भिल्मं भासनमिति वे'ति ( १।२०।२ ) । इमं मतवादमाश्रित्य कैश्चिदुच्यते यद्दषित्वं त्रिविधं मुख्यमातिदेशिकं तार्त्तीयीकं चेति । तत्र मन्त्रद्रष्टृत्वरूपं मुख्यर्षिलक्षणं तु साक्षात्कृतधर्म्मसु मरीचिवामदेव-वशिष्ठादिषु ज्ञेयम् । कल्पसूत्रब्राह्मणादिकर्त्तॄणां मन्त्रकर्त्तृत्वाभावेऽपि मन्त्रकर्त्तृत्वतुल्यतया यद्दषित्वं स्वीकृतं तदेव शिष्टसम्मतमातिदेशिकमेव । वेदाङ्गरामायणमहाभारतपुराणादिकर्त्तॄणां बहुज्ञत्वाद् बहूमानत्वात् पूजनीय-त्वाच्च यद्दषित्वमुक्तं तदेव तार्त्तीयीकमिति बोध्यम् ।

'समेताः पुण्यकर्म्माणः पार्श्वे हिमवतः शुभे' इति । समेता मिलिताः । पुण्यं कर्म्म येषां ते पुण्यकर्म्माणः पूतचरिता इत्यर्थः । हिमवतः पार्श्वे हिमवत्सन्निकृष्टे वृक्षगुल्मलतादिपरिवेष्टिते चित्ररथेन निर्म्मिते चैत्ररथवन-नामन्युपवने पुण्यकर्म्माणो महर्षयो मिलिता इति निष्कृष्टार्थः । अङ्गारपर्णा-

परनामक श्चित्ररथः कुवेरसखो गन्धर्व्वराजो यमुद्दिश्य हरिगीतायामुक्तम्— 'गन्धर्व्वाणां चित्ररथः' इति।

के ते महर्षयो ये तत्र समेता इत्याह—

'अङ्गिरा जमदग्निश्च वसिष्ठः कश्यपो भृगुः।
आत्रेयो गोतमः साङ्ख्यः पुलस्त्यो नारदोऽसितः॥
अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ।
पारीक्षि भिक्षुरात्रेयो भरद्वाजः कपिष्ठलः॥
विश्वामित्राश्मरथ्यौ च भार्गवश्च्यवनोऽभिजित्।
गार्ग्यः शाण्डिल्यकौण्डिन्यौ वार्क्षि र्देवलगालवौ॥
सांकृत्यो वैजवापिश्च कुशिको वादरायणः।
वडिशः शरलोमा च काप्यकात्यायनावुभौ॥
काङ्कायनः कैकशेयो धौम्यो मारीचिकाश्यपौ।
शर्कराक्षो हिरण्याक्षो लोकाक्षः पैङ्गिरेव च॥
शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः।
वैखानसा वालखिल्यास्तथा चान्ये महर्षयः॥
व्रह्मज्ञानस्य निधयो यमस्य नियमस्य च।
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः॥'

इति।

(सू० १-१४) इति। एषां श्लोकानां टीकायां चक्रपाणिराह—'वह्वृषीणामत्र कीर्त्तनं ग्रन्थादौ पापक्षयहेतुत्वेन, तथाऽऽयुर्व्वेदस्यैवंविधमहापुरुषसेवितत्वेन सेव्यत्वोपदर्शनार्थं चेति। एषु च केचिद् यायावराः केचिच्छालीनाः केचिदयोनिजाः; एवंप्रकाराश्च सर्व्वे मिलिता वोद्धव्याः। भिक्षुरित्यात्रेयविशेषणम्। वक्ष्यति हि—'तन्नेति भिक्षुरात्रेयः (सू०२६ अ०) इति। वैखानसा इति कर्म्मविशेषप्रयुक्ता संज्ञा। वालखिल्यास्तु

स्वल्पप्रमाणाः केचिद्दषयः। निधय इव निधयोऽक्षयस्थानत्वेन। दमो दान्तत्वम्' इति।

कथं पुनरात्रेयादयः सत्ययुगीया गार्ग्यादयः कलियुगीयाश्च मुनयो यौगपद्यत एकसभामास्थिता इत्याशङ्कायां टीकाकार आह—'बह्वृषीणामत्र कीर्त्तनं ग्रन्थादौ पापक्षयहेतुत्वेन, तथाऽऽयुर्व्वेदस्यैवंविध-महापुरुषसेवितत्वेन सेव्यत्वोपदर्शनार्थं चेती'ति। अत्र कश्चित् पुनरपि पर्य्यनुयोक्तुमर्हति यत् कृत-युगीया मुक्तपुरुषाः किं तनुधराः सन्तो ह्यर्व्वाचीनै र्मुनिभिः सह मिलिता उत वा भगवानावव्य इव लिङ्गशरीरविहारिण स्तत्रभवन्तो निर्म्माणकायं धृत्वा समुपागता आहो स्विद् मातापितृजैः षाट्कौशिकशरीरैरेव समुपस्थिता इति। अल्पमिदमुच्यते। आयुर्व्वेदस्यागमशुद्धिप्रतिपादनाय शिष्याणां प्रवृत्ति-जननाय च पुण्यश्लोकानामृषीणां नामानि कीर्त्त्यन्त इति। पाश्चात्त्यपण्डिता-स्त्वाहुः—'The names are taken merely honoris causa'. अयमाशयः। प्रक्रान्तविषयस्य स्तुत्यर्थं पूजार्थं वैषां नामग्रहणं बोध्यमिति। तदनन्तरं टीकाकार आह—'केचिद् यायावराः केचिच्छालीना' इति। अयमाशयः। केचिद्-विप्रा यायावरवृत्तिसम्पन्ना अन्ये केचन शालीन-वृत्तिमन्तश्चेति। अनयो र्वृत्त्योः शालीनवृत्तिः श्रेयसी भवति। यायावरं प्रत्यहं धान्यादियाच्ञामूलकं भैक्ष्यं शालीनं तु विनैव धाष्ट्र्यं यत् प्राप्तमयाचितमिति। स्मर्य्यते हि भागवते—

'वार्त्ता विचित्रा शालीनयायावरशिलोञ्छनम्।
विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा॥'

(७।११।१६) इति। सन्नयासिनस्त्वाहु—

'माधुकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम्।
तात्कालिकोपपन्नञ्च भैक्ष्यं पञ्चविधं स्मृतम्॥'

इति।

समेतानामृषीणां मध्ये बहवो नितरामुञ्छशीला आसन्। यायावर-शालीनेभ्यस्तेषां श्रेष्ठत्वात्। स्मर्य्यते च मनुना—

'ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्॥'

(४।५) इति। उञ्छश्च शिलं चोञ्छशिलमिति समाहार एकवद्भावश्च (१।२।६३ भाष्यम्)। पुमानुञ्छः शिलमृतमिति वोपालितः। 'ऋतमुञ्छ-शिलमि'त्यनेनोक्तं भवति यदुञ्छशीलं तदृतं सत्यव्रततुल्यमिति। क्षेत्राल्लूनानां व्रीह्यादीनां ये पुलाकाः परिभ्रष्टास्तेषां कणानामेकैकशः पक्षिवद् ग्रहणमुञ्छः। न तत्र बुद्धिरियमाधेया यत् परकीयमेतद् न गृह्णामीति। एवं च स्वाधिकारात् परिभ्रष्टस्य लूनस्यालूनस्य वाऽनेकप्रोहवतो ग्रहणं शिलम्।

उञ्छशिलशब्दद्वयस्य व्यत्यस्तविन्यासो दृश्यते। तथा हि मनुसंहितायाम्—

'एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः।
विस्तीर्य्यते यशो लोके तैलबिन्दुरिवाम्भसि॥'

(७।३३) इति। न केवलं संहितायाम्, लोकेऽपि स प्रयोगारूढ एव। तथा हि गोवर्द्धनाचार्य्यः—

'रघुकाराहृतसारे परिणतवाक्कल्मकेदारे।
भवभूतिकृतशिलोञ्छे तत्तलपतितं वयं चिनुमः॥'

इति। अस्मात् संघातादुञ्छशब्दो वियुक्तोऽपि व्यवह्रियते, यथाह भगवान् पतञ्जलिः—

'यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति॥'

(भाष्य० १।४।३) इति। उञ्छशिलशब्दयो र्व्यस्तविपर्य्यस्तपाठश्चोप-लभ्यते—'प्रतिग्रहाच्छिलं श्रेयस्ततोऽप्युञ्छः प्रशस्यते' इति स्मृत्यन्तरे।

'अमृतं स्यादयाचितमि'ति। अत्यन्तसुखहेतुत्वादमृतमित्यभिप्रायः। पाणिनिसूत्राणां संग्रहस्य कस्यचिद् बलरामचरितकाव्यस्य च कर्त्ता व्याडि दाक्षायण उत्पलिन्यामाह—

'अयाचिते यज्ञशेषे निर्व्वाणे चातिसुन्दरे।
अमृतं वारिणि प्रोक्तमतिहृद्ये च वस्तुनि ॥'

इति। शिशुपालवधे माघकविना तूक्तम्—'अमृतं नाम यत् सन्तो मन्त्रजिह्वेषु जुह्वति' इति। सन्तो मान्त्रिकाः। मन्त्रजिह्वेष्वग्निष्वित्यर्थः। 'मन्त्रजिह्वः सप्तजिह्वः सुजिह्वो हव्यवाहनः' इति वैजयन्तीकोषः। द्रष्टव्यं च किञ्चिदुद्ग्रन्थाभिधानम्। 'मृतं तु याचितं भैक्षमि'ति। यत् खलु प्रार्थितं भैक्षं तदेव निकारजनकत्वाद् मृतमिवेत्यर्थः, 'प्रमृतं कर्षणं स्मृतमि'ति। कृषिकर्म्म पुनर्मरणादपि पापीयः कर्षणेन हि प्राणिनां पीडानाशयोरवश्यम्भावित्वादित्याशयः। श्रूयते हि—आत्रेयभिक्षु-वामदेवादय उञ्छशीला आसन्निति।

टीकाकार आह—'एषु * मध्ये केचिदयोनिजा' इति। अयोनिजशरीराणि केषांचिद् देवानामृषीणां च श्रूयन्ते। न ह्यास्तां ब्रह्मणो मातापितराविति सोऽयोनिजः। आप्यतैजसवायवीयशरीरभाजो देवा वरुणसूर्य्यपवनलोकेषु प्रसिद्धा अयोनिजत्वेन शुक्रशोणित-सन्निपातानपेक्षत्वात्। ब्रह्मणः केचित् पुत्रा अयोनिजा अत्र्यङ्गिरःप्रभृतय इति शास्त्रीया प्रसिद्धिः। अब्जो धन्वन्तरिरयोनिजः। वालखिल्या ब्रह्मण उत्पन्नत्वादयोनिजा इति तु बृहद्रामायणम्, क्रतुना स्वभार्य्यायां सन्तत्यामुत्पादितत्वाद् योनिजा इति पुनर्मार्कण्डेयपुराणम्। कुम्भयोनित्वेऽपि अगस्त्यमुनावयोनिजशरीरव्यवहारो लोके दृश्यते मानुषीगर्भाशयेऽनुत्पन्नत्वात्। लक्ष्मीरयोनिजा। तदुक्तं

---

* टीकाकृद्भिरन्तरान्तरा 'एषु' इत्यस्य 'एषां मध्ये' इत्यस्य च सङ्करेण 'एषु मध्ये' इति विलिख्यते।

रघुकारेण—'राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत्' (११।४७) इति। रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिवेत्यर्थः। योनितोऽनुत्पन्नत्वादयोनिजा भवन्त्यमी। न पुनः कश्चिदेकान्तनियमो यत् प्रायशो देवादय एवायोनिजा भवन्ति न त्वन्ये। महीलतादीनामपि मातापितृभ्यामन्तरेण समुद्भवदर्शनात्।

अतो दैवं शरीरं द्विविधं योनिजमयोनिजं चेति। तत्र योनिजं शचीशक्रजयन्तादीनामयोनिजं ब्रह्मविष्णुमहेश्वरादीनाम्। पार्थिवं शरीरमपि द्विविधं योनिजमयोनिजं चेति। योनिजमपि द्विविधं जरायुजमण्डजं चेति। मनुष्यपशुमृगादयो योनिजाः, अण्डजाः पक्षिसरीसृपादयः। परितः सर्पणशीलत्वाद् बहवः कीटादयोऽपि सरीसृपा उच्यन्ते। भोगाधिष्ठानत्वेऽपि चेष्टावत्त्वादिकमस्फुटतरमिति वृक्षादिषु न शरीरव्यवहारः। वैखानसवालखिल्यादीनां वृत्तान्तमुपरिष्टाद् वक्ष्यामः।

इदानीं टीकां विहाय चरकोक्तानां महर्षीणां वृत्तानि यावच्छक्यं यथाशास्त्रं च प्रदीयन्ते।

(१) अङ्गिरा इति। अङ्गिरा अयोनिज इति पूर्व्वमवोचम्। स ब्रह्मणो मानसपुत्रो बृहस्पते र्जनकश्च। स चाथर्व्ववेदीय-कृत्याप्रतिहरणविषयकाणां मन्त्राणां द्रष्टा। अनेन महर्षिणा श्रद्धेत्यभिधानायां पत्न्यां चतस्रो दुहितर उत्पादिताः। तथा हि स्मर्य्यते श्रीमद्भागवते—

'श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः।
सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा॥'

इति। एताः सर्व्वा देवपत्न्यस्तिथ्यधिष्ठात्र्यो देवताश्च। बुद्धचरिते प्रथमखृष्टशताब्दीयः कविरश्वघोष आह—

यद् राजशास्त्रं भृगुरङ्गिरा वा
न चक्रतु र्वंशकरावृषी तौ।

तयोः सुतौ सौम्य* ससर्जतुस्तत्
कालेन शुक्रश्च बृहस्पतिश्च ॥

( १।४१ ) इति। असौ कृतयुगीय ऋषिः।

(२) जमदग्निरिति। अयं मुनि र्जमदग्निसंहिताकार आथर्व्वण-मन्त्रद्रष्टा परशुरामस्य जनकश्च। हैमाद्रे र्लक्षणप्रकाशमतेन स आयुर्व्वेद-कर्त्ता संहिताकारश्चासीत्। जमदग्निसंहिता नेदानीमुपलभ्यते, परं तु १६५६ खृष्टाब्दीयकवीन्द्रसूच्यामस्या उल्लेखो दृश्यते। अथर्व्ववेदीय-षष्ठकाण्डस्थितस्य षट्त्रिंशदधिकशततमसूक्तस्य भाष्ये तात्पर्य्यतो लिखित-मस्ति यदसौ महर्षि र्दुहित्रे केशवर्द्धनीं नितत्नीमोषधिं खननेनोद्धृतवान्। तामोषधिं हैहयमुनि र्वीतहव्यः केशवृद्धयर्थं मुनेरसितस्य गृहेभ्य आहरत्। तत्प्रयोगेण तस्याः कन्यायाः केशाः कृष्णवर्णाः सन्तो नड़ा इव द्राघीयांसो जाता इति। नितत्नी केशराजो भीमराजो वेत्यनुमीयते। असौ त्रेतायुगीय ऋषिः।

(३) वसिष्ठ इति। एतन्नाम तालव्यमध्यं च भवति—वशिष्ठ इति। एष ब्रह्मर्षिरथर्व्ववेदस्य भैषज्यविषयकप्रथमकाण्डीयमन्त्रद्रष्टा वशिष्ठतन्त्रप्रणेता च। अगस्त्य-वशिष्ठयोरुत्पत्तिमधिकृत्य बृहत्संहितायां व्याहरणमस्ति—

'बहुधा पतितं रेतः कलसे च जले स्थले।
वशिष्ठस्तु मुनिः स्थले संबभूवर्षिसत्तमः॥
कुम्भे त्वगस्त्यः संभूतः...............'।

इत्यादि। एष मैत्रावरुणिररुन्धतीजानिश्च। अन्यत्रैष ब्रह्मणो मानसः सुत इति स्मृतिरायणम्। अस्य पुत्रः शक्तिः पौत्रः पराशरः प्रपौत्रो व्यासदेव एव। व्यासदेवस्य प्रशंसनार्थमश्वघोषेणोक्तम्—

---

* ससृजतुरिति वक्तव्ये छन्दोभङ्गभिया ससर्जतुरिति कविना प्रयुक्तम्। न्यायश्च—'अपि माषं मषं कुर्य्याच्छन्दोभङ्गं त्यजेद् गिरमि'ति।

'सारस्वतश्चापि जगाद नष्टं वेदं पुन र्यं ददृशु र्न पूर्व्वे।
व्यासस्तथैनं वहुधा चकार न यं वशिष्ठः कृतवानशक्तिः॥'

(बुद्धच० १।४२) इति। अस्य निरवद्ये चरित्रे मालिन्यं समारोप्य पुनरपि तेन कविना चोक्तम्—

'मातङ्ग्यामक्षमालायां गर्हितायां रिरंसया।
कपिञ्जलादं तनयं वसिष्ठोऽजनयद् मुनिः॥'

(बुद्धच० ४।७७) इति। मातङ्ग्यां श्वपचकन्यायाम्। यद् वा भवतु, कविरिह पुन र्नाभियोज्यः स्यात्। यतो ह्यत्रार्थे मनुसंहितायामपि स्मर्य्यते—

'अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम्॥'

(६।२३) इति। अत्र कुल्लूक आह—'अक्षमालाख्या निकृष्टयोनिजा वशिष्ठेन परिणीते'ति।

ऋग्वेदस्य सप्तममण्डले वह्वय ऋचो वशिष्ठदृष्टत्वेनोक्ताः। लक्ष्मीतन्त्रं सप्तशत्या ऋषिं मेधसमेव वशिष्ठमाह। हेमाद्रे र्लक्षणप्रकाशे मुनेरस्यायुर्व्वेद-कर्त्तृत्वमुद्घुष्यते।

(४) कश्यपः काश्यपसंहिताकृत्। काश्यपसंहिता वृद्धजीवकीय-तन्त्रेति नाम्नापि प्रसिद्धा। अथर्व्ववेदस्य वहूनां मन्त्राणां द्रष्टृत्वेनासौ निरूपितः। मार्कण्डेयपुराणे स्मर्य्यते—

'ब्रह्मणस्तनयो योऽभून् मरीचिरिति विश्रुतः।
कश्यपस्तस्य पुत्रोऽभूत् कश्यपानात् स कश्यपः॥'

(१०८।३) इति। तैत्तिरीयब्राह्मणे तु शब्दितम्—'सर्व्वं जगत् सर्व्वदा सौक्ष्म्येण पश्यतीति कश्यप इति। इदमाकूतम्—पश्यक इत्यस्य वर्णविपर्य्ययेण कश्यप इति नाम सिद्धं भवतीति। महाभारतादवगम्यते यदसौ कश्यप ऐलमाह—

'आत्मा रुद्रो हृदये मानवानां
स्वं स्वं देहं परदेहं च हन्ति ।
वातोत्पातैः सदृशं रुद्रमाहु
र्दैवै र्जीमूतैः सदृशं रूपमस्य ॥'

( शान्ति-राजध० ७३ अ० १६ श्लोकः ) इति । नीलकण्ठीयायां व्याख्यायामुक्तम्—'मानवानां हृदये य आत्मा जीवोऽस्ति स एव रुद्रः संहर्त्ता भवती'त्यादि । असौ मरीचेः पुत्रत्वान् 'मारीचकश्यप' इति नाम्नाऽपि प्रसिद्धः । काश्यपसंहिताया वृद्धजीवकीयतन्त्राद् अवगम्यते यदसौ वृद्ध-जीवकस्य गुरुरासीदिति । तत्र लिखितमस्ति—

'मारीचमृषिमासीनं सूर्य्यवैश्वानरद्युतिम् ।
विनयेनोपसङ्गस्य प्राह स्थविरजीवकः ॥
भगवन्नक्षिरोगेण परिक्लिष्टस्य चक्षुषः ।
कदा संशमनं देयं किं च संशमनं हितम् ॥'

( षट्कल्पाध्यायः ) इति ।

विषविषयकप्रश्नोत्तरे स आह—

'औषधं चापि दुर्युक्तं तीक्ष्णं सम्पद्यते विषम् ।
विषं च विधिना युक्तं भेषजायोपकल्पते ॥'

इति ।

कश्यपस्य द्वे भार्य्ये दितिरदितिश्चेति । उभे ते दक्षप्रजापतेः कन्यके एव । तत्रादितेः पुत्राः सुरा दितेस्तु दैत्या असुरा वा । अतः कश्यपः सुरासुराणां पितृत्वात् सुरासुरगुरुरित्युच्यते । उक्तं च—'पूजितो यः सुरासुरैरि'ति । असौ सत्ययुगीय ऋषिः ।

काशीखण्डादवगम्यते यद् विज्ञानकौमुदीनाम्नी काचन लोकायतिका कश्यपचरित्रे मालिन्यं समारोप्य काशीवासिनः पौरानुवाच—

ब्रह्मादिसृष्टिरेवेति प्रोच्यते वृद्धपूरुषैः ।
तस्य स्रष्टुः सुतौ दक्षमरीची चेति विश्रुतौ ॥
मारीचकश्यपेनैव दक्षकन्याः सुलोचनाः ।
धर्म्म्येण किल मार्गेण परिणीतास्त्रयोदश ॥
अपीदानीन्तनै र्लोकैरल्पबुद्धिपराक्रमैः ।
इयं गम्या त्वगम्येयं विचारः क्रियते मुधा ॥
एकस्यां च तनौ जाता एकतो यदि वा क्वचित् ।
चत्वारस्तनयास्तत् किं भिन्नवर्णत्वमाप्नुयुः ॥
वर्णावर्णविवेकोऽयं तस्मान्न प्रतिभासते ।
अतो भेदो न मन्तव्यो मानुष्ये केनचित् क्वचित् ॥'
इति ।

पुरुषा विचेतसः सन्तः समाजविप्लवकारिणमेतत् सकलमर्थजातं पुष्णन्ति । अनेन हि मतवादेन न केवलं सर्व्वे वर्णा गम्यागम्यविचारवर्ज्जनेन सङ्कीर्य्येरन्, परं तु सकलशास्त्रमर्य्यादा अपि भिद्येरन् ।

(५) भृगुमुनि र्ब्रह्मणस्त्वचो जात इति स्मृतिरायणम् । केषाञ्चिन्मते स पञ्चाम्रादिन्यायेन सप्तर्षिमध्येऽपि गण्यः । दशानां प्रजापतीनां भृगुरन्यतम एव । कर्द्दमकन्या मतान्तरे तु कश्यपकन्या ख्यातिरस्य भार्य्या । अन्याप्यस्य भार्य्या पुलोमा यस्यां स मुनिं च्यवनं जनयामास । च्यवनस्य पुत्रो विश्वविश्रुत आदिकवि र्महर्षि र्वाल्मीकिरिति शास्त्रीया प्रसिद्धिः । तदुक्तमश्वघोषेण बुद्धचरिते—

"वाल्मीकिरादौ च ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः ।
चिकित्सितं यच्च चकार नात्रिः पश्चात्तदात्रेय ऋषि र्जगाद ॥"
( १।४३ ) इति ।

स च भृगुमुनि र्धनुर्व्वेदविद्यायाः प्रवर्त्तकविशेष इति विष्णुपुराणम्। अग्निपुराणस्य वरसर्गाध्याये भृगो र्विवरणमस्ति। कस्मिंश्चित् समये तत्प्रसादेन क्षत्रियो वीतहव्यो हैहयमुनि र्ब्राह्मणत्वं प्रापितः। वीतहव्यस्य पुत्रै र्दिवोदासः पराजितोऽभूत्, ततस्तत् पुत्रदैवोदासिप्रतर्द्दनेन पुनरपि काशीराज्यं दिवोदासवशं प्रत्यानीतमिति पौराणिकी वार्त्ता। भृगोरन्ये वृत्तान्ता उपरिष्टात् तत्पुत्रच्यवनकथाप्रसङ्गे द्रष्टव्याः।

(६) भगवान् सोम आत्रेय एव धुरि कीर्त्तनीयः सर्व्वेषां वैद्यागमिकानाम्। पुनर्व्वसुश्चान्द्रभागश्चान्द्रभागी चेति नामभिः प्रसिद्धिं लेभे। अत्रे रपत्यमात्रेयः ( पा० ४।१।१२२ ) इति। यो हि क्षेत्रज्ञरूपेण पुनः पुनः शरीरे वसति स पुनर्व्वसुः। सोम इत्यस्य पितृदत्तं नाम। 'चन्द्रभाग'-पर्व्वतस्य सानोरस्याभिजनत्वात् स चान्द्रभाग इति नाम्नाऽपि प्रसिद्धः। भेलसंहितायां लिखितमस्ति—

'गान्धारदेशे राजर्षि र्नग्नजित् स्वर्णमार्गदः (alchemist)।
संगृह्य पादौ पप्रच्छ चन्द्रभागं पुनर्व्वसुम्॥' इति।

नग्नजिद् विनग्नजिदिति। सोऽपि साङ्गायुर्व्वेदप्रवर्त्तको मुनिरासीदिति लक्षणप्रकाशः। 'चन्द्रभागी'-नदीतीरे निवासात् स आत्रेय पुनश्चान्द्रभागीति कथ्यते। चरकेणोक्तम्—'यथा प्रश्नं भगवता व्याहृतं चान्द्रभागिना' ( सू० १३।१०० ) इति। अत्र चक्रपाणिराह—'चान्द्रभागी पुनर्व्वसुरि'ति।

केचित् पुन र्भरद्वाजात्रेययोरभिन्नत्वप्रतिपादने बद्धपरिकरा एव। तन्न। चरकस्य सूत्रस्थानीय-प्रथमाध्याये लिखितमस्ति—

'ऋषयश्च भरद्वाजाज् जगृहुस्तं प्रजाहितम्।
दीर्घमायुश्चिकीर्षन्तो वेद वर्धनमायुषः॥...

अथ मैत्रीपरः पुण्यमायुर्व्वेदं पुनर्व्वसुः ।
शिष्येभ्यो दत्तवान् षड्भ्यः सर्व्वभूतानुकम्पया ॥'

( २७,३० ) इति ।

आभ्यां श्लोकाभ्यां भरद्वाज-पुनर्व्वस्वो र्भिन्नत्वमेव प्रतिपाद्यते। उक्तश्लोक-व्याख्यायां चक्रपाणिरप्याह—'अथेत्यादिना भरद्वाजशिष्यस्यात्रेयस्य पुनर्व्वस्वपरनाम्नोऽग्निवेशादिगुरुतां दर्शयति । अत्र केचिद् भरद्वाजात्रेययो-रैक्यं मन्यन्ते । तन्न । भरद्वाजसंज्ञया आत्रेयस्य क्वचिदपि तन्त्रप्रदेशेऽकीर्त्तनात्' इति ।

आत्रेयस्य द्वौ भ्रातरावास्ताम्—दत्तात्रेयकल्पप्रणेता दत्तात्रेयः कृष्णात्रेयतन्त्रप्रणेता कृष्णात्रेयश्चेति । दुर्व्वासाः कृष्णात्रेयस्य नामान्तर-मेव । तदुक्तम्—'वैवस्वते तु मन्वन्तरे दत्तो दुर्व्वासाः सोमश्चेति त्रय आत्रेयाः प्रसिद्धाः' इति । उक्तिस्तु न निर्म्मूला भवति, यतः श्रीमद्-भागवतस्य चतुर्थस्कन्धे स्मर्य्यते—

'अत्रेः पत्न्यनसूया त्रीञ् जज्ञे सुयशसः सुतान् ।
दत्तं दुर्व्वाससं सोममात्मेशब्रह्मसम्भवान् ॥'

( १।१४ ) इति ।

अत्र श्रीधरस्वामी—'आत्मेशब्रह्मसम्भवान् विष्णुरुद्रब्रह्मणामंशैः सम्भूतानि'ति । अत एव दत्तो दुर्व्वासाः सोमश्चेति त्रीणि नामानि पितृदत्तानि । अत्रिजातत्वादेते सर्व्वे आत्रेया इत्यभिधीयन्ते ।

भवति च कश्चित् पौराणिकः श्लोकः—

'अत्रिजातस्य या मूर्त्तिः शशिनः सज्जनस्य च ।
क्व सा चैवात्रिजातस्य तमसो दुर्ज्जनस्य च ॥' इति ।

अस्य व्याख्यायां त्रिविक्रमभट्ट आह—'शशिनो ब्रह्मांशेन सम्भूतस्य सोमस्य, सज्जनस्य विष्ण्वंशेन सम्भूतस्य दत्तात्रेयस्य, दुर्ज्जनस्य रुद्रांशेन सम्भूतस्य

दुर्व्वाससः। किम्भूतस्य दुर्ज्जनस्य? तमसः कृष्णकायस्येत्यर्थः' इति। दुर्व्वासः-शब्दस्य निरुक्ति र्दर्शिता—'दुर्दुष्टं निगूढमिति यावद् वासः (वासस्) वस्त्रमिव धर्म्मावरणत्वं यस्य स दुर्व्वासा इति। अस्य दैहिक-लक्षणादय आकृतिप्रकृतयश्च महाभारतादवगम्यन्ते। तत्र लिखितमस्ति—

"………………ब्राह्मणो हरिपिङ्गलः।
चीरवासा बिल्वदण्डी दीर्घश्मश्रुः कृशो महान्॥
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि।…
रोषणं सर्व्वभूतानां सूक्ष्मेऽप्यपकृते कृते।'
(अनुशा० १५९ अ०) इति।

विष्णुपुराणे तेन स्वयमेवोक्तम्—

"नाहं कृपालुहृदयो न च मां भजते क्षमा।
अक्षान्तिसारसर्वस्वं दुर्वाससमवेहि माम्॥"

इति। दुर्व्वाससः कृष्णात्रेयस्य दैहिकलक्षणादयः स्वभावादयश्च यथा तथा वा भवन्तु, तस्य योग-ज्ञानविषयकः प्रभावो गोपालोत्तरतापिन्युपनिषद्युपलभ्यते। विष्णुपुराणादवगम्यते दत्तात्रेयस्य तपःप्रभावात् कार्त्तवीर्य्यार्जुनः सहस्रं बाहूनमितां च शक्तिं प्रापेति। ततश्च रेवातीरे स कस्मिंश्चिदाहवे रावणं चारके निरुद्धवान्।

आत्रेयविषये चरकेणोक्तम्—'पुरा प्रत्यक्षधर्म्माणं भगवन्तं पुनर्व्वसुम्' (सू० २५ अ०) इति। तदनन्तरं लिखितमस्ति—"एक एव रस इत्युवाच भद्रकाप्यः……, द्वौ रसाविति शाकुन्तेयो ब्राह्मणः…, त्रयो रसा इति पूर्णाक्षो मौद्गल्यः…, चत्वारो रसा इति हिरण्याक्षः कौशिकः…, पञ्च रसा इति कुमारशिरा भरद्वाजः……, षड् रसा इति वार्य्योविदो राजर्षिः गुरुलघु-शीतोष्णस्निग्धरूक्षाः……, सप्त रसा इति निमि र्वैदेहः……, अष्टौ रसा इति बडिशो धामार्गवः……, अपरिसंख्येया रसा इति काङ्कायनो वाह्लीक-

भिषगि"ति । ततः प्रत्युत्तरमाह भगवानात्रेयः पुनर्व्वसुः 'षडेव रसाः……, मधुराम्ललवणकटुतिक्तकषायाः, तेषां षण्णां रसानां योनिरुदकमि'ति । अतो रसस्वरूपनिर्णये भगवत आदिवक्तृत्वमवगम्यते ।

हारीतसंहितायामत्रिपुत्रस्य पुनर्व्वसोरात्रेयस्य प्रशंसावचनं श्रूयते—

'यथा सिंहो मृगेन्द्राणां यथाऽनन्तो भुजङ्गमे ।
देवानां च यथा शम्भुस्तथाऽऽत्रेयोऽस्ति वैद्यके ॥'

इति । अत्रिरपि तत्र प्रशंसितः—'आदौ यद् ब्रह्मणा प्रोक्तमत्रिणा तदन्तरम्' इति, 'अत्रिः कृतयुगे वैद्यः' इति च । पितापुत्रौ समुद्दिश्य बुद्धचरिते कविरश्वघोषस्त्वाह—

'वाल्मीकिरादौ ससर्ज्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः ।
चिकित्सितं यच्च चकार नात्रिः पश्चात्तदात्रेय ऋषि र्जगाद ॥'

( १।४३ ) इति । भद्रमुक्तम् । वैद्यागमे महाविशिष्टः पुरुष एव भगवानात्रेयः ।

आयुर्व्वेदशास्त्रवद् दर्शनशास्त्रमपि भगवत आत्रेयाय रुरुचे । अतश्चोक्तम्—

'एकं शास्त्रं वैद्यमध्यात्मकं वा
सौख्यं चैकं यत् सुखं वा तपो वा ।
वन्द्यश्चैको भूपति र्वा यति र्वा
एकं कर्म्म श्रेयसं वा यशो वा ॥'

( हारीत० १ अ० ) इति ।

उक्तिरियं हि स्मारयति नीतिशतके भर्त्तृहरिवचनम्—

'एको देवः केशवो वा शिवो वा
एकं मित्रं भूपति र्वा यति र्वा ।

एको वासः पत्तने वा वने वा
एका भार्या सुन्दरी वा दरी वा ॥
( ६६ ) इति ।'

अत्र सुन्दरी वा भार्यात्वेन स्वीकर्तव्या पर्वतगुहां वा समाश्रित्य तपस्तप्तव्यमिति कवेराशयः। परमरमणीया रमणी चेन्न लभ्येत गार्हस्थ्य-सुखस्य मूल एव कुठारः समर्प्येतेति कविरभिप्रैति। पूर्वोद्धृतश्लोके सौख्यं चैकं यत् सुखं वा तपो वेति यदुक्तम्, अत्र श्लोके 'एका भार्या सुन्दरी वा दरी वा' इत्येतेन तदेव प्रतिपाद्यते।

इदं पुनरत्रावधेयम्। भर्त्तृशतकान्तर्गतनीतिशतकादिप्रणेता महाराजो भर्त्तृहरि र्मालवान्तर्गतायामुज्जयिन्यां क्षत्रियकुलोत्पन्नगन्धर्व्वसेनादजनिष्ट। स च भट्टिकृतो वाक्यपदीयकृतश्च स्वतन्त्र एव। त्रिष्वेवैषु नीतिशतकादि-कृद् भर्त्तृहरिः प्राचीनतम इति तर्क्यते। ऐतिहासिकप्रसिद्धिरप्यस्ति यत् षष्ठखृष्टशताब्द्या द्वितीयपादे स राज्यलुब्धेन भ्रात्रा यशोधर्म्मदेवेन व्यापादित इति। प्रसिद्धिरस्ति यद् व्यापादनात् प्राक् स उक्तवान्—

'क्रोधो वैवस्वतो राजन्नाशा वैतरणी नदी।
विद्या कामदुघा धेनुः सन्तोषो नन्दनं वनम् ॥'
इति।

व्यापाद्य चैनं देवकल्पं भ्रातरं स पापमूर्त्ति र्विक्रमादित्य इत्युपाधिभूषित आसीत्।

अस्त्येकः पुरातन आभाणकः—

'तमस्यपि विलोक्यन्ते दन्तिदन्ता न दन्तिनः'

इति। अवितथमेतत्। अस्माकं भट्टिकारस्यापि प्रकृतं नाम कुत्रचित् प्राचीनग्रन्थे न दृश्यते ; दृश्यते तु सदैव तस्य भ्राजिष्णुरत्युत्तमा कृतिः। यद् वा भवतु, षोडशखृष्टशताब्दीय-हरिनामामृतव्याकरणे श्रीजीवगोस्वामि-

पादेनोक्तम्—'फलेग्रहीन् हंसि वनस्पतीनामिति भर्त्तृहरिविप्रः' (कृत् २४२) इति। ततः सप्तदशखृष्टशताब्द्यां भाषावृत्त्यर्थविवृतिकृत् सृष्टिधरचक्रवर्त्ति-महोदयो भट्टिकारस्य नाम भर्त्तृहरिरित्यब्रवीत्। भरतमल्लिकेन श्रीजीव-सृष्टिधरौ समर्थितौ। अतस्तदनुरोधेन चास्माभिरपि भट्टिकारो भर्त्तृहरि-त्वेन गृह्यते।

भट्टिकाव्यकारः श्रीस्वामिपुत्रो भट्टब्राह्मणश्चेति द्वादशखृष्टशताब्दीय-जयमङ्गलटीकातो ज्ञायते। भट्टे द्वाविंशतितमसर्गान्ते लिखितमस्ति—

'काव्यमिदं विहितं मया वलभ्यां
श्रीधरसूनुनरेन्द्रपालितायाम्।
कीर्त्तिरतो भवतान्नृपस्य तस्य
क्षेमकरः क्षितिपो यतः प्रजानाम्॥'
(३५) इति।

अस्य व्याख्यायां जयमङ्गलटीकाकारो जयमङ्गलाचार्य्य आह—'मयेदं काव्यं विहितं कृतं श्रीधरसूनुना नरेन्द्रनाम्ना नृपेन पालितायां रक्षितायां वलभ्यां वलभीनामपुर्य्याम्, अत एव काव्यविधानाय या कीर्त्तिः सा तस्यैव राज्ञो भवतात्। यतः……' इत्यादि।

भट्टिकाव्यप्रणयेन कविरेष चिरस्मरणीयः सञ्जातः। तत्र विविध-व्याकरणेषु कवेर्वैचक्षण्यं सुव्यक्तमेव।

कुतश्चिद् ग्रन्थे पुनर्लिखितमस्ति—'श्रीधरसेननरेन्द्रपालितायामि'ति। एवं पाठव्यतिरेकादितिहासमाश्रित्य किञ्चित् क्रियते विमर्शः। सुराष्ट्र-देशान्तर्गतवलभीनगरे (वर्त्तमान'काथियावार'इत्याख्यप्रदेशे) नरपतौ शीलादित्यधर्म्मादित्ये ६३० खृष्टाब्दे दिवं गते सति तस्य भ्रातुष्पुत्र-स्तृतीयश्रीधरसेनो भोगेषु विरक्तिमापद्यमानः स्वानुजं श्रीधरसेनबालादित्यं

राजकार्य्ये न्ययुङ्क्त। तृतीयश्रीधरसेनोऽकृतदारपरिग्रह आसीत्। संसारे यथा तस्यानुरागो जायेत तथा स कनिष्ठः श्रीध्रुवसेनो भ्रातृप्रेम-प्राचुर्य्यात् स्वकीयमेकमात्रं पुत्रं नरेन्द्रदेवं पालनार्थं ज्येष्ठभ्रात्रे सनिर्ब्बन्धं प्रादात्। तृतीयश्रीधरसेनश्च भ्रातृवत्सलत्वात् तस्य प्रार्थनामनुमेने। कुमारो नरेन्द्रोऽपि ज्येष्ठतातं पितेति, पितरं खुल्लतातेति समभाषत।

६४६ खृष्टाब्दे श्रीध्रुवसेने महाराजे सत्युपरते कुमारो ज्येष्ठतातं राज्यभारग्रहणाय भृशं प्रार्थयामास। यदा तेन तदभ्यर्थना कथमपि न स्वीकृता तदा स स्वयमेव महाराजाधिराजश्रीधरसेन इति नाम गृहीत्वा ६४६ खृष्टाब्दतः ६७१ खृष्टाब्दपर्य्यन्तं प्रजाः पालयामास। कस्य राज्यमिदमिति जिज्ञास्यमानेन तेन नरेन्द्रेण प्रत्यभाष्यत—'अहं हि देवकल्प-तातपादश्रीधरसेनात् प्रति, साम्राज्यं तु तत्रभवतः' इति। अस्मिन्नेव श्रीधरसूनौ नरेन्द्रदेवे महीं शासति भर्त्तृहरिणा भट्टिकाव्यं प्रणीतमिति विस्पष्टमवगम्यते। मन्ये—राजसन्तोषविधानार्थं 'श्रीधरसूनुनरेन्द्रपालितायाम्' इति पाठो हि कवे र्लेखनीप्रसूत इति।

६४६ खृष्टाब्दतः ६७१ खृष्टाब्दस्यान्तरे भट्टिकाव्यं प्रकाशितं चेत् तर्हि वाक्यपदीयकारस्य तद्दर्शनं न सम्भवति। यतः ६५१ खृष्टाब्दे स स्वर्गमगमदिति श्रूयते। एतस्मादेतदुपपद्यते यद् वाक्यपदीयकारो भर्त्तृहरि र्भट्टिकृद्-भर्त्तृहरेः पूर्व्वभव इति। भट्टिकारेण वाक्यपदीयं पठितं वा न वेति सनिश्चयं वक्तुं न शक्यते। सम्भाव्यते यदुभयो र्ग्रन्थौ नोभाभ्यां दृष्टाविति। चिन्तव्यं च किञ्चिदुद्ग्रन्थाभिधानम्।

(७) गोतमो न्यायसूत्रकृद् गौतम एव। पौराणिका आहुः—

'गौर्वाक् तयैव तमयन् परान् गोतम उच्यते।
गोतमान्वयजन्मेति गौतमोऽपि स चाल्पपात्॥'

इति। लोकायतसम्प्रदायप्रवर्त्तक श्चार्व्वाक आह—

'मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेतैव यथा वित्थ तथैव सः ॥'

( श्रीहर्षप्रणीतं नैषधीयचरितम् १७।७५ ) इति। एष महर्षिः प्रमाणादि-षोडशपदार्थवादी पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगमं मन्यते। तदुक्तम्—'प्रमाणप्रमेयसंशय-प्रयोजनदृष्टान्तसिद्धान्तावयव-तर्कनिर्णयवाद-जल्पवितण्डा-हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति। पदार्थव्याख्यानमाकरे द्रष्टव्यम्। अस्माभिस्तु विस्तरभिया नोच्यते। कथं चापवर्गः प्राप्यते? तदाह—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदन्तरापायादपवर्गः' इति।

अक्षपादो गोतमस्यैव नाम। अक्षमिन्द्रियं लक्षणात इह दर्शनशक्तिस्तत् पादे प्रकाशितं यस्य स एवाक्षपाद इत्येके। अक्षे चक्षुषि ज्ञाने वा गमनं यस्य सोऽक्षपाद इत्यन्ये। स हि स्वमतदूषकस्य व्यासदेवस्य मुखदर्शनं चक्षुषा न कर्त्तव्यमिति प्रतिज्ञाय पश्चाद् व्यासदेवेन प्रसादितः पादे नेत्रं प्रकाश्य तं ददर्शेति पौराणिकी वार्त्ता। यद्यपीतिहासपुराणादिशास्त्रेषु गोतम एवाक्षपाद इति निर्द्धारितन्तथापि केचित् प्रत्नतत्त्वगवेषिणो गोतमाक्षपादयोः पृथक्त्वं प्रतिपादयितुं प्रयतन्ते। तेषामेवंविधा गवेषणा तु शास्त्रप्रतिकूलेत्यत-स्तन्मतवादो नात्र समुद्ध्रियते।

गोतमस्य संहिताऽपि काचिदासीत्। ततो द्वादशखृष्टशताब्दीये मधुकोषे श्लोक एक उद्धृतः—'श्लेष्मा च पञ्चधाऽवस्थः……' इत्यादिः। एषा गोतमोक्तिरित्यपि तत्र स्पष्टम्। अधुना ग्रन्थोऽयं नोपलभ्यते, किन्तु १६५६ खृष्टाब्दीयकवीन्द्रसूच्यां गोतमसंहिताया उल्लेखो दृश्यते। गोतम-प्रणीत-शिशुक्रन्दीयः कुमारभृत्येतिनाम्ना कौमारभृत्यमितिनाम्ना वा प्रसिद्ध आसीत्। 'कुमारभृत्या गर्भिण्याः परिचर्य्याऽभिधीयते' इति हारावली। 'कौमारभृत्यं नाम कुमारभरणं धात्रीक्षीरदोष-संशोधनार्थं दुष्टस्तन्यग्रह-

समुत्थानां च व्याधीनामुपशमार्थमि'ति सुश्रुतः। गौतममुनेरायुर्व्वेदकर्त्तृत्वं हेमाद्रे र्लक्षणप्रकाशे समुल्लिखितं वर्त्तते, यथा—

'गौतमश्च महाभाग आगस्त्यः काश्यपस्तथा।
आत्रेयः शाण्डिलश्चैव तथा नारदपर्व्वतौ॥'
आयुर्व्वेदस्य कर्त्तारः..................'

इति। अतः पर्व्वतमुनिरप्यायुर्व्वेदाचार्य्य आसीदित्यवगम्यते।

केचित् प्रत्नतत्त्वगवेषिणो न्यायसूत्रकारं गौतमं धर्म्मसूत्रकाराद् गौतमादभिन्नमेव मन्यन्ते। काशिकावृत्तिकृतो वामनाचार्य्यस्य पुत्रो मस्करी खृष्टीयाष्टमशताब्द्यां गौतमीयधर्म्मसूत्रस्यैकं भाष्यं प्रणीतवान्। पदमञ्जरी-प्रणेता हरदत्तमिश्रो द्वादशखृष्टशताब्द्यां तदुपजीव्य मिताक्षरानाम्नीं टीकामकरोत्। मस्करी हरदत्तश्च द्वावेव गौतमधर्म्मसूत्रस्य बहून्यपाणिनीयपदानि दर्शयामासतुः। एतेन तथा 'शिशुक्रन्द...' (४।३।८८) इति सूत्रेण चानुमीयते गौतमोऽयं पाणिनेः प्राग्भावीति। लाट्यायन-द्राह्यायण-गोभिलैरपि गौतमस्य नामोल्लेखः कृत इति तेभ्योऽपि गौतमः पूर्व्ववर्त्त्येव।

पुरा केवलं सामवेदीया ब्राह्मणा गौतमधर्म्मसूत्रेणानुशिष्टा आसन्। इदानीं तु न विद्यते तादृक् कोऽपि नियमः। तन्त्रवार्त्तिके भट्टपादैरुक्तम्—'पुरा सामगानां गौतमधर्म्मसूत्रम्, ऋग्वेदीयानां वशिष्ठधर्म्मसूत्रम्, वाजसनेयिनां शङ्खीयधर्म्मसूत्रम्, कृष्णयजुर्व्वेदिनां चापस्तम्बबौधायनधर्म्म-सूत्रे इत्येवं व्यवस्थितत्वेऽपि कालक्रमेण तादृग् व्यवस्था तिरोहिता जाते'ति। यद् वा भवतु, स्वच्छन्दशास्त्रेषु तथाविधभेदव्यवस्था त्वद्यापि प्रचलति। तथा हि तन्त्राणां बहुविधत्वेऽपि तेषु कतिचिदश्वक्रान्तायां कतिचिद् रथक्रान्तायां कतिचिद् वा विष्णुक्रान्तायां व्यवस्थितानि दृश्यन्ते; यदि तु कस्मिंश्चिदपि विषयविशेषे क्वचनापि तन्त्रे तूष्णीम्भावोऽवलोक्यते तर्हि तन्त्रान्तर-मतेन तत्र समाधानं विधीयते, यथा हि कोऽपि विषय-

विशेषो यदि कालीकुले न लभ्यते तर्हि तत्कूलोपासकाः श्रीकुलसिद्धान्तं परिगृह्णन्तीति ।

न्यायसूत्रकार-धर्म्मसूत्रकारयोरैक्याभिधाने केचित् प्रत्यवतिष्ठन्ते । ते सर्व्वं उद्दालकपुत्रं श्वेतकेतुं धर्म्मसूत्रकारं गौतमं मन्यन्ते ; यतो गौतम इत्यनयो वंशोपाधिः । उद्दालको गान्धारवासी सन्नपि काशीराजस्य ब्रह्मदत्तस्य प्रधानमन्त्री बभूव । तत्पुत्रः श्वेतकेतुस्तक्षशिलायां शिक्षाप्राप्तः सन् महाराजस्य श्रीकरणाधिपोऽभवत् ।

पुंप्रकृत्योः सङ्गेन संसारः प्रवर्त्तते । विवाहो नाम तादृक्सङ्गस्यैव रूपकविशेषः । विवाहमन्तरेण गृहधर्म्मादिपालनं न निर्व्वहति—इत्येवं विविच्य स उद्दालको मन्थवादस्य पक्षपाती बभूव । अस्मिन् मन्थवादे विवाहमधिकृत्य यद्यत् तेनैवोक्तं तत्तत् सर्व्वं गौतमेन धर्म्मशास्त्रे समर्थितमित्येवंमतैक्यवशादौद्दालकिः श्वेतकेतुरेव धर्म्मसूत्रकार-गौतमत्वेन तैरभ्युपगम्यते । अन्यैस्तु न ।

हेमाद्रे र्लक्षणप्रकाशादवगम्यते यदौद्दालकिश्वेतकेतुरपि वैद्यागमिक आसीदिति ।

(८) सांख्यः कपिलमुनिः । महाभारतस्य शान्तिपर्व्वणि स्मर्य्यते—

'सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥'

( ३४९।६५ ) इति । इह सांख्यशब्दः शास्त्रवचनः कापिलस्मृतिवाचको वा । चरकमुनिराह हिमवत्प्रदेशस्थितायां मुनिसभायां सांख्य आजगामेति । अत्र तु सांख्यशब्देन सांख्यप्रवक्ता कपिल उच्यते । बहुत्र शास्त्रविशेष-नाम्ना लक्षणात स्तत्कर्त्तैव गृह्यते, यथा 'स्मृतिरप्याहे'त्युक्ते 'स्मृतिकारो मुनिरप्याहे'ति बुध्यते । शान्तिपर्व्वान्तर्गतराजधर्म्मपर्व्वणि स्मर्य्यते—

'हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरः'

इति। अत्र नीलकण्ठेनोक्तम्—'अपरः सांख्यः कपिल इत्याशयः' इति।

कपिल आदिविद्वानित्यभिधीयते। आदिविद्वान् स्वारसिकचैतन्य-सम्पन्न उपज्ञातो वेत्यर्थः। श्वेताश्वतरे च समाम्नायते—

'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैः बिभर्त्ति'

इत्यादि (५।२)। अत एव गीतायामपि भगवता गीयते—

'सिद्धानां कपिलो मुनिः'

(१०।२६) इति। सिद्धानामुत्पत्तितो विनैव प्रयत्नमधिगतधर्म्मादिपुरुषार्थानां मध्ये कपिलमुनिरेवाग्रगण्य इत्याशयः। महाभारते स हि परमर्षिरित्युक्तम्। मुनयश्चोचुः—

'ऋषते परमं यस्मात् परमर्षिस्ततः स्मृतम्'

इति।

श्रीमद्भागवतादिमतेन कपिलो भगवतः पञ्चमावतारः। पुष्करतीर्थे कर्द्दममुनिना देवहूतीत्यभिधानायां पत्न्यामसौ समुत्पादितः। तत्त्वज्ञान-प्रदानेन स मातरं संसारबन्धनाद् मोचयामासेत्येका शास्त्रीयप्रसिद्धिरस्ति। उक्तं च शिष्टैः—

'कपिलेन मुकुन्देन देवहूती प्रबोधिता।
सर्व्वतत्त्वविवेकेन तत् सांख्यमभिधीयते॥'

इति। भागवतादीनां मतेन सगरवंशध्वंसकृदेव कपिलः सांख्यप्रवक्ता। शङ्कराचार्य्यस्त्वन्यथैव मन्यते। तथा हि २।१।१ शारीरकभाष्ये—'अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तु र्वासुदेवनाम्नः स्मरणादि'ति तेनैवोक्तम्।

कपिलमुनिः सांख्यदर्शनस्याद्यद्रष्टेत्यत्र पण्डितानां वैमत्यं नास्ति। तेनैव तत्त्वसमाससूत्राणि प्रोक्तानीति प्राचां मतम्, नवीनास्तु तथा न

मन्यन्ते। वयं तु प्राचां निर्णये स्थास्यामः। कपिलस्य शिष्य आसुरिर्यस्यैकः श्लोक आचार्य्यपारम्पर्य्योपदेशादिदानीमपि विलसत्येव, यथा—

'विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते।
प्रतिबिम्बोदयः स्वल्पे यथा चन्द्रमसोऽम्भसि॥'

इति। आसुरिसम्बन्धे किञ्चन महाभारतीयमाख्यानमुपन्यस्य भगवाञ्छङ्कराचार्य्य आह—'कपिलस्य महामुनेः सहोत्पन्नाश्चत्वारो धर्म्मादयः। तत्र ज्ञानाख्येन भावेनान्धे तमसि वर्त्तमानं जगद् दृष्टवतो मुनेः करुणोत्पन्ना। तया च प्रेर्य्यमाण आसुरिं सगोत्रब्राह्मणं वर्षसहस्रयातिनमागत्योवाच—'आसुरे रमसे त्वं गृहस्थधर्म्मेणे'ति? स तमाह—'भगवन् न रमेऽहमि'ति। पुन र्वर्षसहस्रे पूर्णे तं गत्वा तथोवाच। सोऽपि 'भगवन् न रमेऽहमि'त्युवाच। ततो मुनिना 'यदि विरक्तस्त्वं तर्ह्येहि ब्रह्मचर्य्यं चर' इत्यसावुक्तः। स च तन्मतं प्रतिपद्य गृहस्थधर्म्मं त्यक्त्वा प्रव्रजितः। तस्मै शिष्यायानुकम्पया मुनिः संक्षिप्योपदेशं दत्तवान् 'तम एव खल्विदमासीत्; तस्मिंस्तमसि क्षेत्रज्ञ एव प्रथमः, तमः प्रधानम्, क्षेत्रज्ञः पुरुष उच्यते' इति। आसुरिरपि तमेव संक्षिप्तमुपदेशं पञ्चशिखाय स्वशिष्यायानुकम्पया प्रददौ। पञ्चशिखेन मुनिना बहुधाकृतं तन्त्रम्। षष्टितन्त्राख्यं षष्टिखण्डं कृतमिति।' इति।

पञ्चशिखमुद्दिश्य महाभारतस्य शान्तिपर्व्वणि स्मर्य्यते—

'यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम्।
स मन्ये तेन रूपेण विस्मापयति हि स्वयम्॥
आसुरेः प्रथमं शिष्यं यमाहु श्चिरजीविनम्।
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम्॥
पञ्चज्ञः पञ्चकृत् पञ्चगुणः पञ्चशिखः स्मृतः।
पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत्॥'

(२१८।६,१०, १२) इति। अत्र नीलकण्ठः। 'स कपिलः, तेन पञ्च-

शिखसंज्ञेन तत्प्रशिष्यत्वात् तत्तुल्यमित्याशयः। पञ्चस्रोतसि मनसि निष्णात ऊहापोहकौशलवान्, पञ्चरात्रो नाम विष्णुत्वप्रापकः क्रतुः। पञ्चज्ञ इति। पञ्च अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयान् कोशान् मिथ आत्मनश्च विविक्तान् जानातीति पञ्चज्ञः, अत एव पञ्चकृत् पञ्च तद्विषयाण्युपासनानि करोति स पञ्चकृत्। पञ्च 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यती'ति श्रुतेः शान्त्यादयो गुणा यस्मिन् स पञ्चगुणः। ततश्च 'ब्रह्मविद् ब्रह्मैव भवती'ति श्रुतेः पञ्चभ्योऽतिरिच्यमानत्वाच्छिखेवेति पञ्चशिखं पुच्छं ब्रह्म, तज्ज्ञत्वान् मुनिरपि पञ्चशिखः। ननु पञ्चकृत् कथं षष्ठज्ञः स्यादिति चेत्, शृणु—यथाऽन्नमयं विकारमुपासीन स्तत्प्रकृतिमन्नं विराडाख्यमेति। एवं मायया विकृतमानन्दमयाख्यमुपास्य तत्प्रकृतिमेतीति न षष्ठोपास्तिः पृथग् वक्तव्या, षष्ठज्ञानाय तस्य पञ्चमोपास्तिफलत्वात्' इति। केचित् पञ्चशिख-वार्षगण्ययोरभेदं मन्यन्ते। तन्न। महाभारतस्य शान्तिपर्व्वणि—

'पाराशरस्य विप्रर्षे वार्षगण्यस्य धीमतः।
भृगोः पञ्चशिखस्यास्य कपिलस्य शुकस्य च॥'

( ३१६ अ० ५९-६० ) इत्यत्र पृथक्त्वेन तयोः स्मरणात्।

'वृत्तिसारूप्यमितरत्र' ( १।४ ) इति योगसूत्रस्य भाष्ये भगवान् व्यास आह—'तथा च सूत्रम्—'एक एव दर्शनं ख्यातिरेव दर्शनमिती"ति। अस्य तत्त्ववैशारदीटीकायां वाचस्पतिमिश्रेणोक्तम्—'पञ्चशिखाचार्य्यस्य सूत्रमेकमेव दर्शनं ख्यातिरेव दर्शनमि'ति। सांख्यतत्त्वकौमुद्याष्टीकायां स्वप्नेश्वरसूरिणाऽपि वाचस्पतेरियमुक्तिः समर्थितैव। पुनरपि 'एतेन भूतेन्द्रियेषु……' ( ३।१३ ) इति योगसूत्रीयभाष्ये भगवान् भाष्यकार आह—'उक्तं च—'रूपातिशया वृत्त्यतिशयाश्च विरुध्यन्ते। सामान्यानि त्वतिशयैः सह प्रवर्त्तन्त इती"ति। अस्य तत्त्ववैशारदीटीकायां वाचस्पति-

मिश्र आह—'अत्रैव पञ्चशिखाचार्य्यसंमतिमाह—उक्तं चेती'ति। न केवलमेतावन्मात्रम्, परं तु 'सति मूले तद्विपाको जात्यायुर्भोगाः' (२।१३) इत्यस्य योगभाष्ये स भगवानाह—'प्रधानकर्म्मण्यावापगमनम्। यत्रेदमुक्तम्—'स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालमिती'ति। अत्रापि वाचस्पतिमिश्र आह—'यत्रेदमुक्तं पञ्चशिखेन स्वल्पः सङ्करः' इत्यादि। एताभ्य उक्तिभ्य उपपद्यते यदनेन भगवता पञ्चशिखाचार्य्येण सांख्ययोगसूत्रात्मकः कश्चिद् गद्यपद्यमयो ग्रन्थोऽपि व्यरची'ति।

श्रूयते हि यत् पञ्चशिखाचार्य्यो द्वाविंशतिं तत्त्वसमाससूत्राण्युपजीव्य षष्टितन्त्रं रचयांचक्र इति। अहिर्बुध्न्यसंहितायामस्य कियांश्चनांश उद्धृतस्तत्र तु कश्चित् प्रौढिवादो नोपलभ्यते। स च मूलग्रन्थो द्विधा विभक्त आसीत्, तन्मात्रसर्गविषये दशखण्डात्मकः प्रथमो भागः, प्रत्ययसर्गविषयकः पञ्चाशत्खण्डात्मको द्वितीयो भागश्चेति। तत्र चरमे भागेऽविद्यादिपञ्चविपर्य्ययसम्बन्धे पञ्च खण्डाः, इन्द्रियाणां बुद्धेश्चाशक्तिविषयेऽष्टाविंशतिः खण्डाः, नवतुष्टिविषये नव खण्डाः, अष्टानां सिद्धीनां विषयेऽष्ट खण्डाश्चासन्। अस्य ग्रन्थस्यात्यन्ताय विलोपः सञ्जातः। तदुक्तं विज्ञानभिक्षुणा—

'कालार्कभक्षितं सांख्यशास्त्रं ज्ञानसुधाकरमि'ति।

केचिदाहुः—

'प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता।
पारार्थ्यं च तथानैक्यं वियोगो योग एव च॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश।
विपर्य्ययः पञ्चविधस्तथोक्ता नव तुष्टयः॥
करणानामसामर्थ्यमष्टाविंशतिधा मतम्।
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः॥'

इति। युक्तिदीपिकादिकृत्कान्यकुब्जाधिपतिवृद्धभोजीयराजवार्त्तिकोक्ताः षष्टिपदार्था एवमेव साकल्येन परिगणिताः। केषांचिन्मते सांख्य-कारिकाकार ईश्वरकृष्णः पञ्चशिखस्य साक्षाच्छिष्य एव। तन्न। यद्यस्य तच्छिष्यत्वमभविष्यत् तर्हि सांख्यकारिकाया व्याख्याग्रन्थनिचये च तदुल्लेखो-ऽप्यवश्यमस्थास्यत्। एतत् पुनरभ्युपगन्तव्यं यत् षष्टितन्त्रमीश्वरकृष्णेन दृष्टं पठितं चेति। तथाहि ग्रन्थान्ते तेन कण्ठत उक्तम्—

'सप्तत्यां किल येऽर्था स्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।
आख्यायिकाविरहिताः परवादविवर्ज्जिताश्चापि॥'

इति।

ब्रह्मसूत्राणामृजुव्याख्यायां विज्ञानभिक्षुराह—'पञ्चशिखाचार्य्यस्तत्त्व-समासाख्यभाष्यस्य कर्त्ते'ति। तथा हि तस्य शिष्यो भावागणेशस्तदीये तत्त्वयाथार्थ्यदीपने—'समाससूत्राण्यालम्ब्य व्याख्यां पञ्चशिखस्य चे'त्या-द्यभिहितवान्। अत एव तत्त्वसमाससूत्राणां पदतः कपिलोक्तत्वं सूपपन्नं तिष्ठति। संसारक्लिष्टाञ् छिष्यान् प्रत्यसौ यान्येव तत्त्वसमाससूत्राणि सानुक्रोशमवोचत् तानि वैद्यकशास्त्रस्य भित्तिमूलस्वरूपत्वात् सर्व्वाण्युपरिष्टात् प्रदर्श्यन्ते—

(क) 'अथ तत्त्वसमाम्नायः' इति। अथेति माङ्गल्य आरम्भे वा। उक्तं च कोषकृता—'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति। तत्त्वेति अष्टौ प्रकृतयः षोडश विकाराः पुरुषश्चेति पञ्चविंशतितत्त्वानि यत्रोक्तम्—

'पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥'

इति। समाम्नाय इति। समित्येकीभाव आङाभिमुख्य इति समाङ्-पूर्व्वस्य म्नाधातोरभ्यासार्थस्य कर्म्मणि कारके समाम्नायः। संसारहानाय

पञ्चविंशतितत्त्वानामभ्यासः कार्य्य इत्याशयः। ननु, तदभ्यासेन किं स्यात् ?

'हस पिब लल मोद नित्यं विषयानुपभुञ्ज कुरु च मा शङ्काम्।
यदि विदितं ते कापिलमतं तत् प्राप्स्यसे मोक्षसौख्यम् ॥'

इति।

(ख) 'अष्टौ प्रकृतयः' इति। प्रकृतिरेका गुणानां साम्यरूपा, त्रिगुणात्मिका, महदाद्याः सप्तप्रकृतिविकृतयश्चेत्यष्टा प्रकुर्व्वन्तीति वैशेष्यादेव तद्वादन्यायेन सूत्रितम्—'अष्टौ प्रकृतयः' इति। अष्टौ च प्रकृतयः कारिकया व्याख्याताः—

'मूलप्रकृतिरविकृति महदाद्याः प्रकृतिविकृतयः सप्त'

(३) इति। अयमाशयः। प्रक्रियत उत्पद्यते यस्याः सा प्रकृतिः। मूलं च सा प्रकृतिश्चेति मूलप्रकृतिः सप्तानामाद्यं कारणमित्यर्थः। 'अविकृति'-रिति। न विक्रियत इत्यविकृतिः। न कुतश्चिदुत्पद्यत इत्यर्थः। 'महदाद्याः प्रकृतिविकृतयः सप्ते'ति। महान् सामान्याहंकारः स आद्यो यासां तास्तथोक्ताः। प्रकृतयश्च विकृतयश्चेति प्रकृतिविकृतयः। तत्र महान् सामान्याहंकारो विशेषाहंकारं जनयन् प्रकृतिः, मूलप्रकृतेरुत्पद्यमानो विकृतिः। विशेषाहंकारस्तन्मात्राणि जनयन् प्रकृतिः, महत उत्पद्यमानो विकृतिः। तन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानि पञ्च यथाक्रम-माकाशानिलानलोदकपृथिव्याख्यानि पञ्च महाभूतानि जनयन्तीति प्रकृतिः, विशेषाहंकारादुत्पाद्यमानानीति विकृतय इत्येतानि सप्त प्रकृतिविकृतय उत्पादकत्वादुत्पन्नत्वाच्च।

(ग) 'षोडश विकाराः' इति। विशेषाहंकार स्त्रैविध्येन परिभाषितः—व्यैकारिकस्तैजसो भूतादिश्चेति। तत्र वैकारिकात् तैजससहायादुत्पन्ना-न्येकादशेन्द्रियाणि, भूतादेस्तैजससहायादुत्पन्नानि पञ्च तन्मात्राणि

चेति षोडश विकाराः कार्य्यत्वात्। एतदुक्तं भवति—सात्त्विकविशेषाहंकाराद् राजसविशेषाहंकारसहायादुत्पन्नान्येकादशेन्द्रियाणि, तामसविशेषाहंकाराद् राजसविशेषाहंकारसहायादुत्पन्नानि पञ्च तन्मात्राणि चेति षोडश विशेषा अविशेषेभ्य उत्पन्नत्वात् तत्त्वान्तराणामनुत्पादकत्वाच्चेति। अविशेषेभ्य उत्पद्यमानानामेतेषां विकाराणां नास्ति कश्चित् तत्त्वान्तरपरिणाम इत्यत एते विशेषाश्चोच्यन्ते।

(घ) 'पुरुषः' इति। प्रागेव चतुर्व्विंशतितत्त्वान्युपन्यस्य संख्यापूरणार्थमिदानीं पञ्चविंशतितमं पुरुषतत्त्वमुपन्यस्यते—पुरुष इति। एतत्तु तत्त्वं न सृष्टिक्रमार्थं बोध्यम्। यतोऽयं पुरुषो निःसङ्गोऽप्युपरक्तोऽविवेकात्, उपरागस्तु न जपास्फटिकयोरिव परं त्वभिमान इति।

अयमेव प्रवक्तुराशयः। पञ्चविंशतितमोऽयं पुरुषो न प्रकृति र्नापि वा विकृति र्भवति। ततो न किञ्चिदुत्पद्यत इति स न कस्यचित् प्रकृति-र्नाप्ययं कुतश्चिदुत्पन्न इति न कस्यचिद् विकृतिरपीति। एवं च पञ्चविंशतितत्त्वानां सङ्कलनात् कपिलमुनिस्तत्त्वसंख्यातेति स्मर्य्यते। तथा हि कपिलगीतायां भागवते च—

'कपिलस्तत्त्वसंख्याता भगवानात्ममायया।
जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्॥'

( १।१,३।२५ ) इति।

(ङ) 'त्रैगुण्यमि'ति। त्रिगुणानां सत्त्वरजस्तमसां भावस्त्रैगुण्यम्। ते च गुणा बहुभावाश्रिता भवन्ति यथा—

(अ) प्रकाशादिभावाश्रया गुणाः। उक्तं च—

'सत्त्वं प्रकाशकं विद्याद् रजो विद्यात् प्रवर्त्तकम्।
तमो विमोहनं विद्यात् त्रैगुण्यं नाम कीर्त्तितम्॥'

इति। किं चान्यत्?

(आ) अविनाभाववर्त्तिनो गुणा अन्योन्यसाहचर्य्यात्। तथा हि विष्णुगीतायां स्मर्य्यते—

'अन्योन्यमिथुनाः सर्व्वे सर्व्वे सर्व्वत्रगामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे।
उभयोः सत्त्वरजसो मिथुनं तम उच्यते॥
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते।'

इति। किं चान्यत्?

(इ) अन्योन्याभिभवाश्च गुणा इति। रजस्तमसोरभिभवात् प्रशान्तवृत्तिरुत्पद्यते सत्त्वस्य दयादाक्षिण्यधर्म्मज्ञानाद्यात्मिका। सत्त्वतमसोरभिभवाद् रजस उत्कटवृत्तिरुत्पद्यते कामक्रोधदम्भाधर्म्माद्यात्मिका। सत्त्वरजसोरभिभवात् तमसो मूढा वृत्तिरुत्पद्यते नास्तिक्यदुर्म्मेधस्त्वाद्यात्मिका।

किं चान्यत्?

(ई) अन्योन्याश्रयाश्च गुणाः। तथा हि सत्त्वं प्रवृत्तिनियमावाश्रित्य प्रकाशयति। रजः प्रकाशनियमावाश्रित्य प्रवर्त्तयति। तमः प्रकाशप्रवृत्ती आश्रित्य नियमयति। त्रिदण्डविष्टम्भवदमी वेदितव्या इति।

किं चान्यत्?

(ऋ) अन्योन्यजननाश्च गुणाः। कदाचित् सत्त्वं रजस्तमसी जनयति, यथा विश्वामित्रस्तपसा सत्त्वगुणमापन्नो रजःप्रभावेण वशिष्ठसमीपं गत्वा तमोगुणवशेन तत्परिभवाय प्रायतत। कदाचित् तमः सत्त्वरजसी जनयति, यथा तमोग्रस्तेन रावणेन श्रीरामचन्द्रं द्विषताऽपि सत्त्वोद्रेकात् प्रवृत्तिमादाय रजोवशेनोक्तम्—'रामनामौषधं तत्र कारयेत् पारलौकिकमि'ति। कदाचिद् रजः सत्त्वतमसी जनयति, यथा कश्चिद् रजोमूलकतीर्थपर्य्यटनेन सत्त्वाभासमादाय प्रत्यागत्य स्पर्द्धते—

'इदं तीर्थमिदं तीर्थमितस्तीर्थमतः परम् ।
इतो दूरतरं तीर्थं मया दृष्टं न तु त्वया ॥
तव तीर्थफलं स्वल्पं मम तीर्थफलं महत् ।
इति भ्रमन्ति ये तीर्थं ते भ्रान्ता न तु तैर्थिकाः ॥'

इति । किं चान्यत् ?

(लृ) अन्योन्यवृत्तयश्च गुणाः । तद् यथा, काचित् कामिनी कुलशीलनयविनयरूपयौवनविलाससम्पन्ना सत्त्वसद्भावात् स्वामिनः सुखावहा भवति, रजःसद्भावात् सपत्नीनां दुःखं जनयति, तमःसद्भावात् तामविन्दानानां रागिणां मोहमुत्पादयति । अनेन दृष्टान्तेन गुणानामन्योन्यवृत्तिकत्वं व्याख्यातम् । उक्तं च—

'परिव्राट् कामुकशुनामेकस्यां प्रमदातनौ ।
कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पनाः ॥'

इति । किं चान्यत्—

(ॡ) अन्योन्यवृत्तयश्च गुणाः । प्रकाशचलोपष्टम्भस्वभावा गुणाः कार्य्यसाधनात् प्राक् सुन्दोपसुन्दवत् परस्परविरुद्धा न ध्वंसन्ते, परं तु वह्निवर्त्तिकातैलवत् संहत्य ते सर्व्वे एकमेव पुरुषार्थं निष्पादयन्ति ।

(च) 'सञ्चरः' इति । परिणामक्रमत उत्पत्तिः सर्ग इति यावत् । किंहेतुकः सर्गः ? अत्रोच्यते—

'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥'

( सा० का०—२१ ) इति । तस्य क्रमादयस्तत्रैव व्याख्याताः, यथा—

'प्रकृते र्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥

सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहंकारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥

( सा० का०—२२, २५ ) इति । कारिकाणामर्थप्रपञ्चो भाष्यटीकादौ द्रष्टव्यः ।

(छ) 'प्रतिसञ्चरः' इति । प्रतिसञ्चरन्ति क्रियाशून्यतया विलीयन्तेऽस्मिन्निति प्रतिसञ्चरः प्रलयः । स च विपरिणामक्रमेणेति बोध्यम् । विपरिणामक्रमश्च—महाभूतानि तन्मात्रेषु, तन्मात्राणि सेन्द्रियाणि विशेषाहंकारे, विशेषाहंकारः सामन्याहंकाराख्ये महति, महांश्च मूलप्रकृताविति । तथा हि स्मर्य्यते मार्कण्डेयपुराणे—

'यदा तु प्रकृतौ याति लयं विश्वमिदं जगत् ।
तदोच्यते प्राकृतोऽयं विद्वद्भिः प्रतिसञ्चरः ॥'

( ६ अ० ) इति ।

(ज) 'अध्यात्ममधिभूतमधिदैवं चे'ति । अयमाशयः । महदहंकारेन्द्रियाणि स्वयमध्यात्मसंज्ञितानि भवन्ति । ये च तेषां व्यवसायास्त एवाधिभूतसंज्ञिता भवन्ति । या या पुन र्देवता मूलप्रकृतेः सत्त्वप्रधाना उत्पद्यन्ते तास्ता एव महदादीनामाधिदैवत्वमापन्नास्तेषां स्फूर्त्तिकरणत्वादिति । एवं च—बुद्धिरध्यात्मम्, बोद्धव्यमधिभूतम्, ब्रह्मा तत्रैवाधिदैवतम् ; अहंकारोऽध्यात्मम्, अहंकर्त्तव्यमधिभूतम्, रुद्रस्तत्राधिदैवतम् ; मनोऽध्यात्मम्, सङ्कल्पयितव्यं विकल्पयितव्यं चाधिभूतम्, चन्द्रस्तत्रैवाधिदैवतम् ; श्रोत्रमध्यात्म्यम्, श्रोतव्यमधिभूतम्, दिशस्तत्राधिदैवतम् ; त्वगध्यात्मम्, स्प्रष्टव्यमधिभूतम्, वायुस्तत्राधिदैवतम् ; चक्षुरध्यात्मम्, द्रष्टव्यमधिभूतम्, सूर्य्यस्तत्राधिदैवतम् ; जिह्वाऽध्यात्मम्, रसयितव्यमधिभूतम्, आपस्तत्राधिदैवतम् ; घ्राणमध्यात्मम्, घ्रातव्यमधिभूतम्, पृथिवी तत्राधिदैवतम् ; वागध्यात्मम्, वक्तव्यमधिभूतम्, अग्निस्तत्राधिदैवतम् ; पाणिरध्यात्मम्, आदातव्यं प्रदातव्यं

वाधिभूतम्, इन्द्रस्तत्राधिदैवतम्; पादावध्यात्मम्, गन्तव्यमधिभूतम्, विष्णुस्तत्राधिदैवतम्, पायुरध्यात्मम्, उत्स्रष्टव्यमधिभूतम्, मृत्युस्तत्राधिदैवतम्; उपस्थोऽध्यात्मम्, आनन्दयितव्यमधिभूतम्, प्रजापतिस्तत्राधिदैवतं चेति।

(झ) 'पञ्चाभिबुद्धयः' इति। अयमस्य प्रपञ्चितार्थः। आभिमुख्या बुद्धिरभिबुद्धिरभिमानः। स चात्मपरामर्शप्रत्ययलक्षणः क्रियाविशेषः। तत्र संकल्पो विकल्पो वा मनसः क्रिया। इदं करणीयमित्यध्यवसायो बुद्धिक्रिया। अहं करोमीत्यहंकारक्रिया। शब्दादिविषयालोचनालक्षणा क्रिया ज्ञानेन्द्रियाणाम्। वचनादिव्यापारलक्षणा क्रिया कर्म्मेन्द्रियाणामिति पञ्चाभिबुद्धय इति।

(ञ) 'पञ्च कर्म्मयोनयः' इति। अस्यार्थः। धृतिः श्रद्धा सुखादि विविदिषाऽविविदिषादि चेति पञ्च कर्म्मयोनय इति।

(ट) 'पञ्च वायवः' इति। बहुवचनान्तेन वायुशब्देन पञ्चप्राणादयो लक्ष्यन्ते। 'योऽयं प्राणः स वायुः (बृ० ३।१।५) इति श्रुतेः। प्राणापानव्यानोदानसमाना इति पञ्च वायवः। उक्तं च—

'प्राणोऽपानः समानश्चोदानश्च व्यान एव च।
इत्येते वायवः पञ्च शरीरेषु शरीरिणाम्॥'

इति। प्राण ऊर्द्ध्वगमनशीलो नासाग्रस्थायी वायुः। उक्तं च—'प्राणो नाम प्रागग्गमनवान् नासाग्रस्थानवर्त्ती'ति। अपानः पाय्वादिस्थायी वायुरधोगमनशीलः। उक्तं च—'अपानो नामावागग्गमनवान् पाय्वादिस्थानवर्त्ती'ति। व्यानो निखिलशरीरस्थायी वायुः। तदुक्तम्—'व्यानो नाम विष्वग्गमनवानखिलशरीरवर्त्ती'ति। उदान ऊर्द्ध्वमुत्क्रमणशीलः कण्ठस्थायी वायुः। तदुक्तम्—'उदानः कण्ठस्थानीय ऊर्द्ध्वगमनवानुत्क्रमणवायुरि'ति। समानो देहगतान्नरसादिनेता वायुः। उक्तं च—'समानः शरीरमध्यगता-

शितपीतान्नादिसमीकरणकरः' इति। समीकरणं हि परिपाककरणं रस-रुधिरशुक्रपुरीषादिकरणमिति तद्विशेषज्ञाः।

ननु, का दशा पुन र्नागकूर्म्मकृकरदेवदत्तधनञ्जयानां यत्रोक्तं सांख्यवृद्धैः—

'उद्गारे नाग आख्यातः कूर्म्मस्तून्मीलने स्मृतः।
कृकरस्तु क्षुति ज्ञेयो देवदत्तो विजृम्भणे॥
न जहाति मृतं चापि सर्व्वव्यापी धनञ्जयः।'

इति। उच्यते। उपवायव एवैते नागादयः। मुख्येषु प्राणादिषु तेषामन्तर्भावात् पृथक्त्वेन ते न समीरिताः। उक्तं च—'प्राणे नागस्यान्तर्भावः, अपाने कूर्म्मस्य, व्याने कृकरस्य, उदाने देवदत्तस्य, समाने धनञ्जयस्य चे'ति। अत उक्तेषु प्राणादिषु नागादयोऽप्युक्ता भवन्त्येव।

ननु, अपानादयोऽपि मुख्यस्यैकस्य प्राणस्य वृत्तिविशेषा भवन्ति। श्रूयते च बृहदारण्यके 'प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्व्वं प्राण एव' ( १।५।३ ) इति। तत्र भगवान् भाष्यकार आह—'अन इत्येषां वृत्तिविशेषाणां सामान्यभूता सामान्यदेहचेष्टासम्बन्धिनी वृत्तिः। एवं यथोक्तं प्राणादिवृत्तिजातमेतत् सर्व्वं प्राण एवे'ति। अत एव प्राण इत्युक्तेऽपानादीनां च पुनरुल्लेखनमपार्थमिति चेत्? मैवं मंस्थाः। श्रुतौ वृत्तिमतः प्राणस्य निरुपसर्गानशब्दवाच्यस्य पृथङ्निर्देशेऽपि प्राणादिवत् तेषामपानादीनामपि पुनरुल्लेखात् तद्विरुद्धेयं कल्पना न न्याय्येति।

पौराणिका आहुः—वायवीयाः प्राणापानव्यानोदानसमानास्तदन्तर्भूता नागकूर्म्मकृकरदेवदत्तधनञ्जयाश्चेत्येतेषामधिष्ठातारो हि देवाः सद्योजातवामदेवाघोरतत्पुरुषेशाना इति।

(ठ) 'पञ्चकर्म्मात्मानः' इति। कर्म्मण्यात्मा मनो यस्य स कर्म्मात्मा स्वादृष्टोपनिबद्धशरीरयुक्तः संसारी जीवस्ते। 'कर्म्मात्मानः

कर्म्मप्रधानाः संसारिणः क्षेत्रज्ञाः शरीरिणः कर्म्मसंबन्धेन शरीरसंबन्धानुभवादेवमुच्यन्ते' इति ( १।५३ ) मनुभाष्ये मेधातिथिः ।

पञ्च कर्म्मात्मान इति । तत्र वैकारिकः ( सात्त्विकविशेषाहंकारः ) शुभकर्म्मकर्त्ता, तैजसो राजसविशषाहंकारो वाऽशुभकर्म्मकर्त्ता, भूतादिस्तामसविशेषाहंकारो वा मूढकर्म्मकर्त्ता, सानुमानः शुभमूढकर्म्मकर्त्ता, निरनुमानः शुभामूढकर्म्मकर्त्ता चेत्येते पञ्च कर्म्मकर्त्तारः कर्म्मात्मान इति ।

(ड) 'पञ्चपर्व्वाऽविद्या' इति । एतत् सूत्रं कपिलस्मृतमपि वार्षगण्यत उपलब्धमिति केचित् । अविद्याशब्द इह विपर्य्ययपरामर्शी । पञ्चविपर्य्ययभेदा हि तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्रश्चेति ।

स्मर्य्यते हि श्रीमद्भागवते—

ससर्जाग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत् ।
महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ॥

( १२।२ ) इति । अत्राह श्रीधरस्वामी भावार्थदीपिकायाम्—'ब्रह्मा स्वसृष्टौ प्रथममविद्यावृत्तीः ससर्ज्ज । तत्र तमो नाम स्वरूपाप्रकाशो मोहो देहादावहंबुद्धिः । महामोहो भोगेच्छा । तामिस्र स्तत्प्रतिघाते क्रोधः । अन्धतामिस्र स्तन्नाशेऽहमेव मृतोऽस्मीति बुद्धिः । तदेवोक्तं वैष्णवे—

'तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः ।
महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा ॥
मरणं ह्यन्धतामिस्रं तामिस्रः क्रोध उच्यते ।
अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः ॥"

इती'ति । अविद्या विपर्य्यय इति हैरण्यगर्भाश्च जगुः (पा० २।३ भाष्यम्) ।

तमोमोहमहामोह-तामिस्रान्धतामिस्रा इति क्रमस्तन्त्रसिद्धोऽविद्यायाः । तदनुसारेण श्रीधरस्वामिनो व्याख्या च दृश्यते । मूले तु क्रमाक्रमयोरकिञ्चित्करत्वात् क्रम उपेक्षित इति मन्यामहे ।

मतान्तरे पुनरविद्या त्रिविधा भवति—कारणाविद्या कार्य्याविद्या विक्षेपिकाविद्या चेति। तत्र कारणाविद्या पारमेश्वरी माया। जीवानामविद्या कार्य्याविद्या। प्रातिभासिकसृष्टेरुपादानभूता या खल्वविद्या सा विक्षेपिकाविद्या। आविद्यकस्य जीवस्य समुत्पन्ने तत्त्वज्ञाने तदीयकार्य्याविद्या भगवत्कृपया निवर्त्तते। अत्रार्थे श्रुतिरपि शब्दयति— 'त्वं नः पिता योऽस्माकमविद्ययाः परं परं तारयसि' (प्रश्नोपनिषत् ६८) इति।

(ढ) 'अष्टाविंशतिधाऽशक्तिः' इति। अस्यार्थः। एकादशेन्द्रियवधाः सप्तदश बुद्धिवधाश्चेति। एकादशेन्द्रियवधा यथा—

'बाधिर्य्यमान्ध्याघातृत्वे मूकता जडता तथा।
उन्मादकौण्यकुष्ठानि क्लैब्योदावर्त्तपङ्गुता॥'

इति। ग्रन्थान्तरे चोक्तम्—

'बाधिर्य्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्त्तमन्दता॥'

श्रोत्रयो र्बाधिर्य्यम्। चक्षुषोरन्धत्वम्। घ्राणस्याऽघ्रातृत्वं नासिकाया अजिघ्रता वा। वाचो मूकत्वम्। जिह्वाया जाड्यम्। मनस उन्मादः। पाण्योः कौण्यम्। पादयोः पङ्गुत्वम्। उपस्थस्य क्लैब्यम्। त्वचः कुष्ठः। पायोरुदावर्त्त इति। बुद्धेरपि सप्तदशवधा अशक्तयस्तुष्टिसिद्धीनां विपर्य्ययेण। तुष्टिभेदा नव सिद्धिभेदाश्चाष्टौ ये तद्विपर्य्ययास्ते सप्तदशबुद्धिवधा इति।

(ण) 'नवधा तुष्टिः' इति। विपर्य्ययात् तुष्टिसिद्धीनामेव भेदक्रमो ज्ञातव्यः। तदाह—'नवधा तुष्टिरि'ति। सूत्रमेतत् कारिकया व्याख्यातम्, यथा—

'आध्यात्मिक्यश्चतस्रः प्रकृत्युपादान-काल-भाग्याख्याः।
बाह्या विषयोपरमात् पञ्चनवतुष्टयोऽभिमताः॥'

इति। अयमाशयः। आत्मनीत्यध्यात्मम्। अध्यात्मं भवा आध्यात्मिक्य-स्तुष्टयश्चतस्रः—प्रकृतितुष्टिरुपादानतुष्टिः कालतुष्टिर्भाग्यतुष्टिश्चेति। एताः सर्व्वा अम्भः-सलिल-मेघ-वृष्टि-शब्दैः शास्त्रे परिभाषिताः। यः कश्चित् प्रकृतिं विज्ञाय विवेकसाक्षात्कारं चोपेक्ष्य तुष्ट आस्ते स प्रकृतितुष्टः। मोक्षस्तु तेन नाप्यते। यः कश्चित् प्रकृतितत्त्वाधिगमानन्तरं त्रिदण्डकुण्डिकादि-प्रव्रज्यालिङ्गमादत्ते, विवेकसाक्षात्कारे तु न प्रवर्त्तते स उपादानतुष्टः। तेनापि मोक्षो नाधिगम्यते। यदा कश्चन मोक्षः कालापेक्ष इत्यवधार्य्य प्रकृतितत्त्वाधिगमे विवेकसाक्षात्कारे च न प्रवर्त्तते स कालतुष्ट एव। अशक्यो हि तस्यापि मोक्षलाभः। यः कश्चन मोक्षो भाग्यायत्त इति ब्रुवाणः स्थितः प्रकृतितत्त्वावगमे विवेकसाक्षात्कारे च न प्रयतते स भाग्यतुष्ट-स्तस्यापि मोक्षः सुदुर्लभ एव।

बाह्यास्तुष्टयः पञ्चविषयोपरमात्। उपरमो वैराग्यम्। विषयेभ्य उपरमो विषयोपरमो विषयव्यावृत्तिरिति यावत्। भोग्याः शब्दादयः पञ्च विषयास्तेभ्यः पञ्चभ्य उपरमा अर्ज्जनरक्षणक्षयभोगहिंसासु दोषदर्शनात्। अर्ज्जनस्योपायाः सेवायाच्ञाकृषिवाणिज्यादय एव। परं तु सेवा श्ववृत्ति-रिति सेवकान् दुःखाकरोति। तदुक्तम्—

'सेवा श्ववृत्तिराख्याता तस्मात् तां परिवर्जयेद्'

( मनु० ४।६ ) इति। सेवा श्ववृत्तेरप्यधमेति केचित्। तदुक्तम्—

'सेवा श्ववृत्ति यैरुक्ता न तैः सम्यगुदाहृतम्।
स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क्व सेवकः॥'

इति। केचिदाहुः—

'वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम्।
पुंसां विवेकहीनानां सेवया न धनार्ज्जनम्॥' इति।

अन्येऽप्याहुः—

'दृप्यद्दुरीश्वरद्वाःस्थदत्तचण्डार्द्धचन्द्रजाम् ।
वेदनां भावयन् प्राज्ञः कः सेवासु प्रसज्जते ॥'

इति । न च याच्ञा याचकं सुखाकरोति । नापि कृषिवाणिज्ये सुखाय भवतः । तदुक्तम्—

'क्षत्रधर्म्मे परा हिंसा याच्ञायां लाघवं महत् ।
असत्यमेव वाणिज्ये नानृतात् पातकं परम् ॥
सेवायां परमं कष्टं मृत्कीटस्तु कृषीवलः ।
द्यूते सर्व्वस्वनाशः स्याच्चौर्य्ये राजभयं महत् ॥
नाकाशात् पतति द्रव्यं जीविका सुखदा कथम् ।' इति ।

प्रागुक्तं दोषजातं चर्च्चयतो धनार्ज्जनादुपरतस्य या तुष्टिः सा पञ्चमी ग्रन्थान्तरे पारमित्यभिधीयते ।

धनमप्यर्ज्जयितुं शक्यं परं तु तद्रक्षणमैकागारिकादिभ्यो दुःखमिति भावयतस्तदुपरतस्य या तुष्टिः सा षष्ठी ग्रन्थान्तरे सुपारमित्युच्यते ।

धनमप्यर्ज्जयितुं रक्षितुं च शक्यं परं तु तदुपभोगात् क्षीयत इति क्षयदुःखं भावयतस्ततो व्यावृत्तस्य या तुष्टिः सा सप्तमी ग्रन्थान्तरे पारापारमित्युच्यते ।

धनमप्यर्ज्जयितुं रक्षितुं क्षये च प्रतिविधातुं शक्यं परं तु तदुपभोगेन कामा हि क्रमशो वर्द्धन्ते । तदुक्तम्—

'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥
यश्चैतान् प्राप्नुयात् सर्व्वान् यश्चैतान् केवलांस्त्यजेत् ।
प्रापणात् सर्व्वकामानां परित्यागो विशिष्यते ॥'

( मनु० २।९४-५ ) इति । स्मर्य्यते चादिपर्व्वणि—

'यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्य्याप्तं तस्मात् तृष्णां परित्यजेत् ॥

( महाभा०—आदिप० ८५।१३ ) इति । विष्णुपुराणेऽप्युक्तम्—

'मनोरथानां न समाप्तिरस्ति
वर्षायुतेनापि तथाब्दलक्षैः ।
पूर्णेषु पूर्व्वेषु पुन र्नवाना-
मुत्पत्तयः सन्ति मनोरथानाम् ॥'

इति । अत एव विषयलोलुपस्य तत्साधनाद्युत्पादने कष्टसम्भवो विपत्तौ दुःखातिरेक इति विचारयतस्ततो निवृत्तस्य या तुष्टिः साऽष्टमी ग्रन्थान्तर उत्तमान्त इत्युच्यते ।

सर्व्वं सोढुं शक्यं परं तु भूतपीडनं विना न कोऽपि भोगः सम्भवतीत्यत्र हिंसादोषदर्शनाद् विषयविरसस्य या तुष्टिः सा नवमी ग्रन्थान्तरेऽनुत्तमान्त इति चोच्यते ।

एवं ह्याध्यात्मिकीभिश्चतसृभि र्बाह्याभिश्च पञ्चभि र्नवतुष्टय उक्ताः ।

(त) 'अष्टधा सिद्धिरि'ति । कारिकया सूत्रमेतद् व्याख्यातम् । कारिका यथा—

'ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धः पूर्व्वोऽङ्कुशस्त्रिविधः ॥'

( सा० का० ५१ ) इति । विनैव सिद्धीरतत्त्वज्ञो दुःखैरभिहन्यमानो निरन्तरमेव संसरति । तस्य संसारहानाय तिस्रो मुख्याः पञ्च तत्पूर्व्व-वृत्तत्वेन गौण्यः सिद्धय उच्यन्ते—'अष्टधा सिद्धिरिति । सिद्धि र्मोक्षफलको विवेकख्यातिलाभः । जन्मान्तरीण-संस्कारवशेन यस्य बन्धमोक्षकारण-मनुभूयमानस्य प्रकृतिपुरुषयो र्भेदज्ञानमुत्पद्यते तस्य सिद्धिरूहहेतुका प्रथमा या च तारमित्युच्यते । अनुपयोगेन कस्यचित् सांख्यशास्त्रपाठमाकर्ण्य

यस्य तत्त्वज्ञानमुदेति तस्य सिद्धिः शब्दहेतुका द्वितीया सुतारमित्यस्या नामान्तरम्। उपयोगेन यदा सांख्यशास्त्रं शब्दतोऽर्थतश्चाधीत्य येन तत्त्वज्ञानमाप्यते तस्याध्ययनहेतुका सिद्धिस्तृतीया तारतारमित्युच्यते। विहन्यमानस्य दुःखस्य त्रित्वात् तद्विघातास्त्रय इत्येताः प्रमोद-मुदित-मोदमानाख्यास्तिस्र स्तद्विघातहेतुका मुख्याः सिद्धयो येषां भवन्ति ते कृतकृत्या उच्यन्ते। अधिगततत्त्वज्ञं सुहृद्विशेषं प्राप्य यो हि ज्ञानमधिगच्छति तस्य सुहृत्प्राप्तिपूर्व्विका सप्तमी सिद्धी रम्यकमित्युच्यते। दानमपि सिद्धिहेतुः। दानेन समाराधितात् तत्त्वदर्शिनो ज्ञानं येन प्राप्यते तस्य दानहेतुका सिद्धिः सदामुदितमित्युच्यते। 'अष्टधा सिद्धिरे'वं व्याख्याता। कारिकायास्तु व्याख्या तत्त्वकौमुद्यादौ द्रष्टव्या।

(थ) 'अनुग्रहः सर्ग' इति। सृज्यत इति सर्गः। 'अनुग्रह'शब्देन प्रत्ययसर्ग-तन्मात्रसर्गयो र्गोविषाणवत् कुमारीस्तनवद्वा युगपदुत्पत्तिः सूच्यते। अतश्चकितमभिधत्ते सांख्यकारिकायामीश्वरकृष्णः—

'न विना भावै र्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।
लिङ्गाख्यो भावाख्य स्तस्माद् द्विविधः प्रवर्त्तते सर्गः॥

(५२) इति। अत्र भावलिङ्गशब्दाभ्यां प्रत्ययसर्ग-तन्मात्रसर्गावुद्दिष्टौ। भावैरिति प्रत्ययसर्गमुपलक्षयति, लिङ्गमिति च तन्मात्रसर्गम्। तदाहु र्वाचस्पतिमिश्रपादाः—'तन्मात्रसर्गस्य पुरुषार्थसाधनत्वं स्वरूपं च न प्रत्ययसर्गाद् विना भवति एवं प्रत्ययसर्गस्य स्वरूपं पुरुषार्थसाधनत्वं च न तन्मात्रसर्गादृत इत्युभयथा सर्गप्रवृत्तिः' इति। एतदुक्तं भवति—भावै र्विना न लिङ्गनिष्पत्ति र्भावाश्रितत्वाल्लिङ्गानाम्, न च लिङ्गं विना भावनिष्पत्ति र्लिङ्गाश्रितत्वाद् भावानामिति। माठराचार्य्योऽपि तद्वृत्तावाह—'लिंगेन विना भावो न भवति भावैश्च विना लिंगं न भवति, यथाऽग्निना विना नोष्णत्वमुष्णत्वं विना नाग्निरि'ति। एतदेव

सर्गसूत्रं स्पष्टयितुमीश्वरकृष्णेण द्विपञ्चाशत्तमी सांख्यकारिका प्रणीतेति मन्यामहे ।

लोके पुनरनुग्रहशब्द आनुकूल्यार्थकः । उक्तं च—

'विरूपोन्मत्तनिःस्वानामकुत्सापूर्व्वकं हि यत् ।
पूरणं दानमानाभ्यामनुग्रह उदाहृतः ॥' इति ।

(द) 'चतुर्द्दशविधो भूतसर्गः' इति । चतुर्द्दशविधो भूतसर्गो यथा—मानुष्य एकविधः सर्गः । ब्राह्मः प्राजापत्यः सौम्य ऐन्द्रो गान्धर्व्वो याक्षो राक्षसः पैशाचश्चेत्यष्टविधो दैवसर्गः । पशुमृगपक्षिसरीसृपस्थावरा इति तैर्य्यग्योनश्च पञ्चधा भवति । तत्र पशवो गवाद्या ग्राम्याः । मृगाः सिंहाद्या आरण्याः । यद्वा लोमगुच्छान्वितलाङ्गूलाग्रा पशवस्तदन्ये मृगाः । पक्षिणो हंसाद्याः । सरीसृपाः सर्पादयः । स्थावरा वृक्षादयश्चेति । एषामपि जीवयोगः श्रूयते । तथा हि मन्त्रवर्गः—

'बिल्ववृक्ष महाभाग सदा त्वं शङ्करप्रियः ।
गृहीत्वा तव शाखां च देवीपूजां करोम्यहम् ॥
शाखाच्छेदोद्भवं दुःखं न च कार्य्यं त्वया प्रभो ।'

इति । स्मरति च भगवान् मनुः—

'तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना ।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥'

( ३।४९ ) इति । स्मर्य्यते च महाभारते—

'घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः ।
तेषां पुष्पफलव्यक्ति र्नित्यं समुपपद्यते ॥
उष्णता म्लायते पर्णं त्वक् फलं पुष्पमेव च ।
म्लायते शीर्य्यते चापि स्पर्शस्तेनात्र विद्यते ॥

वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्य्यते।
श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः॥
वल्ली वेष्टयते वृक्षं सर्व्वतश्चैव गच्छति।
न ह्यदृष्टेस्तु मार्गोऽस्ति तस्मात् पश्यन्ति पादपाः॥
पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि।
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः॥
पादैः सलिलपानाच्च व्याधीनां चापि दर्शनात्।
व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे॥
वक्त्रेणोत्पलनालेन यथोर्द्ध्वं जलमाददेत्।
तथा पवनसंयुक्तः पादैः पिवति पादपः॥
ग्रहणाच्च सुखादीनां छिन्नस्य च विरोहणात्।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते॥'

(भृगुभरद्वाजसंवादः—शान्तिप० १८४ अ०, १०—१७ श्लोकाः) इति। किमत्राधिक्येन वाच्यम्, महाभारतस्य भारतभावदीपाख्यटीकायां नीलकण्ठ आह—'वज्रमणेरपि मत्कुणशोणितस्पर्शाच्छीर्य्यमाणस्य चेतनत्वं व्याख्यातमि'ति। सर्व्वदर्शनसंग्रहस्थ-रामानुजदर्शने माधवाचार्य्य आह—'जीवस्य शरीरतया प्रकारभूतानि देवमनुष्यादिसंस्थानानीव सर्व्वाणि वस्तूनीति ब्रह्मात्मकानि तानि सर्व्वाणि। अतः—

देवो मनुष्यो यक्षो वा पिशाचोरगराक्षसाः।
पक्षी वृक्षो लता काष्ठं शिला तृणं घटः पटः॥'

इति। अत्र टीकाकृता वासुदेवेनोक्तम्—'काष्ठशिलादिष्वप्यनुद्भूतं चैतन्यमस्त्येवेति देवादिशब्दवत् काष्ठादिशब्दा अपि तत्तदर्थाभिमानि-जीवान्तर्यामिपरमात्मपर्य्यन्तमेवार्थमभिदधती'ति। भद्रमुक्तम्। सम्प्रति जड़विज्ञानशास्त्रवित्तमेन जगदीशवसुमहोदयेन वैद्युतयन्त्रादिसाहायकेन

परीक्षणानन्तरं प्रात्यक्ष्येण प्रमाणीकृतम्—जडानामपि प्रसुप्तचैतन्यमस्तीति ।

उक्तं च पौराणिकैः—

'ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः ।
ईश्वरश्चिदिति प्रोक्तो जीवो दृश्यमचित् पुनः ॥'

( सर्व्वदर्शन स० ९२ पृ० ) इति । चिज्जीवो भोक्ता, अचिज्जडपदार्थजातं भोग्यम्, ईश्वरस्तयोरन्तर्यामी भूत्वा नियामको भवति ; एतत् तत्त्वत्रयं मिथो भिन्नं मिथः संबद्धं च पारमार्थिकत्वात् । अत एवात्र 'अचित्'-पदस्थितनञ ईषदर्थता तदल्पता वा ग्राह्या, न त्वभावार्थता, यथा—अनुदरा कन्येति । उक्तं च शाब्दपारायणिकैः—

'अभावश्च निषेधश्च तद्विरोधस्तदन्यथा ।
ईषदर्थश्च कुत्सा च नञर्था षट् प्रकीर्त्तिता ॥'

इति । मीमांसकैरप्युक्तम्—

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥'

इति । उक्तं च मेदिन्याम्—

'नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे ।
ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः ॥'

इति ।

(घ) 'त्रिविधो बन्धः' इति । बन्धः संसारचक्रबन्धः पुनरावर्त्तनमिति यावत् । अत्र नैमित्तिको बन्ध उपलक्षितः । अज्ञानं निमित्तं बन्धो नैमित्तिकः । स च त्रिप्रकारः प्राकृतो वैकारिको दाक्षिणकश्चेति । उक्तं च—

'प्राकृतेन च बन्धेन तथा वैकारिकेण च ।
दाक्षिणेन तृतीयेन बद्धो नान्येन मुच्यते ॥'

इति। तत्र येषां प्रकृतिरव्यक्तं वा नान्यस्तेषां प्रकृतिबन्धः। प्रकृतिबन्धो नाम प्राकृतो बन्धः। एतान् प्रकृतिलयानुद्दिश्य वायावुच्यते—'पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः' इति। ये पुनरिन्द्रियभूताहंकार-बुद्धिनाम्नो विकारान् पुरुषबुद्ध्या समुपासते तानधिकृत्येदं वाया उच्यते—

'दश मन्वन्तरानीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः॥
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः।'

इति। एते खलु विदेहा येषां वैकारिको बन्ध उपलक्षितः। इष्टापूर्त्तेन पुरुषतत्त्वानभिज्ञानां कर्म्मवादिनां दाक्षिणको बन्धः कामोपहतत्वात्। इष्टापूर्त्तं दक्षिणेति। तथा चोक्तम्—

'अग्निहोत्रं तपः सत्यं देवानां परिपालनम्।
अतिथि वैश्वदेवं च इष्टमित्यभिधीयते॥
पुष्करिण्यः सभा वाप्यो देवतायतनानि च।
अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते॥'

इति। इष्टापूर्त्तकारिणः प्रति भगवती श्रुतिरप्याह—

'इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ति प्रमूढाः।
नाकस्य पृष्ठे सुकृतेन भूत्वेमं लोकं हीनतरं वा विशन्ति॥'

( मुण्डक० —१।२।१० ) इति।

सांख्यकारिकायामीश्वरकृष्ण आह—

'धर्म्मेण गमनमूर्द्ध्वं गमनमधस्ताद् भवत्यधर्म्मेण।
ज्ञानेन चापवर्गो विपर्य्ययादिष्यते बन्धः॥'

( ४४ ) इति। अस्य व्याख्या भाष्यटीकादौ द्रष्टव्या। अस्माभिस्तु विस्तरभयान्नोच्यते।

(न) 'त्रिविधो मोक्ष' इति। मोक्षप्राप्तेरुपायस्त्रिविध इत्यभिप्रायः, मोक्षस्य नानात्वासम्भवात्। तत्र प्रथमोपायो विवेकसाक्षात्कारो यत्रोक्तम्—'पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम्' (सा० का०—६९) इति। पुरुषार्थज्ञानं पञ्चविंशतितत्त्वज्ञानमिति यावत्। उक्तं च—

'पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥'

इति। तत्त्वज्ञानावगम उपायो मोक्षप्राप्तेरित्याशयः।

रागसंक्षयः परवैराग्यमन्यश्चैक उपायो मोक्षप्राप्ते र्यत्रोक्तं तत्रभवता योगभाष्यकारेण व्यासेन—'ज्ञानस्यैव परा काष्ठा वैराग्यम्, एतस्यैव हि नान्तरीयकं कैवल्यम्' (१।१६) इति। इदमप्यत्रावधेयं यत् कैवल्ये विवेकस्यापि न सद्भावः परवैराग्यवशात् तस्य च तत्र वह्निवत् स्वाश्रयनाशकत्वादिति।

कर्म्मक्षयो नैष्कर्म्यमपरश्चैक उपायो मोक्षप्राप्ते र्यत्रैव स्मरति भगवान्—'न कर्म्मणामनारम्भान्नैष्कर्म्म्यं पुरुषोऽश्नुत' इति। अत्र कर्म्मणामनारम्भान्नैष्कर्म्म्यं नाश्नुत इति वचनात् तद्विपर्य्ययात् तेषामारम्भान्नैष्कर्म्म्यमश्नुत इति गम्यते।

एतत् सर्व्वं मनसि निधाय परमर्षिराह—'त्रिविधो मोक्षः' इति।

(प) 'त्रिविधं प्रमाणमि'ति। उक्तं चाभियुक्तैः—

'प्रत्यक्षमेके चार्व्वाकाः कणादसुगतौ पुनः।
अनुमानं च तच्चाथ सांख्याः शब्दं च ते अपि॥
न्यायैकदेशिनोऽप्येवमुपमानं च केचन।
अर्थापत्त्या सहैतानि चत्वार्य्याह प्रभाकरः॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः॥'

इति। परमर्षिस्त्विह प्रमाणसंख्याविरोधं निराकर्तुमाह—'त्रिविधं प्रमाणमि'ति। तिस्रो विधा यस्य तत् त्रिविधं न न्यूनं नाप्यधिकमिति त्रीण्येव प्रमाणानि ग्राह्याणि, अन्येषां प्रमाणानां तत्रैवान्तर्भूतत्वादित्यभिप्रायः।

वृत्तावज्ञातार्थावगाही चितिशक्तेः प्रतिविम्बः प्रमा। तत्करणं वृत्तिः प्रमाणम्। शुद्धचेतनो वृत्तिसाक्षी प्रमाता। प्रमातृप्रमाणादिविषयमधिकृत्य विष्णुपुराणादौ स्मर्य्यते—

'प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव च।
प्रमाऽर्थाकारवृत्तीनां चेतने प्रतिविम्बनम्॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते।
वृत्तयः साक्षिभास्याः स्युः करणस्यानपेक्षणात्॥
साक्षाद्दर्शनरूपं च साक्षित्वं सांख्यसूचितम्।
अविकारेण द्रष्टृत्वं साक्षित्वं चापरे जगुः॥'

इति।

प्रत्यक्षमनुमानमाप्तवाक्यं चेति प्रमाणं त्रिविधम्। अक्ष्णोराभिमुख्यं प्रत्यक्षम् (अव्ययीभावः)। 'प्रतिपरसमनुभ्योऽक्ष्णः' इति गणसूत्रतष्टच्, ततो 'यस्येति च' (६।४।१४८) इति 'इ'कारलोपः। इहाक्षिशब्द इन्द्रियाणामुपलक्षणम्। अतश्चक्षुः-कर्ण-नासिका-जिह्वा-त्वग्द्वारा वृत्तिविशेष-निर्धारणी चित्तवृत्तिः प्रत्यक्षप्रमाणम्। एवं चेन्द्रियाणां विषयाः पञ्च प्रत्यक्षाः। लिङ्गज्ञानद्वारा लिङ्गिसामान्यनिर्धारणी वृत्तिरनुमानम्। एतदुक्तं भवति यदनुमानं लिङ्गसन्दर्शनात् प्रजायमानं ज्ञानमिति।

प्रत्यक्षेणानुमानेन वा योऽर्थो नाप्यते स आप्तवाक्याद् ग्राह्यः। आप्तवाक्यं वेदः। स चालौकिकोपायबोधको भवति। तदुक्तम्—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥'

इति। यद्वा—आप्तस्य वाक्यमाप्तवाक्यम्। कः पुनराप्तः? विष्णु-धर्म्मोत्तरे स्मर्य्यते—

'रागद्वेषविनिर्मुक्त आप्त इत्यभिधीयते'

(३।५।१५) इति। अन्यत्राप्युक्तम्—

'स्वकर्म्मण्यभियुक्तो यो रागद्वेषविवर्जितः।
ज्ञानवाञ्छीलसम्पन्न आप्तो ज्ञेयस्तु तादृशः॥'

इति। अत आप्तवाक्यं वेद ऋषिवाक्यं चेति। भगवांश्चरकमुनिराह—

'रजस्तमोभ्यां निर्म्मुक्तास्तपोज्ञानबलेन ये।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा॥
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्।
सत्यं वक्ष्यति ते कस्मादसत्यं नीरजस्तमः॥'

(च० स०—सू० ११ अ०) इति।

चरके भगवान् पतञ्जलिरप्याह—'अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स आप्त' इति।

प्रमाणस्य त्रैविध्यमुक्तम्। परं तु का दशा पुन मीमांसक-पौराणिकोक्तानामर्थापत्तिसम्भवाभावोपमानैतिह्यानां प्रमाणान्तराणाम्? उच्यते। अर्थापत्तिरनुमानविशेषो यथा वृष्ट्या मेघज्ञानमिति सांख्याः। अतस्तस्याः प्रमाणान्तरता नाभ्युपगम्यते। भाषापरिच्छेदे विश्वनाथ आह—

'अर्थापत्तेस्तु नैवेह प्रमाणान्तरतेष्यते।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः॥'

(६१) इति। सम्भवः प्रमाणान्तरमिति पौराणिका आहुः। सोऽप्यनुमानमेव, न तु प्रमाणान्तरमिति सांख्या वैशेषिका नैयायिकाश्च। सम्भवो हि व्याप्तिमूलकत्वादनुमानविशेषः, यथा 'शतवान्' इत्युक्त 'पञ्चाशद्वान्'

इति ज्ञानं सम्भवति। तस्य ज्ञानस्य ह्यनुमानेनैव निर्व्वाहः शतस्य पञ्चाशद्-व्याप्यत्वादिति।

अभावः पदार्थः। असमवायत्वे सत्यसमवाय इति सर्व्वदर्शनसंग्रह-स्थित औलूक्यदर्शने माधवाचार्य्यः। समवायभिन्नत्वे सति समवायशून्य इत्यर्थः। स च चतुर्व्विधः—प्रागभावः, प्रध्वंसः, अत्यन्ताभावः, अन्योन्या-भावश्चेति। अन्ये त्वभावो द्विविधः—संसर्गाभावोऽन्योन्याभाव-श्चेति। तत्राद्यस्त्रिविधः—प्रागभावः प्रध्वंसोऽत्यन्ताभावश्चेति। तदुक्तं भाषापरिच्छेदे—

'अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च।
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते॥'

(६) इति। सांख्याचार्य्यास्त्वाहुरभावोऽप्यनुमानभेदो न तु प्रमाणान्तर-मिति।

उपमानमिति। प्रसिद्धसाधर्म्म्यात् साध्यसाधनमुपमानम्। एतदुक्तं भवति यत् प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानं यथा गोसदृशो गवय इति। अस्य प्रमाणान्तरत्वप्रतिपादनाय नैयायिका इत्थमाचक्षते—उपमितेः प्रत्यक्षादिप्रमितिभ्योऽतिरिक्तत्वाद् विलक्षणोपमितिकरणत्वेनोपमान-मपि प्रमाणान्तरमिति। सांख्याचार्य्यास्त्वत्र विप्रतिपद्यन्ते। त आहु-रुपमानं यथा गौरिव गवयो गोसदृशो गवयो वेत्यप्यनुमानमेवेति।

ननु, ऐतिह्यं कस्मान्न प्रमाणं भवति? तत्र संगिरन्ते पौराणिका ऐतिह्यं प्रमाणान्तरमिति। उक्तं चाभियुक्तैः—

'ऐतिह्यमनुमानं च प्रत्यक्षमपि चागमम्।
ये हि सम्यक् परीक्षन्ते कुतस्तेषामबुद्धिता॥'

इति। ऐतिह्यं खल्वज्ञातमूलप्रवर्त्तकः शब्दः प्रवादपारम्पर्य्यमेव। तच्च

'इति होचुः' इत्यनया विधया लोकपरम्परातः प्रचरद्रूपतामाप्नोति। सांख्यास्तु तत्र प्रत्यवतिष्ठन्ते। त आहु र्न ह्यैतिह्यमाप्तवाक्यत्वेन गृह्यत इत्येतस्य प्रमाणान्तरता न सम्भवति, गृह्यते चेत् तर्हि शब्दान्तर्गतत्वात् तदप्यनुमानविशेषत्वेन वेदितव्यमिति।

प्रतिभा स्फूर्त्याख्यो बुद्धिविशेषः। केषांचिन्मते सा प्रत्युत्पन्नबुद्धिरेव। उक्तं च—'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मते'ति। अस्याः प्रमाणान्तरता कुत्रचिन्नोपलभ्यते। माठराचार्य्यस्त्वाह—'प्रतिभा यथा—

दक्षिणेन तु विन्ध्यस्य सह्यस्य तु यदुत्तरम्।
पृथिव्यामासमुद्रायां स प्रदेशो मनोरमः॥

इत्युक्ते तत्र शोभना गुणाः सन्तीति प्रतिभोत्पद्यते। प्रतिभा जानतां ज्ञानम्। साऽप्यनुमानमेवे'ति। (चतुर्थकारिका—माठरवृत्तिः)।

(फ) 'त्रिविधं दुःखमि'ति। आध्यात्मिकमाधिभौतिकमाधिदैविकं चेति त्रिविधं दुःखमित्यभिप्रायः। आत्मन्यध्यात्मम्। तत्र यद् भवति तदाध्यात्मिकम्। तच्च द्विविधं शारीरं मानसं चेति। तत्र वातपित्तश्लेष्मणां वैषम्येण ज्वरादिदुःखं शरीरे भवतीति शारीरम्। यत् कामक्रोधादिभि र्मनसि जायते तन्मानसम्। भूत इत्यधिभूतम्। भूतं प्राणिमात्रमधिकृत्य भवतीत्यधिभूतमुच्यते। अधिभूतेभ्यो भवमाधिभौतिकम्। अधिभूतेभ्यश्चतुर्व्विधभूतग्रामेभ्यो जरायुजाण्डजस्वेदजोद्भिज्जेभ्यः सकाशाद् यदुपजायते तदाधिभौतिकं दुःखम्। देव इत्यधिदेवम्। अधिदेवं भवमाधिदैविकम् (पा० ७।३।२०) इति। यद्वा दिवः प्रभवतीति दैवं तदधिकृत्य यदुपजायते तदाधिदैविकं शीतोष्णवातवर्षाऽशनिपातादिकमिति। समाप्तश्च तत्त्वसमाम्नायः।

तत्त्वसमाम्नाये कपिलमुनिना न कदाचिदीश्वरास्तित्वमभ्युपगम्यते। अतो हि सांख्यं निरीश्वरमित्युच्यते। अस्य निरीश्वरत्वं बुद्ध्वा पतञ्जलिमुनि र्योग-

शास्त्राभिधानं सेश्वरसांख्यं सस्मार। तत्र सूत्रितम्—'ईश्वरप्रणिधानाद्वा' (१।२३) इति। अत्र भाष्यकार आह—'प्रणिधानाद् भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण। तदभिध्यानमात्रादपि योगिन आसन्नतमः समाधिलाभः समाधिफलं च भवती'ति। ततः प्रकृतिपुरुषव्यतिरिक्तः कोऽयमीश्वर इति जिज्ञासायामाह—'क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' (१।२४) इति। किं च—'तत्र निरतिशयं सार्व्वज्ञ्यवीजम्' (१।२५) इति। स एव—'पूर्व्वेषामपि गुरुः कालेनानवच्छेदात्' (१।२६) इति। ततस्तत्प्रणिधानाङ्गं मन्त्रमप्याह—'तस्य वाचकः प्रणवः' (१।२७) इति। ईश्वरः प्रणवस्य वाच्य इत्यत्र फलितार्थः। अतो वाचकमाख्याय प्रणिधानमाह—'तज्जपस्तदर्थभावनम्' (१।२८) इति। अत्र भाष्यकारेण विष्णुपुराणीयः श्लोक उद्धृतः—

'स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमाचरेत्।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते॥'

(६।६।२) इति। स्थिते चैवंविधे तत्त्वे सर्व्वसिद्धान्तसंग्रहकारेणोक्तम्—

'सांख्यशास्त्रं द्विधाभूतं सेश्वरं च निरीश्वरम्।
चक्रे निरीश्वरं सांख्यं कपिलोऽन्यत् पतञ्जलिः॥'

(६।१।२) इति। द्रष्टव्यं चैतदुद्ग्रन्थाभिधानम्। अधुना पुनरपि वयं मुनिकथाप्रसङ्गमारभामहे।

(६) पुलस्त्यः सप्तर्षीणां मध्ये सुप्रसिद्ध एक ऋषिरेव। स ब्रह्मणः कर्णाभ्यां जात इत्येका प्रसिद्धिरन्या तु स ब्रह्मणो मानसपुत्र इति। शास्त्रकाराः पठन्ति—

'जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च।
पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः॥'

इति। ब्रह्मवैवर्त्तमते तस्य पुत्रो विश्रवाः, ततः कुवेरो रावणः कुम्भकर्णो

विभीषणश्च जाताः। वैयाकरणा आहुः—'यथा वालवायविदूराभ्यां वृत्तिस्तद्वद् विश्रवसोऽपत्यमिति वाक्ये विश्रवणरावणाभ्यां वृत्तिरि'ति। अयमाशयः। 'विदूराञ्ञ्यः' (पा० ४।३।८४) इति सूत्रतो यथा वैदूर्य्यमित्यत्र विदूरशब्दो वालवायस्य वाचक इति वालवायशब्द एव प्रत्ययमुत्पादयति न तु विदूरशब्दस्तथा रावणशब्दोऽपि विश्रवणशब्दस्य वाचक इति 'विश्रवस्'शब्दः प्रत्ययमुत्पादयति न तु रावणशब्द एवेति। अतो धाराधिपतिना भोजेनोक्तम्—'नश्च विश्रवसो विशूलोपश्च वा' (सरस्वतीकण्ठाभरणीय ४।१।६० सूत्रम्) इति। विश्रवसोऽपत्यमिति वैश्रवणो विशूलोपपक्षे तु रावण इति भावः।

(१०) नारदमुनि र्ब्रह्मणो ललाटाज्जात इत्येका शास्त्रीया प्रसिद्धिः। तथा हि हरिवंशे—

'ललाटमध्यादसृजन्नारदं प्रियविग्रहम्'

(२१० अ०) इति। शास्त्रान्तरमतेन तु स पितामहस्य मानसपुत्र एव। अग्निपुराणे तु स्मर्य्यते—

'कश्यपान्नारदश्चैव पर्व्वतोऽरुन्धती तथा'

इति। सङ्गीतविद्या तस्य रसनाग्रे नरीनृत्यते स्मेति प्रसिद्धिः। वैद्यशास्त्रे स भगवतः सनत्सुजातस्य शिष्यः। सनतो ब्रह्मणः सुष्ठु भगवद्ध्यानपूतेन मनसा न तु स्त्रीपुंसयोरन्योन्यसंयोगेन जातः सनत्सुजातः। कामातिरिक्तकारणत्वात् सनत्सुजात इत्युक्तो भगवान् सनत्कुमारः। अत्रेदमाख्यानं वर्त्तते। विधाता स्वसृष्टौ प्रागविद्यावृत्तीः ससर्ज। एवं च ततस्तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्रश्चाविर्बभूवुः। तमोऽविद्या। मोहोऽस्मिता। महामोहो राग इत्युच्यते। तामिस्रो द्वेष इत्युच्यते। अन्धतामिस्रोऽभिनिवेशो मरणत्रासो वा (सां० का० ४८)। एते सर्व्वे योगशास्त्रे

क्लेशत्वेन परिभाषिताः। क्लेशक्षये परमा शान्तिरिति बौद्धविशेषाणां च सिद्धान्तः। तदाह भदन्तः कविरश्वघोषः—

'दीपो यथा निर्वृतिमभ्युपेतो नैवावनीं गच्छति नान्तरीक्षम्।
दिशं न याति विदिशं न याति स्नेहक्षयात् केवलमेति शान्तिम्॥
कृती तथा निर्वृतिमभ्युपेतो नैवावनीं गच्छति नान्तरीक्षम्।
दिशं न याति विदिशं न याति क्लेशक्षयात् केवलमेति शान्तिम्॥'
(सौन्दरनन्दम् १६।२८,२६) इति।

इमास्तु सर्व्वा अनिष्टपापसृष्टीरवलोक्य पितामह आत्मानं नाभ्यनन्दीत्। ततः पुनरपि स भगवद्ध्यानपूतेन मनसा निष्क्रियानूर्द्ध्वरेतसः सनत्सुजातापरनामकसनत्कुमारादीनसृजदिति।

योगवाशिष्ठे सनत्कुमारमधिकृत्य काचिदाख्यायिका स्मर्य्यते। एकदा भगवान् विष्णुः स्वर्गं ययौ। तत्र स देवानां सपर्य्यां प्रतिगृह्य ध्यानानुरोधेन निश्चेष्टं सनत्कुमारं कृतावस्थानं ददर्श। अतः स क्रोधवशादतिथिपरिभावीति मन्यमानस्तं शशाप, सनत्कुमारश्च विष्णुं विचारभ्रष्टत्वेन गृहीत्वा तमप्यशाप्सीत्। तदुक्तं योगवाशिष्ठरामायणे—

'सनत्कुमार स्तब्धोऽसि निष्कामगर्व्वचेष्टया।
अतस्त्वं भव कामार्त्तः शरजन्मेति नामतः॥
तेनापि शापितो विष्णुः सर्व्वज्ञत्वं तवास्ति यत्।
किञ्चित् कालं हि तत् त्यक्त्वा त्वमज्ञानी भविष्यसि॥'

(वैराग्य प्र०) इति। एवं च परस्पराभिशप्तत्वात् सनत्कुमारस्तारकतारणाय पार्व्वतीनन्दनशरीरं परिगृह्य देवानां सेनानीरभूत्, विष्णुश्च रावणोद्धरणाय कौशल्यातः श्रीरामरूपेणाविर्भूय कञ्चित् कालमात्मानं विस्मृतस्तस्थौ। अथ वक्तव्यं च किञ्चिदुद्ग्रन्थाभिधानम्।

१५

सनत्कुमारसंहितायां लिखितमस्ति—

'सनत्कुमारं योगीन्द्रं सिद्धाश्रमनिवासिनम् ।
नारदः प्रणिपत्याथ वचनं चेदमब्रवीत् ॥
भगवन् योगिनां श्रेष्ठ सर्व्वतन्त्रविशारद ।
सर्व्वरोगहरास्त्वत्तः कल्पाश्च विविधाः श्रुताः ॥
इदानीमक्षिरोगस्य शान्तिं ब्रूहि तपोधन ।' इत्यादि ।

वैद्यशास्त्रे नारदस्य धातुलक्षणं सुप्रसिद्धम् । तत्र लिखितमस्ति—

'वामभागे तु नारीणां दक्षिणे पुरुषस्य तु ।
लक्षणं लक्ष्यते सर्व्वं शुभाशुभफलप्रदम् ॥' इति ।

हेमाद्रे र्लक्षणप्रकाशेऽस्य मुनेरायुर्व्वेदकर्तृत्वमुद्घुष्यते—'आत्रेयः शाण्डिलश्चैव तथा नारदपर्व्वतौ ।......आयुर्व्वेदस्य कर्त्तारः...' इति ।

भक्तिशास्त्रे तस्य नारदपञ्चरात्रमेकमतिशोभनमवदानम् । अभिगमनमुपादानमिज्या स्वाध्यायो योगश्चेति पञ्चविधमुपासनं तत्रोपवर्णितमस्ति । तत्राभिगमनं नाम देवतास्थानोपलेपनादि, उपादानं नाम पुष्पादिपूजोपहारसंग्रहः, इज्या नाम देवतापूजनम्, स्वाध्यायो नाम मन्त्ररहस्यानुसन्धानपूर्व्वको मन्त्रजापो वैष्णवसूक्तपाठो नामसङ्कीर्त्तनं शास्त्राभ्यासश्च, योगो नाम हरिसन्धानं चेति । तदुक्तं नारदपञ्चरात्रे—

नाराधितो यदि हरिस्तपसा ततः किम्
आराधितो यदि हरिस्तपसा ततः किम् ।
नान्तर्बहि र्यदि हरिस्तपसा ततः किम्
अन्तर्बहि र्यदि हरिस्तपसा ततः किम् ॥' इति ।

पञ्चरात्रशब्द एवं निरुच्यते—

'रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् ।
तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः ॥' इति ।

पञ्चविधं ज्ञानं यथा—

'प्रथमं सात्त्विकं ज्ञानं द्वितीयं तु तदेव च ।
नैर्गुण्यं हि तृतीयं च ज्ञानं च सर्व्वतत्परम् ॥
चतुर्थं तु राजसिकं भक्तस्तन्नाभिवाञ्छति ।
पञ्चमं तामसं ज्ञानं विद्वांस्तन्नाभिवाञ्छति ॥
ज्ञानं पञ्चविधं प्रोक्तं पञ्चरात्रं विदुर्बुधाः ।'

इति । दृष्टिविशेषमाश्रित्य कैश्चिद् भण्यते पञ्चरात्रं सप्तर्षिभिरुपदिष्टत्वात् सप्तविधम्, यथोक्तम्—

'पञ्चरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परम् ।
ब्राह्मं शैवं च कौमारं वाशिष्ठं कापिलं परम् ॥
गौतमीयं नारदीयमिति सप्तविधं स्मृतम् ॥'

इति । कौमारं सनत्कुमारीयमित्यर्थः । वैष्णवैः खलु पञ्चरात्रमागमत्वेन गृहीतम् । तथा हि प्रमाणचन्द्रिकायां शेषाचार्य्येणोक्तम्—

'ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ।
मूलरामायणं चैव पुराणं चैतदात्मकम् ॥
ये चानुयायिनस्तेषां सर्व्वे ते च सदागमाः ।'

मुक्तिस्वरूपमधिकृत्य पञ्चरात्राः समामनन्ति—

'आ मुक्ते र्भेद एव स्याज् जीवस्य च परस्य च ।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥'

अत एव नारदस्मृतः पञ्चज्ञानसाधनग्रन्थो नारदपञ्चरात्रम्, तन्मतानुयायिनः पञ्चरात्रा इति बोधः ।

शास्त्रान्तरे पुनरनेन मुनिना स्मृतिपुराणादिग्रन्थाः कृताः । तानवलम्ब्य प्रत्नतत्त्वान्वेषिभिः कैश्चित् पाश्चात्त्यपण्डितै र्नारदस्य कालं प्रथमखृष्ट-शताब्दीयत्वेन निरूप्य समालोचनं विस्तरेण कृतम् । एतादृक् समालोचन-

मस्साभि र्बहुश उपलब्धम्। शास्त्रप्रातिकूल्यात् तेषां मतवाद उपेक्षितव्यः।

(११) असित इति। ब्रह्मसूनुः प्रचेतास्तस्य सूनुरसितस्तस्य सूनुर्देवलो यो हि रम्भाशापेन मुनेरुद्दालकस्य सुजातानाम्न्यां कन्यायामष्टावक्ररूपेण सञ्जातः। अष्टावक्रसंहिता नाम तस्यैक उत्कृष्टो ग्रन्थः। कहोलमुनिरस्य जनक आसीत्। अथर्व्ववेदस्य षष्ठकाण्डस्थिते १३६ सूक्तभाष्ये लिखितमस्ति यदस्माद् वीतहव्यः केशवृद्ध्यर्थं नितत्नीनाम्नीमोषधिं समग्रहीदिति। अस्य मुनेरायुर्व्वेदकर्त्तृत्वं हेमाद्रे र्लक्षणप्रकाशाच्चावगम्यते। तत्र लिखितमस्ति—

"असितो देवलश्चैव कौशिकश्च महाव्रतः।
सावर्णि र्गालवश्चैव मार्कण्डेयस्तु वीर्य्यवान्॥
आयुर्व्वेदस्य कर्त्तारः......................।"

इति।

(१२) अगस्त्यो नाम मित्रावरुणयोः पुत्रः। कुम्भसम्भवः कलसीसुतश्चेत्यस्य नामान्तरे भवतः। स ऋगथर्व्ववेदयोः कतिपयानां मन्त्राणां द्रष्टा। अस्य भार्य्या लोपामुद्रा, पुत्र आगस्त्यापरपर्य्यायो दृढस्युः। सोऽपि वैद्यागमिक आसीत्। तदुक्तं हेमाद्रे र्लक्षणप्रकाशे—

'गौतमश्च महाभाग आगस्त्यः काश्यपस्तथा।
......आयुर्वेदस्य कर्त्तारः............॥' इति।

अस्य भार्य्यालाभप्रसङ्गे प्रथमखृष्टशताब्दीयः कविरश्वघोष आह—

'अगस्त्यः प्रार्थयामास सोमभार्य्यां च रोहिणीम्।
तस्मात् तत्सदृशीं लेभे लोपामुद्रामिति श्रुतिः॥'

(बुद्धचरितम् ४।७३) इति।

अगस्त्यपूजाया मन्त्रः--

'काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥'

इति ।

प्रार्थनामन्त्रश्च—

'आतापि भक्षितो येन वातापिश्च महासुरः ।
समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ॥'

इति ।

लोपामुद्रार्घ्यमन्त्रश्च—

'लोपामुद्रे महाभागे राजपुत्रि पतिव्रते ।
गृहाणार्घ्यं मया दत्तं मैत्रावरुणिवल्लभे ॥

इति रघुनन्दनः ।

लोपामुद्रा विदर्भाधिपतेः कन्या । विदर्भ इदानीं 'वेरार'नाम्ना प्रसिद्धः । उद्ग्रन्थाभिधानं च द्रष्टव्यम् । अगस्त्यमुनेरगस्त्यसंहितासूक्तं प्रसिद्धमेव ।

(१३) वामदेवः सुप्राचीन ऋङ्मन्त्रादिद्रष्टा । तद्दृष्टाः सुप्रसिद्धा इमे मन्त्राः शान्तिकर्म्मणि प्रयुज्यन्ते—

"कया नश्चित्र आ भुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे वसु ॥
अभी षु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतये ॥"

( ऋग्वेद—३।६।२४, ४।३१।१-३ ; यजुर्वेद २७।३९-४१ ) इति ।

ऋग्वेदे 'भवास्यूतिभिरि'ति पाठः। अनुपासितगुरु र्वामदेव इत्येका प्रसिद्धिरस्ति। यद्वा भवतु, स उपज्ञाभूषित आसीदित्यत्र न विद्यते कोऽपि सन्देहावसर एव। अस्य मुनेरायुर्वेदकर्तृत्वं हेमाद्र 'लक्षणप्रकाश'-नामकवैद्यकग्रन्थादवगम्यते। तत्र लिखितमस्ति—

"वसिष्ठो वामदेवश्च च्यवनो भारविस्तथा।
विश्वामित्रो जमदग्नि र्भरद्वाजश्च वीर्य्यवान्॥
आयुर्वेदस्य कर्त्तारः..............."

इत्यादि।

(१४) मार्कण्डेय इति। अस्योत्पत्त्यादि मार्कण्डेयपुराणीयरुद्र-सर्गाध्याये यथा—"मार्कण्डेय उवाच।

देवौ धातृविधातारौ भृगोः ख्यातिरसूयत।
श्रियं च देवदेवस्य पत्नी नारायणस्य या॥
आयति र्नियतिश्चैव मेरोः कन्ये महात्मनः।
भार्य्ये धातृविधात्रोस्ते तयो र्जातौ सुतावुभौ॥
प्राणश्चैव मृकण्डुश्च पिता मम महायशाः।
मनस्विन्यामहं तस्मात् पुत्रो वेदशिरा मम॥
धूमावत्यां समभवत्..................॥"

इति।

अत एव मृकण्डुमुनिना मनस्विन्या गर्भे मुनिरयं समुत्पादितः। अस्य पत्नया नाम धूमावतीति, पुत्रस्य च नाम वेदशिरा इति। मार्कण्डेयो यथा चिरजीवित्वमवाप तत्सर्व्वं नृसिंहपुराणे वर्णितमस्ति। अस्य मार्कण्डेय-पुराणं सुप्रसिद्धम्। सप्तशती तदन्तर्गतैव भवति।

(१५) आश्वलायनः श्रौतसूत्रादिकं प्रणीतवान्। अश्वलस्य पुत्र-त्वादयमाश्वलायन इति नाम्ना प्रसिद्धः। अयं गृत्समदस्य वंशधरत्वेन

निरूपितः। गृत्समदशौनकवंशीयो महाशालशौनक आश्वलायनस्य गुरुरासीत्। अस्त्येवं प्रसिद्धि र्यत्—'गुरुशिष्यौ सम्भूय ऐतरेयारण्यकस्यान्तिमं भागद्वयं सङ्कलितवन्ताविति। एवं चानयोरवश्यमैतरेयमहिदासात् परवर्त्तित्वम्। स्मृतिकारो लब्धाश्वलायनः कश्चिदन्य एव मुनिः। केचित्तु तं ७-६ खृष्टपूर्व्वशताब्दीयं मन्यन्ते।

(१६) पारीक्षिरिति। पारीक्षि मौद्गल्य इति नाम्नाऽपि प्रसिद्ध आसीत्। स एक आयुर्व्वेदविन्मुनिरेव। अनेन सह राजर्षेः काशीपते र्वामकस्य क्वचिदायुर्व्वेदविषयको विचारो बभूव। तत्र वामकस्य प्रश्ने पारीक्षेः प्रतिवचनम्—

'आत्मजः पुरुषो रोगाश्चात्मजाः कारणं हि सः॥
स चिनोत्युपभुङ्क्ते च कर्म्म कर्म्मफलानि च।
न ह्यृते चेतनाधातोः प्रवृत्तिः सुखदुःखयोः॥'

( चरक स०-सू० २५।८-९ ) इति।

असौ वामक श्चिकित्साकौमुदीकृद् द्वितीयकाशीपति र्यो हि दिवोदासधन्वन्तरेरतिवृद्धप्रपितामहः। सम्भाव्यते यदसौ पारीक्षिः कस्मिंश्चित् समये 'आसीन्दवानि'ति नाम्नि नगरे राज्यं बुभोजेति।

(१७) भिक्षुरात्रय इति। असौ वह्निवेशभेडादेः समकालः आयुर्व्वेदवित् परिव्राजक आसीत्। चतुर्थाश्रमित्वाद् भिक्षुरित्यस्य ख्यातिः सञ्जाता। बुद्धदेवात् प्रागपि तापसा वानप्रस्थादनन्तरं भैक्षुकाश्रममाललम्बिरे। बुद्धसमकालको जीवकगुरु र्भिक्षुकात्रेयः षष्ठखृष्टपूर्व्वशताब्दीयो बौद्ध आयुर्व्वेदाचार्य्य आसीत्। स भिक्ष्वात्रेयाद् बहूत्तरभव एव। चरकस्य सूत्रस्थानीयपञ्चविंशाध्याये काङ्कायन-भिक्ष्वात्रेययो र्वादप्रतिवादात्मकः संलापो वर्त्तते ( २२-२५ )।

(१८) भरद्वाज उतथ्यपत्न्यां ममतायां बृहस्पतिवीर्य्यात् सञ्जातः। उतथ्यो बृहस्पतेरग्रजः। बृहस्पतिवीर्य्यतो जातत्वाद् भरद्वाजो यथा बृहस्पतेः पुत्रस्तथा क्षेत्रजत्वाद् उतथ्यस्यापि स पुत्रविशेषो भवति। तदस्य नामनिर्व्वचनश्लोको विष्णुपुराणे पठ्यते—

'मूढे भरद्वाजमिमं भरद्वाजं बृहस्पते।
यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम्॥'

इति।

भरद्वाजबुधयोरुत्पत्तिविषये प्रथमखृष्टशताब्दीयकनिष्कसभ्यः कविरश्वघोषभदन्त आह—

'उतथ्यस्य च भार्य्यायां ममतायां महातपः।
मारुत्यां जनयामास भरद्वाजं बृहस्पतिः॥
बृहस्पते र्महिष्यां च जुह्वत्यां जुह्वतां वरः।
बुधं विबुधकर्म्माणं जनयामास चन्द्रमाः॥'

(बुद्धचरितम्—४।७४-७५) इति।

उतथ्यपत्नी-बृहस्पत्योरिव बृहस्पतिपत्नी-चन्द्रमसो र्नीलीरागो दैवदुर्नियोगत्वेन विधेः परिहास इव प्रतिभातीति।

वृक्षायुर्व्वेदे भरद्वाजो भृगुमुनेः शिष्यत्वेन प्रतीयते। अस्ति वा न वा वृक्षादीनां जीवयोग इति विषयमधिकृत्य भरद्वाजस्य बलवती विचिकित्सा भृगु-भरद्वाजसंवादादवगम्यते। तथा हि महाभारतीयशान्तिपर्व्वणि १८४ अध्याये स्मर्य्यते—

"भृगुरुवाच—

* * * *

चेष्टा वायुः खमाकाशमुष्माग्निः सलिलं द्रवः।
पृथिवी चात्र सङ्घातः शरीरं पाञ्चभौतिकम्॥

इत्येतैः पञ्चभि र्भूतै र्युक्तं स्थावरजङ्गमम् ।
श्रोत्रं घ्राणं रसः स्पर्शो दृष्टिश्चेन्द्रियसंज्ञिकाः ॥

भरद्वाज उवाच—

पञ्चभि र्यदि भूतैस्तु युक्ताः स्थावरजङ्गमाः ।
स्थावराणां न दृश्यन्ते शरीरे पञ्च धातवः ॥
अनुष्मणामचेष्टानां घनानां चैव तत्त्वतः ।
वृक्षाणां नोपलभ्यन्ते शरीरे पञ्च धातवः ॥
न शृण्वन्ति न पश्यन्ति न गन्धरसवेदिनः ।
न च स्पर्शं विजानन्ति ते कथं पञ्चभौतिकाः ॥
अद्रवत्वादनग्नित्वादभूमित्वादवायुतः ।
आकाशस्याप्रमेयत्वाद् वृक्षाणां नास्ति भौतिकम् ॥

भृगुरुवाच—

घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः ।
तेषां पुष्पफलव्यक्ति र्नित्यं समुपपद्यते ॥

* * * *

ग्रहणात् सुखदुःखयोश्छिन्नस्य च विरोहणात् ।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥"

( ग्रन्थस्यास्य १०२-३ पृष्ठे द्रष्टव्ये ) ।

ततश्च स्थूणानिखननन्यायेन स्वाभिमतं द्रढयितुं पुनरपि महर्षिवर्य्यो भृगुरुवाच—

"तेन तज्जलमादत्तं जरयत्यग्निमारुतौ ।
आहारपरिणामाच्च स्नेहो वृद्धिश्च जायते ॥
जङ्गमानाञ्च सर्व्वेषां शरीरे पञ्च धातवः ।
प्रत्येकशः प्रभिद्यन्ते यैः शरीरं विचेष्टते ॥" इत्यादि ।

भरद्वाजो हि भुवि प्रथमो भिषक्तन्त्रप्रवर्त्तक इति कथानकमस्ति पौराणिकम्। स हि प्रायशः प्रयागक्षेत्रे कृतावस्थान आसीत्। अन्यो भरद्वाजो द्रोणपिता वर्णितचरो महाभारते। तयोः क आयुर्व्वेदप्रवर्त्तक इत्यत्र न निश्चायकं प्रमाणमुपलभामहे।

भरद्वाज आयुरागमे सुनासीरस्य प्रथमो मनुष्यशिष्यः। स आत्रेयस्यापि गुरुः। चरकस्य सूत्रस्थानीयद्वादशाध्याये 'कुमारशिरा भरद्वाज' इत्यस्य व्याख्यायां चक्रपाणिराह—'कुमारशिरा इति भरद्वाजविशेषणमात्रेयगुरुभरद्वाजनिषेधार्थम्' (५) इति।

व्याकरणाधिकारेऽपि भरद्वाज इन्द्रस्य प्रथमो मनुष्यशिष्यः। ऋक्तन्त्रे शाकटायनमुनिराह—'यथाचार्य्या ऊचु र्ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते। न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिरि'ति।

केचित् पुनरात्रेयभरद्वाजयोरैकत्वं प्रतिपादयितुं प्रयतन्ते। तदसत्। चरकीयसूत्रस्थानस्य प्रथमाध्याये लिखितमस्ति—

"ऋषयश्च भरद्वाजाज् जगृहुस्तं प्रजाहितम्।
दीर्घमायुश्चिकीर्षन्तो वेदं वर्द्धनमायुषः॥
अथ मैत्रीपरः पुण्यमायुर्व्वेदं पुनर्व्वसुः।
शिष्येभ्यो दत्तवान् षड्भ्यः सर्व्वभूतानुकम्पया॥"

( २७, ३० ) इति।

एताभ्यां श्लोकाभ्यामात्रेयभरद्वाजयो भिन्नत्वमेव प्रतिपाद्यते, आत्रेयो हि पुनर्वसुरिति। प्रागुद्धृतश्लोकयोरायुर्व्वेददीपिकायां चक्रपाणिरप्याह—'अत्र केचिद् भरद्वाजात्रययोरैक्यं मन्यन्ते। तन्न। भरद्वाजसंज्ञया आत्रेयस्य क्वचिदपि तन्त्रप्रदेशेऽकीर्त्तनादि'ति।

भरद्वाजेन संहितैका प्रणीता। ग्रन्थस्तु नेदानीमुपलभ्यते। १६५६ खृष्टाब्दीय-कवीन्द्रसूच्यामस्या उल्लेखो दृश्यते।

(१६) कापिष्ठलः सुप्राचीनश्छन्दःप्रवक्ता। स च पञ्चनदस्योत्तरतः इरावती-चन्द्रभागयोरन्तर्वर्त्तिनि कपिस्थलनाम्नि जनपदे प्रतिवसति स्म। कापिष्ठलिर्यस्य पुत्रः स कपिष्ठलो गोत्रप्रवर्त्तक ऋषिः। गोत्रशब्देन चेह प्रवरमालादिस्थितं लौकिकं गोत्रं ग्राह्यम्, न तु पारिभाषिकम्। लोके हि यत्पूर्व्विका सन्ततिः स आद्यपुरुषो गोत्रमुच्यते। पारिभाषिकं गोत्र-विषयत्वमपत्यप्रत्ययमन्तरेण न सम्भवतीति पारिभाषिकगोत्रस्येहाग्रहणम्। पाणिनिना सूत्रितम्—'कपिष्ठलो गोत्रे' ८।३।६१ इति।

कपिशब्दादुत्तरस्य स्थलस्य गोत्रे वाच्ये सस्य षो भवतीति कपिष्ठलः। लिङ्गं लोकतः सिद्धमित्यस्य पुंलिङ्गता। अगोत्रे तु कपेः स्थलं कपिस्थलम्। सम्भाव्यते यदसौ जनपदो वानरप्रधान आसीदिति।

कस्मिंश्चिद् ग्रन्थे 'कपिष्ठल'स्थले 'कपिञ्जल'इति पाठ उपलभ्यते। स हि वशिष्ठगोत्रीयः कपिञ्जलतन्त्रकार आयुर्व्वेदसम्प्रदायप्रवर्त्तक ऋषिविशेषः।

(२०) कान्यकुब्जाधिपतेः कुशिकस्य पौत्रो राज्ञो गाधिनः सूनुर्विश्वामित्रः क्षत्रियोऽपि तपोबलेन ब्रह्मर्षि बभूव।

तदुक्तमश्वघोषेण—

'यच्च द्विजत्वं कुशिको न लेभे
तद्गाधिनः सूनुरवाप राजन्।
वेलां समुद्रे सगरश्च दध्रे
नेक्ष्वाकवो यां प्रथमं बबन्धुः॥'

(बुद्धचरितम्—१।४४) इति।

अस्य मुनेरुत्पत्तिः कालिकापुराणीय ८४ अध्याये वर्णिताऽस्ति। विश्वं मित्रमस्येति पूर्व्वपददीर्घः। स्कन्दपुराणीयविष्णुखण्डादवगम्यते यद्

विश्वामित्रः कौत्सस्यैकमात्रगुरुरासीदिति। एतस्मादनुमीयते यद् विश्वामित्र एव वरतन्तुः, कौत्सश्च वारतन्तवीय इति। अस्य निर्व्वचनम्—वरः श्रेष्ठस्तन्तुः पुत्रः सुश्रुत इति यावद् यस्य स वरतन्तु र्विश्वामित्र इति। वयसि विनिर्गतेऽपि कौत्समुनि र्वभाषे मन्त्रा अनर्थकाः (निरुक्तम् १।१५।२) इति। विश्वामित्रस्य पुत्राः सुश्रुतगालवादयः। शुनःशेपस्तु तस्य कृत्रिमपुत्रः।

विश्वामित्रदृष्टगायत्रीजपेनास्माभिः सावित्री समुपास्यते, विश्वामित्रात् पूर्व्वं गाधिजमदग्निकुशिकवशिष्टादय ऋषय ऋग्वेदीयपञ्चममण्डलस्थं श्यावाश्वदृष्टम्—

'तत्सवितुर्वृणीमहे वयं देवस्य भोजनम्।
श्रेष्ठं सर्व्वधातमं तुरं भगस्य धीमहि॥'

(ऋ० ५।६।८२।१) इत्यनुष्टुब्मन्त्रं जप्त्वा वाग्देवताया उपासनां साधितवन्तः। यया सर्व्वे भावाः प्रसूयन्ते सैव सावित्री। उक्तं च—

'सविता सर्व्वभूतानां सर्व्वभावान् प्रसूयते'

इति।

अथर्व्ववेदस्य कौशिकसूत्रं विश्वामित्रप्रणीतम्। तत्राथर्व्वणमन्त्राणां विनियोगा उपदिष्टाः। हेमाद्रे र्लक्षणप्रकाशाद् विश्वामित्रर्षेरायुर्व्वेदकर्त्तृत्वमवगम्यते। तत्रास्ति—

'वसिष्ठो वामदेवश्च च्यवनो भारविस्तथा।
विश्वामित्रो जमदग्नि र्भारद्वाजश्च वीर्य्यवान्॥
आयुर्व्वेदस्य कर्त्तारः ·········॥' इति।

(२१) आश्मरथ्यः प्राचीनो विशिष्टाद्वैतवादिवैदान्तिक आसीत्। ऋग्वेदीयं विश्वकर्म्मदृष्टं मन्त्रजातं विशिष्टाद्वैतवादस्य प्रधानमुपजीव्यम् (१०।६।८२।३-७)। भगवानाश्मरथ्यो विशिष्टाद्वैतवादपोषकतया मन्त्रानामेतेषां तात्पर्य्यमुद्घाटितवान्। अतएव वेदान्ते बादरायणेनापि—

'अभिव्यक्तिरित्याश्मरथ्यः' इति सूत्रितम्। पूर्वोत्तरोभयमीमांसयो-राश्मरथ्यमतोल्लेखदर्शनादनुमीयते यदसौ प्राङ् मीमांसक आसीत् ततश्च विशिष्टाद्वैतवादी संवृत्त इति। बोधायन-द्रमिडाचार्य्यवर्षोपवर्षरामानुज-सुदर्शनादयः परवर्त्तिन आचार्य्या आश्मरथ्यस्य पन्थानमवलम्बितवन्तः।

(२२) भार्गव इति। भार्गवप्रमितिः संक्षेपेण भार्गव इत्युच्यते। स चैक आयुर्व्वेदाचार्य्यो मुनिः। वृद्धजीवकीयतन्त्रेऽप्यस्य नामोपलभ्यते। असौ भृगुमुने वंशधर एव। अनेन 'भार्गवसंहिता' प्रणीता। कालवशेनास्य ग्रन्थस्य विलोपः सञ्जातः।

(२३) च्यवनो ब्रह्मवैवर्त्तमते भास्करशिष्य 'श्च्यवनसंहिता-जीवदाना'दिवैद्यकग्रन्थप्रणेता च। इदानीं तस्य ग्रन्थो नोपलभ्यते। सत्सु बहुस्वपि च्यवनेषु वैद्यागमिकस्त्वसौ मुनि र्भृगुना स्वपत्न्यां पुलोमायामुत्पादित एव। अतः सोऽपि भार्गव इत्युच्यते। च्यवनमुनिः शर्य्यातिपुत्रीं सुकन्यामुपयेमे। अश्विद्वयदत्तेन येनौषधेनास्य रूपयौवनादि पुनरागतं तदौषधं 'च्यवनप्राश' इति नाम्ना सुप्रसिद्धमेव। एतदुपाख्यानमृग्वेदेऽश्विसूक्ते समाम्नायते—

"युवं च्यवानमश्विना जरन्तं पुन र्युवानं चक्रथुः शचीभिः।
युवो रथं दुहिता सूर्य्यस्य सह श्रिया नासत्यावृणीत ॥"

( १म, ११७ सू० १३ ऋक् ) इति।

अत्र हि यश्च्यवानः श्रूयते स एव गच्छता कालेन स्मृत्यादौ ह्रस्वता-मापन्नश्च्यवनः सञ्जात इति। तथा हि महाभारते स्मर्य्यते—

"सौतिरुवाच—

अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम्।
ब्रह्मन् वराहरूपेण मनोमारुतरंहसा ॥ १ ॥
ततः स गर्भो निवसन् कुक्षौ भृगुकुलोद्वह।
रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् ॥ २ ॥

तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्चसम् ।
तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम् ॥ ३ ॥
सा तमादाय सुश्रोणी ससार भृगुनन्दनम् ।
च्यवनं भार्गवं पुत्रं पुलोमा दुःखमूर्च्छिता ॥ ४ ॥
तां ददर्श स्वयं ब्रह्मा सर्व्वलोकपितामहः ।
रुदतीं वाष्पपूर्णाक्षीं भृगो भार्य्यामनिन्दिताम् ॥ ५ ॥
सान्त्वयामास भगवान् वधूं ब्रह्मा पितामहः ।
अश्रुविन्दूद्भवा तस्याः प्रावर्त्तत महानदी ॥ ६ ॥
आवर्त्तन्ती सृतिं तस्या भृगोः पत्न्यास्तपस्विनः ।
तस्या मार्गं सृतवतीं दृष्ट्वा तु सरितं तदा ॥ ७ ॥
नाम तस्यास्तदा नद्याश्चक्रे लोकपितामहः ।
बधूसरेति भगवांश्च्यवनस्याश्रमं प्रति ॥ ८ ॥
स एवं च्यवनो जज्ञे भृगोः पुत्रः प्रतापवान् ।
तं ददर्श पिता तत्र च्यवनं ताञ्च भाविनीम् ।
स पुलोमां ततो भार्य्यां पप्रच्छ कुपितो भृगुः ॥ ९ ॥

भृगुरुवाच—

केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षते ।
न हि त्वां वेद तद्रक्षो मद्भार्य्यां चारुहासिनीम् ॥ १० ॥
तं त्वमाख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा ।
विभेति को न शापान्मे कस्य चायं व्यतिक्रमः ॥ ११ ॥

पुलोमोवाच—

अग्निना भगवंस्तस्मै रक्षसेऽहं निवेदिता ।
ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव ॥ १२ ॥

साऽहं तव सुतस्यास्य तेजसा परिमोक्षिता ।
भस्मीभूतश्च तद्रक्षो मामुत्सृज्य पपात वै ॥ १३ ॥

सौतिरुवाच—

इति श्रुत्वा पुलोमाया भृगुः परममन्युमान् ।
शशापाग्निमतिक्रुद्धः सर्व्वभक्षो भविष्यसि ॥ १४ ॥"

( आदिपर्व्व—६ष्ठ अध्याय ) इति ।

आदिकवि र्भगवान् वाल्मीकिश्च्यवनमुनेः पुत्र इत्येका शास्त्रीया प्रसिद्धिरस्ति । तदुक्तमश्वघोषेण—

'वाल्मीकिरादौ च ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः ।
चिकित्सितं यच्च चकार नात्रिः पश्चात्तदात्रेय ऋषि र्जगाद ॥'

( बुद्धचरितम्—१।४३ ) इति ।

(२४) अभिजिदिति । असावपि प्राचीन आयुर्व्वेदाचार्य्यः । विष्णुपुराणादवगम्यते यदसौ चन्दनोदकदुन्दुभेः पुत्र आभिजित्यस्य पिता चेति ।

(२५) गार्ग्यमुनिरथर्व्ववेदस्य नानामन्त्राणां द्रष्टा गार्ग्यसंहिताकारश्च। गार्ग्यसंहिता वैद्यशास्त्रीयो ग्रन्थः । इदानीमस्य विलोपः सञ्जातः । १६५६ खृष्टाब्दीयकवीन्द्रसूच्यामस्य समुल्लेखो दृश्यते । शब्दाधिकारे गार्ग्य एकः प्रामाणिक आचार्य्यः । अस्य 'अक्षरतन्त्रसूत्रं' नाम व्याकरणं सुप्रसिद्धम् । शाकटायनः शब्दाधिकारे व्युत्पत्तिवादी, अयं त्वव्युत्पत्तिवादी । अनयो र्मतवादो यास्कस्य निरुक्ते द्रष्टव्यः । सम्भाव्यते वाचक्नवी गार्गी गार्ग्यमुनेः पितृष्वसासीदिति ।

(२६) शाण्डिल्यमुनि र्गोत्रप्रवर्त्तको भक्तिशास्त्रकारकश्च । अस्य शाण्डिल्यसूत्रनामकशास्त्रस्य भाष्यं सांख्यतत्त्वकौमुदीटीकाव्याख्याकर्त्रा स्वप्नेश्वरसूरिणा प्रणीतम् । तत्राद्यश्लोको यथा—

'प्रपद्य परमं देवं श्रीस्वप्नेश्वरसूरिणा ।
शाण्डिल्यशतसूत्रीयं भाष्यमाभाष्यतेऽधुना ॥'

इति । शाण्डिल्यः शाण्डिलमुने र्वंशधरः ।

(२७) कौण्डिन्यः कुण्डिनस्य गौत्रापत्यम् । असावपि प्राचीन आयुर्व्वेदाचार्य्यो मुनिः । कस्मिंश्चित् समये शिवकोपाद् भगवता 'विष्णुना रक्षितत्वादस्य 'विष्णुगुप्त' इति ख्यातिः सञ्जाता । तथापि ब्राह्मणसमाजे स निकारमाप । तदुक्तम्—'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये'ति । अत्र सामान्यविहितं दधिदानं साक्षादादिष्टेन तक्रदानेन कौण्डिन्याद् बाधितमिति कौण्डिन्यस्य निकारः स्पष्टं व्यज्यते । कौण्डिन्यः पाणिनितः पुरातन एव । 'आगस्त्य-कौण्डिन्ययोः......' ( २।४।७० ) इति पाणिनि-सूत्रादेतदवगम्यते ।

(२८) वार्क्षिः प्रचेता यस्य पत्नी मारिषाऽपरपर्य्याया वृक्षकन्या वार्क्षी । अनयो र्विवरणं महाभारतविष्णुपुराणादौ द्रष्टव्यम् । इह तु वार्क्षिनामा कश्चिद् वनाश्रय आयुर्व्वेदविद्मुनिरिति मन्यामहे ।

(२९) देवल इति । असितमुनिः स्वभार्य्यायामेकपर्णायां द्वौ पुत्रावुत्पादितवान्—देवलः शाण्डिल्यश्चेति ( कूर्म्मपुराणम् ) । हेमाद्रे र्लक्षणप्रकाशादवगम्यते यद् देवल आयुर्व्वेदविदासीदिति । स हि रम्भाशापेन मुनेरुद्दालकस्य सुजातानाम्न्यां कन्यायामष्टावक्ररूपेण जन्म लेभे । कहोलमुनिरस्य जनक आसीत् । असौ देवलसंहिताप्रणेता स्मृतिकार आयुर्व्वेदाचार्य्यश्च । अष्टावक्रसंहिता हि विद्वद्भि र्नितरामाद्रियते । तत्र ज्ञानविज्ञानसम्पन्नो मुनि र्मुक्तिकामनया समुपेतं महाराजं जनकं शमदमाद्यधिकार-स्वीकारपूर्व्वकमात्मतत्त्वमुपदिदेश—

'मुक्तिमिच्छसि चेत् तात विषयान् विषवत् त्यज ।
क्षमार्जवदयातोषसत्यं पीयूषवद् भज ॥

न पृथ्वी न जलं नाग्नि र्न वायु र्द्यौ र्न वा भवान् ।
एषां साक्षिणमात्मानं चिद्रूपं विद्धि मुक्तये ॥
यदि देहं पृथक्कृत्य चिति विश्राम्य तिष्ठसि ।
अधुनैव सुखी शान्तो बन्धमुक्तो भविष्यसि ॥
न त्वं विप्रादिको वर्णो नाश्रमी नाक्षगोचरः ।
असङ्गोऽसि निराकारो विश्वसाक्षी सुखी भव ॥
धर्म्माधर्म्मौ सुखं दुःखं मानसानि न ते विभो ।
न कर्त्ताऽसि न भोक्ताऽसि मुक्त एवासि सर्व्वदा ॥
एको द्रष्टाऽसि सर्व्वस्य मुक्तप्रायोऽसि सर्व्वदा ।
अयमेव हि ते बन्धो द्रष्टारं पश्यसीतरम् ॥
अहं कर्त्तेत्यहंमानो महाकृष्णाहिदंशितः ।
नाहं कर्त्तेति विश्वासामृतं पीत्वा सुखी भव ॥' इत्यादि ।

(३०) गालवः प्राचीन आयुर्व्वेदविद्मुनिरासीत् । स हि विश्वामित्रस्य पुत्रः शिष्यश्च । पाणिनेः पूर्व्वाचार्य्यो वैयाकरणो गालव एतस्मादुत्तरभव एव ।

स्कान्दादवगम्यते यत् स्ववैंद्यो धन्वन्तरि र्नररूपेण 'वीरभद्रा'नाम्न्यां वैश्यकन्यायां गालववीर्य्यात् सञ्जातः । आश्रमस्थै र्मुनिमिश्च स सद्योजातो बालको 'वैद्य'इति नाम्नाऽभिहितः । अम्बष्ठाचारचन्द्रिकायामेतद् विवरणं दृश्यते यथा—

"युधिष्ठिर उवाच—

धन्वन्तरि र्महाभाग ह्यमरेशः कथं पुरा ।
अभवत् सर्व्वतो विज्ञस्तन्मे वद महामुने ॥

मैत्रेय उवाच—

भो राजेन्द्र यथाजातो धन्वन्तरिरिहैव तु ।
महर्षि र्गालवो नाम काष्ठदर्भाहरो वनम् ॥
जगाम तत्र भ्रमणादतिश्रान्तो बभूव सः ।
ततो निरीक्षयामास तृष्णातुरकलेवरः ॥
वनस्य च बहिर्भागे कन्यामेकां ददर्श सः ।
जलपूर्णं घटं नीत्वा गच्छन्तीं पितृमन्दिरम् ॥
तां दृष्ट्वा हृष्टचित्तोऽसौ बभाषे मुनिपुङ्गवः ।
हे कन्ये त्वं जलं देहि प्राणरक्षां कुरुष्व मे ॥
ततः सा कलसं भूमौ निधायातिष्ठदुत्तमा ।
गालवश्चार्द्धतोयेन स्नात्वा तोयं पपौ च तत् ॥
प्रोवाच चापि हे कन्ये त्वं सत्पुत्रवती भव ।
ततः प्रोक्तवती कन्या न मे पाणिग्रहोऽभवत् ॥
ततो मुनिवरश्चाह का त्वं किं नाम ते वद ।
उवाच पुनरप्येषा वैश्यकन्या ह्यहं विभो ॥
वीरभद्राऽभिधाना च जानीहि मुनिपुङ्गव ।
ततो विचिन्त्य स मुनिस्तामादाय जगाम ह ॥
ऋषीणामग्रतो नीत्वा वृत्तान्तमवदत् ततः ।
आकर्ण्य ते महाराज प्रोचु र्हर्षितमानसाः ॥
भद्रमेव कृतं नूनमानीतेयं यतस्त्वया ।
वैश्यायां वीरभद्रायां धन्वन्तरि र्भविष्यति ॥
इत्युक्त्वा मुनयस्तेऽपि कुशपुत्तलिकां ततः ।
कृत्वा क्रोडे ददुस्तस्या वेदमुच्चार्य्य तत्कुशे ॥
प्राणप्रतिष्ठामप्यस्य चक्रुः पुरुषकाकृतिम् ॥

ततोऽभवत् काञ्चनराशिगौरः बालोऽतिसौम्याकृतिरेव तस्याः।
क्रोडे विलोक्यैव सुतं मुनीन्द्राः प्रापुर्मुदं वेदत एव जातः॥
वैद्यस्ततोऽयं जननीकुले च हितस्ततोऽम्बष्ठ इति प्रसिद्धः॥
एवमुक्त्वा ततः सर्व्वे मुनयो देवरूपिणः।
अमृताचार्य्यमस्याख्यं चक्रुर्वैश्याभिधानकम्॥"

इति।

(३१) सांकृत्य इति। संकृतस्य गोत्रापत्यं सांकृत्यः कश्चिद् आयुर्व्वेदज्ञो मुनिः। काश्यपसंहितायामप्यस्य नाम पठ्यते। सांकृत्यस्य गोत्रापत्यं सांकृत्यायनः 'कृशः सांकृत्यायनो' वा। वैयाघ्रपद्यगोत्रप्रवरः सांकृतिरन्य एव यस्य प्रसङ्गेन प्रथमखृष्टशताब्दीयः सुकविरश्वघोष आह—

'तथैव शाल्वाधिपतिर्द्रुमाख्यो वनात् ससूनुर्नगरं विवेश।
ब्रह्मर्षिभूतश्च मुनेर्वशिष्ठाद्दध्रे श्रियं सांकृतिरन्तिदेवः॥'

( बुद्धचरितम्—६।७० ) इति।

(३२) बैजवापिरिति। बीजवापस्य गोत्रापत्यं बैजवापिः। स कश्चिद् वैद्यागमिको मुनिरासीत्। शतपथब्राह्मणेऽस्य नाम दृश्यते ( १४।१५।२० )। श्रूयते हि यदसौ 'बीजवापीयतन्त्र'मकरोत्।

(३३) कुशिक इति। सिन्धुद्वीपस्य पुत्रो बलाकाश्वस्तस्य पुत्रः कुशिक आयुर्व्वेदविद् मुनिरासीत्। स कान्यकुब्जे राज्यमकरोत्। तस्य पुत्रो गाधिस्तस्य च पुत्रो विश्वामित्रः। स्मर्य्यते हि महाभारते—

'कान्यकुब्जे महानासीत् पार्थिवो भरतर्षभ।
गाधीति विश्रुतो लोके कुशिकस्यात्मसम्भवः॥
तस्य धर्म्मात्मनः पुत्रः समृद्धबलवाहनः।
विश्वामित्र इति ख्यातो बभूव रिपुमर्द्दनः॥'

( आ०—१७५ अ० ) इति।

विश्वामित्रस्य पुत्राः सुश्रुतादयः ।

अयं हि कुशिको हिरण्याक्षो भवितुं नार्हति । यत उपरिष्टात् पृथग्भावेन हिरण्याक्षस्यापि नामग्रहणं दृश्यते ।

कुशिकस्य पौत्रः कौशिक एव (पा० ४।१।१०४ भाष्यम्)। लक्षणप्रकाशादवगम्यते यत् सोऽप्यायुर्व्वेदप्रवर्त्तक आसीदिति । एष विश्वामित्रादन्यः कश्चित् पौत्र इत्येके ।

(३४) बादरायणः कृष्णद्वैपायनव्यासस्य नामान्तरम् । पराशरतनयत्वादसौ पाराशर्य्य इत्यपि कथ्यते । बादरायण आयुर्व्वेदाचार्य्यो मुनि र्वेदान्तसूत्रकारश्च । नियतं बदरिकाश्रमवासवशादयं बादरायणेति नाम्ना व्यपदिश्यते । यमुनाद्वीपे पराशरात् सत्यवत्यामयं जन्म लेभे इत्यस्य द्वैपायननाम्ना प्रसिद्धिः । शरीरस्य कृष्णवर्णत्वाद् द्वैपायनशब्दः कृष्णशब्देन विशेषित एव । ऋषेरपान्तरतमसोऽनन्तरमयमेव याज्ञिकेभ्यो वेदान् प्रविभज्य वेदव्यास इति संज्ञामवाप । वेदव्यासः संक्षेपेण व्यास इत्युच्यते ।

केचित् प्रत्नतत्त्वगवेषिणो व्यास-बादरायणयोः पृथक्त्वं प्रतिपादयितुं प्रयतन्ते । तेषामेतादृग्गवेषणा शास्त्रप्रतिकूलत्वान्नास्माभिरादरणीया । अतस्तन्मतवादो नात्र समुद्ध्रियते ।

महाभारतं महर्षेरक्षया कीर्त्तिः । तत्प्रणयने कोऽभिप्राय इत्यत्र भागवते स्मर्य्यते—

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥'

इति ।

महाभारतप्रशंसायां श्रूयते—

'चत्वार एकतो वेदा भारतं चैवमेकतः ।
पुरा किल सुरैः सर्व्वैः समेत्य तुलया धृतम् ॥

चतुर्भ्यः सरहस्येभ्यो वेदेभ्योह्यधिकं यदा ।
तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते ॥'
इति ।

प्राकृतजनानां कृते भगवान् व्यासो नानापुराणानि प्रणीतवान् । अत्र विष्णुपुराणमाह—

'अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥
तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ।
आग्नेयमष्टमं चैव भविष्यं नवमं स्मृतम् ॥
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ।
वाराहं द्वादशं चैव स्कान्दं चैव त्रयोदशम् ॥
चतुर्द्दशं वामनं च कौर्म्मं पञ्चदशं स्मृतम् ।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥'
इति ।

प्रणीतानां पुराणानां पौर्व्वापर्य्यविषये विशालो मतभेदो दृष्टः । तथा हि पुराणान्तरे पठ्यते—

'तत्र पद्मपुराणं च प्रथमं स प्रणीतवान् ।
ततोऽन्यानि पुराणानि कृत्वा षोडश तु क्रमात् ॥
अष्टादशं भागवतं सारमाकृष्य सर्व्वतः ।
कृतवान् भगवान् व्यासः शुकं चाध्यापयत् सुतम् ॥'
इति ।

औपनिषदानां कृते भगवता शारीरकसूत्राणि रचितानि । इदं वेदान्तशास्त्रं सकलदर्शनशिरोमणिरित्युच्यते ।

योगिजनेभ्यो योगभाष्यमनेन कृतम्। योगभाष्यकारस्य व्यासदेव इत्यभिधाने केचित् पाश्चात्त्यपण्डिता विप्रतिपद्यन्ते। त आहु र्योगभाष्यकारो व्यासो वेदव्यासात् स्वतन्त्रः कश्चिदर्व्वाचीनः पुरुष इति। प्राचीनैः सार्द्धं विसंवादादेवंविधं सिद्धान्तमेषां ग्रहीतुमनर्हा एव वयम्। यतो योगभाष्यस्य तत्त्ववैशारदीटीकायां पुन र्नवमखृष्टशताब्दीयो विद्याब्धिपारदृश्वा वाचस्पति-मिश्र आह—

'नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधीयते॥'

इति। विज्ञानभिक्षुणाऽपि योगभाष्यकारं वेदव्यासापरपर्य्यायं बादरायणं व्याहरता तमादौ प्रणम्य योगवार्त्तिकारम्भे लिखितम्—'तदिदं सूत्रमारभ्य समग्रं शास्त्रं सर्व्वलोकहिताय भगवान् बादरायणो व्याचष्टे...' इत्यादि। भाष्यकृत्प्रसङ्गे वाचस्पतिविज्ञानभिक्षुप्रभृतिषु प्रामाणिकप्रवरेष्वेवं वदत्सु विपक्षाणामपसिद्धान्ते क एव श्रद्धास्यति?

आयुर्व्वेदेऽपि बादरायणापरपर्य्यायो वेदव्यास एकः प्रमाणपुरुष एव। तथा हि 'सर्व्वाङ्गसुन्दरनाम्न्यां हृदयटीकायामरुणदत्तेन लिखितम्—'तथा भगवतो व्यासस्य—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्येन सर्व्वस्य कटुरेव सः॥'

(सूत्रस्थानं १४।२०) इति।

'गण्डीरारिष्ट इत्येष व्यासतः परिकीर्त्तितः' इत्येतत् सूत्रमपि व्यासस्य वैद्यागमिकत्वं समर्थयत एव। अस्य मुनेरेकत्र कवित्वदार्शनिकत्वादेरपूर्व्वं समावेशमुपलभमानैरुक्तम्—'व्यासो नारायणः स्वयमि'ति।

(३५) बडिशो धामार्गव इति। बडिशं वेधनयन्त्रविशेषः। तच्च शस्त्रं धामार्गव आदौ प्रणीय शस्त्रोपचारकाले व्यवजहारेति बडिशशब्दस्तस्य

नामाग्रत उपनामवत् संयोजितः। काङ्कायनवडिशादीनां संलापः सूत्रस्थानीय-द्वादशाध्याये द्रष्टव्यः। स आत्रेयादिभिः सह चैत्ररथवने विजिहीर्षुः समियाय। तन्मते रसा अष्टौ मधुराम्ललवणकटुतिक्तकषायत्क्षाराव्यक्ता इति।

(३६) शरलोमा कश्चित् प्राचीन आयुर्व्वेदाचार्य्यः। कश्यप-संहितायामपि तस्य नाम दृश्यते। सूत्रस्थानस्य पञ्चविंशाध्याये शरलोम्न उक्तिरुपलभ्यते। तत्र पारीक्षेः सिद्धान्तं श्रुत्वाऽसौ प्रतिवक्ति—

"......न ह्यात्मात्मानमात्मना।
योजयेद् व्याधिभि र्दुःखै र्दुःखद्वेषी कदाचन॥
रजस्तमोभ्यां तु मनः परीतं सत्त्वसंज्ञकम्।
शरीरस्य समुत्पत्तौ विकाराणां च कारणम्॥"

(१०-११ श्लो०) इति।

(३७) काप्य इति। कपेराङ्गिरसे गोत्रे यञिति काप्यः (पा० ४।१।१०७)। अनाङ्गिरसे तु कापेय इति। असौ मुनिः कपिस्थलनाम्नि जनपदे प्रतिवसति स्मेत्यनुमातुं शक्यम्। मारीचिकाप्ययो र्वादप्रतिवादात्मकः संलापश्चरकीयसूत्रस्थानस्य द्वादशाध्याये द्रष्टव्यः। तत्रास्ति—"मारीचि-रुवाच—अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोतीति। तच्छ्रुत्वा काप्य उवाच—सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोती"ति।

(३८) कात्यायन इति। चत्वार एव कात्यायना आसन्। तत्रैकः कौशाम्बीनगरवासिनः सोमदत्तस्य भार्य्यायां वसुदत्ताख्यायामुत्पन्नः श्रुतिधर कात्यायन इति। कथासरित्सागरादिषु भगवान् वर्षोपाध्यायस्तस्य गुरुत्वेन निर्दिष्टः। पाणिनिव्याकरणं दृष्ट्वा सोऽपि तादृशग्रन्थरचना-पर्य्युत्सुको महेश्वरमाराधयामास। ततस्तदनुग्रहेण पाणिनीयवार्त्तिकमकरोत्।

एवं च वार्त्तिककर्त्तृत्वात् स वाक्यकार इति नाम्ना विश्रुतिं लेभे। उत्कृष्टे कर्म्मणि श्रेष्ठप्रीतियुतत्वादस्य वररुचिरिति ख्यातिः सञ्जाता। अत एव पाणिनिसम्प्रदाये प्रणामाञ्जलिश्लोकः—

'वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम्।
पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम्॥'

इति। सूत्रवार्त्तिकादीनां प्रामाण्यमभिलक्ष्य पदमञ्जरीकृता हरदत्तमिश्रेणोक्तम्—

'यद् विस्मृतमदृष्टं वा सूत्रकारेण तत् स्फुटम्।
वाक्यकारो ब्रवीत्येव तेनादृष्टं च भाष्यकृत्॥'

इति।

सम्भाव्यते कात्यायनोऽयं महानन्दस्य मन्त्री बभूवेति। तदानीं बौद्धेषु वेदादिशास्त्राणामुच्छेदसाधनाय प्रवृत्तेषु कात्यायनो गुरुश्वशुरयो वर्षोपवर्षयोर्वर्त्मना पूर्व्वोत्तरमीमांसाद्वयस्य वृत्तिं विरचय्य सनातनधर्म्मस्य दृढत्वं सम्पादयामास। इदानीं यद्यपि कात्यायनप्रणीता काऽपि वृत्तिर्नोपलभ्यते तथापि विशिष्टाद्वैतवादिना रामानुजाचार्य्येण श्रीभाष्ये वाक्यकारनामोल्लेखसहकारेण तदीया बहवो मतवादाः समुद्धृता इति तत्सत्तायां सुव्यक्तं प्रमाणम्। श्रूयते हि भगवान् पुष्पदन्तो गौर्य्यभिशप्तोऽनेन कात्यायनरूपेण सञ्जात इति। यद् वा भवतु। चरकमुनिः पाणिनेः पूर्व्वभवः, कात्यायनः पाणिनेरुत्तरभवस्तदीयवार्त्तिककरणात्, अतश्चासौ पाणिनिवार्त्तिककृत् कात्यायनश्चरकोक्तकात्यायनो भवितुं नार्हति।

द्वितीयस्तावत् गोभिलपुत्रः कात्यायनो यः खलु गृह्यासंग्रहं कर्म्मप्रदीपापरनामकं छन्दःपरिशिष्टं प्रणीतवान्। एतस्मिन् गृह्यासंग्रहे—'वि-ग-पुं-सी-जा-नि-ना-अ-च-उ'नामका दशविधाः संस्काराः प्रदर्शिताः। तेषां सांकेतिकनाम्नां प्रतिपाद्यानि तु—विवाहगर्भाधान-पुंसवन-सीमन्तोन्नयन-

जातकर्म्म-निष्क्रामण-नामकरणान्नप्राशन-चूडाकरणोपनयनानीति । नामैक-देशग्रहणेन नाममात्रग्रहणमित्येवंन्यायानुसारेण 'प्रेकोचैचा'* 'आका-मावै'† प्रभृतिप्रातिस्विकसंज्ञा इव विवाहाद्यर्थबोधनाय 'विगपुंसी...' प्रभृतयः संज्ञा व्यवह्रियन्ते । कर्म्मप्रदीपे श्राद्धहोमादिविषयाः प्रदर्शिताः । अस्येदमादिमं वचनम्—

'अथातो गोभिलोक्तानामन्येषां चैव कर्म्मणाम् ।
अस्पष्टानां तथा सम्यग् दर्शयिष्ये प्रदीपवत् ॥'

इति ।

यद् वा भवतु, असौ कात्यायनो वैशम्पायनमुनेरुत्तरभवः, चरकस्तु वैशम्पायनस्य साक्षाच्छिष्य एव 'वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन्' ( भागवत १२।६ ) इत्याद्युक्तः । अत एषोऽपि कात्यायनश्चरकोक्त-कात्यायनो भवितुं नार्हति ।

अपर एकः कात्यायनः स्मृतिकारो येन धर्म्मसंहिता कृता । स्मर्य्यते च—

'मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती...'

इत्यादि ।

एतस्मादुपपद्यते यदसौ कात्यायनो धर्म्मशास्त्रप्रयोजक इति । केषां-चिन्मते स विश्वामित्रवंशीय ऋषिः कात्यायनश्रौतसूत्रादिकं प्रणिनायेति ।

---

* प्रेतपक्षपरवर्त्तिद्वितीया—कोजागरपूर्णिमापरवर्त्तिद्वितीया—चैत्रावली परवर्त्तिद्वितीया—चातुर्म्मास्यव्रतपरवर्त्तिद्वितीया' इति द्वितीयाचतुष्टयस्य सांकेतिकसंज्ञा ।

† आषाढीपूर्णिमा-कार्त्तिकीपूर्णिमा-माघीपूर्णिमा-वैशाखीपूर्णिमा इति पूर्णिमाचतुष्टयस्य सांकेतिकसंज्ञा ।

स्कान्दस्य नागरखण्डादवगम्यते यत् कतस्य गोत्रापत्यं कात्यायनो नाम महर्षिरेक आसीदिति। स हि कात्यायनगोत्रप्रवर्त्तक एव। तस्य नाम रामायणे तैत्तिरीयारण्यकादौ चोपलभ्यते। एष खलु प्राचीनतम एव।

अन्तिमयोरनयोः क आयुर्व्वेदप्रवर्त्तकः कश्च चरकेण लक्षित इत्यत्र न किंचिद् निश्चायकं प्रमाणमुपालभामहे।

(३६) काङ्कायनो बाह्लीकभिषगिति। असौ बाह्लीकदेशीयानां वैद्यागमिकानां शीर्षण्यतामधिचक्रे। तदुक्तं चरकेन—

'काङ्कायनश्च बाह्लीको बाह्लीकभिषजां वरः'

( सू० २६।५ ) इति।

सूत्रस्थानस्य पञ्चविंशाध्याये भरद्वाज-काङ्कायनयो र्वादप्रतिवादात्मकः संलापः श्रूयते ( २०-२३ )। षड्विंशाध्यायादवगम्यते यदसौ सहात्रेया-दिभि श्चैत्ररथवने विजिहीर्षुः समियायेति ( ५-६ )। तन्मते रसा अपरिसंख्येया आश्रयगुणकर्म्मसंस्वादविशेषाणामपरिमेयत्वाद् (८) इति।

कुत्रावस्थितोऽयं बाह्लीकदेशः? महाभारते स्मर्य्यते—'आरट्टा नाम ते देशा' इति ( कर्णप० )। आरट्टो बाह्लीकस्य नामान्तरम्। पौराणिका एनं गान्धारं व्याहरन्ति। केचित् पुनः कुभायाः ( काबुलनद्याः ) उत्तराहि बाह्लीकदेश इत्यभिप्रयन्ति। आधुनिकभौगोलिकपण्डितानां मते कुभाया उत्तराहि 'समरकन्द'देशाद् दक्षिणाहि संस्थितोऽयं देशः। इदानीं स देशः 'व्याक्ट्रिया' ( Bactria )-प्रदेशीयः 'बल्ख' ( Balkh ) इति नाम्ना प्रसिद्धः।

(४०) कैकशेय इति। कैकशेयशब्दः दन्त्यसकारको मूर्धन्यषकारको वापि पठ्यते—कैकसेयः कैकषेयश्चेति। सिंहले यातुधानात् सुमालिन-स्तत्पत्न्यां केतुमत्यां निकषाऽपरनाम्नी कैकशी जन्म लेभे। विश्रवोमुनिरेना-मुपयेमे। अनेन मुनिना विश्रवसा निकषाऽपराभिधानायां कैकश्या-

मुत्पादिता स्त्रयः पुत्रा रावणः कुम्भकर्णः विभीषणश्चेति । एते सर्व्वे कैकशीपुत्रत्वात् कैकशेया उच्यन्ते । निकषाऽपि कैकश्या नामान्तरमित्यतस्ते पुन नैंकषेयत्वेन च प्रसिद्धाः । अमरकोषे निकषात्मजशब्दस्य व्याख्यायां क्षीरस्वामिना लिखितम्—'निकषा रक्षसां माते'ति माला, अतो नैकषेयभ्रान्त्या कैकसेयमाहुरि'ति । अस्माभिस्तु मतमेतद् न समर्थ्यते, अपसिद्धान्तत्वात् । पौराणिका ऐतिहासिकाश्च निकषां रावणादीनां मातरं व्याहरन्ति । रामायणस्योत्तरकाण्डीयनवमसर्गादवगम्यते यद् विश्रवसो भार्य्यायां कैकश्यामुत्पन्ना एते रावणादय इति । अत एव ये हि नैकषेयास्त एव कैकशेया इति तत्त्वं परमार्थतो ग्राह्यम् ।

कैकशेयानां मध्ये रावण एव चिकित्साशास्त्रे नितरां सुदक्ष आसीत् । अद्यापि तन्नाम्ना नानावैद्यकग्रन्था विलसन्ति यथा—रावणीचिकित्सा, रावणीयनिबन्धसंग्रहः कुमारतन्त्रं लंकेशसिद्धान्त इत्येवमादयः । अतोऽनुमीयते यदिह चरकसंहितायां कैकशेयशब्देन लङ्काधिपती रावण एव समुद्दिष्ट इति ।

(४१) धौम्य इति । आयोदधौम्यः प्राचीन आयुर्व्वेदाचार्य्यः । आरुणि-वेदादयस्तस्य शिष्या आसन् । महाभारतेऽस्य नाम दृश्यते ।

(४२) 'मारीचिरि'ति । मरीचेः पुत्रो मारीचस्तस्य पुत्रो मारीचिः । स आयुर्व्वेदाचार्य्य आसीत् । चरकसंहितायाः सूत्रस्थानीयद्वादशाध्याये वार्य्योविद-मारीच्यो र्वादप्रतिवादात्मकसंलापो दृश्यते । तत्र लिखितमस्ति—"तच्छ्रुत्वा वार्य्योविदवचो मारीचिरुवाच—यद्यप्येवमेतत् किमर्थस्यास्य वचने विज्ञाने वा सामर्थ्यमस्ति भिषग्विद्यायाम् । भिषग्विद्यां चाधिकृत्येयं कथा प्रवृत्तेति । वार्य्योविद उवाच—भिषक्, पवनमतिबलमित्यादि । मारीचिरुवाच—अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोती"ति । (६-११) ।

(४३) काश्यप इति। उलूकापरनामाऽयं कणादकाश्यप एव। एष वैशेषिकसूत्रकारत्वेन प्रसिद्धः। कोषश्चाह—'उलूकः काश्यपः समौ' इति। वैशेषिकभाष्ये प्रशस्तपादाचार्य्येण कणादमुद्दिश्य लिखितम्—'काश्यपोऽब्रवीदि'ति। सूत्रस्थानीय-द्वादशाध्याये मुनीनां विचारवेलायां काश्यपोक्तिरुपलभ्यते। पालकापीयगजायुर्व्वेदादवगम्यते यदसौ मुनि र्गजायुर्व्वेदेऽपि प्रमाणपुरुष आसीदिति।

वैशेषिकदर्शनारम्भे कणादमुनि'रथातो धर्म्मं व्याख्यास्यामः' इति प्रतिज्ञां विदधे। तत उद्देशसूत्रे तेन षट्पदार्था उपवर्णिताः—'धर्म्मविशेष-प्रसूताद् द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्मवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमि'ति। अयं हि षट्पदार्थवादी सप्तपदार्थवादी वेत्यत्र पण्डितानां वैमत्यमस्ति। यतः पुनरभावोऽपि तेन पदार्थत्वेनालोचित एव। सांख्यदर्शने तु सूत्रितम्—'न वयं षट्पदार्थवादिनो वैशेषिकादिवदि'ति। प्रचलति च कश्चिदाभाणकः—

'धर्म्मं व्याख्यातुकामस्य षट्पदार्थोपवर्णनम्।<br>
सागरं गन्तुकामस्य हिमवद्गमनोपमम्॥' इति।

कोविदाश्चाहु र्यन्न्यायशास्त्रस्य प्रमेयसूत्रव्याख्यायाम् 'अस्त्यन्यदपि द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः प्रमेयमि'ति वदता भाष्यकृता वात्स्यायनेनापि कणादः षट्पदार्थवादित्वेन निर्द्दिष्ट इति। अतः स षट्पदार्थवादीति भाष्यकारीयनिर्णयमनुवर्त्तामहे।

(४४) शर्कराक्षः कश्चित् प्राचीन आयुर्व्वेदविद् मुनि र्यो हि हिमवत्-पार्श्वस्थितां मुनिसभां गत्वा रोगप्रतीकारविषये परस्परं भावविनिमयं कृतवान्। अस्य कश्चिदन्यपरिचयो नोपलभ्यते। छान्दोग्योपनिषदि शर्कराक्षस्य नामोपलभ्यते।

(४५) हिरण्याक्ष इति। चरकसंहितायां षड्विंशाध्यायारम्भे वर्त्तते—

'आत्रेयो भद्रकाप्यश्च शाकुन्तेयस्तथैव च।
पूर्णाक्षश्चैव मौद्गल्यो हिरण्याक्षश्च कौशिकः ॥'
इति।

हिरण्याक्षकौशिक इत्युक्ते कौशिको गोत्रं हिरण्याक्षस्त्वस्य नामैव। पुनर्हिरण्याक्षकुशिक इत्युक्ते कुशिक इति नाम हिरण्याक्ष इत्यस्य विशेषणम्। चरकसंहितायाः पञ्चविंशाध्यायस्थचतुर्दशषोडशसूत्रतो 'हिरण्याक्षकुशिक'-इति नामोपलभ्यते। अत्र कुशिक इति हिरण्याक्षस्य नाम हिरण्याक्षस्तु कुशिकस्य विशेषणम्। सम्भाव्यते च हिरण्याक्ष इति विशेषणं गाधि-जनककुशिकात् पृथक्करणार्थम्।

हिरण्याक्षः कौशिक इति नाम काश्यपसंहितादौ चोपलभ्यते। चरक-संहितायां 'हिरण्याक्षश्च कौशिक' इत्यत्र तूभयोः पार्थक्यकल्पना न सुशोभना प्रतिभाति। यतः सूत्रस्थानीय-षड्विंशाध्याये दृश्यते—

'चत्वारो रसा इति हिरण्याक्षः कौशिकः'
( सूत्र—२६।८, २८२ पृष्ठे ) इति।

(४६) लोकाक्ष इति। सम्भाव्यते च 'लोगाक्ष' इति लिखितव्ये 'लोकाक्ष' इति लिखितम्। लोगाक्षस्य गोत्रापत्यं लौगाक्षिर्यश्च पुराकाले धर्म्मसूत्रं प्रणिनाय। लोगाक्षो नितरां प्राचीन एव।

(४७) पैङ्गिरिति। पिङ्गस्य गोत्रापत्यं पैङ्गिः। स हि प्राचीन आयुर्व्वेदाचार्य्यः। तस्य पितुः कल्पशास्त्रं सुप्रसिद्धम्। पिङ्गेन प्रोक्तः कल्पः पैङ्गी।

(४८) शौनक इति। शौनक ऋषि सूत्रकारस्याश्वलायनस्य गुरुः। श्रूयते हि गुरुशिष्यौ सम्भूय ऐतरेयारण्यकस्य चरमं भागद्वयं संकलयामासतु-रिति। अयं तु चरकोक्तः शौनको भवितुं नार्हति, अनतिप्राचीनत्वात्।

मन्ये—छन्दोऽनुक्रमणीकारः शौनक एव चरकेण लक्षित इति। स ऋक्प्रातिशाख्यमपि प्राणैषीत्। नेत्ररोगचिकित्साविषयकं तस्य 'शौनक-तन्त्रम'तितरामुत्तमो ग्रन्थः। डल्वणस्य निबन्धसंग्रहे लिखितमस्ति—'षट्-सप्ततिर्नेत्ररोगाः करालभट्टशौनकादिप्रणीता' इति। करालभट्ट आत्रेय-शिष्य इति प्रसिद्धिः। सम्भाव्यते च शौनकोऽपि तस्य समकालिक इति।

चरके लिखितमस्ति—'तदुक्तवन्तं कुशिकमाह तन्नेति कौशिकः' (सूत्र० २५।१६)। कुशिकस्य पौत्रादिः कौशिकः (पा० ४।१।१०४)। अत्र शौनक इति पाठः समीचीनः, 'कौशिक' इति पाठस्तु प्रामादिकः। शुनकस्य पौत्रादिः शौनकः।

(४६) शाकुनेयः। शकुनेरपत्यं शाकुनेय इति ढक् (पा० ४।१।-१२३) इति। राज्ञ इक्ष्वाकोः पुत्रो विकुक्षिस्तस्य पुत्रः शकुनिस्तस्य पुत्रः शाकुनेयः। वैद्यागमे तस्य प्रतिपत्तिरासीत्। चरकसंहितायामुक्तम्—'शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः' (सू० १।१) इति।

शाकुन्तेयस्त्वन्यः। स हि शकुन्तस्य गारुडाख्यविषशास्त्रवेत्तु र्गरुडस्यापत्यं शाकुन्तेयः (शुभादित्वात् ४।१।१२३) सम्पातिरिति यावत्। सोऽपि विषवैद्य आसीत्। चरके लिखितमस्ति—'द्वौ रसाविति शाकुन्तेयो ब्राह्मणश्छेदनीयश्चोपशमनीयश्चेति' (सू० १।२६)। History of Indian Medicine-नामकग्रन्थे डाक्तार-श्रीगिरीन्द्र-नाथमुखोपाध्यायस्य शाकुन्तेय-शाकुनेययोरैकत्वकल्पना नास्माभिराद्रियते।

(५०) मैत्रेय इति। मैत्रे मित्रतायां साधुरिति मैत्रेयः (ढञ्)। यद्वा मित्राया अपत्यं मैत्रेय इतिः ढक्। स हि विदुरसमकालिक आसीत्। उक्तं च भागवते—

'एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतौ बुधः ।
प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥'

( ३।७।१ ) इति ।

असौ वैद्यागमिकश्चेति प्रतीयते । तथाहि सूत्रस्थानीयदशमाध्याये स आत्रेयमपि प्रतिवदति । तत्र लिखितमस्ति—"चतुष्पादं षोडशकलं भेषजमिति भिषजो भाषन्ते, यदुक्तं पूर्व्वाध्याये षोडशगुणमिति, तद्भेषजं युक्तियुक्तमलमारोग्यायेति भगवान् पुनर्व्वसुरात्रेयः । नेति मैत्रेयः । किं कारणम् ? दृश्यन्ते ह्यातुराः केचितुपकरणवन्तश्च परिचारकसम्पन्नाश्चात्मवन्तश्च कुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानास्तथायुक्ताश्चापरे म्रियमाणाः । तस्माद् भेषजमकिञ्चित्करं भवति, तद् यथा श्वभ्रे सरसि वा प्रसिक्तमल्पमुदकम्, नद्यां वा स्यन्दमानायां पांसुधाने वा पांसुमुष्टिः प्रकीर्णा इति । तथाऽपरे दृश्यन्तेऽनुपकरणाश्चापरिचारकाश्चानात्मभवन्तश्चाकुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानाः, तथायुक्ता म्रियमानाश्चापरे । यतश्च प्रतिकुर्व्वन् सिध्यति, प्रतिकुर्व्वन्नपि म्रियते, अप्रतिकुर्व्वन्नति सिध्यति, अप्रतिकुर्व्वन् म्रियते । ततश्चिन्त्यते भेषजमभेषजेनावशिष्टमिति मैत्रेयः ।" ( ३-४ ) इति । महाभारते हि स्मर्य्यते—

'के वा भुवि चिकित्सन्ते रोगार्त्तान् मृगपक्षिणः ।
श्वापदानि दरिद्रांश्च प्रायो नार्त्ता भवन्ति ते ॥'

( शान्तिप० ३३१।३३ ) इति ।

वैष्णववैद्यकशास्त्रान्तर्गतरसायनपादान्ते वैष्णववैद्यो नारायणदाससिद्ध आह—

'अविश्रमं यावदिदं शरीरकं पतत्यवश्यं परिणामदुर्व्वहम् ।
किमौषधं पृच्छसि मूढ दुर्म्मते निरामयं कृष्णरसायनं पिव ॥'

इति । अयं नारायणदासो भक्तिभूषणसन्दर्भभक्तिसागरादिप्रणेता नवम-

खृष्टशताब्द्यां विष्णुशर्म्माणमनुसृत्य हितोपदेशं प्रणिनाय। वैद्यचिन्तामणि-प्रणेता नारायणभट्टोऽन्यः। स त्रयोदशखृष्टशताब्दीय आसीत्। एतत् सर्व्वं वैद्यागमे मैत्रेयस्य ज्ञानातिशय्यं प्रतिपादयति।

(५१) मैमतायनिरिति। सौवीरगोत्रे वर्त्तमानस्य मिमतस्यापत्यमिति फिञ्प्रत्ययेन ( फाण्टाह्वतिमिमताभ्यां णफिञौ ) मैमतायनिः।

(५२) वैखानसा इति। विखानसं ब्रह्माणं वेत्ति तपसेत्यण्प्रत्ययेन वैखानसस्ते वनेचरास्तपस्विनः।

उक्तं च वैजयन्त्याम्—

'वैखानसो वनेवासी वानप्रस्थश्च तापसः'

इति।

शाकुन्तले चोक्तम्—

'वैखानसं किमनया व्रतमाप्रदानाद्
व्यापाररोधि मदनस्य निषेवितव्यम्।'

इति।

सोढलस्य गदनिग्रहे दृश्यते यदेते तापसा ब्राह्मरसायनावलेहमासेव्य दीर्घायुषो बभूवुरिति। षोडशखृष्टशताब्दीयतोदरानन्दे वैखानसतन्त्रस्य वचनमुपलभ्यते। गोपालपूर्व्वतापिन्युपनिषदा सह वैखानसीयोपनिषदः सादृश्यमुपलभ्यते।

(५३) बालखिल्या इति। बालखिल्यो बालखिल्यश्च मुनिविशेषो यस्य परिमाणं चाङ्गुष्ठमात्रम्, ते। स्मर्य्यते हि मार्कण्डेयपुराणे—

'क्रतोश्च सन्तति भार्य्या बालखिल्यानसूयत।
षष्टि र्यानि सहस्राणि ऋषीणामूर्द्ध्वरेतसाम्॥'

( ५२।२४ ) इति।

एते च वालखिल्या वालिखिल्या वा मुनयो ब्रह्मणः केशेभ्य उत्पन्ना इत्येका प्रसिद्धिरस्ति। वृहद्रामायणस्य चित्रकूटमाहात्म्ये लिखितमस्ति—

विधिना निर्म्मिता पूर्व्वं वेदी परमपावनी।
अग्निवेशादिमुनयो वालिखिल्यादयः स्थिताः॥
(१म-सर्गः) इति।

सोढलस्य गदनिग्रहादवगम्यते यदेतेऽपि मुनयो ब्राह्मरसायनावलेहं सेवित्वा दीर्घजीवनं लेभिरे—इति।

चरकसंहितायाः सूत्रस्थानीयप्रथमाध्याये लिखितमस्ति—

'अग्निवेशश्च भेलश्च जतूकर्णः पराशरः।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुने र्वचः॥'
(३१ श्लोकः) इति।

आत्रेयस्य षडेते शिष्याः सुप्रसिद्धाः। एते सर्व्वे परमर्षय एव। सुश्रुतसंहितायामुक्तम्—'षट् सु कायचिकित्सासु ये चोक्ताः परमर्षिभिरि'ति। अस्य व्याख्यायां डल्लण आह—'षट्सु कायचिकित्सास्वग्निवेशभेडजतूकर्ण-पराशरहारीतक्षारपाणिप्रोक्तास्वि'ति (६।१)। इदानीं परमर्षिपदभाजा-मेतेषां वृत्तान्ता अस्मदीयटिप्पन्या सार्द्धमुपरिष्टात् प्रदर्श्यन्ते—

(५४) अग्निवेश इति। अयं परमर्षिरग्निवेशतन्त्रं चकार। तस्य तन्त्रस्य टीकैका चरकेण प्रणीतेति श्रूयते। 'चिकित्सा वह्निवेशस्ये'ति चरकोक्ते र्ज्ञायते यदसौ वह्निवेशनाम्नाऽपि प्रसिद्ध आसीदिति। मधुकोषे लिखितमस्ति—'हुताश इत्यग्निवेशसम्बोधनमि'ति। अत एव 'हुताश' इत्यस्य नामान्तरमपि। महाभारतादवगम्यते यदग्निवेशः परमर्षिरग्नि-सम्भूतत्वादग्निभ्राजिष्णुरासीदिति। स हि भरद्वाजादस्त्रविद्यामायत्तीकृत्य द्रोणाय पाञ्चालकुमाराय द्रुपदाय च तां विद्यां प्रददौ। अस्ति काचित् प्रसिद्धि र्यत् सोऽपि पाञ्चालप्रदेशे प्रतिवसति स्मेति।

भगवत आत्रेयस्य षडेव शिष्याः स्वं स्वं तन्त्रं विरचयामासुः। तत्र यत् कृतमग्निवेशेन तत्तु सर्व्वेषां शीर्षण्यतामधिचक्रे। अतो हि चरकमुनिरग्निवेशीयं तन्त्रं प्राधान्येनोपजीव्य भेडादिभ्यश्च सारं संगृह्य स्वनामाङ्कितां संहितामेकां प्राणैषीत्। अग्निवेशादिभ्यश्चरको बहुभि र्वर्षैरर्व्वाचीन एव। अतश्च कालवशेन यद् यद् विनष्टं प्राचीनतन्त्रेषु तत् तत् सर्व्वं संस्कर्त्ताऽपूरयदित्यनुमातुं शक्यम्।

(५५) भेल इति। भेड इत्यपि। ऋक्प्रातिशाख्यादिषु वर्त्तते विधि र्द्वयोः स्वरवर्णयो र्मध्यस्थो डकारो मूर्द्धन्यो लकारो भवति, यथा—अग्निमीडे अग्निमील इति भवति।

परमर्षि र्भेलो गान्धारेषु प्रतिवसति स्मेति प्रसिद्धिरस्ति। तस्य तन्त्रस्य कियांश्चन भागो वर्णेल्साहेवमहोदयेन समधिगतः प्रकाशितश्च। तत्र निदानस्थानादि विहाय शिष्टं दृश्यते।

(५६) जतूकर्ण इति। केचिदाहु र्जातूकर्ण इति। तच्चिन्त्यम्। जातूकर्णस्तूपस्मृतिकारः। चतुर्व्वर्गचिन्तामण्यां हेमाद्रिणा श्लोक एक उद्धृतः—

'व्याघ्रः कात्यायनश्चैव जातूकर्णः कपिञ्जलः।······
उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः॥'

इति।

मन्ये—जातूकर्णो जतूकर्णादन्यं इति।

(५७) पराशर इति। केचिदिमं व्यासपितुरन्यं मन्यन्ते। एतच्चिन्त्यम्। ब्रह्मसूनोरत्रेः पुत्र आत्रेयः कृतयुगीयो मुनिस्तस्य वशिष्ठतनयशक्तिसमकालिकत्वमनुमातुं शक्यम्। अतस्तत्सकाशाच्छक्तिसूनोः पराशरस्य वैद्यकागमलाभो नासम्भव एव।

वशिष्ठपुत्रेण शक्तिणा तत्पत्न्यामदृश्यन्त्यां पराशर उत्पादितः। तदुक्तमाग्नेये—

'सुतं त्वजनयच्छक्ते रदृश्यन्ती पराशरम् ।
काली पराशराज् जज्ञे कृष्णद्वैपायनं मुनिम् ॥'

इति ।

कालीपराशरयो र्वृत्तमनुस्मृत्य कविरश्वघोष आह—

'काली चैव पुरा कन्यां जलप्रभवसंभवाम् ।
जगाम यमुनातीरे जातरागः पराशरः ॥'

( बुद्धचरितम् ४।७६ ) इति ।

काली मत्स्यगन्धा ।

महाभारतस्य प्रथमपर्व्वणि पराशरनामनिरुक्ति र्दर्शिता—

'परासुः स यतस्तेन वशिष्ठः स्थापितो मुनिः ।
गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥'

( १७८।३ ) इति ।

इदमत्राकूतम् । परासु र्वंशलोपभयाद् मृतकल्प इव वशिष्ठो यतः स्थापितो वंशप्रवाहाश्वासितत्वेन रक्षितस्तस्मात् कारणात् स शक्तिसूनुः पराशरनाम्ना विश्रुत आसीदिति । "परासोराशासनमवस्थानं येन स पराशरः । आङ्पूर्व्वाच्छास्ते र्डरन्" इति नीलकण्ठः । पृषोदरादित्वात् सुलोपस्तालव्यमध्यत्वञ्च । स च कृष्णद्वैपायनस्य पिता । तेनैव द्वादशाध्यायात्मिका कलिकर्त्तव्यधर्म्मसंहिता प्रणीता । तदुक्तम्—'कलौ पाराशरी स्मृति'रिति ।

असौ मुनि र्विष्णुपुराण-पराशरोपपुराणयोः प्रवक्तेति केचित् । अनेन पराशरतन्त्र-तक्रकल्पौ रचितौ । पराशरतन्त्रमते वैद्यसम्प्रदायप्रवर्त्तका

आयुर्व्वेदाचार्य्या अष्टादशैव यथा—ब्रह्मा रुद्रो भास्करो दक्षोऽश्विनौ यम इन्द्रो धन्वन्तरि र्बुधश्च्यवन आत्रेयोऽग्निवेशो भेलो जतूकर्णः पराशरः क्षारपाणि र्भरद्वाजश्चेति। तत्त्वचन्द्रिकाया अतिसारचिकित्सायां शिवदासेन पराशरतन्त्रतो बहूनि वचांसि समुद्धृतानि।

(५८) हारीत आत्रेयशिष्यो वैद्यकशास्त्रे हारीततन्त्रं प्रणिनाय। स च धर्म्मशास्त्रप्रवक्ता। तथा हि याज्ञवल्कीयसंहितायां स्मर्य्यते—

'मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।'

इति।

हारीतस्य गोत्रापत्यं हारीतिः। हारीती तु बौद्धशास्त्रोक्ता काचिद् यक्षिण्येव। सा हि षष्ठीदेवीवत् सर्व्वतः शिशून् रक्षति। हारितस्तु शुकविशेषः। 'मयना' इति भाषा।

केषांचिन्मते हारीततन्त्रं पितापुत्रीयः संवाद एव, यतो ग्रन्थादौ लिखितमस्ति—

'प्रत्युवाच ऋषिः पुत्रं प्रहस्योत्फुल्ललोचनः।
शृणु पुत्र महाप्राज्ञ सर्व्वशास्त्रविशारद ॥'

(प्रथमाध्यायः) इति।

अस्माभिस्तु मतमिदं न समर्थ्यते। यतः पुत्रस्थानीयं शिष्यं लोकरीत्या गुरुरुपलालयन् सम्बोधयति—पुत्रेति।

अधुना या हारीतसंहिता विलसति तस्याश्चरमभागे तृतीयखृष्टशताब्दीयस्य वाग्भटस्य नाम दृश्यते। तत्र लिखितमस्ति—

'चरकः सुश्रुतश्चैव वाग्भटश्च तथाऽपरः।
मुख्याश्च संहिता वाच्यास्तिस्र एव युगे युगे ॥

अत्रिः कृतयुगे वैद्यो द्वापरे सुश्रुतो मतः ।
कलौ वाग्भटनामा च गरिमाऽत्र प्रदृश्यते ॥'
इति ।

अत उपपद्यते वाग्भटादुत्तरभवः कश्चिद् वैद्यागमिको हारीततन्त्रं संचस्कार, संस्कृत्य च हारीतसंहितेति नाम्ना हारीततन्त्रं प्रचारयामासेति। प्राचीनतन्त्रस्य यदंशे श्लोका एवंविधाः प्रक्षिप्तास्तदंशो मूलग्रन्थस्य खैलिकत्वेन वोध्यः ।

(५९) क्षारपाणिरिति । अयं भगवत आत्रेयस्य शिष्यः । क्षीर-पाणिरित्यस्य नामान्तरम् । केचित् क्षरपाणिरित्यप्याहुः । अनेन क्षारपाणि-तन्त्रं प्रणीतम् ।

चरकीयदशमाध्याये मैत्रेयमुने र्नाम वर्त्तते। अस्य विवरणं प्रागुक्ते पञ्चाशत्तमे मुनिचरितवर्णने द्रष्टव्यम् । द्वादशाध्याये पुन र्बहूनि मुनिनामा-न्युपलभ्यन्ते, यथा—कुशः साङ्कृत्यायनः, कुमारशिरा भरद्वाजः, काङ्कायनो वाह्लीकभिषक्, वडिशो धामार्गवः, वार्य्योविदो राजर्षिः, मारीचिः, काप्यः, पुनर्व्वसुरात्रेयश्चेति । त्रयोदशाध्याये चान्द्रभागीति नामास्ति। पञ्चविंशाध्याये सन्ति च नामानि कानिचिद्, यथा—काशीपति र्वामकः, पारीक्षि मौद्गल्यः, शरलोमा, हिरण्याक्षः कुशिकः, भद्रकाप्यः, भरद्वाजः, काङ्कायनः, भिक्षुरात्रेयः, पुनर्व्वसुरिति । षड्विंशाध्याये चैत्ररथवनगतानां मुनीनां बहूनि नामानि सन्ति, यथा—आत्रेयः, भद्रकाप्यः, शाकुन्तेयः, पूर्णाक्षो मौद्गल्यः, हिरण्याक्षश्च कौशिकः, कुमारशिरा नाम भरद्वाजः, वार्य्योविदो राजा, निमि र्वैदेहः, वडिशः, काङ्कायनश्च वाह्लीको वाह्लीकभिषजां वरः, आत्रेयः पुनर्व्वसुश्चेति । तत्र 'कुशः साङ्कृत्यायनः' इति पाठात् 'कृशः साङ्कृत्यायनः' इति पाठः सुष्ठुतरो भाति, काश्यपसंहितायां पुनःपुन-स्तदुपलम्भात् । काङ्कायनवाह्लीकभिषजो वृत्तान्त एकोनचत्वारिंशत्तमे मुनि-

कथाप्रसङ्गे द्रष्टव्यः। बडिशधामार्गवस्य वृत्तान्तः प्रागुक्ते पञ्चत्रिंशत्तमे मुनिकथाप्रसङ्गे द्रष्टव्यः। मारीचे विवरणं द्वाचत्वारिंशे मुनिकथाप्रसङ्गे वर्णितम्। काप्यस्य विवरणं सप्तत्रिंशत्तमे मुनिकथाप्रसङ्गेऽवलोकनीयम्। पुनर्व्वसोरात्रेयस्य चान्द्रभागिनश्च वृत्तान्तौ षष्ठे मुनिकथाप्रसङ्गे द्रष्टव्यौ। पारीक्षिमौद्गल्यस्य षोडशे शरलोम्नश्च षट्त्रिंशे मुनिकथाप्रसङ्गयो र्द्रष्टव्यौ। हिरण्याक्षकुशिकस्य वृत्तान्तः पञ्चचत्वारिंशे मुनिकथाप्रसङ्गे द्रष्टव्यः। भरद्वाजस्य त्वष्टादशे द्रष्टव्यः। शाकुन्तेयस्य परिचय एकोनपञ्चाशे शाकुनेयमुनेः कथाप्रसङ्गे विवृतः।

इतः पूर्व्वमगृहीतनाम्नां मुनीनां परिचय इदानीं प्रदीयते—

(६०) कुमारशिरा भरद्वाज इति। नासौ भरद्वाज आत्रेयगुरु र्भवति। तदाह चक्रपाणिः—'कुमारशिरा इति भरद्वाजविशेषणमात्रेयगुरु-भरद्वाजनिषेधार्थमि'ति (सू० १२।५)। किन्तु 'कुमारशिरा' इति विशेषणा-भिधाने कस्यैव कैमर्थिकी प्रवृत्तिः? न हि स शिशुरिव कश्चिदप्रौढेन्द्रिय आसीत्। अतोऽस्य विशेषणस्य प्रयोजनावगतये शास्त्रस्यैव तात्पर्य्यं मृग्यम्।

श्रूयते हि '···तमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति।······तस्माद् ब्राह्मणः पाण्डित्यं निर्व्विद्य बाल्येन तिष्ठासेदि'ति ( बृ० आ० ३।५ )। अत एव ब्रूमः—अधीतवेदोऽयं ब्राह्मणो भरद्वाज आत्मज्ञानेन सुप्रसिद्धादेषणात्रयाद् विरज्य पारिव्राज्यं व्यधात्। ततश्च श्रौतरहस्याधिगमरूपं विवेकं लब्ध्वा स्वमाहात्म्यानाविष्करणरूपबालस्वभावेन युक्तः सन् ब्रह्मनिष्ठायामवतस्थे। एवं च बालोचितनिरभिमानार्ज्जवादिगुणसमाश्रयणादसौ महर्षिः 'कुमार-शिरा' इति विशेषणेन विशेषित आसीदिति। रसविचारे मुनिरयमाह— 'पञ्च रसा भौमौदकाग्नेयवायव्यान्तरिक्षा इति। असौ कृष्णात्रेयस्य शिष्य आसीत्।

(६१) वार्य्योविदो राजर्षिरिति । कुत्रत्यो राजर्षिरिति नावगम्यते । वृद्धजीवकीयतन्त्रस्य त्रयोदशाध्याये लिखितमस्ति—

"इति वार्य्योविदायेदं महीपाय महानृषिः ।
शशंस सर्व्वमखिलं बालानामथ भेषजम् ॥'

( ८५ श्लोकः ) इति ।

महानृषि र्भगवान् मारीचः । अत उपपद्यते यदसौ राजर्षि र्भगवतो मारीचस्य समकालिक आसीदिति ।

चरकीयसूत्रस्थानस्य द्वादशाध्याये कुपिताकुपितस्य वायो र्वृत्तिविमर्शे वडिशधामार्गवस्य युक्तिपूर्णं वाक्यं श्रुत्वा वार्य्योविदो राजर्षिराह—'एवमेतत् सर्व्वमनपवादं यथा भगवानाह ; यानि तु खलु वायोः कुपिताकुपितस्य शरीराशरीरचरस्य च शरीरेषु चरतः कर्म्माणि बहिः शरीरेभ्यो वा भवन्ति, तेषामवयवान् प्रत्यक्षानुमानोपदेशैः साधयित्वा नमस्कृत्य वायवे यथाशक्ति प्रवक्ष्यामः—वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्यानापानात्मा, प्रवर्त्तकश्चेष्टानामुच्चावचानाम्, नियन्ता प्रणेता च मनसः, सर्व्वेन्द्रियाणामुद्योजकः, सर्व्वेन्द्रियार्थानामभिवोढा, सर्व्वशरीरधातुव्यूहकरः, सन्धानकरः शरीरस्य, प्रवर्त्तको वाचः, प्रकृतिः स्पर्शशब्दयोः, श्रोत्रस्पर्शनयो र्मूलम्, हर्षोत्साहयो र्योनिः, समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता बहि र्मलानाम्, स्थूलाणुस्रोतसां भेत्ता, कर्त्ता गर्भाकृतीनाम्, आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः । कुपितस्तु खलु शरीरे शरीरं नानाविधै र्विकारैरुपतपति, बलवर्णसुखायुषामुपघाताय भवति, मनो व्यावर्त्तयति, सर्व्वेन्द्रियाण्युपहन्ति विनिहन्ति गर्भान् विकृतिमापादयत्यतिकालं धारयति, भयशोकमोहदैन्यातिप्रलापान् जनयति, प्राणांश्चोपरुणद्धी'ति ।

चरकीयषड्विंशाध्यायादवगम्यते यदसौ राजर्षिः सह सोमादिभिरङ्गारपर्णोपभुक्ते कानने चैत्ररथवनापरपर्य्याये विजिहीर्षुः समियाय, तत्र च

रसविनिश्चये परस्परं भावव्यतिहारमपि कृतवानिति। तन्मते हि रसाः षडेव भवन्ति गुरुलघुशीतोष्णस्निग्धरुक्षा इति।

(६२) काशीपति र्वामक इति। चिकित्साकौमुदीकृद् द्वितीयः काशीपति र्वामको दिवोदासधन्वन्तरेरतिवृद्धप्रपितामहो राजर्षिश्चासीत्। चरकसंहितायाः सूत्रस्थानस्य यज्ञःपुरुषीयनाम्नि पञ्चविंशाध्याये पुनर्व्वसु-वामकादीनां संलापो दृश्यते। तत्र लिखितमस्ति—

'पुरा प्रत्यक्षधर्म्माणं भगवन्तं पुनर्व्वसुम्।
समेतानां महर्षीणां प्रादुरासींदियं कथा॥
आत्मेन्द्रियमनोऽर्थानां योऽयं पुरुषसंज्ञकः।
राशिरस्यामयानां च प्रागुत्पत्तिविनिश्चये॥
तदन्तरं काशिपति र्वामको वाचमर्थवित्।
व्याजहारर्षिसमितिमुपसृत्याभिवाद्य च॥
किन्नु भोः पुरुषो यज्ञस्तज्ञास्तस्यामयाः स्मृताः।
न वेत्युक्ते नरेन्द्रेण प्रोवाचर्षीन् पुनर्व्वसुः॥

( ३-६ श्लोकाः ) इति।

(६३) भद्रकाप्य इति। चरकस्य यज्ञःपुरुषीयनाम्नि पञ्चविंशाध्याये रोगरोगिणामुत्पत्तिमधिकृत्य शौनकभद्रकाप्ययोः संलापो दृश्यते। तत्र—

'कस्मान् मातापितृभ्यां हि विना षड्धातुजो भवेत्॥
पुरुषः पुरुषाद् गौ र्गोरश्वादश्वः प्रजायते।
पित्र्या मेहादयश्चोक्ता रोगास्तावत्र कारणम्॥'

( सू०—१६-१७ ) इति।

ततः शौनकवचनान्तरं लिखितमस्ति—

'भद्रकाप्यस्तु नेत्याह न ह्यन्धोऽन्धात् प्रजायते।
मातापित्रोश्च ते पूर्व्वमुत्पत्ति र्नोपपद्यते॥

कर्म्मजस्तु मतो जन्तुः कर्म्मजास्तस्य चामयाः ।
न ह्यृते कर्म्मणो जन्म रोगाणां पुरुषस्य च ॥
( सू०—२०-२१ ) इति ।

रसविचारे संहिताकार आह—'एक एव रस * इत्युवाच भद्रकाप्यः, यं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वावैषयिकं भावमाचक्षते कुशलाः। स पुनरुदकादन्य इति' ( सूत्र-२६।८ ) इति ।

भद्रकाप्यस्य कोऽपि ग्रन्थ इदानीं नोपलभ्यते । भद्रकाप्य-पालकाप्ययोः कश्चित् सम्बन्धः वहुभिरनुमीयते, तत्र तु न किञ्चित् प्रमाणमधिगम्यते । केचित् पुन र्भद्रकाप्य-पालकाप्यौ काप्यमुने र्वंशधरावित्याहुः, तत्र च प्रमाणाभावात् किमपि वक्तुं न शक्यते ।

चैत्ररथवने स आत्रेयादिभिः सह विजिहीर्षु र्जगाम, तत्र च रसविनिश्चये परस्परं भावविनिमयं कृतवान् (सू० २६।८) । चैत्ररथवने पुरा महाराजस्य ययाते र्विहारमभिलक्ष्य बुद्धचरिते भदन्तकविरश्वघोष आह—

"ययातिश्चैव राजर्षि र्वयस्यपि विनिर्गते ।
विश्वाच्याऽप्सरसा सार्द्धं रेमे चैत्ररथ वने ॥"
( ४।७८ ) इति ।

ययाति र्नहुषपुत्रः ।

(६४) पूर्णाक्षो मौद्गल्य इति । पूर्णे अक्षिणी यस्य स पूर्णाक्षः ( पा० ५।४।११३ ) ( the full-eyed ) अर्थात् सर्व्वदेशदर्शी न तु स एकदेशदर्शीत्यर्थः । मुद्गलस्य गोत्रापत्यं मौद्गल्यः ( पा० ४।१।१०५ ) ।

---

* दृष्टिविशेषमाश्रित्य सर्व्वे औपनिषदाश्चाहुः—'एक एव रसः । रसो वै सः' इति । स परमात्मेति यावत् । श्रूयते च—'आपो ज्योती रसोऽमृतं ब्रह्मे'ति ।

मुद्गलो गोत्रकारक एक ऋषिः। इन्द्रसेना तस्य भार्य्यासीत्। पुरुष-सूक्तरहस्यनिर्णयार्थं तेन मुद्गलोपनिषत् प्रोक्ता।

आत्रेयभद्रकाप्यीयनाम्नि चरकीयसूत्रस्थानस्थषड्विंशाध्याये लिखितमस्ति यत् स आत्रेयादिभिः सह चैत्ररथवने विजिहीषुः समियाय, रसविनिश्चये परस्परं भावविनिमयं च चक्रे। तन्मते त्रयो रसाश्छेदनीय उपशमनीयः साधारणश्चेति।

(६५) शाकुन्तेयो ब्राह्मण इति। शकुन्तस्य गारुडनामकविष-शास्त्रज्ञस्य विनतासूनो र्गरुडस्यापत्यं शाकुन्तेयः सम्पातिरिति यावत्। श्रूयते हि स सर्पविषचिकित्सकोऽप्यासीदिति। न केवलं कश्यपपुत्रत्वात् परं तु ब्रह्मज्ञत्वादपि स ब्राह्मण इत्युच्यते स्म। आत्रेयादिभिः सहासौ चैत्ररथ-वने विजिहीर्षुः समियाय, रसविनिश्चये परस्परं भावव्यतिहारं च चकार। तन्मते छेदनीय उपशमनीयश्चेति द्वावेव रसौ भवतः।

शाकुनेयस्त्वन्यः; तस्य परिचय एकोनपञ्चाशे मुनिकथाप्रसङ्गे द्रष्टव्यः। अत एव History of Indian Medicine-नामकग्रन्थे श्रीगिरीन्द्र-नाथ-मुखोपाध्याय-M.D.-महोदयस्य शाकुन्तेय-शाकुनेययोरैक्यकल्पना नास्माभिराद्रियते ( Vol. II. p 484 )।

(६६) निमि र्वैदेहो राजा इति। चरकीयषड्विंशाध्यायादवगम्यते यदसौ राजा निमिर्वैदेहः सह सोमात्रेयादिभिरङ्गारपर्णनिर्म्मिते रम्य उपवने चैत्ररथापरनाम्नि विजिहीर्षुराजगाम, तत्र च ते रसस्वरूपनिर्णये परस्परं भावव्यतिहारं चक्रुरिति। तन्मते सप्त रसा मधुराम्ललवणकटुतिक्तकषायक्षारा इति (सू० २६।८)*। निमिरैक्ष्वाकः। विदेह एव वैदेहः। प्रज्ञादिभ्यश्च

* रसविषये भगवता चरकेण स्वयमेवोक्तम्—

रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा।
निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः॥' इति।
( सू०—१।६४ )।

( पा० ५।४।३८ ) इति स्वार्थेऽण् । अत्रेयं पौराणिकी वार्त्ता—महाराजो निमि दीर्घसत्रं समारेभे । तत्र वशिष्ठो होतृत्वेन वृतः । ततश्च महाराजं वशिष्ठ आह—अहं देवराजेन यज्ञार्थं प्रथमतो वृतः । इति हेतोरहं तत्कार्य्यं समाप्य भवत ऋत्विग् भविष्यामीत्युक्त्वा स स्वर्गाय प्रतस्थे ।

---

एते च चरकोक्ता रसाः परस्परसंयोगात् सप्तपञ्चाशद् भवन्तीति चक्रपाणिकृतद्रव्यगुणोपरि शिवदासीयटीका ।

रसविशेषविज्ञानीयेऽध्याये द्रव्यगतमधुरादिरसकारणादिकं सुश्रुते दिवोदासेन व्याख्यातम् ( सूत्रस्थानम्—४१ अ० ) ।

शास्त्रान्तरे शृङ्गारादयोऽष्टौ पुना रसशब्दवाच्या भवन्ति । तदुक्तं नाट्यशास्त्रे भरतमुनिना—

'शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्ये रसाः स्मृताः ॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना ।'

( ६।१५-१६ ) इति । तत्राद्भुत इति । तथा हि—

'रसे सारश्चमत्कारः सर्व्वत्राप्यनुभूयते ।
तच्चमत्कारसारत्वे सर्व्वत्राप्यद्भुतो रसः ।
तस्मादद्भुतमेवाह कृती नारायणो रसम् ॥'

इति साहित्यदर्पणोद्धृतं धर्म्मदत्तवचनम् ( ३ परिच्छेदः—२४ श्लोकवृत्तिः ) । नारायणः काञ्चिदेशवास्तव्यो लक्ष्मीधरपुत्रः कमलकण्ठरवादिनाटककार आलंकारिकश्च ।

शान्तस्त्वलौकिकत्वान्नोक्तो भरतेनेति रायमुकुटः । तत्र केचित् प्रत्यवतिष्ठन्ते । त आहुरलौकिकत्वं भूषणं न तु दूषणमिति । अन्ये पुनर्भरतीयश्लोके 'च' शब्दाच्छान्तवत्सलावपि संगृहीताविति मन्यन्ते । रुद्रटमते वात्सल्यो दशमो रसः । स च पुत्रकन्यादिस्नेहात् स्वारतिभाव एव । भक्तिश्च रसविशेष इति सात्वताः । भरतीयश्लोके द्रुहिणेन ब्रह्मणेत्यर्थः ।

महाराजस्तु विलम्बमसहमानो महर्षिं गौतममानीय तत्सत्रमारेभे। अत्रान्तरे स्वर्गयागं परिसमाप्य त्वरमाणो वशिष्ठ आगत्य सत्रे गौतमकर्तृत्वं दृष्ट्वा क्रुद्धः सन् 'विदेहो भवे'ति शशाप विप्रावमन्तारं नरपतिम्। वशिष्ठमर्य्यादाऽतिवर्त्तित्वमूलकं निमेरविनयमभिलक्ष्य भगवता मनुनाऽपि स्मर्य्यते—

वेणो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः।
सुदाः पैयवनिश्चैव सुमुखो निमिरेव च॥'

(७।४१) इति।

नहुषो ययातिजनकः। ततः प्रभृति नृपवरो निमिर्विदेह इत्यनेन शब्देन विशेषित आसीदिति।

चरकोक्तानामृषीणां मध्ये बहूनामृषीणां नामानि भरतीयनाट्यशास्त्रस्य षट्त्रिंशेऽध्याये समुपलभ्यन्ते। तत्र लिखितमस्ति—

"आत्रेयोऽथ वशिष्ठश्च पुलस्त्यः पुलहः क्रतुः।
अङ्गिरा गौतमोऽगस्त्यो मनुरायुस्तथात्मवान्॥ १॥
विश्वामित्रः स्थूलशिराः संवर्त्तः प्रतिमर्द्दनः।
उशना बृहस्पति र्वत्सश्च्यवनः काश्यपो ध्रुवः॥ २॥
दुर्व्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः।
भरद्वाजोऽथ रैभ्यश्च वाल्मीकि र्भगवांस्तथा॥ ३॥
स्थूलाक्षः संकुलाक्षश्च कण्वो मेधातिथिः कुशः।
नारदः पर्व्वतश्चैव सुशर्मा चैकधन्विनौ॥ ४॥
निष्व्यूतिर्भवमो धौम्यः शतानन्दः कृतव्रणः।
जामदग्न्यस्तथा रामो जमदग्निश्च वामनः॥ ५॥

इति।

भिषजः प्रति चरकमुनेरुपदेशा अतितरामुपादेया भवन्ति। यवनानां प्रथमो भिषक्तन्त्रप्रवर्त्तकः हिप्पोक्राटेस् ( Hippocrates—अश्वबलः )-

महोदयः खृष्टजन्मतः प्राक् पञ्चम्यां शताब्द्यामाविर्बभूव। सोऽपि चरक-सुश्रुतयोरधमर्णा इति मन्यामहे। चरकः खृष्टजन्मतः पुरा चतुर्दशशताब्द्यामार्य्यावर्त्तं भूषयामासेति प्रात्निकाः। जोन्स् (Jones)-महोदयः 'The Doctor's Oath' नामके ग्रन्थे चरकमुनेरुत्तमर्णतां साक्षात् स्वीकर्त्तुमुदासीनोऽपि भाषणभङ्गिविशेषेणैव भूतार्थं प्रत्याययति।

चरकसंहितायाः सूत्रस्थानीयप्रथमाध्यायान्ते भिषक्चर्य्यामधिकृत्य लिखितमस्ति—

* * * * *।
'ओषधीनामरुपाभ्यां जानते ह्यजपा वने॥
अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः।
न नामज्ञानमात्रेण रूपमात्रेण वा पुनः॥
ओषधीनां परां प्राप्तिं कश्चिद् वेदितुमर्हति।
योगविन्नामरूपज्ञस्तासां तत्त्वविदुच्यते॥
किं पुन र्यो विजानीयादोषधीः सर्व्वथा भिषक्।
योगमासां तु यो विद्याद् देशकालोपपादितम्॥
पुरुषं पुरुषं वीक्ष्य स ज्ञेयो भिषगुत्तमः।
यथाविषं यथाशस्त्रं यथाग्निरशनि र्यथा॥
तथौषधमविज्ञातं विज्ञातममृतं यथा।
औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः॥
विज्ञातं चापि दुर्युक्तमनर्थायोपपद्यते।
योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत्॥*

* काश्यपसंहितायामुक्तम्—
'औषधं चापि दुर्युक्तं तीक्ष्णं सम्पद्यते विषम्।
विषं च विधिना युक्तं भेषजायोपकल्पयेत्॥' इति।

भेषजं चापि दुर्युक्तं तीक्ष्णं सम्पद्यते विषम् ।
तस्मान्न भिषजा युक्तं युक्तिबाह्येन भेषजम् ॥
धीमता किञ्चिदादेयं जीवितारोग्यकाङ्क्षिणा ।
कुर्य्यान्निपातितो मूर्ध्नि सशेषं वासवाशनिः ॥
सशेषमातुरं कुर्य्यान्न त्वज्ञमतमौषधम् ।
दुःखिताय शयानाय श्रद्दधानाय रोगिणे ॥
यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ।
त्यक्तधर्म्मस्य पापस्य मृत्युभूतस्य दुर्म्मतेः ॥
नरो नरकपाती स्यात् तस्य संभाषणादपि ।
वरमाशीविषविषं क्वथितं ताम्रमेव वा ॥
पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुडाः ।
न तु श्रुतवतां वेशं बिभ्रता शरणागतात् ॥
गृहीतमन्नं पानं वा वित्तं वा रोगपीड़ितात् ।
भिषग्बुभूषुर्मतिमानतः स्वगुणसम्पदि ॥
परं प्रयत्नमातिष्ठेत् प्राणदः स्याद् यथा नृणाम् ।

**युक्तं तदेव भैषज्यं यदारोग्याय कल्पते ।**
**स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत् ॥**

सम्यक् प्रयोगं सर्व्वेषां सिद्धिराख्याति कर्म्मणाम् ।
सिद्धिराख्याति सर्व्वैश्च गुणैर्युक्तं भिषक्तमम् ॥'

(१२०-१३५) इति ।

मुनिसूचितभिषक्चर्य्यानुशिष्टो हि सद्वैद्यो भवति, अन्यथाभावे तु वैद्यापसदो यमुद्दिश्य सोल्लुण्ठमुच्यते—

'यानि कानि च मूलानि येन केन च पेषयेत् ।
यस्मै कस्मै च दातव्यं यद्वा तद्वा भविष्यति ॥

वैद्य वैद्य नमस्तुभ्यं क्षपिताशेषमानव।
त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥' इति।

प्रतिसंस्कृते सुश्रुततन्त्रे बौद्धप्रभावो लेशतोऽपि नानुप्रविष्टः। यतः प्रतिसंस्कारात् प्रागेव कात्यायनवात्स्यायनादीनां पन्थानमनुसृत्य शबरस्वामी मीमांसाभाष्यं प्रणयन् वेदबाह्यधर्म्ममतस्य तीव्रं प्रतिवादं व्यधत्त, ततश्च सुश्रुत-प्रतिसंस्कारकालेऽपि सनातनधर्म्मस्य दृढत्वसम्पादनाय बोधायनद्रमिडाचार्य्यादय आप्राणपातमचेष्टन्तेति। सुश्रुतप्रतिसंस्कारात् प्राक् कनिष्कस्य शासनावसरे कपिलबलनामा कश्चित् पण्डितश्चरकसंहिताया योग्यस्थलेषु पातञ्जल-वार्त्तिकादिसन्निवेशेन तां संहितां संचस्कार, संस्कृत्य च स 'चरक' इत्युपाधि-भूषित आसीत्। इदानीन्तनकाले पुनरसौ 'नवीनचरक' इत्याख्यया प्रसिद्ध-तर एव। चरकसंस्कारः प्रथमखृष्टशताब्द्यां सम्पादित इति सत्यम्, असंस्कृतस्तु तत्पूर्व्ववर्त्ती मूलग्रन्थो नास्माभिरुपलब्धः ; अतस्तस्य कियांश्चांशः संस्कृतो वा न वेति वक्तुं न शक्यते पातञ्जलवार्त्तिकपाठविलोपात्।

चरकसंस्कारात् किञ्चिदुत्तरकाले कपिलबलसूनुना कापिलबलेन द्वितीय-खृष्टशताब्द्यां सुश्रुतप्रतिसंस्कारं समाप्य पुनरपि कपिलबलसंस्कृतचरकस्य सूत्रादितश्चिकित्सापर्य्यन्तानां स्थानानां प्रतिसंस्कारः कृतः। तदाह दृढबला-चार्य्यः—'तानेतान् कापिलबलः शेषो दृढबलोऽकरोत्' (चिकित्सा—३० अ०) इति। कापिलबलप्रतिसंस्कारात् पञ्चशतवर्षपरिमिते काले व्यतीते पुनरपि दृढबलेन चरकसंहितायाः शिष्टांशः प्रतिसंस्कृतः। तदानीन्तनकाले तु नागार्जुन-दिङ्नाग-धातुसेन-वसुबन्धु-कुमारजीवादीनां सनातनधर्म्मप्रति-पक्षतया बौद्धधर्म्मस्य प्रचारो बलवानभूत्। दृढबलस्यापि तत्प्रभावोपहत-त्वाच्चरकसंहितायां क्वचित् क्वचिद् बौद्धभावा अनुप्रविष्टा इति मन्यामहे।

दर्शनोपदेशे चरकसुश्रुतयोः सरणी विभिन्ने एव। सुश्रुतेन चिकित्साधि-कृत-भूतादिशरीरिसमवायं चिकित्साधिकृतं कर्म्मपुरुषं वर्णयितुं प्राधान्येन

सांख्यशास्त्रमाश्रित्य तत्त्वान्तरपरिणामो व्याख्यातः। परं तु सांख्यपरिगृहीतं दुःखबहुलसंसारं दुःखबहुलसंसारहेतुं दुःखबहुलसंसारहानोपायं मोक्षापरपर्य्यायं च दुःखबहुलसंसारहानं प्रति स जोषमास्ते। सौश्रुतशास्त्रे निर्देशोऽप्यस्ति—

'भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते'

इति।

पञ्चभूतेभ्यः शरीराणि भवन्ति, तेभ्यः परं चिकित्साचिन्ता नास्तीत्याशयः।

मोक्षविषये चरकस्य मतवादः सांख्यादिसिद्धान्तेभ्यः स्वतन्त्र एव। तथाहि तत्त्वज्ञानाद् मुक्तिरिति सांख्यम्। तदुक्तम्—

'पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥

इति।

सांख्यप्रवचनमते तु गुणकार्य्यरूपवृत्तिक्लेशादिभिरपरामृष्टत्वाज् जपापाये स्फटिकमणिवत् स्वरूपप्रतिष्ठः पुरुषः प्रकृतिव्यतिरिक्तः केवली मुक्तो वा भवति। अतः खलु पातञ्जले सूत्रितम्—'पुरुषार्थशून्यानां गुणानां स्वरूपप्रतिष्ठा वा चितिशक्तिरिति' (४।३४)। एतदुक्तं भवति—चितिशक्तेः वृत्तिस्वारूप्य-निवृत्तौ या स्वरूपप्रतिष्ठा सा पुरुषस्य मुक्तिः कैवल्यं वेति। एतस्यां चावस्थायां हि सकलग्राह्यग्राहकव्यवहाराभावाच् चैतन्यमात्रमेव तस्यावशिष्यते, तच्च चैतन्यं चितिमात्रत्वेनोपपद्यते न पुनरात्मसंवेदनेनेति। वेदान्तमते समुद्रेण नदनदीनामिव लक्षणानन्यत्वरूपेण लय एव मुक्तिः। तथा हि भिक्षुसूत्रम्—

'अविभागेन दृष्टत्वात्' (३।२।६,८) इति। श्रौतविरावश्च मुण्डके—

'ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे॥...
यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्॥'

इति।

चरकेण हि सांख्ययोगसमाश्रयेण वेदान्तविज्ञानमुपदिष्टं तयैव दिशा मोक्षमार्गो मोक्षश्च परामृष्टौ। अत उक्तम्—

'अयनं पुनराख्यातमेतद् योगस्य योगिभिः।
संख्यातधर्म्मैः सांख्यैश्च मुक्तै र्मोक्षस्य चायनम् ॥
अतः परं ब्रह्मभूतो भूतात्मा नोपलभ्यते।
निःसृतः सर्व्वभावेभ्यश्चिह्नं यस्य न विद्यते ॥
गति र्ब्रह्मविदां ब्रह्म तच्चाक्षरमलक्षणम्।
ज्ञानं ब्रह्मविदां चात्र नाज्ञस्तज्ज्ञातुमर्हति ॥'

इति शारीरे।

(१।६२, ६५…वङ्गीयसं०, १।१५१, १५५-१५६……लवपुरस०)। ततश्चोक्तम्—'निवृत्तिरपवर्गस्तत्परं शान्तं तत्तदक्षरं तद् ब्रह्म स मोक्षः' (शा० ५।११ लवपुर, ५।२२ वङ्गीय)। पुनरपि मुनिः स्फुटं वदति—

'शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्त्तते।
यया भिनत्त्यतिबलं महामोहमयं तमः ॥
सर्व्वभावस्वभावज्ञो यया भवति निस्पृहः।
योगं यया साधयते सांख्यः सम्पद्यते यया ॥
यया नोपैत्यहंकारं नोपास्ते कारणं यया।
यया नालम्बते किञ्चित् सर्व्वं सन्न्यस्यते यया ॥
याति ब्रह्म यया नित्यमजरं शान्तमक्षरम्।

* * * *

**विपापं विरजं शान्तं परमक्षरमव्ययम् ।**
**अमृतं ब्रह्म निर्व्वाणं पर्य्यायैः शान्तिरुच्यते ॥'**

( लवपुर—५।१६-२३ ) इति ।

एवं बहुत्र सांख्ययोगोपसर्ज्जनीभूतया ब्रह्मविद्यया वेदान्तविज्ञानविनिश्चितौ मोक्षमार्गो मोक्षश्च मुनिना प्रदर्शितौ ।

द्वावुपायौ मोक्षस्य भवतः । सांख्ययोगपूर्व्वक एको विचारपूर्व्वकोऽन्यश्चेति । तत्र प्रथमसुपायं प्रपञ्चपरमार्थवादिनो हैरण्यगर्भादय उपेयुः साक्षिदर्शने तेषां निरोधातिरिक्तोपायासम्भवात् ; द्वितीयमुपायं प्रपञ्चापरमार्थवादिन औपनिषदाः सेवेरन् साक्षिणि कल्पितं साद्यमनृतं साक्षी तु परमार्थसत्यः केवल इति विचारात् । एवं विरुद्धमतयोः सामञ्जस्यं विदधानो मुनिरभिप्रैति—'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येद्' ( वृ० आ० ) इति श्रुतिस्वारस्यात्,

'प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत् ।
अहं ब्रह्म परं ज्योतिः प्रसंख्याय विमुच्यते ॥'

( अग्निपुराणान्तर्गतगीतासारे ) ।

इति स्मृतिस्वारस्याच्च प्रथमोपायेन ब्रह्मणि चित्तस्य न्यग्भावं विधाय पश्चाद् द्वितीयोपायेन प्रत्यगभिन्नः स्वमात्रवेद्यो ब्रह्मस्वरूपो मोक्षोऽधिगन्तव्य इति ।

एवं हि भगवता चरकेण शृङ्गग्राहिकया निर्दिश्यते यत् सांख्ययोगाभ्यामभिग्रस्तया प्रज्ञया संपरिष्यक्तः पुरुषः स्वमपीतो भवतीति । एतदपीह चावधेयं यद् ब्रह्मनिर्व्वाणाभ्युपगमात् सांख्योच्छेदो दुर्निवारः स्यादिति ।

समाप्तं वृद्धचरकीयवृत्तम् । इदानीं वृद्धसुश्रुतीयवृत्तमुपादीयते ।

---

## वृद्धसुश्रुतीयवृत्तम्

द्वौ सुश्रुतौ बभूवतुरेको हयायुर्व्वेदविदपरो नरायुर्व्वेदविच्चेति। प्राक्तिकानां मते नानयोरभेदः कल्पनीय इति। नवीनानां पुरातत्त्वविदामेतादृक् सिद्धान्तः प्राचीनैः सार्द्धमविसंवादीति न तत्र विद्यते कोऽपि सन्देहावकाशः।

हयायुर्व्वेदवित् सुश्रुतो राजर्षेः शालिहोत्रस्य तनयः। अयं राजर्षि र्न केवलं हयायुर्व्वेदवेदिता परं तु नरायुर्व्वेदवेदिताऽप्यासीत्। श्रूयते हि शालिहोत्रो महर्षेरात्रेयस्य शिष्यो वह्निवेशभेलहारीतादीनां सतीर्थ्यश्चासीत्। एवं चेत् तर्हि स सुश्रुतदिवोदासादीनां बहुपूर्व्वभव एव। पितापुत्रयोः संवादात् परिज्ञायते यदसौ शालिहोत्रिः पितु र्वाजिशास्त्रमधिजग इति। शालिहोत्रसंहितायां लिखितमस्ति—

'शालिहोत्रं मुनिश्रेष्ठं सुश्रुतः परिपृच्छति।
अश्वप्रशंसामाहात्म्यं न ज्ञातं तत्त्वतो मया॥' इति।

दुर्ल्लभगणकृत-'सिद्धोपदेशसंग्रहे'ऽपि पठ्यते—

'शालिहोत्रेण गर्गेण सुश्रुतेन च भाषितम्।
तत्त्वं यद् वाजिशास्त्रस्य तत् सर्व्वमिह संस्थितम्॥' इति।

सुश्रुतेन शालिहोत्रिणेत्यर्थः। वाजिशास्त्रस्य हयायुर्व्वेदस्येति यावत्। नासौ शालिहोत्रिसुश्रुत एतत्प्रबन्धविषयो भवति।

महाभारतगारुडाभ्यामवगम्यते यच्चापरो नरायुर्व्वेदवित् सुश्रुतः कान्यकुब्जाधीश्वराद् महर्षे र्विश्वामित्रात् समजनीति। एकदा स वैश्वामित्रिः पित्राऽभ्यधायि, यत् स्वर्वैद्यो भगवान् धन्वन्तरिः काशीराजवंशे दिवोदास-

शरीरं परिगृह्य वाराणस्यामाविरस्ति ; त्वमपि तत्र गत्वा प्रश्रयेण प्रसादितात् तस्मादायुर्व्वेदशास्त्रमधीत्य भयोपद्रुतेभ्यो व्याधितेभ्यः सततमभयदानानन्तरं क्लिश्यमानांस्तान् प्राणिनो निरामयान् कुरुष्व, यतो भयत्रातु र्जीवनदातुश्चैष धर्म्मो भूयशः परमार्थत्वेन गृह्यत इति। उदारोऽयं कल्पः। तथा हि महाभारते व्यासदेवेन स्मर्य्यते—

'एकतः क्रतवः सर्व्वे सहस्रवरदक्षिणाः।
अन्यतो रोगभीतानां प्राणिनां प्राणरक्षणम्॥' इति।

स्मर्य्यते च काशीखण्डे—

'सन्ति दानान्यनेकानि किं तैस्तुच्छफलप्रदैः।
अभीतिदानतुल्यं तु परमेकं न विद्यते॥
इह चत्वारि दानानि प्रोक्तानि परमर्षिभिः।
विचार्य्य नानाशास्त्राणि शर्म्मणोऽत्र परत्र च॥
भीतेभ्यश्चाभयं देयं व्याधितेभ्यस्तथौषधम्।
देया विद्यार्थिने विद्या देयमन्नं क्षुधातुरे॥'

(५८।६६—१०१) इति। अभियुक्ता वैद्यकाश्च वदन्ति—

'अभयस्य हि यो दाता तस्यैव सुमहत् फलम्।
न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते॥' इति।

पितुरेवंविधमादेशमाकर्ण्य स कान्यकुब्जकुमारः सुश्रुत औपधेनव-वैतरणौरभ्र-पौष्कलावत-करवीर्य्य-गोपुररक्षितादिभि मुनिपुत्रैः सार्द्धं वाराणसीं गत्वा काशीराजं दिवोदासमायुर्व्वेदोपदेशं ययाचे, काशीराजो दिवोदासश्च तान् सर्व्वान् समग्रमायुर्व्वेदशास्त्रमध्यापयामास। ततः सिद्धार्थानां मुनि-सूनूनामेकैको गुरुं काशीराजमभिनन्द्य स्वं स्वं गृहं प्रत्याजगाम, प्रत्यावृत्य च ते सर्व्वे पृथक् पृथक् तन्त्राण्यपि तेनिरे। तत्र सुश्रुतस्य तन्त्रं सर्व्वेषां तन्त्राणां शीर्षण्यतामधिचक्रे। तच्च तन्त्रं परवर्त्तिनि काले सम्राजः कनिष्कस्य

शासनावसरे द्वितीयखृष्टशताब्दीवर्त्तिना कापिलबलनाम्ना नवीनसुश्रुतेन प्रतिसंस्कारात् परं सुश्रुतसंहितेति प्रसिद्धिं लेभे।

सुश्रुतस्य नाम्ना द्वौ ग्रन्थौ प्रचलतः—सुश्रुतसंहिता नावनीतकसंहिता चेति। प्रथमं तावत् सूचीकटाहन्यायेन नावनीतकसंहिता पर्य्यालोचयिष्यते। नवं नीयत इति नवनीतम्, तदेव नावनीतम्, यद्वा नवनीतादागतमिति नावनीतम्। ततः स्वार्थे कन्निति नावनीतकम्। ननु, स्वार्थे कन्निति सूत्रं नोपलभ्यते। सत्यम्, किन्तु 'न सामिवचने' ( पा० ५।४।४५ ) इत्येतन्निषेधसूत्रमत्यन्तस्वार्थिकमपि कनं ज्ञापयति—बहुतरकम्, सुकरतरकमिति। तदुक्तं जयादित्येन—'केन पुनः स्वार्थिकः कन् विहितः? एतदेव ज्ञापकं भवति स्वार्थे कन्निति'। यद्वा नावनीतशब्दादिवार्थे कना नावनीतकम् ( पा० ५।३।९६ )। यद्वा नवनीतशब्दो मनोज्ञादिषु द्रष्टव्यः। तेन द्वन्द्वमनोज्ञादिभ्यश्च ( पा० ५।१।१३३ ) इति वुञ्। नवनीतस्य भावः, आयुर्व्वेदस्य सार इत्यर्थः। नावनीतकनाम्नी संहिता नावनीतकसंहिता।

केचिदाहुः—नावनीतकसंहिता न सुश्रुतेन कृतेति। तेषां मते प्रथम-द्वितीयखृष्टशताब्द्योः कश्चिद् बौद्धवैद्य एनां प्रणिनाय। हेर्ण्लेमहोदय आह यदस्यां संहितायां काशीराजो वक्ता सुश्रुतस्तु श्रोतेति। वायोयारपाण्डुलिपेः प्रथमखण्डस्थे रसोनकल्पे काशीराजो वक्ता सुश्रुतः श्रोतेति सत्यम्, नावनीतके तु शिष्यधीवृद्ध्यर्थं सुश्रुत एव वक्तेति बहवोऽभियुक्ताः। अस्माकमप्यापाततस्तथैव सिद्धान्तः।

केचिदाहुः—यथा सुश्रुततन्त्रं प्रथम-द्वितीयखृष्टशताब्दोरभ्यन्तरवर्त्तिनि कुत्रचित् समये प्रतिसंस्कारानन्तरं 'सुश्रुतसंहिते'ति नाम्ना प्रचारितम्, तथैव तस्मिंश्च समये कुशाण्डादिस्थितानां केषांचिद् बौद्धवैद्यकानां प्रतिसंस्कारात् परं नावनीतकतन्त्रमपि नावनीतकसंहितेति नाम्ना विश्रुतमासीदिति। अस्य मतस्य समीचीनता कियतीति विचारणीयम्। अस्माकं

त्वत्र चरम एव सिद्धान्तो यद् मौलिकः प्रबन्धस्तन्त्रमित्यभिधीयते संग्रह-ग्रन्थस्तु संहितेति। तथा हि नावनीतकसंहिताया आरम्भे लिखितमस्ति—

'प्राक्प्रणीतैं महर्षीणां योगमुख्यैः समन्वितम्।
वक्ष्येऽहं सिद्धसङ्कर्षं नाम्ना वै नावनीतकम्॥' इति।

सिद्धः प्रसिद्धः सङ्कर्षः संग्रह आहरणं वा यत्र स सिद्धसङ्कर्षस्तम्। अतस्तदन्तर्गतविषयाणां प्राक्प्रणीतग्रन्थेभ्य आहरणात् सम्पाद्यमानस्य नावनीतकस्य 'नावनीतकसंहिते'ति नाम सार्थकं भवति। चक्रपाणिनाऽपि पुस्तकमिदं संहितात्वेन भूयो भूय उल्लिखितम्।

दशमखृष्टशताब्दीं त्रयोदशखृष्टशताब्दीं चान्तरा चन्द्रटाचार्य्य-चक्रपाणि-दत्त-निश्चलकरादि-वैद्यकानां कैश्चिन्नामोल्लेखपूर्वकं नावनीतकस्य प्रमाणमुद्धृतम्, कैश्चिद् वा विनैव नामोल्लेखं ततः कल्पयोगादयः संगृहीताः। षोडशखृष्टशताब्दीयेन चरकतत्त्वप्रदीपादिकृता शिवदासेनापि तस्य श्लोका उपन्यस्ताः, किन्तु मूलग्रन्थत एव समुद्धृता निश्चलप्रणीत-'रत्नप्रभा'तो वा गृहीता इत्येतन्निर्णेतुं न शक्यते। यद् वा भवतु, वाराणस्यां क्षेत्र-सन्नयासिनः कवीन्द्राचार्य्यस्य १६५६ खृष्टाब्दीयग्रन्थसूचौ नावनीतकस्य समुल्लेखो न दृश्यते। अतः सम्भाव्यते सप्तदशखृष्टशताब्दीतः प्रागेवास्य ग्रन्थस्य विलोपः सञ्जात इति। सम्प्रति तु तिब्बतादुत्तराहि चीनप्रदेशान्तर्गत-कशगडनगरात् क्याप्टेन् वायोयार् ( Captain Bower )-महोदयेनास्य ग्रन्थस्य पुरातनीं काञ्चित् पाण्डुलिपिमानीय पाठोद्धाराय सा माद्रासा-( Madrasa )-विद्यालयस्य प्रधानाध्यापकहेर्ण्ले ( Hoernle )-महोदयस्य हस्ते समर्पिता। हेर्ण्लेमहोदयेनापि ग्रन्थोऽयं सचित्रं सानुवादं सटिप्पणं मुद्रितः प्रकाशितश्च।

प्राचीनलिपितत्त्वविदां मते पाण्डुलिपिरियं कस्याश्चित् प्रतिलिपेः प्रतिलिपितो विभिन्नलेखकैः प्रक्लृप्ता। ऊनविंशखृष्टशताब्द्याश्चरमभागे

तैरुच्यते यदेतत्पाण्डुलिपिकरणात् १६०० वर्षपरिमितः कालो व्यतीत इति। एवं चेदानीन्तनकालात् १६६० वर्षेभ्यः पूर्वं तृतीयखृष्टशताब्द्यां पाण्डुलिपिरियं सञ्जाता। अस्या द्वितीयखण्डस्य प्रारम्भे तथा चतुर्थाध्यायस्य पुष्पिकायां च नावनीतकमिति नाम दृष्ट्वा ज्ञायते पुस्तकमिदं नावनीतक-समाख्यमिति। निश्चल-शिवदासाभ्यां स्वस्वग्रन्थेषु नावनीतकतो नाम-ग्राहं श्लोकोऽयमुद्धृतः—

'निदिग्धिकायाः * स्वरसं ग्राहयेद् यन्त्रपीडितम्।
चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत्॥' इति।

एष एव श्लोकः सम्प्रतिलब्धस्य ग्रन्थस्य द्वितीयेऽध्याये षष्ठपृष्ठे दृश्यते। एवं वस्तुवृत्तमुपलभ्य समाधातुं शक्यं यत् प्राचीनैरुल्लिखितं नावनीतकं वर्त्तमाननावनीतकादभिन्नमेव भवतीति। मन्ये षोडशखृष्टशताब्द्यां नावनी-तकग्रन्थः कालग्रासमवाप, यतस्तत्परवर्त्तिनि कस्मिंश्चिद् ग्रन्थे तस्य नामोल्लेखोऽपि नावलोक्यत इति। ततो महतः कालात् परं 'कशूगड'-इति नाम्ना विश्रुतस्य नगरस्य बौद्धस्तूपहृदयाद् विपुलार्थव्ययपुरःसरं Captain Bower ( क्याप्टेन् वायोयार )-महोदयेन स ग्रन्थः समुद्धृतः सम्प्रति पुनरस्माभिश्चाधिगत एव। ग्रन्थानामपि 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण'।

पुरा किल काश्मीराधिपति र्महाराजः कुशस्तिब्वतप्रदेशादुत्तरा चीन-सम्राजमभिभूय तस्य राज्यं चाधिकृत्य तदवेक्षणाय तत्र 'कुशगड' इति नाम्ना सुप्रशस्तमेकं दुर्गं निर्म्ममे। एतत्कुशगडनाम्नः कशूगडादिनामान्युद्-

---

* निदिग्धिका कण्टकारिका। उक्तं च राजवल्लभकृतवैद्यकरत्न-मालायाम्—

'अनाक्रान्ता स्पृही व्याघ्री भण्डाकी च निदिग्धिका।
सिंही धामनिका क्षुद्रा बृहती कण्टकारिका॥' इति।

बभूवुः। ततः कशगड इत्युक्ते तत्समीपवर्त्तिनि खोटनादिनगरसमेतानि स्थानानि गृह्यन्ते स्म। ततो द्वितीयप्रथमखृष्टपूर्व्वशताब्द्योरन्तरे काश्मीराधिपतौ दिवं गते तस्य कशगडादिराष्ट्रं पुनश्चीनराज्याङ्गीभूतं बभूव। ततश्च पुनः कियतिचित् काले व्यतीते प्रथमद्वितीयखृष्टशताब्द्योरन्तर्वर्त्तिनि कुत्रचित् समये पुरुषपुरात् कुषणाधिपतिना शकवंशीयेन महाराजेन कनिष्केण चीनसम्राजं पराजित्य तस्य कशगडादिराज्यं स्वायत्तशासने समानीय च तत्र बौद्धानामेक उपनिवेशः प्रतिष्ठापितः। एषु बौद्धेषु केचिद् वैद्यकाः काशीराजस्य रसोनकल्पं सुश्रुतस्य नावनीतकसंहितां च प्रतिसंस्कृत्य कालग्रासात् तौ गोपायांचक्रुः। एतेषां पण्डितानां यत्नातिशयेन ग्रन्थद्वयमिदानीमस्माभिरधिगतम्।

नावनीतके प्रतिसंस्कर्तॄणां बौद्धाचारवशात् क्वचित् कालच्युतिदोषाः क्वचिद्वा तेषां च्युतसंस्कारत्वादपशब्दप्रयोगा बहुश उपलभ्यन्ते, यथा—'नमस्तथागतेभ्यः' इत्येवमादयः। तथागतशब्देन बुद्धदेव उद्दिष्टः, बुद्धतस्तु बहुपूर्व्ववर्त्तिनः सुश्रुतस्यैवंविधमाचारपालनं कथं सम्भवतीत्यत्र प्रतिसंस्कर्त्तैव पर्य्यनुयोज्यः स्यात्।

प्रतिसंस्कर्तुश्च्युतसंस्कारदोषत्वाद् विविधा अपशब्दा उपलभ्यन्ते। तेषामुदाहरणानि यथा—

(क) 'उर उद्घातेष्वि'ति वक्तव्ये 'उरोदघातेष्वि'त्युक्तम्। सूत्राद्दते विसर्जनीयलोपे पुनः सन्धि र्न भवतीति कालापकादयः। पाणिनिमते तु 'भो भगो अघो अपूर्व्वस्य योऽशि' (८।३।१७) इति रो र्यादेशे प्राप्ते 'लोपः शाकल्यस्य' (८।३।१९) इति 'य'स्य विकल्पेन लोपो भवति। 'पूर्व्वत्रासिद्धम्' इति लोपशास्त्रस्यासिद्धत्वान्नास्ति पुनरत्र 'आद् गुणः' (६।१।८७) इत्यस्य प्रवृत्त्यवकाशः। तदुक्तम्—'पूर्व्वत्रासिद्धम्' (८।२।१) इत्यत्र सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, अत एव सपादसप्ताध्याय्यां

विहितं कार्य्यं प्रतीह त्रिपाद्यां विहितमसिद्धं ज्ञेयम्। इतः परमप्युत्तरोत्तरं कार्य्यं पूर्व्वं पूर्व्वं कार्य्यं प्रत्यसिद्धं ज्ञेयम्। अत एव पुनः सन्धि र्न भवतीति।

केचिदाहुः—'उरोद्घातेष्वि'ति प्रयोगः पूर्व्वत्रासिद्धीयविधेरनित्यत्वाद् 'उरस्'सकारस्थानिभूत-'य'-लोपस्य सिद्धत्वाज् ज्ञेयः, यथा पाणिनिसूत्रं 'नोपधायाः (६।४।७) इती'ति। इदमाकूतम्—'न उपधायाः' इति स्थिते विसर्गलोपे पूर्व्वत्रासिद्धीयशास्त्रस्यानित्यत्वात् पुनः सन्धौ नोपधाया इति सञ्जातमिति। अत्रान्ये प्रतिवदन्ति। 'नोपधायाः' इत्यत्र नेति लुप्तषष्ठीकमङ्गस्य विशेषणमिति। अपरे पुनराहुः—सम्प्रदायसिद्धान्तमनादृत्य पूर्व्वत्रासिद्धमित्यस्यानित्यत्वं न कल्पनीयम्, कल्पिते तु बहुषु स्थलेषु विसर्जनीयस्य सन्धिकार्य्याणि दुष्येयुरिति। एवंविधं वस्तुवृत्तमुपलभ्य वयं पुनरिह ब्रूमः—'छन्दोवत् सूत्राणि भवन्ती'ति न्यायेन लुप्तषष्ठीकसौत्रप्रयोगो हि लोके न प्रवर्त्तनीय इति। यस्तु 'उरोद्घातेष्वि'ति प्रयोगः स पाणिनिस्मृत्या न समर्थनीयः। प्रतिसंस्कर्त्तुः पाणिन्युत्तरभवत्वात् प्रयोगश्चासौ प्रामादिक एवेति। "छन्दोव्याकरणयो र्विरोधे छन्दो गरीयः" इति प्रायेण संहितकाराः शरणीकुर्व्वन्ति।

एवं च 'ह्रीवेरमि'ति वक्तव्ये 'हिरिवेरमि'त्युक्तम्। संक्षिप्तसारका आहुः—'ह्रीवेरादे मूले वाच्ये लुग्वा भवतीति ह्रीवेरं ह्रैवेरं वे'ति (तद्धितपादः १४०० सूत्रम्)। अत एव 'हिरिवेरमि'त्यपप्रयोगः। 'तेजस्विनीमि'ति वक्तव्ये 'तेजोवतीमि'त्युक्तम्।

(ख) विभक्तिव्यत्ययोऽपि दृश्यते, यथा—'प्राग्भक्ताद्' इति वक्तव्ये प्राग्भक्तमित्युक्तम्। अव्ययीभावे तु नास्ति कश्चिदनुयोगः।

(ग) सन्धिसमासयो र्व्यत्ययो दृश्यते। सन्धिव्यत्ययो यथा—

२२

'सूपौदनमि'ति वक्तव्ये 'सूपोदनम्' इत्युक्तम्। समासव्यत्ययो यथा— 'रात्र्यन्धः' इति वक्तव्ये 'रात्रिमन्धः' इत्युक्तम्। इत्यादि।

(घ) पदव्यत्ययो दृश्यते, यथा 'भाषते' इति वक्तव्ये 'भाषती'त्युक्तम्, 'आधत्ते' इति वक्तव्ये 'आधत्ति' इत्युक्तम्। इत्यादि।

प्राचीनकाले पञ्चमखृष्टशताब्दीयस्य चान्द्रव्याकरणकृतो बौद्धस्य चन्द्रगोमिणः पूर्व्वं संस्कृतभाषायां प्रायशो बौद्धपण्डितानां वैशिष्ट्यं नासीत्। तदाह प्रात्निकप्रवरो हरप्रसादशास्त्रि-महोदयः—'Even the best of the Buddhist Sanskrit writers used expressions which are not sanctioned by Panini.' ( Vyakarana Mss—Preface p. XXVII ) अर्थात् बौद्धेषु प्रशस्ततमा अपि पण्डिता अपाणिनीयानि पदानि भूरिशः प्रायुञ्जते'ति।

बैम्बिसारि जीवको बुद्धदेवस्य समकालिकत्वात् षष्ठखृष्टपूर्व्वशताब्दीय आसीत्। नावनीतकस्य चतुर्द्दशाध्याये बौद्धजीवकस्य नाम तद्वाक्यानि च दरीदृश्यन्ते। एतस्माच्चानुमीयते प्रतिसंस्कर्त्तैव तानि सर्व्वाणि प्रचिक्षेपेति। सुश्रुतेन परवर्त्तिनो ग्रन्थकारस्य नामादिग्रहणं कथं नाम सम्भवेत्? यदि तावत् सुश्रुतात् प्राचीनतरं काश्यपशिष्यं वृद्धजीवकमुद्दिश्य 'जीवक' इति नाम गृहीतं स्यात्, तर्हि प्रक्षेपादिसन्देहानां नास्ति कश्चिदवसर एव। काश्यपवचांसि संगृह्य कश्यपसंहिताऽपरपर्य्यायं वृद्धजीवकीयतन्त्रं प्रणीतम्। ग्रन्थस्य विषयजातमपि सुश्रुतस्य परिज्ञातमासीत्। तथा हि प्रागुक्त चतुर्द्दशाध्याये 'काश्यपस्य वचो यथे'त्युक्त्वा षोडश योगा उपन्यस्ताः। काश्यपस्य काश्यपसंहिताया इत्यर्थः। वृद्धजीवकीयतन्त्रं काश्यपसंहिताया नामान्तरमेव भवति।

**Dr. A. F. Rudolf Hoernle**-महोदयेन लिखितम्—"लोकविश्रुतो जीवको बौद्धवैद्यक आसीत्। 'महावग्ग'-'तिब्बतीयकथा'ग्रन्थयोस्तदीयं वृत्तं वर्णितमस्ति। वर्णनायामुभयोरीषद्भेदो वर्त्तते। अन्तिम-

ग्रन्थमतेन शालावत्यां जीवको वैम्बिसारेरभयस्य गूढोत्पन्नः पुत्र आसीत्, एवं च स राज्ञो बिम्बिसारस्य पौत्रत्वेन निर्दिष्टः। प्रागुक्तग्रन्थमतेन तु स राज्ञो दासीपुत्रत्वादभयस्य भ्रातृत्वेन निरूपितः।

असौ जीवको बिम्बिसारस्य सभायां राजवैद्यक आसीत्। स च तक्षशिलायामात्रेयतः शिक्षां लेभे। तेन हि प्राप्तवयस्केषु बहवो रोगोपशमाः कृताः, बालचिकित्सायां तु ख्यातिरस्य नाकर्णिता। किन्तु 'कुमारभृत्य' इति लाञ्छनेन सूच्यते यदसौ बालचिकित्सायामपि निपुण आसीदिति। किंच, नावनीतकेऽपि ये केचिद् योगास्तदुक्तत्वेनोपन्यस्तास्ते च तस्य बालचिकित्सकत्वं प्रमाणयन्ति। प्रागुक्ते ग्रन्थद्वये वाक्यार्थे पदरचनाऽभिप्रायेण जीवक इत्युपाधेरेका विचित्रा व्युत्पत्तिः कल्पिता—"जीवति कुमारेण 'अभयेन' प्राणान् धारयतीत्यर्थे जीवक इति।"

हेर्ण्ले-महोदयस्य विवरणात् संदिह्यते जीवकोऽसौ बालभृत्यतन्त्रं प्रणीय 'कुमारभृत्य' इति लाञ्छनं लेभे न वेति? ऋचकपुत्रो वृद्धजीवकः कश्यपशिष्य आसीत्। तत्प्रणीतं कौमारभृत्यतन्त्रमिदानीं मुद्रितमुपलभ्यते। किमिमं ग्रन्थं प्रतिसंस्कृत्य बौद्धजीवकेन 'कुमारभृत्य' इति लाञ्छनमवाप्तम्? वयं चेदस्य जीवकस्य बालभृत्यतन्त्रमद्रक्ष्याम, तर्हि सन्देहाश्चास्माकं सर्व्वे निरस्ता अभविष्यन्। यथा शककुषाणाधिपतेः कनिष्कस्य चिकित्सकश्चरकसंहितां प्रतिसंस्कृत्य 'चरक' इत्युपनामशोभित आसीत्, तथैव किं जीवकोऽपि वृद्धजीवकीयं कौमारभृत्यतन्त्रं प्रतिसंस्कृत्य 'जीवक' इत्युपाधिभूषितो बभूव। अस्ति चैका तिब्बतीया प्रसिद्धि र्यज् 'जीवक'इत्युपाधिरेव, न तु कस्यचिद् नामधेयमिति। सत्येवं पितृदत्तं नाम बालभृत्यतन्त्रकृत ऐतिहासिकैः प्राज्ञिकैश्च नेदानीमपि ज्ञायत एव। केषांचिद्मते जीवकस्य पितृदत्तं नाम 'कोमरभच्छा' इति। वयं तु मन्यामहे यत् कोमरभच्छेति 'कुमारभृत्या'शब्दस्यापभ्रंश एवेति।

को हि वक्ता नावनीतकसंहितायाः—प्रतर्द्दनजनकः काशीराज आहो स्वित् सुश्रुत इत्यत्र केचित् संशयाना दृश्यन्ते। बावयार-(Bower)-पाण्डुलिपेः प्रथमखण्डस्थे रसोनकल्पे काशीराजो वक्ता सुश्रुतश्च श्रोता। तत्र लिखितमस्ति—'मुनिमुपगतः सुश्रुतः काशीराजं, किं न्वेतत् स्यात्? अथ स भगवानाह तस्मै यथावत्—

पुराऽमृतं प्रमथितमसुरेन्द्रः स्वयं पपौ।
तस्य चिच्छेद भगवानुत्तमांशं जनार्द्दनः॥
कण्ठनाडीसमासन्ना विच्छिन्न तस्य मूर्धनि।
बिन्दवः पतिता भूमावाद्यं तस्येह जन्म तु॥

न भक्षयन्त्येनमतश्च विप्राः
शरीरसम्पर्कविनिःसृतत्वात्।
गन्धोग्रतामप्यत एव चास्य
वदन्ति शास्त्राधिगमप्रवीणाः॥
लवणरसवियोगादाहुरेनं रसोनं
लशुन इति तु संज्ञा चास्य लोकप्रतीता।
बहुभिरिह किमुक्तै र्देशभाषाभिधानैः
शृणु रसगुणवीर्य्याण्यस्य चैवोपयोगात्॥
त्रिरात्रमुषिता तु गौरनतृणा यदा स्यात् तदा
तृणार्द्धमुपकल्पयेल्लशुनकाण्डमस्यास्ततः।
पयोदधिघृतानि तक्रमथवापि तद् ब्राह्मणः
प्रयुज्य विविधान् गदानभिविजित्य शर्म्मी भवेत्॥

इत्यादि। इह सुश्रुतः साक्षात् प्रष्टा काशीराजः प्रतिवक्ता। अत एव रसोनकल्पे काशीराजकर्त्तृत्वं लेशतोऽपि न सन्दिह्यते।

रसोनकल्पे काशीराजस्योक्ति र्वर्त्तते—'सुश्रुत, एकाग्रमनाः शृणि्व'ति।

सुश्रुतसंहिताया उत्तरतन्त्रेऽपि पठ्यते—'सुश्रुतैकमनाः शृणु' (२७ अ०) इति। एतदेव वचनसाम्यं दृष्ट्वा पाण्डुलिपे द्वितीयखण्डस्थनावनीतकेऽपि 'वक्ष्येऽहं सिद्धसङ्कर्षं नाम्ना वै नावनीतकमि'त्यत्रापि हैर्ण्_ले-महोदयादिप्रात्निका 'अहं'-पदेन पूर्व्ववत् काशीराजमेव वक्तृत्वेन सुश्रुतं च श्रोतृत्वेन मन्यन्ते। एवंविधः सिद्धान्तो हृदयसुखं नोद्वहति। यतः सुश्रुतसंहितारसोनकल्पयो र्वचनसाम्यतो नावनीतके कथं काशीराजकर्तृत्वमुपपद्यते? नैतच्चित्रं यद्यपीह कश्चिद् ब्रूते—चाले भवति कुष्माण्डो वधूमातु र्गले व्यथेति। यद् वा भवतु।

कथं चासौ ग्रन्थः सुश्रुतनाम्ना प्रचारित इति शङ्कित्वा पुनरपि त आहुः—यथा हारीताय पुनर्व्वसोरुपदेशो हारीतसंहितेति नाम्ना ख्यातस्तथैव धान्वन्तरसुश्रुताय गुरुणा काशीराजेन यद् यदुक्तं तत् सर्व्वं नावनीतकत्वेन बोध्यमिति। एतदपि व्याख्यानं तु चिन्त्यम्। यतः शिष्याचार्य्ययोः प्रश्नोत्तराभ्यां हारीतसंहिता प्रादुर्भूता, नावनीतकसंहितायां तु लेशतोऽपि नैतादृक् प्रश्नप्रतिवचनमुपलभ्यते। किं च, हारीतसंहितायाः प्रत्यध्यायं पुष्पिकावाक्यमस्ति—'इत्यात्रेयभाषिते हारीतोत्तरे·········' इत्यादि। नावनीतके तु न तथा। इत्येवं वस्तुवृत्तमुपलभ्य समाधातुं शक्यं यच्छिष्याणां चित्ताकर्षणाय स्वयमेव सुश्रुतेन भणितम्—'वक्ष्येऽहं सिद्ध-सङ्कर्षं नाम्ना वै नावनीतकमि'ति। कश्चित् पुनरत्र वक्तुं शक्नोति यत् संहिताया उपक्रमानुरोधात् प्रतिसंस्कर्त्ता सुश्रुतमुखेन बभाषे—'वक्ष्येऽह-मि'त्यादि। एतत् तु प्रतिसंस्कर्त्तैव जानाति।

केनचित् प्रथितनाम्ना प्रात्निकवर्य्येण लिखितम्—द्वितीयखृष्टशताब्दी नावनीतकस्य संग्रहकाल इति। अस्माभिस्तु मन्यते द्वितीयखृष्टशताब्द्यां बौद्धवैद्यकै र्बौद्धभावापन्नवैद्यकै र्वा नावनीतकस्य प्रतिसंस्कारोऽनुमातुं शक्यः; किं च, पाण्डुलिपेस्तृतीयं खण्डं यदस्य ग्रन्थस्य खैलिकत्वेन सिद्धं तस्यैव संग्रहकालः खृष्टीयद्वितीयशताब्दी भवितुमर्हति। द्वितीय-

खण्डस्थमूलग्रन्थस्तु पूर्व्वस्मिन् काले सुश्रुतेनैव रचित आसीदित्यनुमीयते ।

नावनीतकसंहिताया उपक्रमे लिखितमस्ति—

प्राक्प्रणीतैर्महर्षीणां योगमुख्यैः समन्वितम् ।
वक्ष्येऽहं सिद्धसंकर्षं नाम्ना वै नावनीतकम् ॥ १ ॥
नानाव्याधिपरीतानां नृणां स्त्रीणां च यद्धितम् ।
कुमाराणां हितं यच्च तत् सर्व्वमिह वक्ष्यते ॥ २ ॥
समासरतबुद्धीनां भिषजां प्रीतिवर्द्धनम् ।
योगबाहुल्यतश्चापि विस्तरज्ञं मनोऽनुगम् ॥ ३ ॥
अध्यायं चूर्णयोगानां प्रथमं चात्र वक्ष्यते ।
द्वितीयं घृतपानानां तृतीयं तैलसंज्ञितम् ॥ ४ ॥
चतुर्थं मिश्रकं नाम नानाव्याधिचिकित्सितम् ।
पञ्चमं वस्तियोगानां रसायनविधा ततः ॥ ५ ॥
सप्तमं च यवागूनां वृष्यमष्टममुच्यते ।
नेत्राञ्जनानां नवमं दशमं केशरञ्जनम् ॥ ६ ॥
अभयाकल्पनामाख्यमत्रैकादशमुच्यते ।
द्वादशं स्याच्छैलजतोश्वित्रकस्य त्रयोदशम् ॥ ७ ॥
कुमारभृत्यमप्यत्र स्याच्चतुर्दशमिष्यते ।
वन्ध्याचिकित्सिताख्यं च ज्ञेयं पञ्चदशं बुधैः ॥ ८ ॥
सुभगाचिकित्सिताख्यं च तथा षोडशकं मतम् ।
इत्येते षोडशाध्याया विज्ञेया नावनीतके ॥ ९ ॥
नेदं दद्यादपुत्राय न चाभ्रात्रे कथंचन ।
अशिष्ये प्रस्तवो न स्यात् कर्त्तव्य इति मे मतिः ॥ १० ॥

इति ।

अथ षोडशानामध्यायानां विषयसमूहा विव्रियन्ते। तत्र किमाख्यैः कतिभिरुपकरणद्रव्यै र्नानाविधव्याधीनामौषधानि संभ्रियन्ते प्रस्तूयन्ते वा तत् सर्व्वमनुपूर्व्वश इहोपनिबध्यते।

प्रागुक्तेषु षोडशस्वध्यायेषु प्रथमतश्चूर्णयोगाः ( formulas for powders ) उपदिष्टाः। चूर्णयोगा यथा—(१) तालीसकचूर्णम्, (२) षाडवचूर्णम्, (३) षड्यादिकचूर्णम्, (४) मातुलुंगगुडिका, (५) लगुडचूर्णम्, (६) नवायसचूर्णम्, (७) कण्ठरोगप्रशमनः, (८) मुखरोगघ्नी गुडिका, (९) अयोरजीयचूर्णम्, (१०) तिक्तकचूर्णम्, (११) वृषद्वादशकचूर्णम्, (१२) सिद्धार्थिका गुडिका, (१३) वर्द्धमानकचूर्णम्, (१४) सूक्ष्मेलावर्द्धमानकचूर्णम्, (१५) सौवर्च्चलाद्यचूर्णम्, (१६) चूर्णारिष्टम्, (१७) शार्दूलचूर्णम्, (१८) आश्विनी मातुलुंगगुडिका, (१९) आम्लिका मातुलुंगगुडिका, (२०) आश्विनी मातुलुंगगुडिका ( प्रकारान्तरीया ), (२१) गुल्मचूर्णमश्विनम्, (२२) मागधचूर्णम्, (२३) आश्विनहरिद्राचूर्णम्, (२४) गौडिका, (२५) चूर्णारिष्ठ इति।

द्वितीयेऽध्याये घृतयोगा उपन्यस्ताः। घृतयोगा यथा– (१) अमृतप्राशघृतम्, (२) कल्याणकघृतम्, (३) महाकल्याणकघृतम्, (४) तिक्तकघृतम्, (५) महातिक्तकघृतम्, (६) पञ्चगव्यघृतम्, (७) षट्पलघृतम्, (८) त्र्यूषणघृतम्, (९) वासाघृतम्, (१०) चाङ्गरीघृतम्, (११) अपरं चाङ्गेरीघृतम्, (१२) कण्टकारिकाघृतम्, (१३) मृद्वीकाघृतम्, (१४) रासायनिकघृतम्, (१५) शरमूलीयघृतम्, (१६) मायूरघृतम्, (१७) महात्र्यूषणघृतम्, (१८) च्यवनप्राशघृतम्, (१९) दशाङ्गघृतम्, (२०) नाराचकघृतम्, (२१) मूलकघृतम्, (२२) आश्विनलशुनघृतम्, (२३) ज्वरहराश्विनघृतम्, (२४) सिद्धोत्तरघृतम्, (२५) धान्वन्तरघृतम्, (१६) आश्विनविषहरघृतम्, (२७) बिन्दुघृतम्, (२८) आश्विनबिन्दुघृतम्, (२९) सारस्वतघृतमिति।

तृतीयेऽध्याये तैलयोगा उपवर्णिताः। तैलयोगा यथा—(१) बला-तैलम्, (२) अपरं बलातैलम्, (३) अन्यद् बलातैलम्, (४) अमृततैलम्, (५) मूलकतैलम्, (६) अपरं मूलकतैलम्, (७) प्रकारान्तरीयं मूलक-तैलम्, (८) सहचरतैलम्, (९) मधुयाष्टकतैलम्, (१०) अश्वगन्धातैलम्, (११) अपरमश्वगन्धातैलम्, (१२) श्वदंष्ट्रातैलम्, (१३) शीर्षामयहरनस्त-कर्म्मतैलम्, (१४) ज्वरहरानुवासनतैलम्, (१५) अनुवासनतैलम्, (१६) वातहरतैलम्, (१७) बलिपलितनाशनतैलम्, (१८) गण्डमालायोगवर इति।

चतुर्थाध्याये प्रकीर्णकयोगा उपदिश्यन्ते। प्रकीर्णकयोगाः (a collection of miscellaneous formulas) मिश्रका इति यावत्। ते च यथा—(१) वातशोणितप्रशमनयोगद्वयम् (a couple of formulas for curing all disorders in two of the three humours—wind and blood), (२) आमातिसारयोगचतुष्टयम् (four formulas for the cure of fetid diarrhœa), (३) रक्तपित्तनिवारण आश्विनयोगः (a formula of the Asvins to cure hemorrhage), (४) पञ्च हिक्कायोगाः, (५) कासघ्ना अष्टौ योगाः (eight formulas for the cure of cough), (६) प्रस्थविरेचकः, (७) मध्वासवयोगः, (८) दन्तशूलहराः कवलयोगाः, (९) सिध्मयोगाः (formulas for curing Leprosy etc), (१०) मूत्रकृच्छ्रघ्नसप्तयोगाः (seven formulas for curing painful discharge of urine), (११) मूत्रकृच्छ्रघ्ननवयोगाः (nine formulas for the cure of stranguary or painful discharge of urine), (१२) छर्द्दियोगाः (formulas for the cure of Coryza i.e. nasal catarrh), (१३) तृष्णाप्रशमनयोगाः,

(१४) प्रमेहप्रशमनयोगाः ( formulas for the cure of urinary diseases such as Gleet etc. ), (१५) विसर्पचिकित्सितयोगः ( formula for the treatment of Erysipelas ) इति। अत्रापि नावनीतकमिति नामोल्लेखादवगम्यते यदसौ पुस्तकं नावनीतक-समाख्यमिति। तथा हि पुष्पिकायां लिखितमस्ति—'इति नावनीतके मिश्रकोऽध्यायश्चतुर्थः' इति।

ततो बलवर्णप्रसादननाम्नि पञ्चमाध्याये वस्तियोगाः ( formulas for enemas ) संगृहीता यथा—(१) आश्विनाश्वगन्धावस्तिः, (२) अश्वगन्धा-वस्तिः प्रकारान्तरीया (३) हवुषावस्तिः ( which was put in practice by the royal sage—Suprabha ( सुप्रभ ), (४) मधुतैलोदकवस्तिः। इतः कियांश्चनांश एकान्तनष्टः।

षष्ठाध्याये जराव्याधिनाशनं ( an alterative tonic ) सूचितम्। तस्य त्रितयमेव फलम्—रसायनम् ( productive of beneficial effect upon Rasa i.e. chyle), रोगनुत् ( antidote against old-age diseases), वृष्यं (provocative of venereal desire) चेति। तत्र वृष्यमष्टमाध्यायस्य विषयः। रोगनुद् यथा—पिप्पली-वर्द्धमानादयः। रसायनं यथा—नागबलाप्रयोगः, आवलिकरसायनं वा ( prescription of Nagabala also called Avalika tonic ), काकमाचीप्रयोगः ( prescription of garden night-shade plant ), नास्यतैलप्रयोगः ( a tonic oil for errhine), आश्विनरसायनम् ( an alterative tonic prepared by the Asvins ), बृहत्करणरसायनम् ( a tonic for promoting bulkiness ), बार्हस्पत्यं बृहत्करणरसायनं चेति।

सप्तमाध्यायः क्वाथविषयक ( relating to decoction ) एव।

क्वाथा यथा—यवागूरुदमन्थो वा ( barley water ), भेली यवागूः ( gruel of barley and wheat as prepared by Bhela ), कल्याणिका यवागूः (a beneficial gruel of barley and oat), आश्विनीययवागूत्रयम् ( three formulas of the Asvins for preparation of three different gruels etc. )

अष्टमाध्याये वृषयोगाः ( formulas for aphrodisiacs ) संशिताः। वृषयोगो वृष्यं यथा—सरस्वतीघृतम्, औशनसयोग इन्द्रप्रिययोगो वा……इत्येवमादयः। अत्र पुष्पिकायां लिखितमस्ति—'इत्यष्टमाध्याये नानाचार्य्यमते नावनीतके सिद्धसङ्क्षेपे वृषयोगाः समाप्ताः' इति।

नवमाध्याये नेत्राञ्जन-नेत्ररोगप्रतीकारा दर्शिताः। अञ्जनं ( collyrium ) नानाविधम्। नेत्ररोगप्रतीकारयोगाः ( remedial formulas for opthalmic diseases), यथा—रात्र्यन्धताप्रतीकारः (formula for blindness at night i.e. night-blindness )।

दशमाध्याये पलितनाशनयोगाः ( formulas for turning grey hair into black ), केशरागाः ( hair-dyes ), केशरञ्जनानि ( hair-oils ) च समुपदिष्टानि।

एकादशाध्याये हरीतकीकल्पाः ( doctrines of myrobalan ) अभयाकल्पा वाचरिताः। तत्र च हरीतक्याः प्रकारभेदा दर्शिताः—

'विजया त्रिवृता चैव रोहिणी पूतनाऽमृता।
जीवन्ती चाभया चैव सप्तयोनि र्हरीतकी॥' इति।

तासां लक्षणानि चोक्तानि—

'अलाबुवृत्ता विजया या वृत्ता सा तु रोहिणी।
पूतनास्थिमयी सूक्ष्मा स्थूलमांसफलामृता॥

सुवर्णवर्णा जीवन्ती पञ्चाङ्गी त्रिवृता तथा ।

अभया कालिका लोके निर्दिष्टा ब्रह्मणा पुरा ॥' इति ।

ग्रन्थकार एतासां गुणप्रयोगौ समासत उक्तवाह—

'हितं हयानां लवणं प्रशस्तं

जलं गजानां ज्वलनं गवां च ।

हरीतकी श्रेष्ठतमा नराणां

चिकित्सिते पङ्कजयोनिराह ॥'

इति हरीतकीकल्प आश्विनः ।

द्वादशाध्याये शिलाजतुकल्पः ( the doctrine of bitumen ) संशितः । शिलाजतोरुत्पत्तिविषये लिखितमस्ति—

'हेमाद्याः सूर्य्यसन्तप्ताः स्रमलं गिरिधातवः ।

स्निग्धाभं गुरुमृत्स्नाभं वमन्ति तच्छिलाजतु ॥' इति ।

( Rocks containing gold and other metals heated by the sun, emit their oily, heavy and clay-like impurities, which are known as Silajatu.) चरकश्चाह—

'हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः ।

जत्वाभं मृदुमृत्स्नाभं यन्मलं तच्छिलाजतु ॥' इति ।

त्रयोदशाध्याये चित्रककल्पः ( the doctrine of the plumbago plant—'चिराता' इति भाषा ) विवृतः । अस्य शेषांश एकान्ततो नष्टः । तदुक्तं हेर्ण् ले-महोदयेन—( 'Desunt' ) शिष्टं नाधिगतमिति ।

चतुर्दशाध्याये कुमारभृत्या ( treatment of children's diseases ) संशिता । तत्र षोडशयोगाः काश्यपमतेनोपदिष्टाः । सम्भाव्यते यदेते काश्यपसंहितात एव गृहीताः । यतः प्रायशो लिखितमस्ति— 'काश्यपस्य वचो यथा' ( Such is the dictum of Kasyapa )

इति। काश्यपस्य कश्यपप्रणीतायाः काश्यपसंहिताया इति मन्यामहे। 'इति होवाच जीवकः' इत्युक्त्वा तन्मतेऽपि केचिद् योगा उपन्यस्ताः। अत्र सन्दिह्यते यदसौ जीवकः किं वौद्धजीवक आहो स्वित् कश्यपशिष्यो वृद्धजीवक इति। एतदन्तरेण वहवो योगाः स्वमतेनाप्युपदिष्टाः।

पञ्चदशाध्यायः षोडशाध्यायश्च नाधिगतावेव। तावेकान्तनष्टावित्यनुमीयते। उपोद्घाते तु लिखितमस्ति—

'वन्ध्याचिकित्सिताख्यं च ज्ञेयं पञ्चदशं बुधैः।
सुभगाचिकित्सिताख्यं च तथा षोडशकं मतम्॥' इति।

अतः पञ्चदशाध्याये वन्ध्याचिकित्सायामनपत्यताचिकित्सा मृतापत्यताचिकित्साख्या वृषलीचिकित्सा गर्भस्रावचिकित्सा नष्टार्त्तवचिकित्सादयश्चासन्नित्यनुमीयते। भगवानुशना स्मरति—'वन्ध्या च वृषली ज्ञेया वृषली च मृतप्रजे'ति। षोडशाध्याये सुभगाचिकित्सायां गर्भोपचार-गर्भोपद्रव-चलितगर्भ-सूतिकोपचार-कुमारभृत्यादयश्चिन्तिता अभूवन्निति मन्यामहे।

वायोयार ( Bower )-पाण्डुलिपेस्तृतीयखण्डं द्वितीयखण्डस्थितस्य नावनीतकस्य परिशिष्टं भवति। खण्डयोश्च द्वयो र्मध्ये किमपि संयोगसूचकं वाक्यं नोपलभ्यते। तस्मादनुमीयते यत् सुश्रुतादन्यः कोऽपि वैद्यकः परवर्त्तिनि कस्मिंश्चित् काले परिशिष्टमेतत् प्रणीय ग्रन्थान्ते संयुयोजेति। नावनीतके ये केचित् पाकयोगादय उपेक्षिता लङ्घिता वा तेषां विवरणमस्मिंस्तृतीये खण्डे दृश्यते, यथा—नखीतैलम्, महावज्रकतैलम्, माणिभद्रतैलम्, आत्रेयसम्मतमग्निघृतम्, नारायणसम्मतं सिद्धार्थतैलमित्येवमादि। अस्मिन् खण्डे द्वासप्ततिः श्लोका वर्त्तन्ते। तत्र केचिदार्य्यादिच्छन्दसा केचित् पुनरिन्द्रवज्रादिच्छन्दसा रचिताः। द्वितीयखण्डस्थितेन नावनीतकेन सार्द्धमितरखण्डानां कोऽपि सम्बन्धो नैव विद्यते।

नावनीतकं समाप्तम्; इदानीं सुश्रुततन्त्रमनुसर्त्तव्यम्। तदतितरां प्रामाणिको ग्रन्थः। परवर्त्तिनि काले तु सुश्रुततन्त्रं सुश्रुतसंहितात्वेन परिणतम्, गुरुसूत्र-शिष्यसूत्रैकीयसूत्र-प्रतिसंस्कर्त्तृसूत्राणां तत्रानुप्रवेशात्। यदेव दिवोदासस्य गुरोरुपदेशमूलकं भाषणं तद् गुरुसूत्रम्, यथा—'देहे पुनस्ततस्तस्य लक्षणानि निबोध मे' इति, शिष्यस्य सुश्रुतस्य भाषणं शिष्यसूत्रम्, यथा—

'द्विषष्टि दोषभेदा ये पुरस्तात् परिकीर्त्तिताः।
कति तत्रैकशो ज्ञेया द्विशो वाऽप्यथवा त्रिशः॥'
(उ० ६६।४-५) इति।

सम्प्रदायविशेषस्य भाषणमेकीयसूत्रम्, यथा—'केचिदाचार्या ब्रुवते द्रव्यं प्रधानं केचिद् रसं केचिद् वीर्यं केचिद् विपाकमि'ति (उ० ६५।२४)। प्रतिसंस्कर्त्तृसूत्रम्, यथा—'यथोवाच भगवान् धन्वन्तरिरि'ति (सूत्र० १।२)। अत्र डल्लण आह—'यत्र यत्र परोक्षे लिट्प्रयोगस्तत्र तत्रैव प्रतिसंस्कर्त्तृसूत्रं ज्ञातव्यमिति। प्रतिसंस्कर्त्ताऽपीह नागार्जुन एवे'ति।

अस्मन्मते तु विनाऽपि परोक्षे लिट्प्रयोगं प्रतिसंस्कर्त्तृसूत्रं भूरिश उपलभ्यते, यथा—

'श्रेष्ठत्वादुत्तरं ह्येतत् तन्त्रमाहुर्महर्षयः।
बह्वर्थसंग्रहाच्छ्रेष्ठमुत्तरं चापि पश्चिमम्॥
शालाक्यतन्त्रं कौमारं चिकित्सा कायिकी च या।
भूतविद्येति चत्वारि तन्त्रे तूत्तरसंज्ञिते॥' (सू० ३।४३-४)

इति। अस्त्यत्र लटः प्रयोगो न तु लिटः। अनुत्पन्ने च ग्रन्थे क एताभ्यां श्लोकाभ्यां वक्तुं प्रभवेद् यत् प्राधान्येन शालाक्य-कौमार-कायचिकित्सा-भूतविद्यानामर्थसंग्रहादुत्तरतन्त्रं महर्षयः श्रेष्ठं वदन्तीति। अत

एतेनैतदुपपद्यते यत् परिसमाप्ते ग्रन्थे प्रतिसंस्कर्त्रैव प्रागुद्धृतं श्लोकद्वयं प्रणीय सूत्रस्थानस्य तृतीयेऽध्याये सन्निवेशितमिति।

नागार्जुने सौश्रुतप्रतिसंस्कर्त्तृत्वं डल्लणेनारोपितम्। प्राज्ञिकानां मते नागार्जुनस्य स्थितिकालः प्रथमं खृष्टशतकं द्वितीयं खृष्टशतकं वा, डल्लणस्तु त्रयोदशखृष्टशताब्दीय एव। डल्लणात् प्रागेकादशद्वादशखृष्टशताब्द्योः पञ्जिकाकारो गयीसेन एकादशखृष्टशताब्द्यां 'भानुमती'प्रणेता चक्रपाणिदत्तो दशमैकादशखृष्टशताब्द्योः सुश्रुतपञ्जीकृद्गयदास-भास्करौ नवमदशमखृष्टशताब्द्यो र्जेज्जटाचार्य्यः सप्तमाष्टमखृष्टशताब्द्योः सुश्रुतवार्त्तिककारो माधवकरश्चेत्येवमादिप्राचीनवैद्यकेषु केनापि नागार्जुनः सौश्रुतप्रतिसंस्कर्त्तृत्वेन न जगृहे। अत्रैकादशशतवर्षेषु व्यतीतेषु कथमेतड् डल्लणेन परिज्ञातं तदधुना वक्तुं न शक्यम्। मन्ये यत्किञ्चित् प्रवादमात्रमुपजीव्य तेन खल्वेवंविधः सिद्धान्तः कक्षीकृत इति।

केचिदाहुः—महाराजकनिष्कः स्वयमेव नागार्जुन इति। एतत्त्वनुसन्धानगम्यम्। यद् वा भवतु, कल्हणादिभिः पुरातत्त्वज्ञै र्नागार्जुनः कनिष्कस्य समकालिकतया निरूपित इत्यतस्तयोः पृथक्स्वीकरणमेव युक्तम्। साम्प्रतिकैरैतिहासिकैः प्रथमद्वितीयखृष्टशताब्द्यौ तयोः स्थितिकालतया निर्णीते। अस्माकमप्यापाततस्तथैव सिद्धान्तः।

नागार्जुनो विदर्भेषु कस्मिंश्चिद् ब्राह्मणवंशे जातस्तक्षशिलायां शिक्षां लेभे। अनन्तरं च स भास्करापरपर्य्याय-राहुलभद्रसमीपे बौद्धदर्शनमधीत्य बोधिरित्युपनामभूषितो बभूव। तन्मतावलम्बिनो बौद्धा 'महायान' इत्याख्यया प्रसिद्धाः। पुरुषपुरे महाराजपदभाजः कनिष्कस्य शासनावसरे वसुमित्राश्वघोषाभ्यां नागार्जुनबोधेराध्यक्ष्येण काश्मीरप्रदेशे काचित् बौद्धसङ्गीतिराहूता। तस्याः कार्य्यपरिसमाप्तौ राजसभायाः पण्डितसभ्यानामग्रणी र्नागार्जुन एवासीत्। अस्मिंश्च समये कनिष्कसभायां द्वौ राज-

वैद्यकौ सभ्यत्वेनास्ताम्। तत्र 'चरक'इत्युपाधिधारी सनातनधर्म्मपरायण एकश्चिकित्सकः, 'सुश्रुत'इत्युपाधिभूषितः सनातनधर्म्मावलम्बी कश्चिदन्यः शस्त्रोपचारकश्चेति। इदानीन्तन इतिहासे द्वाविमौ नवीनशब्देन विशेषितौ भवतः। मन्ये, अनेन नवीनसुश्रुतेन प्रतिसंस्कारानन्तरं सुश्रुततन्त्रं सुश्रुत-संहितापदवीं समापादितमिति। कोऽपि पुनरत्र पर्य्यनुयोक्तुमर्हति कथं तर्हि नागार्जुनो ग्रन्थस्य प्रतिसंस्कर्त्तेति प्रवाद आसीदिति? अत्र ब्रूमः—यथा जयाजयौ स्वामिनि व्यपदिश्येते तद्वदिति। एतदुक्तं भवति, यथा कश्चित् स्वामी स्वयमयोद्धाऽपि योधभृत्यसंयोगाद् योद्धेति व्यपदिश्यते, तथा नागार्जुनोऽप्युपचारेण प्रतिसंस्कर्त्तेत्युच्यत इति। श्रूयते च लोकेऽपि—यः कारयति स करोत्येवेति। आस्तां तावत् पुरातनी वार्त्ता। नातिचिरात् प्रागपि हिमाचलप्रदेशीयस्य गौरीशिखरस्य यत् किमपि तथ्यम् Everest-महोदयवशगेन महागाणितिकेन राधानाथसीकदार-विद्वद्वर्य्येणोद्घाटितं तत्सर्वं तत्प्रभोः Surveyor General Everest-महोदयस्य नाम्ना प्रकाशितं न तु तथ्यभाषिणो राधानाथस्यैव। अतश्चाधुनाऽपि शृङ्गमिदम् 'एभारेष्ट'इति नाम्ना प्रसिद्धमास्ते। एतेनैतदवगम्यते यद् नियोज्यस्य कार्य्यकलापः प्रायशो नियोक्तरि प्रभावेव संक्रमितो भवतीति। शिशुपाल-वधे माघकविनाऽप्युक्तम्—

'विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम्।
फलभाजि समीक्ष्योक्ते बुद्धे र्भोग इवात्मनि॥' (२।५६) इति।

सौश्रुतग्रन्थे प्राचीनसुश्रुतस्य साक्षात्कर्त्तृत्वं नवीनसुश्रुतस्य प्रतिसंस्कर्त्तृत्वं चास्माभिरवश्यमभ्युपगम्येते। यदि नवीनसुश्रुतो न स्यात् तर्हि चक्रपाणि-विजयरक्षित-डल्लण-तोदरानन्द-श्रीकण्ठ-निश्चलादयो विचक्षणा वैद्यकाः कथं धान्वन्तरसुश्रुतं 'वृद्धसुश्रुत' इति ब्रूयुः? न खलु प्रतिसंस्कर्त्तुः 'सुश्रुत'-इत्यभिधानमस्माभिरुद्भावितम्। पाश्चात्यपण्डितैरपि ज्यायसः सुश्रुतात्

कश्चिदन्य एव सुश्रुतः प्रकल्प्यते। ऐतिहासिकैश्च खृष्टजन्मनः पूर्व्ववर्त्तिनोश्चरकसुश्रुतयोः खृष्टजन्मतः परवर्त्तिनोश्च नवीनयोश्चरक-सुश्रुतयोरस्तित्वं स्वीक्रियते। तथा हि बावयार (Bower)-पाण्डुलिपे भूमिकायां हेर्ण्ले (Dr. Hoernle)-महोदयेन इंराजिभाषायां यल्लिखितं तत्सर्व्वं सानुवादमुपरिष्टात् प्रदीयते—"The earlier portion was written by **Susruta the elder**......while the later portion which calls itself Uttar-Tantra ( later treatise ) was added by an anonymous writer who may provisionally be called **Susruta, the younger.** Medieval Indian medical tradition identifies him with Nagarjuna —the reputed contemporary of king Kanishka. This would make him also a contemporary of Charak. Susruta the younger not only adds his Uttar-Tantra and a Salakya-Tantra as a complement to the earlier Salya-Tantra of Susruta the elder, but he also revised the work. Thus the Ayurveda-Sastra of Susruta, as we have it, is essentially a Samhita, a compendium of older materials similar to the Charak-Samhita and therefore it is rightly known as the Susruta-Samhita." अस्य तात्पर्य्यानुवादः—सौश्रुतग्रन्थस्य प्राग्भागो ज्यायसा सुश्रुतेन रचितः, उत्तरतन्त्रं नाम चरमो भागो येन प्रणीतः स आपाततो 'यवीयः-सुश्रुत' इत्याख्यया गृह्यते। कनिष्कसमकालिको नागार्जुन एव यवीयान् सुश्रुत इति मध्यमकालवर्त्ती प्रवादो वैद्यकगोष्ठीषु प्रचरद्रूपः समभवत्। एवं चेद् यः सुश्रुतप्रतिसंस्कर्त्ता स चरकप्रतिसंस्कर्तु

नवीनचरकस्यापि समकालिक इत्यपि वक्तुं शक्यम्। यवीयःसुश्रुतेन नवीनसुश्रुतेन वा न केवलं प्राचीनशल्यतन्त्रस्य परिशिष्टभूतं शालाक्यतन्त्र-मुत्तरतन्त्रं च मूलग्रन्थे समायोजिते, परं तु तेन दोषादोषविचारेण समग्र-ग्रन्थोऽपि पर्य्यालोचितः कालोपयोगिना परिवर्त्तनेन च संयोजितः संशोधितश्च। अतः सौश्रुतमायुर्व्वेदशास्त्रमिदानीं यथाऽधिगतमस्माभिः सा चरकसंहितेव प्राचीनोक्तीनां संगृहीतत्वात् संहितैव भवितुमर्हति। एवं च ग्रन्थस्य सुश्रुत-संहितेति नाम सार्थकं स्वानुरूपं च भवती'ति।

केचिदाहुः—नावनीतकवत् सुश्रुततन्त्रमपि केनचित् सौगतेन प्रति-संस्कृतमिति। प्रतिसंस्कृतमिति सत्यम्, सौगतेन त्विति चिन्त्यम्। नावनीतकं सौगतेन प्रतिसंस्कृतमित्यस्माभिरपि स्वीक्रियते यतस्तन्निमित्तमेव ग्रन्थेऽपि बौद्धव्यवहारः प्रविष्टः। एवं च प्रतिसंस्कर्त्रा तथागतं बुद्धदेवं नमस्कृत्य ग्रन्थ आरब्धः। सुश्रुततन्त्रं तु सनातनधर्म्मपरायणेन वैद्यकेन प्रतिसंस्कृत-मिति स्पष्टं प्रतीयते। तथा हि प्रतिसंस्कर्त्रा ग्रन्थादौ माङ्गलिक'मथ'-शब्दमुच्चारयता 'वेद'शब्द उच्चारितः ( सूत्र० १।१ )। यद्यपीह वेदः प्रसङ्गत आयुर्व्वेद एव, तथापि ब्रह्मस्वरूपस्य वेदशब्दस्य परार्थे प्रयुज्यमान-दधिदूर्व्वाशङ्खध्वन्यादिवद् मङ्गलसूचकत्वात् काकाक्षिन्यायेन स उभयतो योज्यः। किं च, सूत्रस्थानीयप्रथमाध्याये क्रमागतिमायुर्व्वेदस्य प्रतिपादयता प्रतिसंस्कर्त्रा ब्रह्मप्रजापतिदस्रदेवेन्द्रशिवाब्जान् संस्मृत्य सनातनधर्म्मा-वलम्बिनां विशिष्टशिष्टाचार आसेवित एव। अपि च ब्रह्मसंहितामनुध्यायता ग्रन्थसंस्कर्त्रा ग्रन्थान्ते सन्निवेशितोऽयं श्लोकः—

'सहोत्तरं त्वेतदधीत्य सर्व्वं ब्राह्मं विधानेन यथोदितेन।
न हीयतेऽर्थान् मनसोऽभ्युपेतादेतद्वचो ब्राह्ममतीव सत्यम्॥'

इति। अस्य ग्रन्थस्य कस्मिन्नपि स्थाने बुद्धदेवस्य नामोल्लेखोऽपि न दृश्यते। नागार्जुनापरपर्य्यायो नागार्जुनबोधि र्वा कश्चिदन्यो वा बौद्धः पण्डितश्चेद्

ग्रन्थं प्रतिसमस्करिष्यत् तर्हि प्रजापतिप्रभृतीनां स्मरणात् प्राक् स तथागतं बुद्धदेवं नूनमस्मरिष्यत्, यद्वा ग्रन्थस्य कुतश्चिदपि स्थाने तथागतस्य भगवतो बुद्धदेवस्य नामोल्लेखमकरिष्यत्। एवं लेशतोऽपि बौद्धाचारस्यासद्भावात् सुश्रुततन्त्रप्रतिसंस्कर्त्तारं वयं सनातनधर्म्मपरायणमाचक्ष्महे।

सुश्रुततन्त्रप्रतिसंस्कर्त्तैवोत्तरतन्त्रस्य संग्राहक इत्यत्र सर्व्वेषामैकमत्यमुपलभ्यते। अस्य तन्त्रस्य प्रारम्भे लिखितमस्ति—'निखिलेनोपदिश्यन्ते··· ये च विस्तरतो दृष्टाः कुमारबाधहेतवः' इति। एतद्व्याख्यायां डल्लणेनोक्तम्—'ये च विस्तरतो दृष्टा इति पार्व्वतकजीवकबन्धकप्रभृतिभिः कुमारबाधहेतवः स्कन्दप्रभृतयः' इति। पार्व्वतकजीवकादयो बौद्धवैद्यकग्रन्थकारा एव। तन्मते कुमारपीडाया हेतुभूता एकविंशति दुष्टग्रहाः सन्ति—देवो नागोऽसुरो मरुतो दैत्यो वा गरुडो गन्धर्व्वः किन्नरो महोरगो यक्षो राक्षसः प्रेतः पिशाचो भूतः कुम्भाण्डः कुष्माण्डो वा पूतनः कटपूतनः स्कन्द उन्मादश्छायाऽपस्मार ओस्तारकश्चेति। बावयारपाण्डुलिपेः षष्ठखण्डे महाव्युत्पत्त्यादिबौद्धग्रन्थेषु चैतानि ग्रह-नामानि पठ्यन्ते। अतो नागार्जुनबोधि र्वा कश्चिदन्यो वा बौद्धपण्डितश्चत् सुश्रुततन्त्रं प्रतिसमस्करिष्यत् तदा स स्वसम्प्रदायमतानुसारेण प्रागुक्तग्रहनामानि चावदिष्यत्। उत्तरतन्त्रस्य तु सप्तविंशेऽध्याये काश्यपसंहितादिमतमाश्रित्य नवानां ग्रहाणां नामानि पठ्यन्ते—

'बालग्रहाणां विज्ञानं साधनं चाप्यनन्तरम्।
उत्पत्तिं कारणं चैव सुश्रुतैकमनाः शृणु॥
स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च।
शकुनी रेवती चैव पूतना चान्धपूतना॥
पूतना शीतनामा च तथैव मुखमण्डिका।
नवमो नैगमेषश्च यः पितृग्रहसंज्ञितः॥

( उ० २७।३-५, ६०१ पृष्ठे निर्णयसागरस्य ) इति। अतः सम्प्रदाय-च्युरणाद् वर्त्मन एतादृशो व्यतिक्रमः किं सुश्रुतप्रतिसंस्कर्त्तु बौद्धत्वबाधको न स्यात् ?

बौद्धाः स्कन्दग्रहं शिवतनयं कार्त्तिकेयमवोचन्। उत्तरतन्त्रस्य तु सप्तत्रिंशत्तमेऽध्याये लिखितमस्ति—

'बाललीलाधरो योऽयं देवो रुद्राग्निसम्भवः।
मिथ्याचारेषु भगवान् स्वयं नैष प्रवर्त्तते॥
कुमारः स्कन्दसामान्यादत्र केचिदपण्डिताः।
गृह्णातीत्यल्पविज्ञाना ब्रुवते देहचिन्तकाः॥' ( ६-१० ) इति।

स्कन्दसामान्यात् स्कन्देति नामसादृश्यात्। अपण्डिता अविद्वांसः। अल्पविज्ञाना स्वल्पज्ञाः। देहचिन्तका अनात्मवादिनो लोकायतिका बौद्धा य आहुः—

'सुखेषु भुज्यमानेषु यत् स्याद् देहविसर्जनम्।
अयमेव परो मोक्षो न मोक्षोऽन्यः क्वचित् पुनः॥' इति।

बौद्धमतावलम्बिनी परिव्राजिका विज्ञानकौमुदी चाह—

'यावत् स्वस्थमिदं वर्ष्म ( वपुः ) यावन्नेन्द्रियविक्लवः।
यावज्जरा च दूरेऽस्ति तावत् सौख्यं प्रसाधयेत्॥
अस्वास्थ्येन्द्रियवैकल्ये वार्द्धक्ये तु कुतः सुखम्।
शरीरमपि दातव्यमर्थिभ्योऽतः सुखेप्सुभिः॥
सत्वरो गत्वरो देहः सञ्चयाः सपरिक्षयाः।
इति विज्ञाय विज्ञाता देहे सौख्यं प्रसाधयेत्॥" इति।

अत एव देहचिन्तकादिशब्दै बौद्धा अतितरां कटाक्षिताः। बौद्धाः किं बौद्धेनैवं कटाक्षिताः स्युः ? अत एव ब्रूमः—नागार्जुनः स्वयमेव न कर्त्ता किन्तु कारयितेति। अतः समुद्भूतः प्रवादो नागार्जुनः सुश्रुतस्य प्रतिसंस्कर्त्तेति।

सुश्रुतसंहिताया आरम्भे ब्रह्मसंहितानुसारत आयुर्वेदस्याष्टाङ्गानि निर्णीतानि—'शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगद-तन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रं चेति। तत्र शल्यं नाम विविधतृण-काष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावगर्भशल्योद्धरणार्थं यन्त्रशस्त्र-क्षाराग्निप्रणिधानव्रणविनिश्चयार्थं चे'ति दिवोदासः। केचित् पुनराहुः—'न केवलं काष्ठतृणादिशल्यं परं त्वतिप्रवृद्धं मलदोषजं वा शरीरिणां स्थावरजङ्गमानां यत्किञ्चिदाबाधकरं शरीरे तत् सर्व्वमेव शल्यमिति। शालाक्यं नामोर्द्ध्वजत्रुगतानां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीना-मुपशमनार्थमि'ति दिवोदासः। वाभटस्य वैद्यकसंहितायामुक्तम्—

'शिरोरोगा नेत्ररोगाः कर्णरोगा विशेषतः।
भ्रूशङ्खकण्ठमन्यासु ये रोगाः सम्भवन्ति हि॥
तेषां प्रतीकारकर्म्म नासावर्त्त्यञ्जनानि च।
अभ्यङ्गमुखगण्डूषक्रिया शालाक्यनामकाः॥' (२ अ०) इति।

कायचिकित्सा नाम सर्व्वाङ्गसंश्रितानां व्याधीनां ज्वरातिसार-रक्तपित्त-शोषोन्मादापस्मार-कुष्ठमेहादीनामुपशमनार्थमिति दिवोदासः। अत्रि-संहितायां महर्षिरत्रिः स्मरति—

'कषायचूर्णगुटिकाः पञ्चानां शोधनानि च।
कोष्ठामयानां शमनीक्रिया कायचिकित्सितम्॥' (२ अ०) इति।

भूतविद्या नाम देवासुरगन्धर्व्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म्मबलिहरणादिग्रहोपशमार्थमिति दिवोदासः। "देवगणो ग्रहाख्य इत्यनागतावेक्षणाद् देवादय एव ग्रहा' इति सुश्रुतार्थसन्दीपनभाष्ये हाराणचन्द्रः। मन्ये तेवृ देवृ देवने क्रीडायामिति निहीनक्रीडारता ये देवास्ते दुष्टा ग्रहा न तु सुरा यागादिभि र्येषां तृप्ति र्भवतीति। उक्तं च वाभटेन वैद्यकसंहितायाम्—

'ग्रहभूतपिशाचाश्च शाकिनी डाकिनी ग्रहाः।
एतेषां निग्रहः सम्यग् भूतविद्या निगद्यते ॥' (२ अ०) इति।

अष्टाङ्गहृदयस्योत्तरस्थानीय-चतुर्थेऽध्याये भूतविद्या प्रपञ्चिता। कौमार-भृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थमिति दिवोदासः। उक्तं च शास्त्रान्तरे 'प्रथमे दिवसे मासि वर्षे वा नन्दा मातृका, द्वितीये दिवसे मासि वर्षे वा सुनन्दा, तृतीये दिवसे मासि वर्षे वा पूतना, चतुर्थे दिवसे मासि वर्षे वा मुखमण्डिका, पञ्चमे दिवसे मासि वर्षे वा कटपूतना, षष्ठे दिवसे मासि वर्षे वा शकुनिका, सप्तमे दिवसे मासि वर्षे वा शुष्करेवती, अष्टमे दिवसे मासि वर्षे वा आर्य्यका, नवमे दिवसे मासि वर्षे वा सूतिका, दशमे दिवसे मासि वर्षे वा निर्ऋता, एकादशे दिवसे मासि वर्षे वा पिलिपिच्छिका, द्वादशे दिवसे मासि वर्षे वा कामुका नाम मातृकाः शिशुं गृह्णन्ति। सर्व्वाभिरेव गृहीत-मात्रस्य च ज्वरादयो भवन्ती'ति। अष्टाङ्गहृदयस्योत्तरस्थानीयप्रथमेऽध्याये बालोपचरणं प्रपञ्चितम्। अगदतन्त्रं नाम सर्पकीटलूतावृश्चिक-मूषिकादि-दष्टविषव्यञ्जनार्थं विविधविषसंयोगोपशमनार्थे चेति दिवोदासः। विविध-विष-संयोगविषोपहतोपशमनार्थमिति च पाठान्तरम्। संयोगविषं गर-विषम्। 'गरं संयोगजं विद्यादित्यु'क्तेरिति सन्दीपनभाष्ये हाराणचन्द्रः। रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थं चेति दिवोदासः। वाजीकरणतन्त्रं नामाल्पदुष्टक्षीणविशुष्करेतसामाप्यायन-प्रसादोपचयजननिमित्तं प्रहर्षजननार्थं चेति दिवोदासः।

सुश्रुतसंहितायामष्टाङ्गायुर्व्वेदः षडशीत्यधिकशतेऽध्यायेषु विवृतः। तत्र विंशंशतमध्यायाः पञ्चभिः स्थानै र्विभक्ताः—सूत्रस्थानं निदानस्थानं शारीर-चिकित्सितस्थानं कल्पस्थानं चेति। एतेषु षट्चत्वारिंशदध्यायाः सूत्र-स्थाने, षोडशाध्याया निदानस्थाने, दशाध्यायाः शारीरस्थाने, चत्वारिंश-

दध्यायाश्चिकित्सितस्थाने, अष्टाध्यायाः कल्पस्थाने च विनियुक्ताः। अध्यायानां विषयास्तेषां नामानि चाकरे द्रष्टव्यानि।

सुश्रुतसंहिताया उत्तरतन्त्रं न कश्चिद् मौलिको ग्रन्थः स्वोक्तीनां पुनरुक्तत्वात् परोक्तीनां संगृहीतत्वाच्च। अतस्तस्य प्रारम्भेऽपि पठ्यते—

'अध्यायानां शते विंशे यदुक्तमसकृन्मया।
वक्ष्यामि बहुधा सम्यगुत्तरेऽर्थानिमानिति॥
इदानीं तत् प्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम्।
निखिलेनोपदिश्यन्ते यत्र रोगाः पृथग्विधाः॥' इति।

उक्तिरेषा दिवोदासस्य भवितुं नार्हति। 'सकृदुपस्पृश्य कृतः शास्त्रार्थः' इति न्यायेन निरर्थिकायामावृत्तौ पुनः प्रवृत्तिर्न सम्भवति। प्रतिसंस्करणे तु नैष दोषः। यत्रोक्तम्—

'विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम्।
संस्कर्त्ता कुरुते तन्त्रं पुराणं च पुनर्नवम्॥' इति।

अतो ब्रूमः—संस्कर्त्रैव प्रतिसंस्कर्त्राऽपि संक्षिप्तविवरणं विस्तारयितुं शक्यमिति प्रतिसंस्कर्त्तुरुक्तश्लोकपाठो न दोषावह इति स्पष्टम्। इह तु प्रतिसंस्कर्त्ता स्वात्मानं स्थगयन् दिवोदासमुखेन पठति—'अध्यायानां शते विंशे यदुक्तमि'त्यादि।

पुनरपि तत्र पठ्यते—

'शालाक्यतन्त्राभिहिता विदेहाधिपकीर्त्तिताः।
ये च विस्तरतो दृष्टाः कुमाराबाधहेतवः॥' इति।

'ये च विस्तरतो दृष्टा' इत्यनेन यदि पार्व्वतकजीवकबन्धकादयो वैद्या अङ्गीक्रियेरंस्तर्हि दिवोदासस्तेभ्योऽवश्यं महता कालेन पूर्व्ववर्त्त्यैव। यतः प्रात्निकप्रवरमजुमदारमहोदयस्य मतेन दिवोदासः खृष्टजन्मतः प्राक् पञ्चदशशताब्द्यां वाराणसीं भूषयामास; कान्यकुब्जकुमारः सुश्रुतो दिवोदासात्

किञ्चिदुत्तरभव इति। आयुर्व्वेदाचार्य्यस्य पर्व्वतमुने र्गोत्रापत्यं पार्व्वतको वर्द्धमानमहावीरसमकालिकः खृष्टजन्मतः पुरा षष्ठ्यामेव शताब्द्यामाविरासीत्। बुद्धसमकालिको जीवको बौद्धवैद्यः खृष्टपूर्व्वषष्ठ-शताब्दीतो न परज एव। बन्धको बन्धुको वा खृष्टजन्मतश्चतुर्थखृष्टशताब्दीतोऽपि प्रागेव। अतः प्रागुद्धृतश्लोको दिवोदासमुखे न शोभते समयस्य पौर्व्वापर्य्यविपर्य्ययात्, शोभते तु प्रतिसंस्कर्त्तु र्मुखे य एतेभ्यो महता कालेनार्व्वाचीन एव। अत एतदुपपद्यते यत् सुश्रुतसंहिताया उत्तरतन्त्रं प्रतिसंस्कर्त्तुरेव सुशोभना कृति र्न तु गुरुशिष्ययोः काशीराजसुश्रुतयोः संवाद इति। तत उक्तम्—

'षट्सु कायचिकित्सासु ये चोक्ताः परमर्षिभिः।
उपसर्गादयो रोगा ये चाप्यागन्तवः स्मृताः॥' इति।

अतः श्लोकस्यैष पिण्डितोऽर्थः—विदेहाधिपापरपर्य्यायनिमिप्रणीते शास्त्रे ये षट्सप्तति र्नेत्ररोगा स्तत्प्रतीकाराश्चोपदिष्टास्त इहोत्तरतन्त्रस्य शालाक्याधिकारेऽभिधास्यन्ते। पार्व्वतक-जीवक-बन्धकादिभिश्च ये कुमारपीडाहेतुभूताः स्कन्दादिग्रहप्रभावाः प्रणिहिताः परीक्षिताश्च तेषां शास्त्रत इह निखिलेन कौमारभृत्य-भूतविद्य अभिधास्येते। अग्निवेशभेडजतूकर्णपराशरहारीतक्षारपाणिभिः परमर्षिभिः षट्सु कायचिकित्सासु य उपसर्गादयो ज्वरादयो रोगा ये चाप्यागन्तव उन्मादादिव्याधयः प्रोक्तास्ततोऽत्र सारमाकृष्य कायचिकित्सितमभिधास्यते—इति। अत एव बायोयार पाण्डुलिपे र्भूमिकायां हेर्ण्लेमहोदयेन लिखितम्—"The Uttar-Tantra of Susruta-Samhita does not profess to be an original composition. In introductory verses it expressly describes itself as a compilation and enumerates the Tantras or treatises on which it bases itself. These

are, firstly a treatise on Salakya or minor Surgery by Nimi—the Videhapati (विदेहपति); secondly treatises on Kumarvadha composed, according to the medieval commentator Dallan, in 12 c. A. D. by Jeebaka, Parvataka and Bandhuka; thirdly the six treatises on Kayachikitsa (internal medicine) composed by the six supreme medical authorities—the well-known pupils of Atreya." अर्थात् सुश्रुतसंहिताया उत्तरतन्त्रं छन्दोमयेऽस्य पूर्व्वपीठे सहायभूतग्रन्थानां नामग्रहणात् परं वर्णयति यदेतच्छास्त्रं वस्तुतः संहितैव न तु तन्त्रं मौलिकत्वाभावादिति। तत्र सहायभूता ग्रन्थाश्चोक्ताः प्रथमतो विदेहाधिपापरपर्य्याय-निमिप्रणीतं शालाक्यम्, द्वितीयतः पार्व्वतकजीवकबन्धुकीयकुमाराबाधशास्त्राणि द्वादश-खृष्टशताब्दीय-डल्लणसूचितानि, ततश्चात्रेयस्य प्रसिद्धा ये षट्शिष्यास्तेषां कायचिकित्साश्चेति।

उत्तरतन्त्रे षट्षष्टिरध्यायाः सन्ति। एतेष्वप्यष्टाङ्गायुर्व्वेदोऽधिकृतः। उत्तरतन्त्रं किमर्थकं भवति? तन्त्रं नाम सिद्धान्तः शास्त्रं वा। 'प्रधाने धारणे शास्त्रे सिद्धान्ते तन्त्रमुच्यत' इति कोषोक्तेः। उत्तरशब्द इह प्रधानार्थक इति कृत्वा केचिदाहुः—शालाक्यं कौमारभृत्यं कायचिकित्सा भूतविद्या चेति विषयचतुष्टयस्यात्र प्रपञ्चेन हि वर्णितत्वादुत्तरतन्त्रमित्यभिधीयत इति। अस्माभिस्तु परिशिष्टार्थे स उत्तरशब्दो गृह्यते। डल्लणमतेनाप्युत्तरतन्त्रं परिशिष्टमेव। यतस्तेनोक्तम्—'सविंशमध्यायशतं परिसमाप्य परिशिष्टत्वादुत्तर-तन्त्रं प्रतिपाद्यं भवती'ति (उ० त०—१।२)। साध्विदमुच्यते। यत आदि-काण्डा दारभ्य लङ्काकाण्डपर्य्यन्तं संग्रन्थ्य यत् काण्डं प्रणीतं तत् खलु मूलस्य परिशिष्टत्वादुत्तरकाण्डमित्यभिहितम्। रामस्य राज्याभिषेकानन्तरमपि

तत्परवर्त्ति यच्चरितं वर्णितं तदुत्तरचरितमित्युक्तम्। अत एव सूत्रस्थानादारभ्य कल्पस्थानपर्य्यन्तमभिधाय शिष्टं यदुपदेश्यमस्ति तदुत्तरतन्त्रमेव भवितुमर्हति। उक्तं च नैयायिकैः—'स्वाधिकरणध्वंसाधिकरणत्वमुत्तरत्वम्, यथा भुक्त्वा व्रजतीत्यादौ व्रजनस्य भोजनोत्तरत्वमि'ति।

प्रतिसंस्कारात् प्राक् सुश्रुतसंहिता सुश्रुततन्त्रमितिनाम्ना विश्रुतासीत्। सुश्रुततन्त्रं सुश्रुतेन स्वयमेव लिखितमित्यनुमीयते। ग्रन्थश्चासौ गुरुशिष्यसंवाद एव। गुरु र्हि भैमरथि धन्वन्तरिः काशीराजो दिवोदासः शिष्यास्तु धान्वन्तरसुश्रुतादयः। केचिदाधुनिका आहुः—दिवोदाससुश्रुतौ गुरुशिष्यौ सम्भूय ग्रन्थमिमं प्रणीतवन्ताविति। अस्माकं मते तु काशीराजसमीपे यथा समाकर्णितं तेनैव प्रकारेण शिष्यो ग्रन्थमकरोत्।

शिष्याणामागमनकारणं विज्ञाय गुरुर्दिवोदासस्तानप्राक्षीदायुर्व्वेदस्याष्टस्वङ्गेषु किमङ्गं कस्मा उपदेश्यमिति। त ऊचुरस्माकं सर्व्वेषामेव शल्यज्ञानं मूलं कृत्वा समग्रमायुर्व्वेदमुपदिशतु भगवानिति। एवमस्त्वित्युक्त्वा गुरुश्च तान् कृत्स्नमायुर्व्वेदमध्यापयितुं प्रवृत्तः। इमं कथायोगं श्रुत्वा कैश्चिदनुमातुं शक्यं यच्छालाक्यतन्त्रमप्यध्यापितमभूदिति। सम्प्रदायस्तु मन्यते यद् मूलग्रन्थे शालाक्यस्यानुपदेशात् प्रतिसंस्कृते ग्रन्थे तत्सन्निवेशितमासीदिति। अत एव हेर्ण्लेमहोदयेन लिखितम्—'Susruta the younger not only added his Uttar-Tantra and a Salakya-Tantra as a complement to the earlier Salya-Tantra of Susruta the Elder, but he also revised the latter work.' अयमर्थः—नवीनसुश्रुतेन संहिताया उत्तरतन्त्रं प्रणीय वृद्धसुश्रुतोक्तशल्यतन्त्रात् परं यन्न्यूनमासीत् तत्पूरणार्थं शालाक्यमपि निबन्धितम्। न केवलमेतावत् कृतम्, अपि तु तेन वृद्धसुश्रुतीयप्राचीनशल्यतन्त्रमपि पर्य्यवेक्षितं प्रतिसंस्कृतं चेति।

सुश्रुततन्त्रे ह्यायुर्व्वेदस्य किमप्यङ्गमेकान्ततः परित्यक्तमिति विश्वसितुमनर्हा वयम्। सम्भाव्यते यत् पूर्व्वं संक्षिप्तमासीत् तदेव नवीनसुश्रुतेन वैशद्येनोपस्थापितमिति। श्रूयते हि प्रतिसंस्कारात् प्राक् सुश्रुततन्त्रमष्टधा विभक्तमासीत्—सूत्रस्थानम्, द्वितीयस्थानम्, चिकित्सास्थानम्, कल्पस्थानम्, शल्यस्थानम्, कुमारतन्त्रम्, शारीरस्थानम्, भूतविद्या चेति। सर्व्वथा चिन्त्यमेवेदं मतम्, अन्यत्र कुत्रापि ग्रन्थे ह्येवंविधसमाधानानुपलम्भात्।

प्राचीनसुश्रुततन्त्रस्य व्याख्या काचिदासीद्वा न वेत्यद्यत्वे न ज्ञायते। सुश्रुतसंहितायास्तु नानाविधा व्याख्याग्रन्था विलसन्ति, यथा—

(१) प्रथमद्वितीयखृष्टशताब्द्योः सौश्रुततन्त्रप्रतिसंस्कर्त्रा नवीन-सुश्रुतेन 'सुश्रुतसार'नामा निबन्धग्रन्थः प्रणीत इति जनश्रुति वर्त्तते। असौ नवीन-सुश्रुतः कनिष्कनागार्जुनयोश्चरकप्रतिसंस्कर्त्तुः कपिलबलनाम्नो नवीनचरकस्य च समकालिक एव। स हि पुरुषपुरे ( in Peshwar ) राज्ञः कनिष्कस्य सभायां शस्त्रोपचारकरूपो राजवैद्य आसीत्।

कश्चैष नवीनसुश्रुत इति जिज्ञासायां ब्रूमः—कपिलबलपुत्रः कापिल-बलो हि सुश्रुततन्त्रं प्रतिसंस्कृत्य 'सुश्रुत'इत्युपाधिभूषितो बभूवेति। तेन हि सुश्रुततन्त्रप्रतिसंस्कारानन्तरं चरकसंहितायाः पुनरपि प्रतिसंस्कार आरब्धः, किंतु तस्याः कियन्तञ्चनांशं कृत्वा स दिवं प्रयातः। तदुक्तं दृढबलेन चरकीयचिकित्सितस्थाने त्रिंशाध्याये—'तानेतान् कापिलबलः शेषान् दृढबलोऽकरोदि'ति। एतत् खल्वस्माभिरापाततः सिद्धान्तितम्।

(२) निबन्धसंग्रहे डल्लणेन नामग्राहं विप्रचण्डाचार्य्यस्य मतवाद उद्धृत इति दर्शनादनुमीयते यदनेनापि सुश्रुतव्याख्यैका प्रणीतेति। History of Sanskrit Literature-ग्रन्थे कीथ्महोदयेनासौ प्राकृत-प्रकाशकारस्य वररुचेः समकालिक इत्युक्तम्। एवं चत्, स पञ्चमषष्ठ-खृष्टशताब्द्योरभ्यन्तरे जीवित आसीदिति वक्तुं शक्यते।

(३) सप्तमाष्टमखृष्टशताब्द्यो र्वङ्गदेशसमीपवर्त्तिनि शिलाह्नदग्रामे माधवकरेण प्रश्नसहस्रविधानापरनामकं सुश्रुतश्लोकवार्त्तिकं प्रणीतम्। माधवनिदानमस्य शाश्वतः कीर्त्तिस्तम्भः। तदुक्तम्—

'निदाने माधवः श्रेष्ठः सूत्रस्थाने तु वाग्भटः।
शारीरे सुश्रुतः प्रोक्तश्चरकस्तु चिकित्सिते॥' इति।

अस्य स्थितिकालमधिकृत्य विशालो मतभेदो दृष्टः। अतः किञ्चित् क्रियते विमर्शः।

The Materia Medica of the Hindus-नाम्नो ग्रन्थस्य भूमिकायां सुप्रसिद्धेन संस्कृताध्यापकेन प्रोफेसर् उइल्सन् (Professor Wilson)-महोदयेन लिखितम्—'The Arabians of the 8th century cultivated the Hindu works on medicine and the Charak and Susruta and the treatise called Nidana were translated and studied by the Arabians in the days of Harun and Mansur ( A. D. 773 ), either from the originals or more probably from translations made at a still earlier period into the language of Persia (P. X.). अस्य तात्पर्य्यम्। अष्टमखृष्टशताब्द्यामारबीयाः हारुण-मन्सुरनृपत्योः शासनावसरे चरकसुश्रुतनिदानानि विपरिणमयन्ति स्मारब्यभाषया। अनुवादोऽयं मूलतः कृत इत्यनुमानम्। सम्भाव्यते तु यत् प्राक्तनेभ्यः पारस्यभाषायामनूदितेभ्यो ग्रन्थेभ्य आरब्यभाषयाऽनुवादाः कृता इति। The History of Hindu Chemistry-ग्रन्थे रासायनिकपण्डितः प्रफुल्लचन्द्रराय (Dr. P. C. Roy)-महोदयः, A History of Sanskrit Literature-ग्रन्थस्य १३६ पृष्ठे इतिहासज्ञा श्रीअक्षयकुमारीदेवी चैनं समर्थयेते। ग्रन्थान्तरेभ्यश्चावगम्यते

यदष्टमखृष्टशताब्द्यां वनायु ( Arab ) प्रदेशीयस्य सम्राजः खलिफाहारुण-अल्-रशीद-महोदयस्य सभायां द्वौ संस्कृतशास्त्राभिज्ञौ विद्वांसावास्ताम्—'मङ्का'नामा राजवैद्यः, 'आल् आरावी'नामा वैयाकरणश्चेति। इमौ द्वौ पण्डितौ सम्भूय माधवनिदानस्यानुवादमारब्यभाषायां चक्रतुरिति। इदमत्रावधेयं यदष्टमखृष्टशताब्द्यां सुरजिद्वैद्येन माधवनिदानमुपजीव्य लघुनिदानं प्रणीतमिति। मधुकोषे सुरजितो लघुनिदानमुल्लिखितं वर्त्तते। एतस्मादुपपद्यते यत् सप्तमाष्टमखृष्टशताब्द्योरभ्यन्तरे नितरामसौ माधवकरो विरराजेति।

(४) नवमदशमखृष्टशताब्द्योरन्तर्वर्त्तिनि कस्मिंश्चित् काले कार्त्तिककुण्ड-नाम्ना केनचिद् वैद्यकेन सुश्रुतस्य टीकैका प्रणीता। ग्रन्थस्तु नास्माभि र्दृष्टः। मधुकोष-निबन्धसंग्रहाभ्यामवगम्यते यदनेन सौश्रुतटीका कृतेति। श्रूयते हि यदसौ सिद्धयोगादिप्रणेतु र्वृन्दकुण्डस्य ज्ञातिरासीदिति। कार्त्तिककुण्डेन चरकस्यापि टीकैका प्रणीता।

(५) नवमदशमखृष्टशताब्द्यौ जेज्जटस्य स्थितिकालः। नवमखृष्ट-शताब्द्यामनेन सुश्रुतटीका प्रणीता। ग्रन्थोऽयं नितरां प्रामाणिक एव। पाण्डित्यातिशयाद् महाचार्य्य इति ख्यातिरस्य सञ्जाता। असौ वाग्भटस्य साक्षाच्छिष्यो भवितुं नार्हति। एतत् सर्व्वमधस्ताच्चरकीयप्रस्तावे जेज्जट-कृतायां चरकटीकायां सविस्तरमालोचितम्।

(६) दशमखृष्टशताब्द्यां सुवीराचार्य्यः सुश्रुतसंहितां व्याचख्यौ। व्याख्यैषा नास्माभि र्दृष्टा। रत्नप्रभानाम्न्यां चिकित्सासंग्रहटीकायां त्रयोदशखृष्टशताब्दीयेन निश्चलकरेण लिखितम्—'तत्र सुविस्तरं सुवीर-जेज्जटौ जल्पितवन्तौ, तदसारमिति चन्द्रिकाकारः' ( गयदासः ) इति। एतस्मादनुमीयते यदनेन सुवीराचार्य्येण सुश्रुतस्य काचिद् व्याख्या प्रणीतेति।

(७) दशमैकादशखृष्टशताब्द्यौ भोजसभ्यस्य भास्करभट्टस्य स्थितिकालः। केचिदेनं भट्टभास्कर इत्याहुः। कौशिकभट्टोऽप्यस्य नामान्तरम्। एकादशखृष्टशताब्द्यां तेन सुश्रुतपञ्जिका प्रणीता। 'टीका निरन्तरा व्याख्या पञ्जिका पदभञ्जिके'ति हेमचन्द्रः। अमरटीकायां रघुनाथस्त्वाह—'टीका ग्रन्थस्य विषमपदव्याख्यायिका, समस्तपदव्याख्यायिका तु पञ्जिके'ति।

सुश्रुतपञ्जिका नेदानीमुपलभ्यते। १६५६ खृष्टाब्दीयायां कवीन्द्राचार्य्यस्य ग्रन्थसूच्यामस्या उल्लेखो वर्त्तते।

(८) दशमैकादशखृष्टशताब्द्यौ गयदासस्य स्थितिकालः। असौ चक्रपाणेः पूर्व्वभवो जेज्जटस्य परभवश्चेति ज्ञायते। गयदासेन सौश्रुतपञ्जिका प्रणीता। अस्या नामान्तराणि बृहत्पञ्जिकान्यायचन्द्रिकादीनि। ग्रन्थोऽयमतितरां प्रामाणिकः। पाण्डित्यातिशयाद् महाचार्य्य इति ख्यातिरस्य सञ्जाता। चन्द्रिकाकार इति नाम्नाऽपि गयदासः सुप्रसिद्ध एव।

अधुना केवलं निदानस्थानस्य सौश्रुतपञ्जिका दृश्यते। शिष्टस्य विलोपः सञ्जातः। रत्नप्रभायां निश्चलेनोक्तम्—'गौडेश्वरान्तरङ्गश्रीगयदासेन दर्शितम्...' इति। सम्भाव्यते यदसौ पुण्यश्लोकस्य गौडाधिपते र्महीपालस्य राजवैद्य आसीदिति। चक्रपाणि र्महीपालसूनो र्नयपालस्य प्रधानमन्त्रित्वमकरोत्।

(९) दशमैकादशखृष्टशताब्द्योरन्तर्वर्त्तिनि कुतश्चित् समये तीसटपुत्रेण चन्द्रटाचार्य्येण जेज्जटव्याख्यामुपजीव्य सुश्रुतसंहितायाः पाठशुद्धिः कृता। नासौ प्रतिसंस्कर्त्ता न चापि व्याख्याकार आसीत्।

आयुर्व्वेददीपिकासहितचरकसंहिताया उपोद्घाते प्रकाशकश्रीहरिदत्तशास्त्रिमहोदयेनानुमीयते यत् तीसटाचार्य्यो वाग्भटस्य पुत्र इति हेतोश्चन्द्रटस्तस्य पौत्र इति। एतदनुमानं निर्म्मूलम्, महता कालेन तेषां व्यवहितत्वात्।

कश्चित् प्रात्निकस्तीसटं चतुर्दशखृष्टशताब्दीयमाह (Keith's H. S. L. p. 511)। तन्न। यत एकादशखृष्टशताब्द्यां चक्रपाणिना नामग्राहमनयोः पितापुत्रयो र्वचनान्युद्धृतानि। इतःपूर्व्वमस्माभिश्चरकप्रस्तावे सर्व्वं प्रपञ्चितमेव।

(१०) एकादशखृष्टशताब्द्यां 'कुमारभार्गवीय'नामकवैद्यकग्रन्थकर्त्तु-र्भानुदत्तस्य कनिष्ठभ्रात्रा चक्रपाणिदत्तेन सुश्रुतसंहिताया 'भानुमती'नाम्नी टीका प्रणीता। टीकाया नामश्रवणादनुमीयते यद् भानुना सह टीकायाः कश्चित् सम्बन्ध आसीदिति। सम्भाव्यते च यत् प्रेमप्राचुर्य्यात् कनिष्ठेन ज्येष्ठस्य नाम्ना टीकाया अपि नाम भानुमतीति कृतेति। सम्पूर्णग्रन्थोऽयं नेदानीमुपलभ्यते।

चक्रपाणि र्बृहत्-तन्त्रप्रदीपकर्त्तु र्नरदत्तस्य शिष्यः। 'वीरभूम'-विभागान्तर्भूते मयूरेश्वरग्रामे लोध्रवंशीयनारायणदत्तादयं समजनि। वङ्गाधिपते र्महीपालपुत्रनयपालस्य रन्धनशालायामेष नारायणः सूदाध्यक्ष आसीत्। उपरते पितरि चक्रपाणिः प्रथमतः पितुः पदे सौदाध्यक्ष्येण नियुक्तो बभूव। ततः कियतिचित् काले व्यतीते विद्यातिशयात् स राज्ञः प्रधानमन्त्रित्वं लेभे। राज्याभिषेकादनन्तरं चत्वारिंशदधिकसहस्रतमे खृष्टवर्षे (1040 A. D.) नयपालो महाराजपदवीं जग्राह।

कश्चिदाह चिकित्सालेशप्रणेता गोवर्द्धनदत्तश्चक्रपाणे र्भ्राता न तु भानुरिति। तन्न। तयो र्गाढसौहृद्यमासीदिति सत्यम्, सहोदरो भ्राता तु भानुरित्यत्र लेशतोऽपि सन्देहो नास्ति। चक्रपाणिना स्वयमेवोक्तम्—

'गौडाधिनाथरसवत्यधिकारिपात्र-
नारायणस्य तनयः सुनयोऽन्तरङ्गात्।
भानोरनुप्रथितलोध्रवली कुलीनः
श्रीचक्रपाणिरिह कर्त्तृपदाधिकारी॥' इति।

चक्रपाणौ सर्व्वतोमुखी प्रतिभा दृश्यते। तेन बहव उत्कृष्टग्रन्थाः प्रणीताः, यथा—साहित्यादौ माघटीका, कादम्बरीटीका, दशकुमारचरितस्योत्तरपीठिका, न्यायसूत्रटीकाप्रभृतयः; वैद्यकशास्त्रे—वैद्यकोषः, चिकित्सास्थानटिप्पणम्, 'आयुर्व्वेददीपिका'नाम्नी चरकतात्पर्य्यटीका, 'भानुमती'-नाम्नी सौश्रुतटीका, व्यग्रदरिद्रशुभङ्करम्, चिकित्सासंग्रहश्चक्रसंग्रहश्चक्रदत्तसंग्रहो वा, द्रव्यगुणसंग्रहः, सर्व्वसारसंग्रह इत्येवमाद्याः। आयुर्व्वेददीपिका-भानुमतीनामकटीकाद्वये पाण्डित्यातिशयदर्शनात् तात्कालिकवैद्यवृन्दैरेष चक्रपाणि 'श्चरकचतुरानन-सुश्रुतसहस्रनयना'दिमानपत्रभूषित आसीत्।

एकादशखृष्टशताब्द्याः प्रथमार्द्धे चिकित्सासंग्रहः प्रणीतः। एतस्मात् प्राग् व्यग्रदरिद्रशुभङ्करं प्रणीतम्। चिकित्सासंग्रहो वृन्दकृतसिद्धयोगस्य प्रपञ्चविशेष इति केचित्। अस्माभिस्तु नैतत् समर्थ्यते। एतद्ग्रन्थोपरि १२-१३ खृष्टशताब्दीयेन निश्चलकरेण 'रत्नप्रभा'नाम्नी टीका प्रणीता। रत्नप्रभामुपजीव्य १५-१६ खृष्टशताब्दीयेन शिवदासेन पुनरपि चिकित्सासंग्रहस्य 'तत्त्वचन्द्रिका'नाम्नी काचिदपरा टीका प्रणीता, द्रव्यगुणसंग्रहस्यापि टीकैका तेन प्रणीता। अनयोष्टीकयो र्ये ये ग्रन्था ग्रन्थकाराश्चोल्लिखिता वर्त्तन्ते, कालपरिचयेन सह नामानि तेषामधस्ताच्चरकप्रस्तावे प्रदर्शितान्येव। गजपतिप्रतापरुद्रस्य सभापण्डित औत्कलवैद्यः १४-१५ खृष्टशताब्दीयो विश्वनाथसेन श्चक्रकृतसर्व्वसारसंग्रहस्य 'सारसंग्रहा'भिधानां टीकामकरोत्। अयं विश्वनाथसेनः साहित्यदर्पण-पथ्यापथ्यनिघण्टुकृद्-विश्वनाथकविराजादर्व्वाचीन एव।

(११) एकादशखृष्टशताब्दीयेन ब्रह्मदेवेन सुश्रुतटिप्पणं व्याख्या च रचिते। केचिदाहु र्यदसौ व्याख्या सौश्रुतवार्त्तिकत्वेन प्रसिद्धिं लेभे। अधुना ग्रन्थस्य विलोपः सञ्जातः। डल्लणकृतनिबन्धसंग्रहे ब्रह्मदेवस्य नामोल्लेख उपलभ्यते।

(१२) एकादशखृष्टशताब्द्यां माधवब्रह्मवादिना सुश्रुतस्य टिप्पणं प्रणीतम्। निबन्धसंग्रहस्य प्रारम्भे तन्नाम डल्लणेनोदलेखि। टिप्पणग्रन्थस्तु नेदानीमुपलभ्यते।

(१३) श्रूयते हि वङ्गसेनस्य पित्रा गदाधरेण सुश्रुतसंहिताया एको व्याख्याग्रन्थो रचित इति। अधुना सा व्याख्या विलोपमाप्ता। ग्रन्थान्तरे तु तत उद्धृतानि वचांस्युपलभ्यन्ते। माधवनिदानस्य मधुकोषटीकायां १२-१३ खृष्टशताब्दीयेन विजयरक्षितेनोक्तम्—'तत्रैवं निदानशब्दनिरुक्तिः—निर्दिश्यते व्याधिरनेनेति निदानम्। दिशेः पृषोदरादित्वाद् रूपसिद्धिरिति गदाधर इती'ति ( वोम्बाइ सं ५ पृष्ठे )। श्रूयते हि यदनेन चिकित्सा-सारसंग्रहनामको वैद्यकग्रन्थः समारब्धो न तु समापितः इति। वङ्गसेनेन तु स ग्रन्थः समाप्तिं नीतः। वङ्गसेनकृतचिकित्सासारसंग्रहश्चक्रपाणिकृत-ग्रन्थस्य प्रपञ्च एव। गदाधर एकादशखृष्टशताब्दीय आसीत्।

(१४) एकादशद्वादशखृष्टशताब्द्योरन्तर्वर्त्तिनि कुतश्चित् समये गयि-सेनेन काचित् सौश्रुतव्याख्या प्रणीता। ग्रन्थस्तु नेदानीमुपलभ्यते। निबन्धसंग्रहे डल्लणेन ग्रन्थकारस्य नानावचांसि समुद्धृतानि। एष कण्ठहार इत्युपाधिभूषित आसीत्। ग्रन्थकारो वङ्गदेशस्थ-विषपाड़ा'ग्रामे प्रतिवसति स्म। उक्तं च भरतमल्लिकेन वैद्यकुलतत्त्वे—

'एकः पुन र्गयीसेनो भेदेनैव चतुर्विधः।
विषपाडाभवः श्रेष्ठस्तिकायिपुरजस्तथा॥'

इति। गयीसेनो गयिसेनस्य नामान्तरम्।

(१५) त्रयोदशखृष्टशताब्द्यां डल्लणाचार्य्येण सुश्रुतस्य 'निबन्धसंग्रह-नाम्नी व्याख्या प्रणीता। प्रामाणिकत्वाद् ग्रन्थोऽयं वैद्यवृन्दै र्नितरा-माद्रियते। अस्य पूर्व्वपुरुषा भादानकप्रदेशे मथुरासमीपवर्त्तिनि 'अङ्काला'-ग्रामे वसतिं कृतवन्तः। तत्रैव भरतपालनामधेयात् पितुरयं समजनि।

पित्रादीनां नामसु सत्स्वपि पालान्तेषु डल्लणो जात्या ब्राह्मण एव। अस्य पिता भरतपालो नृपालदेवस्य सभां भूषयामास। अस्यैव वैद्यबहुले राज्ये डल्लणोऽपि कृतावस्थान आसीत्। स च नृपालसूनोः सहदेवस्य शासनावसरे राजवैद्यस्य श्लाघ्यपदमाधत्त।

डल्लणस्य यथार्थं नाम डल्हण इति, यथा कल्हणः, विल्हणः, शिल्हण इत्यादि। कैश्चिदयं डल्लनत्वेनाभिहितः। मन्ये—डल्लणादि तस्योपनाम कल्पितनाम लोकविश्रुतनाम वेति। कीथ्महोदयस्य मतेन डल्लणस्त्रयोदशखृष्टशताब्दीय एव। अस्माकमप्यापाततस्तथैव सिद्धान्तः। संस्कृत-साहित्येतिहासे श्रीजाह्नवीचरणभौमिकमहोदयस्त्वेनं चक्रपाणेः पूर्वभव इति कृत्वा दशमैकादशखृष्टशताब्दीयमाह। तन्न। निबन्धसंग्रहस्य प्रारम्भे लिखितमस्ति—'तेन (डल्लणेन) श्रीजेज्जटं टीकाकारं श्रीगय-दासभास्करौ पञ्जिकाकारौ श्रीमाधव-ब्रह्मदेवादींष्टिप्पणकारांश्चोपजीव्या-युर्व्वेदशास्त्रसुश्रुतव्याख्यानाय निबन्धसंग्रहः क्रियते ; यद्यपि सुश्रुतोपरि जेज्जटादिभिष्टीका रचितास्तथाऽपि तासां कुशाग्रीयधियामभिगम्यत्वादल्प-मेधसामनुग्रहाय सुश्रुतं व्याख्यातुकामस्य मम प्रयासः सफलः' इति। जेज्जटो नवमदशमखृष्टशताब्दीयः। न्यायचन्द्रिकाऽपरनामक-बृहत्पञ्जिका-कारो गयदासो नयपालपितु र्दशमैकादशखृष्टशताब्दीयमहाराजमहीपाल-स्यान्तरङ्गवैद्य आसीत्। सुश्रुतपञ्जिकाकृद्भास्करभट्ट एकादशखृष्टशताब्द्यां धाराधिपते र्भोजदेवस्य सभामलंचकार। श्रीमाधव-ब्रह्मदेवौ सुश्रुतटिप्पण-कारावेकादशखृष्टशताब्दीयावास्ताम्। एकादशखृष्टशताब्दीयानां व्याख्या-तॄणां ग्रन्था येन दृष्टाः पठिताश्च स कथं दशमैकादशखृष्टशताब्दीयो भवितुमर्हति ? न केवलमेतावन्मात्रम्, स एकादशद्वादशखृष्टशताब्दीययोः सुश्रुतव्याख्याकृतो वङ्गदेशस्थ'विषपाड़ा'ग्रामवास्तव्यस्य गयिनो (शारीर १।१) मेदिनीकोषकृतो मेदिनीकरस्य च नामनी उल्लिलेख। किमधिकं

वाच्यम्, द्वादशखृष्टशताब्दीयस्य महाराजलक्ष्मणसभ्यस्य ब्राह्मणसर्व्वस्वादि-कृतो हलायुधस्यापि नाम तेन परिज्ञातमासीत्। पक्षान्तरे पुनरायुर्व्वेद-रसायननाम्न्यां हृदयटीकायां त्रयोदशचतुर्दशखृष्टशताब्दीयेन हेमाद्रिणा डल्लणस्य नाम जगृहे। एवंविधं वस्तुवृत्तमुपलभ्य भौमिकोक्तिरस्माभिः प्रत्याख्यायते।

आर्य्यावर्त्तनिवासोऽपि डल्लणाचार्य्यो वङ्गभाषायामभिज्ञ आसीत्। निबन्धसंग्रहे तेन लिखितम्—'वन्धूकः' बाँदुलीति लोके ( ६३ पृ० ), 'पनसः' काटाल इति लोके ( ४८८ पृ० ), 'तरक्षुः' ( hyena ) जरष इति लोके ( ४७९ पृ० ), 'अश्वतरः' वेसर इति लोके ( ४७३ पृ० ), 'पानीयविड़ालः' भोदड़ इति लोके ( ४७५ ), 'क्रौञ्चः' कोचवक इति लोके ( ४७६ पृ० ), 'शम्बुकः' शामुक इति लोके ( ४७७ पृ० ), 'पाठीनः' वोयाल इति लोके ( ४७८ पृ० ), 'अश्वगन्धा' योयान इति भाषा, गयी तु यमानीत्याह ( ८९५ पृ० ) इत्यादि। अस्मन्मते तु वन्धूको माध्याह्निको वृक्षः ( 'दुपहरिया' in Hindi ), क्रौञ्चः Curlew, पाठीनः सहस्रदंष्ट्रमत्स्यविशेषो गुग्गुलु र्वा।

(१६) पञ्चाधिकैकोनविंशतितमे खृष्टवर्षे ( १९०५ खृष्टाब्दे ) गङ्गाधरशिष्येण हाराणचन्द्रचक्रवर्त्तिमहोदयेन सुश्रुतसंहितायाः सूत्र-स्थानमारभ्य शारीरस्थानपर्य्यन्तं सुश्रुतार्थसन्दीपनभाष्यं प्रणीतम्। तदनन्तरं सप्तदशाधिकोनविंशतितमे खृष्टवर्षे तद्भाष्यस्य पूर्णता तेनैव समापादिता।

सुश्रुतसंहितायाः शारीरस्थानीयप्रथमाध्याये सांख्यदर्शनस्य विविधा विषया वैद्यकशास्त्रस्य भित्तिमूलतयोपन्यस्ताः। इमे च विषया न प्रतिसंस्कृता इत्यनुमीयते। सांख्यस्य ये ग्रन्था इदानीमुपलभ्यन्ते ते चरक-सुश्रुतयो र्गोचरीभूता नासन्। यत ईश्वरकृष्णाचार्य्यस्य सांख्यसप्ततिः

पुरातन्यपि तयो र्महता कालेनार्व्वाचीना भवति। सांख्यप्रवचनसूत्रं कपिलमुने र्नाम्ना प्रचरद्रूपमपि सांख्यसप्ततेः सहस्रेण वर्षैः परवर्त्त्येव। यानि पुनः कपिलस्मृतानि तत्त्वसमाम्नायसूत्राणि सम्प्रत्यपि दृश्यन्ते तान्येव चरकसुश्रुतौ नूनमवैक्षिषाताम्। महाभारत-षष्टितन्त्रादिग्रन्था अपि ताभ्यां पठिता इत्यनुमीयते।

इदानीन्तनकाले कस्मिंश्चित् सांख्यनिबन्धादौ सुश्रुतस्य नाम सिद्धान्तो वा न गृहीते। 'यत्परः शब्दः स शब्दार्थ' इति न्यायेन सांख्याचार्य्यैस्तस्य चिकित्सकस्य मतवाद उपेक्षितः। अपि च, चिकित्साधिकृतपुरुषार्थं तत्त्वान्तर-परिणामस्य यावदिष्टं तावन्मात्रं परिगृह्य शिष्टांशवर्जनेन सुश्रुतः सांख्याङ्गं व्यच्छिनत्। सम्प्रदायश्चाह—'भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते' इति। अयमाशयः। पञ्चमहाभूतेभ्यः शरीरिणां शरीराणि भवन्ति, तेभ्यः परं चिकित्साचिन्ता नास्तीति। नैतावता पीडा निष्क्रामति, परं तु स्वकीयसम्प्रदायानुरोधेन स सांख्यस्य क्षुरणाद् वर्त्मनो व्यतीयाय। तथापि कालार्कभक्षितं विविधं सांख्यग्रन्थमुपजीव्य सुश्रुतसंहितायां ये केचित् सांख्यवादा उपस्थापितास्ते सर्व्वे सांख्याचार्य्याणामनुपादेया अपि प्राश्निकानां चित्तमाक्रष्टुं नितरां पर्य्याप्ता भवन्ति। अत ऐतिहासिके ग्रन्थे सुश्रुतोक्तानां सांख्यविषयकसूत्राणां समालोचना प्रासङ्गिकी भवितुमर्हति।

**१। 'अथ सर्व्वभूतचिन्ताशारीरं व्याख्यास्यामः। सर्व्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमस्पष्टरूप-मखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम्।'**

'अथे'त्यारम्भे माङ्गल्ये वा। 'सर्व्वभूतचिन्ताशारीरं व्याख्यास्याम' इत्यनेन भूतादिशरीरिसमवायं चिकित्साधिकृतं कर्म्मपुरुषं वर्णयितुं प्रस्तौति, न तु तस्य दुःखवहुलसंसारं दुःखवहुलसंसारहेतुं दुःखवहुलसंसारहानं दुःखवहुलसंसारहानोपायं वा। सर्व्वभूतचिन्ताप्रधानं शारीरं सर्व्वभूत-चिन्ताशारीरमिति मध्यपदलोपिकर्म्मधारयः। ततः सृष्टिवीजं चिन्त्यते—'सर्व्वभूतानां कारणमकारणमि'ति। अनेन सकलकारणत्वोपपत्तये प्रधान-नित्यत्वमुपपाद्यते। सर्व्वभूतानां त्रयोविंशतितत्त्वानां कारणं मूलोपादानं प्रधानमकारणं मूलशून्यमित्यर्थः। अनवस्थादोषापत्त्या कारणस्य कारणान्तर-कल्पना न न्याय्येत्यभिप्रायः। तथा हि वाचस्पतिमिश्रः—'मूलप्रकृते-र्मूलान्तरं नास्ति, अनवस्थाप्रसङ्गात्, न चानवस्थायां प्रमाणमस्ती'ति। उक्तं च तन्त्रान्तरे—'मूले मूलाभावादमूलं मूलमि'ति। एतदुक्तं भवति—मूलप्रधानस्य मूलाभावात् कारणाभावादमूलं यत् कारणं तन्मूलम्, तदेव प्रधानमिति। 'सत्त्वरजस्तमोलक्षणमस्पष्टरूपमि'ति। सत्त्वरजस्तमोलक्षणं त्रैगुण्यस्वरूपमित्यर्थः। अस्पष्टरूपं प्रमाणै र्दर्शयितुमयोग्यमित्यभिप्रायः। श्रूयते हि—'सत्वरजस्तमोगुणानां साम्यदशायां विकाराः समा अस्पष्टाश्च भवन्ति, वैषम्यदशायां ते विषमाः स्पष्टाश्च भवन्ती'ति। विषमाः प्रमाणै र्दर्शयितुं योग्या इत्यर्थः। 'अखिलस्य जगतः सम्भवहेतुः' सकलभावाना-मभिव्यक्तिकारणमित्यर्थः। 'अव्यक्तमि'ति। केचिदाहुरनभिव्यक्तगुण-विभागादव्यक्तमिति। अन्ये पुन र्यथा लोके घटपटादयो व्यज्यन्ते तथा न व्यज्यत इत्यव्यक्तमिति। अव्यक्तं प्रधानं प्रधत्ते सर्व्वमात्मनि जगतः सम्भवहेतुत्वादिति व्युत्पत्तेः। 'एकम्' समानमद्वितीयं वा। कोषश्च—

'एकोऽल्पान्यप्रधानेषु प्रथमे केवले तथा।
साधारणे समानेऽपि संख्यायां च प्रयुज्यते ॥'

इति। उक्तं च सांख्यकारिकायामीश्वरकृष्णेन—

'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥'

इति । व्यतिरेकमुखेणैतदुक्तं भवति—अव्यक्तमहेतुमदकारणत्वात्, नित्यं चिरस्थायित्वात्, व्यापि सर्व्वत्र विद्यमानत्वात्, निष्क्रियं संसरणरहितत्वात्, एकं समानरूपत्वात्, अनाश्रितमनाधारत्वात्, अलिङ्गं लयरहितत्वात्, निरवयवममूर्त्तत्वात्, स्वतन्त्रमनपेक्षत्वात् स्वापेक्षत्वाद्वेति । 'बहूनां क्षेत्रज्ञाना-मधिष्ठानम्'—बहुकर्म्मपुरुषाणामाश्रय इत्यर्थः । क्षेत्रं प्रकृतिविकृति-संघातरूपं भोगायतनं शरीरमात्मत्वेन यो जानाति स क्षेत्रज्ञः । गीयते च—

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥'

इति । तेषामधिष्ठानमाश्रय इत्यर्थः । 'समुद्र इवौदकानां भावानामि'ति । उक्तमर्थं दृष्टान्तेन स्फुटीकरोति—समुद्र इति । समुद्रो यथा नद-नदीनां चरमाश्रयो भवति तद्वदित्यर्थः । स्मर्य्यते हि महाभारते शान्तिपर्व्वणि—

'यतः सृष्टानि तत्रैव तानि यन्ति पुनः पुनः ।
महाभूतानि भूतेभ्यः सागरस्योर्म्मयो यथा ॥'

( १६४।६ ) इति । अतो हि चकितमभिधत्ते चरकसंहितायां भगवां-श्चरकोऽपि—

'अव्यक्ताद् व्यक्ततां याति व्यक्तादव्यक्ततां पुनः ।
रजस्तमोभ्यामाविष्टश्चक्रवत् परिवर्त्तते ॥'

( चरकीय-शारीरे १।३१ ) इति । प्रथमसूत्रव्याख्या समाप्ता । शिष्टं च डल्लणे द्रष्टव्यम् । १ ।

२। 'तस्माद्व्यक्तान् महानुत्पद्यते तल्लिङ्ग एव। तल्लिङ्गाच्च महतस्तल्लिङ्ग एवाहंकार उत्पद्यते। स च त्रिविधो वैकारिकस्तैजसो भूतादिरिति। तत्र वैकारिकादहंकारात् तैजससहायात् तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते। तद् यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति। तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि। इतराणि पञ्च कर्म्मेन्द्रियाणि। उभयात्मकं मनः।'

'तस्मादव्यक्तादि'ति। पूर्व्वसूत्रोक्तादव्यक्तादित्यभिप्रायः। उक्तं च सम्प्रदायविद्भिरभियुक्तैः—

'वैकारिकस्तैजसश्च भूतादिश्चैव तामसः।
त्रिविधोऽयमहंकारो महतः संबभूव ह॥
तैजसादिन्द्रियाणि स्यु र्देवा वैकारिका दश।
एकादशं मनश्चात्र स्वगुणेनोभयात्मकम्॥'

इति। अयमाशयः। वैकारिकः सात्त्विक इन्द्रियादिः, भूतादिस्तामसो महाभूतहेतुभूततन्मात्रहेतुः, तैजसो राजसस्तूभयोरनुग्राहक इति। 'महानुत्पद्यते तल्लिङ्ग एवे'ति। महान् प्रथमो विकारः सामान्याहंकारो बुद्धिलक्षणः सत्त्वरजस्तमःस्वभावो लिङ्गापरपर्य्याय उत्पद्यते। हेतुत्वात् प्रधाने लीयते लयं गच्छतीति लिङ्गः सामान्याहंकारो महान् वा। 'तल्लिङ्गाच्च महतस्तल्लिङ्ग एवाहंकार उत्पद्यत' इति। तस्मात् सामान्याहंकारापरपर्य्यायान्महत एक एवाहंकारो देहात्माभिमानहेतुत्वाद् विशेषाहंकारापरपर्य्याय उत्पद्यते। सोऽपि हेतुत्वान्महति लीयते लयं

गच्छतीति लिङ्गः। स चाभिमान इत्युच्यते। तथा हि तत्त्वकौमुद्याम्—'अभिमानोऽहंकारः। यत् खल्वालोचितं मतं चात्राहमधिकृतः, शक्तः खल्वहमत्र, मदर्थां एवामी विषयाः, मत्तो नान्योऽत्राधिकृतः कश्चिदस्त्यतोऽहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वादहंकारस्तमुपजीव्य हि बुद्धिरध्यवस्यति कर्त्तव्यमेतन्मयेती'ति (२४ का०)। अहंकारादीनधिकृत्य कनिष्कसभ्यः प्रथमखृष्टशताब्दीयः कविरश्वघोष आह—

'विप्रत्ययादहंकारात् सन्देहादभिसंप्लवात्।
अविशेषानुपायाभ्यां सङ्गादभ्यवपाततः॥
तत्र विप्रत्ययो नाम विपरीतं प्रवर्त्तते।
अन्यथा कुरुते कार्य्यं मन्तव्यं मन्यतेऽन्यथा॥
ब्रवीम्यहमहं वेद्मि गच्छाम्यहमहं स्थितः।
इतीहैवमहंकारस्त्वनहंकार वर्त्तते॥
यस्तु भावानसंदिग्धानेकीभावेन पश्यति।
मृत्पिण्डवदसन्देह सन्देहः स इहोच्यते॥
य एवाहं स एवेदं मनो बुद्धिश्च कर्म्म च।
यश्चैवैष गणः सोऽहमिति यः सोऽभिसंप्लवः॥
अविशेषं विशेषज्ञः प्रतिबुद्धाप्रबुद्धयोः।
प्रकृतीनां च यो वेद सोऽविशेष इति स्मृतः॥'

(बुद्धचरितम्—१२।२४-२६) इति। इदानीं प्रकृतमनुसरामः। 'स च त्रिविधो वैकारिकस्तैजसो भूतादिरिती'ति। स च विशेषाहंकारः सत्त्वप्रधानत्वाद् वैकारिको रजःप्रधानत्वात् तैजसस्तमःप्रधानत्वाद् भूतादिरिति त्रैविध्येन परिभाषित इत्यर्थः। 'तत्र वैकारिकादहंकारात् तैजससहायादि'त्यादि। तमोलेशानुविद्धादित्यपि वक्तव्यम्। यतस्त्रयाणां

गुणानां समावेशादृते वस्तूत्पत्तेरसम्भवः। स्मर्य्यते हि विष्णुगीताया-मनुगीताऽपरनाम्न्याम्—

'अन्योन्यमिथुनाः सर्व्वे सर्व्वे सर्व्वत्रगामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे।
उभयोः सत्त्वरजसो र्मिथुनं तम उच्यते॥
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते।' इति।

अवधातव्यं च सुभाषितं सांख्यवृद्धानाम्—'अन्योन्याश्रयाश्च गुणा' इति। इत्यास्ताम्। इदानीं प्रकृतमनुसरामः। तत्र सात्त्विकाहंकाराद् रजः-सहचरितात् तमोमात्रयाऽनुविद्धात् तल्लक्षणानि व्यवसायात्मकत्वेन प्रकाश-लक्षणान्येकादशेन्द्रियाणि समुत्पद्यन्ते श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तो-पस्थपायुपादमनांसीति। तत्र पूर्व्वाणि पञ्च बुद्धीन्द्रियाणी'ति। तत्र पूर्व्वाणि श्रोत्रादीनि घ्राणपर्य्यन्तानि पञ्च बुद्धीन्द्रियाणि शब्दस्पर्शरूपरसगन्धान् बुध्यन्ते। तत्रापि बुध्यते श्रोत्रं स्वं विशेषशब्दम्, त्वक् स्पर्शम्, चक्षू रूपम्, जिह्वा रसम्, घ्राणं गन्धं चेति। 'इतराणि पञ्च कर्म्मेन्द्रियाणी'ति। इतराणि मनोवर्जितानि शिष्टानि वागादीनि पादपर्य्यन्तानि स्वं स्वं कर्म्म कुर्व्वन्तीति कर्म्मेन्द्रियाणीत्युच्यन्ते। तत्र च वाक् स्वं वचनमुच्चारयति, हस्तौ ग्रहणादिकर्म्म कुरुतः, उपस्थ आनन्दं करोति प्रजोत्पत्त्या, पायु र्मलादीनामुत्सर्गं करोति, पादौ विहरणादिकर्म्म कुरुत इति। 'उभयात्मकं मन' इति। मन उभयात्मकं यतस्तद् बुद्धीन्द्रियेषु बुद्धीन्द्रियं कर्म्मेन्द्रियेषु कर्म्मेन्द्रियं भवति, यथा कश्चिदाचार्य्यः शिष्यमध्ये स्थित आचार्य्यत्वं करोति, मल्लमध्ये स्थितश्च मल्लत्वं भजत इति। मनुनाप्युक्तम्—'एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकमि'ति। द्वितीय-सूत्रव्याख्या समाप्ता। २।

**३। 'भूतादेरपि तैजससहायात् तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते। तद् यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तेषां विशेषाः शब्दस्पर्शरूपरसगन्धास्तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः। एवमेषा चतुर्व्विंशतिर्व्याख्याता।'**

'भूतादेरपी'ति। भूतादिसंज्ञितात् तामसाहंकारादपीत्यर्थः। 'तैजससहायादि'ति। रजःसहचरितात्। तैजससंज्ञिताद् राजसाहंकारसहायादित्यभिप्रायः। सत्त्वमात्रयाऽनुविद्धादित्यपि वक्तव्यम्। भवति च तत्रागमः—

'अन्योन्यमिथुनाः सर्व्वे सर्व्वे सर्व्वत्रगामिनः। * * *
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते॥'

(विष्णुगीता) इति। आदि र्नोपलभ्यते प्रारम्भाभावात्, सम्प्रयोगः संयोगो नोपलभ्यते नित्यप्राप्तत्वात्, अत एव वियोगः संविभागोऽपि नोपलभ्यत इत्यर्थः। 'तल्लक्षणान्येवे'ति। विमोहन-प्रवर्त्तन-प्रकाशलक्षणान्येवेत्यर्थः। 'पञ्चतन्मात्राण्युत्पद्यन्त' इति। व्योमादिक्षितिपर्य्यन्तानां सूक्ष्मावस्थारूपाणि पञ्चतन्मात्राणि जायन्त इत्यर्थः। कानि च तानि? तदाह—'शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्त्रमात्रमि'ति। सा मात्रा यस्मिंस्तत् तन्मात्रम् (the state of being that)। 'तेषां विशेषाः शब्दस्पर्शरूपरसगन्धा' इति। तेषामविशेषाणामित्यर्थः। अविशेषा अनुद्भूतस्वभावत्वाद् बाह्येन्द्रियैरग्राह्या ग्राह्यास्तु सिद्धप्रणिधानै र्योगिभिरेव। अविशेषाणि तन्मात्राणि क्वचिदपि सुखदुःखादिभि र्विशेष्टुं न शक्यन्ते सूक्ष्मत्वात्। ये तु विशेषाः शब्दादयस्ते पुनरनुभवयोग्यैः सुख-

२७

दुःखमोहरूपै र्धर्म्मैं र्विशिष्यन्त एव। अयमाशयः। शब्दतन्मात्राद-विशिष्टशब्दस्वरूपमात्रमुपलभ्यते न तु विशिष्टाः शब्दा उदात्तानुदात्तस्वरित-षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादादय इति शब्दतन्मात्रमविशेषम्, उदात्तादिशब्दस्तु तद्विशेषः। स्पर्शतन्मात्रादविशिष्टस्पर्शस्वरूपमात्रमुप-लभ्यते न तु विशिष्टा मृदुकठिनकर्कशपिच्छिलशीतोष्णादय इति स्पर्शतन्मात्र-मविशेषम्, मृदुकठिनादिस्पर्शस्तु तद्विशेषः। रूपतन्मात्रादविशिष्टरूप-स्वरूपमात्रमुपलभ्यते न तु विशिष्टाः शुक्लकृष्णरक्तपीतादय इति रूपतन्मात्र-मविशेषम्, शुक्लादिरूपं तु तस्य विशेषः। रसतन्मात्रादविशिष्टरसस्वरूपमात्र-मुपलभ्यते न तु विशिष्टाः कटुतिक्तकषायमधुराम्ललवणादय इति रसतन्मात्र-मविशेषम्, कट्वादिरसस्तु तस्य विशेषः। गन्धतन्मात्रादविशिष्टगन्धस्वरूप-मात्रमुपलभ्यते न तु विशिष्टाः कटुतिक्तादय इति गन्धतन्मात्रमविशेषम्, कट्वादिगन्धस्तु तस्य विशेषः। उक्तं च—

'कटुतिक्तकषायाद्याः सौरभ्येऽपि प्रकीर्त्तिताः'

इति। 'तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः' इति। तेभ्यः पञ्चभ्यः शब्दतन्मात्रादिभ्य एकैकोत्तरवृद्ध्या व्योमादिपञ्चमहाभूतानि जायन्ते। तत्र शब्दतन्मात्रादेकशब्दगुणमाकाशमवकाशदानेन वर्त्तमानं शिष्टानां चतुर्णां पृथिव्यप्तेजश्राकाशानामुपकरोति। शब्दतन्मात्रानुप्रविष्टात् प्रतिसंहिताद्वा स्पर्शतन्मात्राद् द्विगुणो वायु र्वहनभावेन वर्त्तमानः शिष्टानां चतुर्णां पृथिव्यप्तेजश्राकाशानामुपकुरुते। ताभ्यां शब्दस्पर्शतन्मात्राभ्यामनु-प्रविष्टात् प्रतिसंहिताद्वा रूपतन्मात्रात् त्रिगुणं तेजस्तपनभावेन वर्त्तमानं शिष्टानां चतुर्णां पृथिव्यब्वाय्वाकाशानामुपकुरुते। त्रिभिः शब्दस्पर्शरूप-तन्मात्रैरनुप्रविष्टात् प्रतिसंहिताद्वा रसतन्मात्राच्चतुर्गुणा आपो द्रवभावेन वर्त्तमानाः शिष्टानां चतुर्णां पृथिवीतेजोवाय्वाकाशानामुपकुर्व्वते। चतुर्भिः शब्दस्पर्शरूपरसतन्मात्रैरनुप्रविष्टात् प्रतिसंहिताद्वा गन्धतन्मात्रात् पञ्चगुणा

पृथिवीधारणभावेन वर्त्तमाना शिष्टानां चतुर्णामपूतेजोवाय्वाकाशानामुपकरोति। 'एषा चतुर्विंशति र्व्याख्याते'ति। अस्मिन् सूत्रे पञ्चमहाभूतानि पञ्चतन्मात्राणि, पूर्व्वसूत्रे पञ्चकर्म्मेन्द्रियाणि पञ्चबुद्धीन्द्रियाणि मनोऽहंकारो महानव्यक्तं चेति चतुर्विंशतितत्त्वानि व्याख्यातानीत्यभिप्रायः। डल्लणाचार्य्य आह—'पातञ्जलमतानुसारिणश्च शब्दादिभ्य एव व्योमादीनामुत्पत्तिमिच्छन्ती'ति। सत्यम्। पातञ्जलाः पुन र्महतोऽहंकारस्य पञ्चतन्मात्राणां चोत्पत्तिमिच्छन्ति। सांख्यास्तु नैवं समामनन्ति। त एवमाहुः—'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृते र्महान्, महतोऽहंकारः, अहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियम्, तन्मात्रेभ्यः स्थूलभूतानीति चतुर्विंशति र्गण' इति। (१।६१ सांख्यसूत्रं द्रष्टव्यम्)। सुश्रुतोऽपि सांख्यमतानुसारेण महतस्त्रिविधोऽहंकारो वैकारिकस्तैजसो भूतादिश्चेति स्वीकृत्य वैकारिकादेकादशेन्द्रियाणां भूतादेः पञ्चतन्मात्राणां चोत्पत्तिमवधार्य्य तैजसमुभयोरनुग्राहकत्वेन कल्पयतीति विशेषः। अन्यत् समानम्। तृतीयसूत्रव्याख्या समाप्ता। ३।

**४। 'तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः। कर्म्मेन्द्रियाणां यथासंख्यं बचनादानानन्दविसर्गविहरणानि। अव्यक्तं महानहंकारः पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः, शेषाः षोडश विकाराः। स्वः स्वश्चैषां विषयोऽधिभूतम्। स्वयमध्यात्ममधिदैवतं च। अथ बुद्धे र्ब्रह्मा। अहंकारस्येश्वरः। मनसश्चन्द्रमाः। दिशः श्रोत्रस्य। त्वचो वायुः। सूर्य्यश्चक्षुषोः। रसनस्यापः। पृथिवी घ्राणस्य।**

**वचसोऽग्निः। हस्तयोरिन्द्रः। पादयो र्विष्णुः। पायो र्मित्रम्। प्रजापतिरुपस्थस्येति। तत्र सर्व्व एवाचेतन एष वर्गः, पुरुषः पञ्चविंशतितमः, स च कार्य्यकारणसंयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्याय प्रवृत्तिमुपदिशन्ति क्षीरादींश्चात्र हेतूनुदाहरन्ति।'**

'बुद्धीन्द्रियाणां शब्दादयो विषया' इति। अयमर्थः। बुध्यत इति बुद्धिः। 'इन्'-इति विषयाणां नाम। तानिनो विषयान् प्रति द्रवन्तीति 'इन्द्रियाणि' इति वैदान्तिकाः। शाब्दिकास्तु रूढिरेषा चक्षुरादीनां करणानाम्। तथा हि पाणिनिः—'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' (५।२।९३) इति। बुद्धेरिन्द्रियाणि श्रोत्रादीनि घ्राणपर्य्यन्तान्येव। तत्र श्रोत्रं येन श्रूयते, त्वग् यया स्पृश्यते, चक्षुर्येन दृश्यते, जिह्वा यया रस्यते, घ्राणं येन घ्रायते। पर्य्यालोचनेन शब्दस्पर्शरूपरसगन्धान् पञ्चविषयान् बुध्यन्त इति शब्दादयो बुद्धीन्द्रियाणां विषया भवन्ति। 'कर्म्मेन्द्रियाणां यथासंख्यं वचनादानानन्दविसर्गविहरणानी'ति। क्रियत इति कर्म्म। कर्म्मण इन्द्रियाणि वागादीन्येव। तत्र वाग् वक्ति, हस्तौ दत्त आददाते च, उपस्थ आनन्दं करोति प्रजोत्पत्त्या, पायु र्विसृजति, पादौ विहरतः। अत एव वचनादीनि कर्म्मेन्द्रियाणां यथासंख्यं विषया भवन्ति। 'अव्यक्तमि'ति। अनभिव्यक्तसत्त्वगुणादिविभागत्वादव्यक्तं (the indiscrete principle) प्रकृतिरिति यावत्। अस्य पर्य्यायाः—प्रकृतिरलिङ्गं केवलं प्रधानमविद्या माया चेति। विचित्रसृष्टिकरत्वात् प्रकृतिरित्युच्यते। तथा हि ब्रह्मवैवर्त्ते—

'प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता ।।'

इति । न क्वापि लयं गच्छतीत्यलिङ्गम् । केवलमधिकृत्य भगवानुशना स्मरति—

'गुणसाम्ये स्थितं तत्त्वं केवलं त्विति कथ्यते ।
केवलादेतदुद्भूतं जगत् सदसदात्मकम् ।।' इति ।

प्रधत्ते सर्व्वमात्मनीति प्रधानम् । अविद्या ज्ञानविरोधित्वात् । माया विसदृशप्रतीतिसाधकत्वात् । 'महानि'ति । महानिति सामान्याहंकारो बुद्धिलक्षणः समष्टिरूपविराट्कार्य्यत्वात् । 'अहंकार' इति । स हि वैकारिकतैजसभूतादिसंज्ञितो विशेषाहंकारो देहात्माभिमानहेतुत्वेन श्रोताऽहं वक्ताऽहमित्यादिव्यष्टिरूपजीवकार्य्यत्वात् । 'पञ्चतन्मात्राणी'ति । शब्दतन्मात्रादीनि प्रागेव यानि विवृतानि । तथा हि स्मर्य्यते विष्णुपुराणे—

'तस्मिंस्तस्मिंस्तु तन्मात्रा स्तेन तन्मात्रता स्मृता ।
न शान्ता नापि ते घोरा न मूढाश्चाविशेषिणः ।।'

इति । 'अष्टौ प्रकृतय' इति । तत्राव्यक्तापरपर्य्याया प्रकृतिरेका सत्त्वरजस्तमसां साम्यरूपा स्वयमचेतनाऽनेकचेतनभोगापवर्गार्था नित्या सर्व्वगता सततविक्रिया न कस्यचिद् विकृतिरपि तु सर्व्वभूतानां परमकारणमेव । महदाद्याः सप्त प्रकृतिविकृतयः । ते हि प्रकृतयोऽन्येषां कारणतया, विकृतयश्च कार्य्यतया । तत्र महान् विशेषाहंकारं जनयन् प्रकृतिः, अव्यक्तादुत्पद्यमानो विकृतिः । विशेषाहंकारस्तन्मात्राण्येकादशेन्द्रियाणि च जनयन् प्रकृतिः, महत उत्पद्यमानो विकृतिः । शब्दस्पर्शरूपरसगन्धाः पञ्च यथाक्रमं व्योमानिलानलजलोर्व्व्याख्यानि पञ्च महाभूतानि जनयन्तः प्रकृतयः, विशेषाहंकारादुत्पद्यमाना विकृतयः । ननु, कथं तर्हि सर्व्वा अपि प्रकृतित्वेनोच्यन्ते ? नैष दोषः, ताः सर्व्वाः प्रकुर्व्वन्तीति मनसि

निधाय तत्त्वसमाम्नाये भगवता कपिलेनापि तद्वादन्यायेन सूत्रितम्— 'अष्टौ प्रकृतय' इति। एवमष्टौ प्रकृतयो व्याख्याताः। 'शेषाः षोडश विकारा' इति। तत्र व्योमादिपञ्चमहाभूतानि, श्रोत्रादीनि पञ्चबुद्धीन्द्रियाणि, वागादीनि पञ्चकर्म्मेन्द्रियाणि, सर्व्वसहकारि मनश्चेति केवलविकाराः। अयं षोडशको गणो विकारोऽन्यस्मादुत्पन्नो न हि ततोऽन्यदुत्पद्यत इति। 'स्वः स्वश्चैषां विषयोऽधिभूतमि'ति। महदहंकारेन्द्रियाणां ये व्यवसायास्त आधिभौतिका इत्यर्थः। तत्र महतः समष्ट्यहंकाररूपस्य विषयो व्यष्ट्य-हंकारोत्पादकत्वमधिभूतम्, अहंकारस्य व्यष्ट्यहंकाररूपस्य विषय इन्द्रिय-तन्मात्रोत्पादकत्वमधिभूतम्। तत्रापि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां विषयाः शब्दस्पर्शरूपरसगन्धा अधिभूतम्, वाक्पाणिपादपायूपस्थानां विषया वचनादानविहरणविसर्गानन्दा अधिभूतम्, मनसस्तु संकल्पो विषय एवाधि-भूतम्। 'स्वयमध्यात्ममधिदैवतं चे'ति। महदहंकारेन्द्रियाणीत्येतानि त्रयोदश स्वयमध्यात्मसंज्ञितानि भवन्ति, या याः पुन र्देवता मूलप्रकृतेः सत्त्वप्रधाना उत्पन्नास्तास्ता एव तेषां महदादीनामाधिदैवत्यमापन्ना बुद्ध्यादीनां स्फूर्त्तिकरणत्वादिति। 'अथे'ति यथा। 'बुद्धे ब्रह्मे'ति। बुद्धिरध्यात्मं व्यष्ट्यहंकारोत्पादकत्वरूपं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवत-मिति। अत्र सांख्यवृद्धानामानुकूल्यमस्ति। वेदान्तिनस्तु बृहस्पतिराधि-दैविक इत्याहुः। तथा हि पठ्यते—

'बुद्धिरध्यात्ममित्युक्तं बोद्धव्यं तत्र यद् भवेत्।
अधिभूतं तदित्युक्तमधिदैवं बृहस्पतिः॥'

इति।

'अहंकारस्येश्वर' इति। अहंकारोऽध्यात्मम्, इन्द्रियतन्मात्रोत्पादकत्वरूप-महंकर्त्तव्यमधिभूतम्, ईश्वरस्तत्राधिदैवतमित्यर्थः। ईश्वरो महेश्वरो रुद्रापर-पर्य्याय एव। तथा हि वेदान्तिनः—

'अहंकारस्तथाऽध्यात्ममहंकर्त्तव्यमेव च ।
अधिभूतं तदित्युक्तं रुद्रस्तत्राधिदैवतम् ॥' इति ।

शान्तिपर्व्वणि तु स्मर्य्यते—

'अहंकारस्तथाऽध्यात्मं सर्व्वसंसारकारकम् ।
अभिमानोऽधिभूतं च रुद्रस्तत्राधिदैवतम् ॥'

( मोक्ष० ३१३ अ० ) इति । 'मनसश्चन्द्रमा' इति । मनोऽध्यात्मं संकल्पयितव्यमधिभूतं चन्द्रमास्तत्राधिदैवतम् । अत्र वेदान्तभारतयोरप्यानुकूल्यमस्ति । कथं चन्द्रमा अधिदैवतं मनसो न तु सूर्य्यादीनां कश्चिदन्य इति चेत् ? उच्यते । श्रूयते हि पुरुषसूक्ते—'चन्द्रमा मनसो जात' इति । एवं च मनसो जातत्वान्मनोऽधिष्ठातृत्वं चन्द्रस्य समुपपन्नं भवतीति । 'दिशः श्रोत्रस्ये'ति । अत्र सांख्यवेदान्तौ चाहतुः—

'श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यं शब्दलक्षणम् ।
अधिभूतं तदित्युक्तं दिशस्तत्राधिदैवतम् ॥' इति ।

आम्नायते हि पुरुषसूक्ते—'दिशः श्रोत्रादि'ति ( ऋक् १०।९०।१४ ) । अत एव पुरुषश्रोत्रादुत्पन्नानां दिशां जीवश्रोत्राधिष्ठितत्वं नानुपपन्नमेव । 'त्वचो वायुरि'ति । अत्रापि सांख्यवेदान्तयोरानुकूल्यमस्ति । तत्रोक्तम्—

'त्वगध्यात्ममिति प्रोक्तं स्पर्ष्टव्यं स्पर्शलक्षणम् ।
अधिभूतं तदित्युक्तं वायुस्तत्राधिदैवतम् ॥' इति ।

यद्यपि 'ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्नि'ति श्रुतेरोषधिवनस्पतीनां त्वग्देवतात्वं वक्तुमुचितम्, तथापि वृक्षाणां वाय्वधिष्ठातृत्वं श्रुत्यादिप्रसिद्धमिति मनसि निधाय पूर्व्वाचार्य्यैर्वायोस्त्वग्देवतात्वमुक्तम् । स्मरति च भगवान् व्यासोऽपि मोक्षधर्म्मे—

'त्वगध्यात्ममिति प्राहुस्तत्त्वबुद्धिविशारदाः ।
स्पर्शमेवाधिभूतं तु पवनश्चाधिदैवतम् ॥'

( ३१३ अ० ) इति। अत्र स्पर्शशब्दः क्लीवलिङ्ग एव। ननु, 'घञवन्ता' इति स्मृतेरसौ पुंलिङ्ग एव ज्ञायते। सत्यम्। नेयं स्मृतिस्तु भगवद्-व्यासादीनधिकृत्य कृता। ते हि भगवन्तो वाग्विषये स्वतन्त्रा एव। 'सूर्य्यश्चक्षुषोः' इति। अयं चाधिभूतादिभावो वेदान्तेऽपि वर्णितः। तत्रोच्यते—

'चक्षुरध्यात्ममित्युक्तं द्रष्टव्यं रूपलक्षणम्।
अधिभूतं तदित्युक्तमादित्योऽत्राधिदैवतम्॥'

इति। स्मर्य्यते चाश्वमेधिके—

'तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते।
अधिभूतं ततो रूपं सूर्य्यस्तत्राधिदैवतम्॥'

( ४२ अ० ) इति। श्रूयते हि बृहदारण्यके—'इदं चक्षुः सोऽसावादित्यः' इति। श्रुत्यन्तरं च—'आदित्यश्चक्षु र्भूत्वाऽक्षिणी प्राविशदि'ति। आम्नायते च ऋग्वेदे—'चक्षोः सूर्य्योऽजायत' इति। अत एव पुरुषचक्षुषः सकाशा-दुत्पन्नस्य सूर्य्यस्य जीवचक्षुषोरधिष्ठातृत्वं युक्तमेव भवति। 'रसनस्यापः' इति। इत्थं च सांख्यवृद्धा आहुः—'जिह्वाऽध्यात्मम्, रसयितव्यमधि-भूतम्, आपस्तत्राधिदैवतमि'ति। श्रुतिस्मृती अपि मतमेतदुपोद्बलयतः। 'पृथिवी घ्राणस्ये'ति। एवं च सांख्याचार्य्यैरुक्तम्—'नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतमि'ति। वेदान्त चोच्यते—

'घ्राणमध्यात्ममित्युक्तं घ्रातव्यं गन्धलक्षणम्।
अधिभूतं तदित्युक्तं पृथिव्यत्राधिदैवतम्॥'

इति। स्मर्य्यते च मोक्षधर्म्मे—

'घ्राणमध्यात्ममित्याहु र्यथाश्रुतिं निदर्शिनः।
गन्ध एवाधिभूतं तु पृथिवी चाधिदैवतम्॥'

( ३१३ अ० ) इति। 'वचसोऽग्निरि'ति। एवं च वेदान्तिन आहुः—

'वागध्यात्ममिति प्रोक्तं वक्तव्यं शब्दलक्षणम् ।
अधिभूतं तदित्युक्तं वह्निस्तत्राधिदैवतम् ॥'

इति । श्रूयते च बृहदारण्यके—'वाक् सोऽयमग्निः' इति ( ३।१।३ ) । श्रुत्यन्तरं च—'अग्नि र्वाग् भूत्वा मुखं प्राविशत्' इति । अत एवाग्ने र्जीवानां वाद्व्यधिष्ठितत्वं न्याय्यं प्रतीयते । 'हस्तयोरिन्द्रः' इति । सांख्यवृद्धैरप्युक्तम्—'पाणिरध्यात्मम्, आदानमधिभूतम्, इन्द्रस्तत्राधिदैवतमि'ति । ब्रह्मवादिनश्चाहुः—

'हस्तावध्यात्ममित्युक्तमादातव्यं च यद् भवेत् ।
अधिभूतं तदित्युक्तमिन्द्रस्तत्राधिदैवतम् ॥' इति ।

स्मर्य्यते चाश्वमेधिके—

'हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः ।
अधिभूतं च कर्म्माणि शक्रस्तत्राधिदैवतम् ॥'

( ४२ अ० ) इति । 'इन्द्रो मे बले श्रितः' इति श्रुतिस्वारस्यादिन्द्रस्य बलाधिष्ठातृत्वं प्रसिद्धम् । 'बाहो र्बलमि'ति श्रुत्या बलस्य बाहुधर्म्मत्वादिन्द्रस्य हस्ताधिदेवत्वं युक्तं भवति । 'पादयो र्विष्णुः' इति । ब्रह्मवादिनश्चैवमाहुः—

'पादावध्यात्ममित्युक्तं गन्तव्यं तत्र यद् भवेत् ।
अधिभूतं तदित्युक्तं विष्णुस्तत्राधिदैवतम् ॥'

इति । स्मर्य्यते च मोक्षधर्म्मे—

'पादावध्यात्ममित्याहु र्ब्राह्मणास्तत्त्वदर्शिनः ।
गन्तव्यमधिभूतं च विष्णुस्तत्राधिदैवतम् ॥'

इति । श्रूयते हि—'इदं विष्णु र्वि चक्रमे त्रेधा नि दधे पदम्' (ऋ० १।२२। १७ ) इति । तत्र निरुक्तकारो भगवान् यास्क आह—'यदिदं किं च तद् विक्रमते विष्णुरि'ति । भवति च तत्र श्रुत्यनुवादिनी स्मृतिरपि—

'क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः' ( शान्ति प० ) इति। अत एव विष्णो विक्रमणकर्त्तृत्वात् क्रमणहेतुपादाधिष्ठातृत्वं तस्य सङ्गतं भवति। 'पायो र्मित्रमि'ति। सुहृदि मित्रशब्दस्य क्लीबत्वम्। तथा हि कोषः—'मित्रं सखा सुहृदि'ति। प्रयोगश्च—'एकक्रियं भवेन्मित्रमि'ति। पायोर्मित्रमित्यत्र सुहृद्वचनस्य मित्रशब्दस्य नास्तीह कश्चिदुपयोग इति कृत्वा निबन्धसंग्रहे डल्लणाचार्य्य आह—'मित्रोऽधिदैवतमि'ति। स्मर्य्यते चाश्वमेधिके—

'अवाग्गतिरपानश्च पायुरध्यात्ममुच्यते।
अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम्॥'

( ४२ अ० ) इति। मित्र इति सूर्य्यनाम। मनुभाष्ये चोपलभ्यते—'पायो र्मित्रः' ( ४।१५२, १२।७२ ) इति। वेदान्तेऽपि दृश्यते—

'पायुरिन्द्रियमध्यात्मं विसर्गस्तत्र यो भवेत्।
अधिभूतं तदित्युक्तं मृत्युस्तत्राधिदैवतम्॥'

इति। सांख्ये चोक्तम्—'पायुरध्यात्मम्, उत्स्रष्टव्यमधिभूतम्, मृत्युस्तत्राधिदैवतमि'ति। मृत्यु र्यमवचन इति पौराणिकाः। स्मर्य्यते च—

'यमाय धर्म्मराजाय मृत्यवे चान्तकाय चे'ति।

सम्भाव्यते च यत् सांख्यानुवर्त्तिना सुश्रुतेनापि 'पायो र्मृत्युरि'त्युक्तम्, प्रमादात्तु लिखितं 'पायो र्मित्रमि'ति। यद्वा भवतु, विशेषज्ञा अत्र प्रमाणम्। 'प्रजापतिरुपस्थस्ये'ति। निबन्धसंग्रहे डल्लणाचार्य्य आह—'उपस्थोऽध्यात्मम्, आनन्दनीयमधिभूतम्, प्रजापतिरधिदैवतमि'ति। अत्र सांख्यवेदान्तयोरप्यानुकूल्यमस्ति। अधिभूतत्वे पुन र्भारतेन सह तयोरनैक्यं दृश्यते। यत आश्वमेधिके भगवान् व्यासः स्मरति—

'प्रजनः सर्व्वभूतानामुपस्थोऽध्यात्ममुच्यते।
अधिभूतं तथा शुक्रं दैवतं च प्रजापतिः॥'

इति। 'आपो रेतो भूत्वा शिश्नं प्राविशन्नि'तिश्रुतेरत्र शुक्राधिभूतत्वमुपस्थस्य स्मर्य्यत एव। ननु, 'आपो भूत्वे'ति श्रुतिस्वारस्यादप्स्वेव देवताभावना युक्तेति चेत्? मैवम्। यतः सृष्टेरनुरोधात् तदनुग्राहिणः प्रजापतेरधिदेवत्वं न्याय्यं भवति। 'तत्र सर्व्व एवाचेतन एष वर्गः' इति। कारणरूपा प्रकृतिरचेतनेति तस्याः कार्य्यजातस्य महदादेरप्यचेतनत्वात् प्रकृतिमहदहंकारेन्द्रियतन्मात्रमहाभूतानीत्येष चतुर्विंशतितत्त्वात्मको वर्गो राशिरचेतन एवेत्याशयः। 'पुरुषः पञ्चविंशतितमः' इति। प्रागेव चतुर्विंशतितत्त्वानि व्याख्याय सम्प्रति संख्यापूरणार्थं पुरुषतत्त्वमुक्तम्। एतत्तु न सृष्टिक्रमार्थं बोध्यम्। यतोऽसौ पुरुषो नित्यो निर्गुणो निर्धर्म्मको निष्क्रियश्चैतन्यमात्रवपुश्चेति श्रूयते। केचिदाहुः—'पुरुषो निःसङ्गोऽप्युपरक्तोऽविवेकात्, उपरागस्तु न जपास्फटिकयोरिव परं त्वभिमानः' ('fancy) इति। एवं चाष्टौ प्रकृतयः षोडश विकाराः पुरुषश्चेति पञ्चविंशतितत्त्वानि भवन्ति, यत्रोक्तम्—

'पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥'

इति। पुनरप्युक्तम्—

'हस पिव लल मोद नित्यं विषयानुपभुञ्ज कुरु च मा शङ्काम्।
यदि विदितं ते कापिलमतं तत् प्राप्स्यसे मोक्षसौख्यं च॥'

इति। 'स च कार्य्यकारणसंयुक्तश्चेतयिता भवती'ति। स च पुरुषः कार्य्यं गुणवैषम्यमूलकमहदादिलिङ्गं कारणं गुणसाम्यमूलकमलिङ्गमित्युभाभ्यां संयुक्तः संसृष्टश्चेतयिता चेतनायुक्तो भवति। इह चेतयितृशब्दः कर्त्तृभोक्त्रादिवचनः सांख्यप्रकरणत्वात्। न हि पुरुषश्चेतनावान् भवति तस्य चिन्मात्रस्वरूपत्वात्। किं तर्हि? गुणकर्त्तृत्वे स उदासीनोऽपि कर्त्तैव भवति, न तु परमार्थतः कर्त्तेति। अत्र दृष्टान्तो यथा—केचिच्चौरा

द्रव्यसम्भारमपहृत्य कृतकार्य्याः कुतश्चिदाश्रमे प्रच्छन्ना अवातिष्ठन्त। तत्रैव कस्मिंश्चिद् विटपितले माण्डव्यनामा मुनिः समाहित आसीत्। तत आरक्षिभिश्चौरा गृहीताः, कृतापराधैः सह मुनिश्च गृहीतः सोऽपि चौर इति। अचौरो मुनिश्चौरसंसर्गेण यथा चौरतया प्रतीतस्तथा गुणाः कर्त्तारस्तैः संसृष्टः पुरुषोऽकर्त्ताऽपि कर्तृसंसर्गात् कर्त्तेव प्रतीयत इति। तदुक्तं सांख्यकारिकायामीश्वरकृष्णाचार्य्येण—

'तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीनः ॥' (२०) इति।

इदं तात्पर्य्यम्—यथा पुरुषसंयोगादचेतनं लिङ्गं चेतनावदिव भवति, तथा चैतन्यावभासितगुणात्मकलिङ्गसंयोगादकर्त्ताऽपि कर्त्तेव भवति, यथा कश्चित् स्वामी स्वयमयोद्धाऽपि यौधभृत्यसंयोगाद् योद्धेति व्यपदिश्यते, तथा पुरुषोऽप्युपचारेण कर्त्तेति। ननु, सचेतनस्य बुद्धिपूर्व्विका प्रवृत्ति र्दृश्यते, प्रधानमचेतनमेव। तथापि सम्प्रदायविद्भिः काचित् प्रवृत्तिस्तत्र समारोपिता। किन्तु किमर्थं तत् प्रवर्त्तते? एवं प्राप्ते चाह—'सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ती'ति। सम्प्रदायविद इत्यध्याहारः। उपदिशन्ति वदन्ति। दिशिरुच्चारणक्रिय इति पस्पशायां पतञ्जलिः। पुरुषकैवल्यार्थं पुरुषविमोक्षनिमित्तमित्यर्थः। एतदुक्तं भवति यत् पुरुषविमोक्ष-निमित्तमज्ञस्यापि प्रधानस्य प्रवृत्तिरस्तीति। ननु, विनैव दृष्टान्तं कथ-मिदमास्थेयं यदचेतनमपि प्रधानमौत्सुक्यनिवृत्तये पुरुषमोक्षार्थं प्रवर्त्तत इत्याशङ्क्य पुनरप्याह—'क्षीरादींश्च हेतूनुदाहरन्ती'ति। सम्प्रदायविद इत्युपस्कारः। तत्र क्षीरादीनां दृष्टान्तमपि दर्शयन्तीत्यर्थः। अयमाशयः। केवलं सचेतने प्रवृत्तिरेवंविधा सम्भवतीत्ययं नियमो नाव्यभिचारी भवति, लोकेऽचेतनानामपि प्रवृत्तिदर्शनात्। तथा हि तृणोदकं गवाशितं पीतं च क्षीरभावेन परिणम्य वत्सस्य पुष्टिं कर्त्तुं प्रवर्त्तते, कृत्वा च स्वतो

निवर्त्तते। एवं प्रधानमचेतनमपि पुरुषस्य विमोक्षार्थं शब्दादिविषय-भोगोपलब्धिलक्षणं गुणपुरुषान्तरोपलब्धिलक्षणं चेति द्विर्गतं पुरुषार्थं कर्त्तुं प्रवर्त्तते, कृतार्थं च निवर्त्तते। 'क्षीरादीनि'त्यस्मिन्नादिपदं डल्लणाचार्य्य एवं व्याचष्टे—'आदिशब्दाच्च यथैकान्ते कमनीयकामिनीसुरतमहोत्सवे तत्सुखातिशयोत्पादनार्थं रेतः प्रवर्त्तते तद्वदित्यर्थ' इति। चतुर्थसूत्र-व्याख्या समाप्ता। ४।

**५। 'अत ऊर्द्ध्वं प्रकृतिपुरुषयोः साधर्म्म्यवैधर्म्म्ये व्याख्यास्यामः। तद् यथा। उभावप्यनादी, उभावप्यनन्तौ, उभावप्यलिङ्गौ, उभावपि नित्यौ, उभावप्यपरौ, उभौ च सर्व्वगताविति। एका तु प्रकृतिरचेतना त्रिगुणा बीज-धर्म्मिणी प्रसवधर्म्मिण्यमध्यस्थधर्म्मिणी चेति। बहवश्च पुरुषाश्चेतनावन्तोऽगुणा अबीजधर्म्मिणोऽप्रसवधर्म्मिणो मध्यस्थधर्म्मिणश्चेति। तत्र कारणानुरूपं कार्य्यमिति कृत्वा सर्व्व एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ति तदञ्जनत्वात् तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्तीत्येके भाषन्ते।**

'अत ऊर्द्ध्वम'तः परम्। 'प्रकृतिपुरुषयोरि'ति परवल्लिङ्गता द्वन्द्वत्वात् (पा० २।४।२६)। 'साधर्म्म्यवैधर्म्म्ये व्याख्यास्यामः' इति। सारूप्य-वैरूप्ये विवरिष्यामः। 'उभावप्यनादी' इति। आदिः प्रारम्भः कारणं वा नास्ति ययोस्तावनादी उत्पत्तिशून्याविति यावत्। 'उभावप्यनन्ता-

वि'ति। अन्तः परिच्छेदो नास्ति ययो स्तावनन्तौ। अलिङ्गाविति। न क्वापि लयं गच्छतो यौ तावलिङ्गौ। 'नित्यावि'ति। शाश्वतकालावस्थितौ चिरस्थायिनौ वा। कुतश्चिदनुत्पन्नत्वान्नाशरहिताविल्यभिप्रायः। 'यत् सृष्टं तन्नष्टमि'ति श्रुतेः। 'अपराविति' नास्ति परः श्रेष्ठो याभ्यां तावपरौ प्रकृतिपुरुषौ। 'सर्व्वगतावि'ति। सर्व्वं गतौ प्राप्ताविति सर्व्वत्र प्राप्तौ सर्व्वव्यापिनावित्यर्थः। साधर्म्यमुक्त्वा वैधर्म्यं वक्तुमारभते। 'एका तु प्रकृतिरचेतने'ति। तु पक्षव्यावृत्तये। असहाया प्रकृतिरज्ञेति भावः। असहायत्वमेकजातीयक्रियाकरणे सहायान्तरराहित्यम्। पुरुषस्य तु विजातीयत्वात् तत्संसर्गित्वे नानुपपत्तिः। 'त्रिगुणे'ति। त्रयः सत्त्वादयो गुणा यस्याः सा त्रिगुणा तत्स्वभावत्वात्। 'बीजधर्म्मिणी'ति। विशेषेण कार्य्यरूपेण जायत इति वीजं कारणम्। विपूर्व्वकाज्जनधातो र्डः; 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति वे र्दीर्घत्वम्। बीजस्य धर्म्मः प्ररोहित्वं बीजधर्म्मस्तद्वतीति बीजधर्म्मिणी (पा० ५।२।१३२)। एवमुत्तरत्र। अयमाशयः। महदादिविकाराणामाधारभूतेति प्रकृति र्बीजधर्म्मिणीत्युच्यते। 'प्रसवधर्म्मिणी'ति। प्रसव उत्पादनम्। महदादिविकाराणामुत्पादकत्वात् प्रकृतिः प्रसवधर्म्मिणीत्युच्यते। 'अमध्यस्थधर्म्मिणी'ति। मध्यस्थ उदासीनः। पुरुष उदासीनो बन्धमोक्षयोः। अनुदासीना तु प्रकृतिस्तयोः। अत एव पुरुषो मध्यस्थधर्म्मी, किन्तु प्रकृतिरमध्यस्थधर्म्मिणी भवति। ननु, कथमसौ प्रकृति र्बध्यते मुच्यते वा? धर्म्मो वैराग्यमैश्वर्य्यमधर्म्मोऽज्ञानमवैराग्यमनैश्वर्य्यं चेति सप्तभी रूपैः स्वं बध्नाति प्रकृतिः, विमोचयति चात्मानं गुणपुरुषान्तरोपलब्धिं प्रति सैकरूपेण ज्ञानेनेति। 'बहवश्च पुरुषा' इति। जननमरणकरणादीनां प्रत्येकनियमादनेकपुरुषा एव। जन्मादिव्यवस्थायां श्रुतिश्चाभिधत्ते—

'अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥'

( श्वेत० ४।५ ) इति । 'अचेतनावन्त' इति । प्रकृतिपुरुषयोः सारूप्य-वैरूप्यप्रदर्शनाय पूर्व्वोक्तियोजनया पुरुषसारूप्यं व्याख्येयम् । प्रकृतिरचेतना पुरुषास्तु चेतनावन्तश्चिच्छक्तिमन्तः । 'अगुणा' इति । प्रकृतिः सगुणा पुरुषास्त्वगुणा गुणलेशविरहिताः । 'अवीजधर्म्मिण' इति । प्रकृति र्वीज-धर्म्मिणी पुरुषास्त्ववीजधर्म्मिणः परिणामकारणशून्याः । 'अप्रसवधर्म्मिण' इति । प्रकृतिः प्रसवधर्म्मिणी पुरुषास्त्वप्रसवधर्म्मिण उत्पादकवृत्तिराहि-त्यात् । 'मध्यस्थधर्म्मिण' इति । एतद्व्याख्याने यत्नो न कृतः प्रागुक्तत्वेन फल्गुप्रयोजनत्वात् । 'तत्र कारणानुरूपं कार्य्यमिति कृत्वा' इति । तत्र कारणस्य गुणात्मिकायाः प्रकृतेरनुरूपं सदृशं कार्य्यं गुणात्मकमविशिष्टं लिङ्गम्, तस्यापि लिङ्गस्य गुणात्मककारणरूपस्य कार्य्यं परिणामक्रमनियमाद् गुणात्मकः किञ्चिदविशिष्टोऽहंकारादिषड्विधतत्त्वान्तरपरिणाम इति मनसि निधाय । 'सर्व्व एवैते विशेषाः सत्त्वरजस्तमोमया भवन्ती'ति । गुणोपरक्तषड्विशेषेभ्यः परिणामक्रमनियमेन विविक्ताः षोडशविकाररूपा विशेषा अपि गुणाक्ता भवन्ति । 'तदञ्जनत्वात् तन्मयत्वाच्च तद्गुणा एव पुरुषा भवन्ती'ति । उपाधे र्गुणसम्पर्काद् गुणप्राचुर्य्याच्च पुरुषा निर्गुणा अपि सोपाधिकत्वाद् गुणवन्त इव प्रतीयन्ते । तदुक्तम्—

'यथा विशुद्धः स्फाटिकोऽलक्तकादिसमीपतः ।
तत्तद्वर्णयुता भान्ति वस्तुतो नास्ति रञ्जनम् ॥' इति ।

'इत्येके भाषन्त' इति । दार्शनिकानां सांख्यविद एवं वदन्तीत्यर्थः । 'एके मुख्यान्यकेवला' इति कोषः । पञ्चमसूत्रव्याख्या समाप्ता । ५ ।

६। 'वैद्यके तु—

स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा ।
परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः ॥
तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् ।
तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥
तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्व्वदा ।
भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते ॥

यतोऽभिहितं तत् सम्भवद्रव्यसमूहो भूतादिरुक्तः, भौतिकानि चेन्द्रियाण्यायुर्व्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः। भवति चात्र—

इन्द्रियेणेन्द्रियार्थं तु स्वं स्वं गृह्णाति मानवः ।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥

इति ।'

पूर्व्वसूत्रेण प्रकृतिपुरुषयोः साधर्म्म्यवैधर्म्म्ये उपपाद्य इदानीं स्वाभिमतं दर्शयितुमेतस्य सूत्रस्य पातनिकामाह—'वैद्यके त्वि'ति। स्वभावमीश्वरं··· पृथुदर्शिनः' इति। पृथुदर्शिनो विपुलदर्शिनस्त आहुः—'स्वभावादिषट्सहाया प्रकृति र्भूतानां प्रभवाप्यययोः कारणमिति। गीयते च—

'कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥'

(१३।२०) इति। तत्र प्रकृतेरेकस्या उपादानकारणत्वमन्येषां षण्णां निमित्तकारणत्वमिति विमर्शः। गयी चाह—'वैद्यके तु विपुलदर्शिनः

स्वभावादीनां षण्णां प्रकृतित्वं प्रतिपादयन्ति। ते च स्वभावादयः समुच्चयेन जगदुत्पत्तौ कारणभूताः। तत्रापि प्रकृतिपरिणामस्योपादानकारणत्वम्, स्वभावादीनां च पञ्चानां निमित्तकारणत्वमि'ति। जेज्जटेन पुनरीश्वरं विहाय स्वभावादयः प्रकृतेरष्टरूपायाः पर्य्यायत्वेनाभिहिताः। निबन्धसंग्रहे डल्लण आह—'स्वभावादिभेदभिन्नाया षड्विधाया अपि प्रकृतेरुदाहरणान्यभिहितानी'ति। अथ स्वभावादिश्लोकस्य पदार्थविवेचने यत्नः क्रियते। 'स्वभावमि'ति। यद्यपि प्रकृतिशब्दस्य स्वभावकारणोभयवाचित्वमेव तन्त्रान्तरे परिकल्पितम्, तथापीह प्रकृतिः स्वभावसहायेति बोध्यम्। कुतः ?

'न कर्त्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः।
न कर्म्मफलसंयोगं स्वभावश्च प्रवर्त्तते॥'

(५।१४) इत्यादिगीतावाक्यस्मरणात्। स्वो भावः स्वभावः पदार्थ उपाधिरित्यर्थः। स्वभावः खलु वस्तूनां प्रतिनियता शक्तिरपां द्रवत्वमिव वह्नेरौष्ण्यमिव वा। तदाह बुद्धचरिते प्रथमखृष्टशताब्दीयः कविरश्वघोषः—

'अस्तीति केचित् परलोकमाहु र्मोक्षस्य योगं न तु वर्णयन्ति।
अग्ने र्यथा ह्यौष्ण्यमपां द्रवत्वं तद्वत् प्रवृत्तौ प्रकृतिं वदन्ति॥
केचित् स्वभावादिति वर्णयन्ति शुभाशुभं चैव भवाभवौ च।
स्वाभाविकं सर्व्वमिदं च यस्मादतोऽपि मोघो भवति प्रयत्नः॥
यदिन्द्रियाणां नियतः प्रचारः प्रियाप्रियत्वं विषयेषु चैव।
संयुज्यते यज्जरयार्त्तिभिश्च कस्तत्र यत्नो ननु स स्वभावः॥
कः कण्टकस्य प्रकरोति तैक्ष्ण्यं विचित्रभावं मृगपक्षिणां वा।
स्वभावतः सर्व्वमिदं प्रवृत्तं न कामकारोऽस्ति कुतः प्रयत्नः॥'

(६।५७-५६, ६२) इति। स्वभावमुद्दिश्य वैद्यकानामपि शास्त्रेषु भणितम्—

'सन्निवेशः शरीराणां दन्तानां पतनोद्गमौ ।
तलेष्वसम्भवो यश्च रोम्णामेतत् स्वभावतः ॥'

इति । अपि च—

'धातुषु क्षीयमाणेषु वर्द्धेते द्वाविमौ सदा ।
स्वभावं प्रकृतिं कृत्वा नखकेशाविति स्थितिः ॥'

इति । पुनरपि भणितम्—

'निद्राहेतुस्तमः सत्त्वं बोधने हेतुरुच्यते ।
स्वभाव एव वा हेतु र्गरीयानेव कीर्त्त्यते ॥'

इति । पुनरपि च—

'स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः ।
स्वभावाद् गुरवो माषा वराहमहिषादयः ॥'

इति । स्वभावस्य प्रकृतित्वेन ग्रहणपक्षे तु सांख्यवैद्यकयोः शाश्वतिको विरोधः संवृत्तः । तथा हि सांख्यवृद्धैरुद्घुष्यते—स्वभावो नाम नास्ति कश्चित् स्वतन्त्रः पदार्थो यतः प्रभवाप्ययसङ्गतिः स्यात्, तस्माद् यो ब्रूते प्रकृतेः सहकारित्वेन स्वभावस्तयोः कारणविशेष इति तन्मिथ्यैव भवति ; वस्तुतस्तु धर्म्मिस्वरूपमात्रो हि यो धर्म्मः प्रकृते र्गुणविकारात् प्रपञ्च्यते स एव स्वभाव इति ।

'ईश्वरमि'ति ।

'ईच्छापूर्व्वककर्त्तृत्वं प्रभुत्वमसरूपता ।
निमित्तकारणेष्वेव नोपादानेषु कर्हिचित् ॥'

इत्यादिविवक्षितत्वात् केचित् प्रतिपद्यन्ते यत् सकलभूतभावानां जनयित्रीं प्रकृतिमधिष्ठाय स ईश्वर एव जगत् सृजतीति । श्रुतिरपिताननुकूलयति—

'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ।
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्य्यते पुनः ॥

सूयते पुरुषार्थांश्च तेनैवाधिष्ठितं जगत् ।
गौरनाद्यन्तवती सा जनित्री भूतभाविनी ॥'

इति । श्रुत्यन्तरं च—

'अस्मान् मायी सृजते विश्वमेतत् ।
मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्व्वमिदं जगत् ॥'

इति । श्रुत्यन्तरमपि—

'कुतः केशान् कुतः स्नाव कुतो अस्थीन्याभरत् ।
अङ्गा पर्व्वाणि मज्जानं को मांसं कुत आभरत् ॥'

( अथर्व्व स० ११।१०।१२ ) इति । आङ्पूर्व्वाद्धरते र्लङि तिप्याभरदिति । 'हृग्रहो र्भश्छन्दसि हस्य' (पा० ८।२।३२ वा०) इति हृधातो र्हस्य भत्वम् । भवति च तत्र पारमर्षं सूत्रम्—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' ( वे० १।४।२३ ) इति । एतदुक्तं भवति—ईश्वरो न केवलं निमित्त-कारणं परं तु प्रकृतिरुपादानकारणं चेति । कुतः ? 'येनाश्रुतं श्रुतं भवती'ति प्रतिज्ञा, 'यथैकेन मृत्पिण्डेन सर्व्वं मृन्मयं विज्ञातं स्यादि'त्यादि-दृष्टान्तस्तयोरनुपरोधादबाधादित्यर्थः । नासदीयसूक्ते चाम्नायते—

'नासदासीन्नो सदासीत् तदानीं
नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्म्म-
न्नम्भः किमासीद् गहनं गभीरम् ॥
तम आसीत् तमसा गूळ्हमग्रे
ऽप्रकेतं सलिलं सर्व्वमा इदम् ।
तुच्छयेनाभ्वपिहितं यदासीत्
तपसस्तन् महिनाऽजायतैकम् ॥' इति ।

आ समन्ताद् भवतीत्याभु व्यापकं यदेकमखण्डं तुच्छयेन, योपजनश्छान्दसस्तुच्छेनेति लोके। तुच्छेन तुच्छकल्पनेन सदसद्विलक्षणेन भावरूपाज्ञानेनेत्यर्थः। अपिहितमासीदाच्छादितमासीत्। तत् सर्व्वं तपसः स्रष्टव्यपर्य्यालोचनरूपस्य सङ्कल्पस्य महिना माहात्म्येन अजायत समुदपादि नामरूपाभ्यां विस्पष्टमभ्यव्यज्यतेत्याशयः। श्रुत्यन्तरं च—'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति··· तद्ब्रह्मे'ति। एतदुक्तं भवति—स्वयमपरिच्छिन्नः परमात्मा स्वलीलोपकरण-निमित्तोपादानवस्तुशरीरतया तन्मयः स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्य्यन्तमात्मानं स्वमायया तच्छरीरकं परिणमय्य स्थावरादि-जीवान्तजगद्रूपेणावतिष्ठत इति। ऋग्वेदोऽपि लौकिकप्रश्नप्रतिवचनन्यायेन ब्रह्मापरनाम्नि परमेश्वरे जगतो जन्मस्थितिभङ्गानाह—

'किं स्विद् वनं क उ स वृक्ष आस
यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा पृच्छतेदु तद्
यदध्यतिष्ठद् भुवनानि धारयन्॥' (१०।८१।३) इत्यादि।

अस्य साक्षात्प्रतिवचनं तैत्तिरीयब्राह्मणेऽपि दृश्यते—

'ब्रह्म वनं ब्रह्म स वृक्ष आसीद्
यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा विब्रवीमि वो
ब्रह्माध्यतिष्ठद् भुवनानि धारयन्॥' (२।८।६) इति।

भगवान् मनुरपि स्मरति—

'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्व्वतः॥

ततः स्वयंभू र्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः ॥
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।
सर्व्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥
सोऽभिध्याय शरीरात् स्वात् सिसृक्षु र्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥'

(१।५-८) इति । अत एव ब्रह्मापरपर्य्याय ईश्वरो हि जगतो निमित्तकारण-मुपादानकारणं च भवत्येव। एतत् सर्व्वं विभाव्य केचिदीश्वरमेव प्रकृतित्वेन मन्यन्ते । कैश्चित् पुनः पातञ्जलसांख्यप्रवचनोक्तः पञ्चविंशतितमः पुरुष ईश्वरत्वेन गृहीतः । नैतत् सुष्ठूक्तं भवति श्रुत्यादिविरोधात् । श्रुतिश्च शुकरहस्योपनिषदि—

'कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वरः'

इति । भवति च तदनुवादिनी स्मृतिरपि—

'कर्म्मात्मा पुरुषो योऽसौ मोक्षबन्धैः स युज्यते'

इति । ईश्वरः प्रकृतेरधिष्ठाता प्रवर्त्तकश्चेत्यभ्युपगम्य केचिद् वैद्यकास्तस्य निमित्तकारणमात्रत्वं स्वीकुर्व्वन्तस्तात्पर्य्यत आहुः—स्वार्थं परार्थं वा चेतनः प्रवर्त्तते, अचेतना तु प्रकृतिरेवं भवितुं नार्हति, तस्मादस्ति प्रकृतेरधिष्ठाता चेतन ईश्वरो य एव तत्कार्य्योपजनने निमित्तकारणं भवति, यतश्च तस्यां चेतनवत् प्रवृत्ति र्निवृत्ति र्वोपयुज्यत इति । तेषां शास्त्रेष्वपि स ईश्वरो वह्निरूपो जीवितादेः कारणत्वेन समुदाहृतः, यथा—

'जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः'

इत्येवमादौ । श्रुतिरपि वैद्यकराद्धान्तं न प्रतिकूलयति । तथा हि—'तमो वा इदमेकमास तत्परे स्यात् तत्परेणेरितं विषमत्वं प्रयाति' (समाधिपादस्थ-

२४ सूत्रीययोगवार्त्तिकम् ) इत्यादिश्रुतिष्वेव प्रकृते गुणवैषम्यमीश्वर-प्रयत्नेनैव श्रूयते। भवति च तदनुवादिनी स्मृतिरपि—

'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥'

इति। अत एव श्रुतिस्मृतिविशेषेष्वपि प्रकृते गुणक्षोभ ईश्वरेच्छातो भवतीति स्पष्टमुपलभ्यते।

सांख्यास्तु नैतत् सहन्ते। त एवमाहुः—ईश्वरो यदि कारणं स्यात् तर्हि निर्गुणादीश्वरान्निर्गुणा एव प्रजाः स्युः, न चैवम्। तस्मादीश्वरः किमपि कारणं न भवति। एवं पञ्चविंशतितमः पुरुषोऽपि बोद्धव्य इति। एतदेव नितरामाक्षिप्य सर्व्वदर्शनसंग्रहकृता माधवाचार्य्येण निरीश्वरं सांख्यमतमेवं कटाक्षितम्—'यस्तु परमेश्वरः करुणया प्रवर्त्तक इति परमेश्वरास्तित्ववादिनां डिण्डिमः स गर्भस्रावेण गत' इति। यद्वा भवतु, वेदान्ततात्पर्य्यत इदमपि वक्तुं शक्यते यद् ब्रह्मणोऽभिन्ननिमित्तोपादानत्व-मभ्युपगन्तव्यमिति। यत 'एकमेवाद्वितीयम्', 'सोऽकामयत बहु स्यां प्रजायेये'त्येवमादिश्रुतेः पदार्थान्तरस्यात्यन्ताभावात् स्वात्मन एव कृत्स्नं जगत् प्रपञ्च्यते; प्रजायेयेत्युत्तमपुरुषश्रुत्या स्वस्यैव बहुभावावस्थानमुप-पद्यते, 'सोऽकामयते'ति श्रुतेश्च तस्य कामयितृत्वात् कुलालादिवन्निमित्तत्व-मपि युज्यते चेति।

'कालमि'ति। कालो हि सर्व्वभूतानां विपरिणामहेतुः कालयति सर्व्वेषां परिणामं नयतीति व्युत्पत्तेः। अथर्व्ववेदे चाम्नायते—

'कालो भूमिमसृजत काले तपति सूर्य्यः।
काले ह विश्वा भूतानि काले चक्षुर्वि पश्यति ॥
काले मनः काले प्राणः काले नाम समाहितम्।
कालेन सर्व्वा नन्दन्त्यागतेन प्रजा इमाः ॥' ( १९।५३।६-७ )

इति। आथर्व्वणानां कालसूक्तमुपजीव्य तात्पर्य्यत एव वैद्यका आहुः—कालो नाम सर्व्वोत्पत्त्यादिमतां जन्यजनकानां कारणविशेष इति। स्मर्य्यते च—

'कालः सृजति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्त्ति तस्मात् कालस्तु कारणम्॥'

इति। स्मृत्यन्तरं च—

'अनादिनिधनः कालो रुद्रसङ्कर्षणः स्मृतः।
कलनात् सर्वभूतानां स कालः परिकीर्त्तितः॥'

इति। तदुक्तं च—'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासत' इति। अत एव भाषापरिच्छेदे—'जन्यानां जनकः काल' इति। कालकारितं परिणामजातमभिलक्ष्य महाभारते भगवान् व्यासोऽपि स्मरति—

'न कर्म्मणा लभ्यते चेज्यया वा नाप्यस्ति दाता पुरुषस्य कश्चित्।
पर्य्यायियोगाद् विहितं विधात्रा कालेन सर्व्वं लभते मनुष्यः॥
न बुद्धिशास्त्राध्ययनेन शक्यं प्राप्तुं विशेषं मनुजैरकाले।
मूर्खोऽपि चाप्नोति कदाचिदर्थान् कालो हि कार्य्यं प्रति निर्व्विशेषम्॥
नाभूतिकालेषु फलं ददन्ति शिल्पानि मन्त्राश्च तथौषधानि।
तान्येव काले समाहितानि सिध्यन्ति वर्द्धन्ति च भूतिकाले॥
कालेन शीघ्राः प्रवहन्ति वाताः कालेन वृष्टि र्जलदानुपैति।
कालेन पद्मोत्पलवज्जलं च कालेन पुष्पन्ति वनेषु वृक्षाः॥
कालेन कृष्णाश्च सिताश्च रात्र्यः कालेन चन्द्रः परिपूर्णबिम्बः।
नाकालतः पुष्पफलं द्रुमाणां नाकालवेगाः सरितो वहन्ति॥
नाकालमत्ताः खगपन्नगाश्च मृगद्विपाः शैलमृगाश्च लोके।
नाकालतः स्त्रीषु भवन्ति गर्भा नायान्त्यकाले शिशिरोष्णवर्षाः॥
नाकालतो म्रियते जायते वा नाकालतो व्याहरते च बालः।
नाकालतो यौवनमभ्युपैति नाकालतो रोहति बीजमुप्तम्॥

नाकालतो भानुरुपैति योगं नाकालतोऽस्तं गिरिमभ्युपैति ।
नाकालतो वर्धते हीयते च चन्द्रः समुद्रोऽपि महोर्म्मिमाली ॥
आसनं शयनं यानमुत्थानं पानभोजनम् ।
नियतं सर्व्वभूतानां कालेनैव भवत्युत ॥
वैद्याश्चाप्यातुराः सन्ति बलवन्तश्च दुर्ब्बलाः ।
श्रीमन्तश्चापरे षण्डा विचित्राः कालपर्य्ययाः ॥'

( राजधर्म्मः २५ अ० ) इति। अष्टाङ्गसंग्रहस्य सूत्रस्थाने वाग्भटेनाप्युक्तम्—'कालो हि नाम भगवाननादिनिधनो यथोपचितकर्म्मानुसारी यदनुरोधादादित्यादयः खादयश्च महाभूतविशेषास्तथा तथा विपरिणमन्तो जन्मवतां जन्ममरणस्यर्तुरसवीर्य्यदोषदेहबलव्यापत्सम्पदां च कारणत्वं प्रत्ययतां प्रतिपद्यन्ते' ( ४।२ ) इति ।

अत्रापि सांख्या विप्रतिपद्यन्ते। महाभाष्ये पतञ्जलिराह—'येन मूर्त्तीनामुपचया अपचयाश्च लक्ष्यन्ते तं कालमित्याहुः' ( २।२।५ ) इति। उक्तञ्च पातञ्जलसांख्यप्रवचनभाष्ये—'स खल्वयं कालो वस्तुशून्योऽपि बुद्धिनिर्म्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते' ( ३।५२ ) इति। कापिलाश्च कालं प्रकृतेरतिरिक्तं न मन्यन्ते। त आहुः—व्यक्तमव्यक्तं पुरुष इति त्रय एव पदार्थाः सन्तीति प्रकृते र्गुणकार्य्यत्वेन परमाणुकम्पनलक्षणो यः कालः स तत्रैवान्तर्भवति। एवं च प्रकृतिं हित्वा नास्त्यन्यत् कारणम्। किं च यदा प्रकृत्यवगमं प्रति पुरुषस्य ज्ञानमुत्पद्यते तदा तेन ज्ञानेन दृष्टा प्रकृतिः पुरुषसन्निधानान्निवर्त्तते कालश्च तया सह तिरोधत्त इति।

'यदृच्छामि'ति। यदृच्छा ( occasionalism ) नाम पदार्थानामाकस्मिकतामूलक आविर्भावतिरोभावव्यापारः। निबन्धसंग्रहे डल्हणाचार्य्य आह—'यदृच्छा पुनरलक्षित आकस्मिकपदार्थाविर्भाव' इति।

तिरोभावोऽपि वक्तव्यः। अलक्षित इति न वक्तव्यम्, अकस्माद् यद् घटते पूर्व्वं तन्न लक्ष्यत इति स्वतःसिद्धत्वात्। यदृच्छावादिन आहुः—ईश्वरो न कर्त्ता न चाप्यकर्त्ता किन्तु स्वसत्तामात्रेणावतिष्ठते महाह्रदतरङ्गाणां मरीचय इव, जगद्व्यापारस्तु कस्यचित् प्रयत्नेन विना निष्पन्नो भवतीति। सांख्यास्त्वाहुः—कादाचित्कत्वेऽपि कार्य्यस्य सकारणत्वेन जगद्व्यापारीयतादृशेच्छा सत्त्वगुणादिपरत्वात् प्रकृतेरन्यैव न भवति। तदुक्तम्—

'शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्य्यम्'।

(सा० का० ९) इति। न हि सिकताभ्यः कदापि यदृच्छया तैलं प्रादुर्भवति, नापि यदृच्छया सौरभेयेभ्यः पयसः क्षरणं सम्पद्यत इति। तदुक्तम्—

'असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥'

गीयते च भगवता—

'नासतो विद्यते भावो नाभावो विद्यते सतः' (२।१६) इति।

'नियतिमि'ति। का पुन र्नियतिः? प्रलयानन्तरं प्राणिनां भोगभूतये परमेश्वरः सर्व्वलोकपितामहं ब्रह्माणं प्रजासर्गे नियुङ्क्ते। तस्य च सिसृक्षाहेतोरात्मन आकाशः सम्भूत आकाशाद् वायु र्वायोरग्निरग्ने रापस्ततः पृथिवी तत ओषधयस्ततोऽन्नं ततः पुरुषा भवन्ति (तैः उः २।१) इति। तेषां पुरुषाणां कर्म्मविपाकं विदित्वा स च ब्रह्मा तान् स्वस्ववासनानुरूपधर्म्माधर्म्मादिभिः संयोजयति। एष एव विधिनिर्बन्धो नियतिरित्युच्यते। अत एवोक्तम्—'नियतिरविषमपापपुण्यफलमि'ति। निबन्धसंग्रहे डल्लणश्चाह—'नियतिरत्र धर्म्माधर्म्मावि'ति। अत्र तु सांख्यैरुक्तम्—'पूर्व्वकृतसदसत्कर्म्मरूपा नियति र्गुणपरिणामलक्षणत्वेन प्रकृतेरन्या न भवती'ति।

'परिणाममि'ति। परिणामो रूपान्तरप्राप्तिः। स च कालवशात् प्रकृतेरन्यथाभाव एव। कालस्य विपरिणामहेतुत्वेन विमानस्थाने चरक-

मुनिराह—'कालः पुनः परिणामः' (८।८६) इति। स च परिणामस्त्रिविधः—धर्म्मपरिणामः, लक्षणपरिणामः, अवस्थापरिणामश्चेति। तत्र वस्तुनः पूर्व्वधर्म्मनिवृत्तौ धर्म्मान्तरोत्पत्ति र्धर्म्मपरिणामो यथा मृद्रूपस्य धर्म्मिणो घटाकारपरिणामः। लक्षयति कार्य्यरूपं धर्म्मं व्यावर्त्तयतीति लक्षणं तद्धर्म्मस्य घटस्यानागतत्वं प्रथमोऽध्वा, वर्त्तमानत्वं द्वितीयोऽध्वा, अतीतत्वं तृतीयोऽध्वा च। सोऽयं लक्षणपरिणामः। तस्यैव घटस्य क्षणे क्षणे यो नवत्वपुरातनत्वादिपरिणामः सोऽवस्थापरिणामः। ऋते चितिशक्तेः प्रतिक्षणपरिणामिनः सर्व्वे भावा इति कृत्वा पृथुदर्शिनो वैद्यकाः परिणाममपि प्रकृतिं मन्यन्ते। सांख्यास्त्वाहुः—'परिणामो हि वस्तुतः प्रकृतिगतगुणानामेव भवति न तु प्रकृतेरि'ति।

'तन्मयान्येव भूतानि तद्गुणान्येव चादिशेदि'ति। तन्मयानि प्रकृतिजातानि। तत्प्रभवे च तदादेरपि मयटमिच्छन्ति सौपद्माः (५।३।१६७)। तद्गुणानि प्रकृतिगतगुणानि। आदिशेन्निर्द्दिशेत्।

'तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत' इति। तैश्च सत्त्वादिगुणैराविष्टाच्च तल्लक्षणो गुणलक्षणः कृत्स्नो भूतग्रामः स्थावरजङ्गमादिकृत्स्नं पदार्थजातं व्यजन्यत प्रकाशते। कर्म्मणि विपूर्व्वतो जने र्लङि त।

'तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्व्वदे'ति। तस्य भूतग्रामस्य परस्परोपकार्य्योपकरणत्वेन य उपयोग इष्टसिद्धिसाधनव्यापारः स चिकित्सां प्रति रोगापनयनं लक्ष्यीकृत्य सर्व्वदाऽभिहितः कथितः।

'भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते' इति। पञ्चमहाभूतेभ्यः शरीरिणां शरीराणि भवन्ति, तेभ्यः परं चिकित्साचिन्ता नास्तीत्यभिप्रायः। उक्तं च प्रथमाध्याये—'पञ्चमहाभूतशरीरसमवायः पुरुषः' इति।

'यतोऽभिहितं तत् सम्भवद्रव्यसमूहो भूतादिरुक्तः' इति। भूतेभ्यः परं

चिकित्साचिन्ता नास्तीत्युक्तम्। कथं तर्हि चैतन्योपेतः पुरुषस्तद्विषय इत्याशङ्क्याह—यतः पुरुषस्य सम्भवद्रव्यसमूहः शुक्रशोणितादिपदार्थजातं भूतादित्वेनोक्तः कथितस्तस्मात् स चिकित्साधिकृतो भवतीति। ननु, यमधिकृत्य तच्चिन्ता वर्त्तते स हि न केवलं भूतात्मको भवति किन्तु भूतेन्द्रियात्मक एव। उक्तेऽपि भूतादिस्वरूपे का दशा पुनरिन्द्रियाणामित्याशङ्क्याह—

'भौतिकानि चेन्द्रियाणी'ति। अयमाशयः। इन्द्रियाणि तदर्थाश्चायुर्व्वेदे भौतिकत्वेन गृह्यन्ते। किं प्रमाणम् ? तदाह—'भवति चात्रे'ति। अस्मिन् विषये प्रमाणमस्तीत्यभिप्रायः।

'इन्द्रियेणेन्द्रियार्थं तु स्वं स्वं गृह्णाति मानवः। नियतमि'ति। मानव इन्द्रियेण श्रोत्रादिना इन्द्रियार्थं शब्दादिविषयं स्वं स्वमात्मीयं नियतमव्यभिचारतो गृह्णाति, यथा—नाभसं श्रोत्रं सजातीयं नाभसं शब्दमुपादत्ते न पुन र्विजातीयं वायवीयं स्पर्शम्, तैजसं रूपम्, जलीयं रसनम्, पार्थिवं गन्धं वा। तुल्ययोनित्वादिति। अस्मितायाः भूतभौतिकानामुत्पन्नत्वात्।

'स्थितिरि'ति। नैसर्गिको नियमः। अयं प्रपञ्चितार्थः। अविशिष्टलिङ्गात् किञ्चिदविशिष्टास्मिता विविक्ता। उभौ च तौ गुणसंपृक्तौ भवतः। गुणानां द्वैरूप्यमस्ति व्यवसायात्मकत्वं ग्रहीतृस्वरूपत्वमिति यावत्, व्यवसेयात्मकत्वं च ग्राह्यत्वमिति यावत्। गुणसम्पृक्तायामस्मितायामिन्द्रियाणि तन्मात्राणि च संसृष्टानि वर्त्तन्ते। ततो गुणद्वैरूप्याद् व्यवसायात्मकत्वेन ग्रहणस्वरूपमास्थाय विशेषरूपाणि इन्द्रियाणि, व्यवसेयात्मकत्वेन ग्राह्यतास्वरूपमास्थाय विशिष्टकल्पपञ्चतन्मात्रद्वारेणैव विशेषरूपाणि प्रत्यासन्नमहाभूतानि च विविच्यन्ते क्रमानतिवृत्तेः। एतत् सर्व्वं सृष्टिपर्व्वं मनसि निधाय श्लोककारेणोक्तम्—

'इन्द्रियेणेन्द्रियार्थं तु स्वं स्वं गृह्णाति मानवः ।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः ॥'

इति । षष्ठसूत्रव्याख्या समाप्ता । ६ ।

**७ । 'न चायुर्व्वेदशास्त्रेषूपदिश्यन्ते सर्व्वगताः क्षेत्रज्ञा नित्याश्च ; असर्व्वगतेषु क्षेत्रज्ञेषु नित्यपुरुषख्यापकान् हेतूनुदाहरन्ति । आयुर्व्वेदशास्त्रेष्वसर्व्वगताः क्षेत्रज्ञा नित्याश्च तिर्य्यग्योनिमानुषदेवेषु सञ्चरन्ति, धर्म्माधर्म्मनिमित्तं तत्र तेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसोः सन्निपातेष्वभिव्यज्यन्ते यतोऽभिहितं पञ्चमहाभूतशरीरसमवायः पुरुष इति । स एव कर्म्मपुरुषश्चिकित्साधिकृतः ।'**

प्रथमसूत्रे पुरुषाणां क्षेत्रज्ञत्वं कथितम् । पञ्चमसूत्रे सांख्यैरिव तेषां बहुत्वं सर्व्वगतत्वं नित्यत्वं चोक्तम् । इदानीं सांख्यवैद्यकयोः पुरुषगतौ भेदाभेदौ दर्शयितुमाह—'न चे'ति । पुरुषाणां क्षेत्रज्ञत्वं नित्यत्वं चाधिकृत्य न काऽपि तयो र्विप्रतिपत्ति र्दृश्यते । सांख्यमते ते सर्व्वगताः, आयुर्व्वेदे च ते तथैव सत्त्वोपाधियोगात्, नो चेदसर्व्वगता एव । असर्व्वगतत्वेऽपि भौतिकसर्गत्वात् सर्व्वयोनिगमनं निर्द्दिशन्नाह—

'तिर्य्यग्योनिमानुषदेवेषु सञ्चरन्ति धर्म्माधर्म्मनिमित्तमि'ति । तिर्य्यङ् अनुप्रस्थः ( horizontal ) योनि र्जन्मस्थानं यस्य स तिर्य्यग्योनिः । पशुमृगपक्षिसरीसृपस्थावरभेदात् तिर्य्यग्योनिः पञ्चधा भवति । तत्र गजाद्याः शल्लक्यन्ताः पशवः, सिंहाद्या ओत्वन्ता मृगाः, उत्क्रोशाद्या-

श्वटकान्ताः पक्षिणः, अजागराद्याः कृम्यन्ताः सरीसृपाः, द्रुमाद्या लतान्ताः षड्विधाः स्थावरा भवन्ति। तत्रापि ये पुष्पैः फलन्ति ते द्रुमाः, ये पुष्पं विना फलन्ति ते वनस्पतयः, ओषधयः फलपाकान्ताः, वंशादयस्त्वक्साराः, वीरुधः काठिन्येनारोहणानपेक्षाः, लताः पुनरारोहणापेक्षा इति विशेषः। मानुष एकविधस्तुल्यलिङ्गत्वाद् ब्राह्मणादिचण्डालान्तः। अष्टविधो देवः— ब्राह्मः प्राजापत्य ऐन्द्रः पैत्र्यो गान्धर्व्वो याक्षो राक्षसः पैशाचश्चेति। सञ्चरन्ति संसरन्ति। धर्म्माधर्म्मनिमित्तं स्वस्वकर्म्मफलेनेत्यभिप्रायः। इदानीमर्थक्रमानुरोधेन पाठक्रमोद्धारं विहाय शिष्टं तात्पर्य्यतो व्याख्यायते। तत्र पुरुषाः परमसूक्ष्माः प्रमाणे दर्शयितुमयोग्यत्वादत एवानुमानग्राह्या-श्चेतनावन्तो नित्याश्च किन्तु मातापितृभ्यां शोणितशुक्रयोः संयोगेषु प्रत्यक्षीक्रियन्ते यतः परिभाषितं पञ्चमहाभूतशरीरसमवायः पुरुष इति। स एव कर्म्मपुरुषः कर्म्मफलभागी, ततश्च स चिकित्साधिकृतं कर्म्मफलं प्राप्नोति। इति सप्तमसूत्रव्याख्या समाप्ता। ७।

**८। 'तस्य सुखदुःखेच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धि र्मनः संकल्पो विचारणा स्मृति र्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः।'**

कर्म्मपुरुषस्य गुणा उच्यन्ते। 'सुखदुःखेच्छाद्वेषावि'ति। सुखष्विच्छा दुःखेषु द्वेष इति शब्दानां व्यतिषङ्गः। विषयभोगेष्विन्द्रियाणां या तृप्तिरुपशान्ति र्वा तत् सुखम्। या लौल्यादनुपशान्तिस्तद् दुःखम्। सुख तत्साधने वा यो गर्द्धः स इच्छाविशेषः। दुःखे तत्साधने वा यः प्रतिघो जिहासा स द्वेषः। अयमपीच्छाविशेषः। 'प्रयत्नः' प्रयासः। स इच्छाजन्यश्चेष्टाफलक एव। 'प्राणापानावि'ति। प्राणः शरीरान्तःसञ्चारी वायुः, स च प्राग्गमनवान् नासिकाग्रस्थानवर्त्ती। अपानोऽवाग्गमनवान्

नाभेरधःस्थितो वा पाय्वादिस्थानवर्त्ती। 'उन्मेषनिमेषावि'ति। अकृत्रिमनेत्रा-कुञ्चनानन्तरं यो हि पद्मविकाशः स उन्मेषः। तदुक्तम्—'अक्षिपद्म-विकाशो यः स उन्मेषः प्रकीर्त्तित' इति। अकृत्रिमनेत्रविकाशानन्तरं यत्तु पद्माकुञ्चनं स निमेष एव। उक्तं च पौराणिकैः—'अक्षिपद्म-परिक्षेपो निमेषः परिकीर्त्तित' इति। 'बुद्धिरि'ति। बुध्यत इति बुद्धि-र्निश्चयो यस्या विषयः। 'निश्चयात्मकवृत्तियुतमन्तःकरणं बुद्धिरि'त्युक्तः। मतिबुद्ध्यादे र्लक्षणं दर्शयता हेमचन्द्रेणोक्तम्—

'मतिरागामिका ज्ञेया बुद्धिस्तत्कालदर्शिनी।
प्रज्ञा चातीतकालस्य मेधा कालत्रयात्मिका॥' इति।

सा च बुद्धिः सात्त्विकतामसरूपभेदादष्टाङ्गिका भवति। यदा सत्त्वगुण उत्कटो भवति तदा तस्याः सात्त्विकं रूपं चतुर्व्विधं धर्म्मो ज्ञानं वैराग्य-मैश्वर्य्यं चेति। तमस्युद्रिक्ते तु धर्म्मादिचतुष्टयाद् विपरीतं चतुर्व्विधं तामसं रूपमधर्म्मोऽज्ञानमवैराग्यमनैश्वर्य्यं चेति। तत्र धर्म्मो नाम दया-दान-यम-नियमलक्षणः। ज्ञानं द्विविधं वाह्यमाभ्यन्तरं चेति। तत्र वेदवेदाङ्गादिज्ञानं वाह्यम्। गुणपुरुषान्तरोपलब्धिरूपादिज्ञानमाभ्यन्तर-मिति विशेषः। वैराग्यमपि द्विविधमपरं परं चेति। तत्राद्यं विवेक-तारतम्येन यतमानव्यतिरेकैकेन्द्रियवशीकारभेदाच्चतुर्व्विधम्। अन्तिमं तु द्विविधं विषयविषयं गुणविषयं चेति। तत्र पूर्व्वं विषयदोषदर्शनाद् विषयेषु चित्तक्षोभादृते यदेव वैराग्यं तद् विषयविषयं भवति। यत्रोक्तं सर्व्वज्ञात्ममुनिना—

'यतो यतो निवर्त्तते ततस्ततो विमुच्यते।
निवर्त्तनाद्धि सर्व्वतो न वेत्ति दुःखमण्वपि॥' इति।

भगवान् मनुरप्याह—'प्रापणात् सर्व्वकामानां परित्यागो विशिष्यते' (२।९५) इति। तथा च भगवान् पतञ्जलिरर्थत आद्यं सूत्रयन् साक्षाद्भावेन द्वितीयं

सूत्रयति—'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यमि'ति (१।१६)। एतदुक्तं भवति—विषयवैराग्यपाटवेन गुणत्रयात्मकप्रधानाद् विरक्तस्य पुरुषस्य ख्यातिः साक्षात्कार उत्पद्यते यतो गुणविषयं यद् वैराग्यं तत्परं तस्य नान्तरीयकं कैवल्यं भवतीति। गुणवैतृष्ण्यं गुणविषयवैराग्यमिति यावत्। अत एव 'तत्परमि'त्यनेन न केवलं गुणविषयवैराग्यं लक्ष्यते, परं तु विषयविषयवैराग्यमपि खुररवन्यायेन सूच्यते। एतत् सर्व्वं बोधयितुमावट्य-जैगीषव्ययोः किञ्चिदुपाख्यानं 'संस्कारसाक्षात्करणात्…'(३।१८) इत्यादिसूत्रस्य योगभाष्ये समुपन्यस्याभिहितम्—'…विषयसुखापेक्षयैवेदमनुत्तमं सन्तोषसुखमुक्तम्, कैवल्यसुखापेक्षया दुःखमेव। बुद्धिसत्त्वस्यायं धर्म्मस्त्रिगुणः। त्रिगणस्य प्रत्ययो हेयपक्षे न्यस्त इति। दुःखरूपस्तृष्णातन्तुः। तृष्णादुःखसन्तापापगमात् तु प्रसन्नमबाधं सर्व्वानुकूलं सुखमिदमुक्तमि'ति। महाभारतस्य शान्तिपर्व्वणि च तृष्णाविषयमधिकृत्य स्मर्य्यते—

'यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥' (१७४।४६) इति।

कामजनयितॄणां विषयाणां दोषजातं विमृश्य बुद्धसुखेन कविरश्वघोषः पठति—

नाशीविषेभ्यो हि तथा बिभेमि
नैवाशनिभ्यो गगनाच्च्युतेभ्यः।
न पावकेभ्योऽनिलसंहितेभ्यो
यथा भयं मे विषयेभ्य एव॥
देवेन वृष्टेऽपि हिरण्यवर्षे
द्वीपान् समग्रांश्चतुरोऽपि जित्वा।
शक्रस्य चार्द्धासनमप्यवाप्य
मान्धातुरासीद् विषयेष्वतृप्तिः॥

ऐडश्च राजा त्रिदिवं विगाह्य
नीत्वाऽपि देवीं वशमुर्व्वशीं ताम् ।
लोभादृषिभ्यः कनकं जिहीर्षु
र्जगाम नाशं विषयेष्वतृप्तः ॥ (बुद्ध-च० ११।८, १३, १५ )
इति ।

ऐड इडाबुधयोः सूनुः पुरूरवा इति पौराणिकाः । चान्द्रव्याकरणकृता चन्द्रगोमिणाऽप्युक्तम्—

'विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥' इति ।

केनापि कविना चोक्तम्—

'विषयप्रतिसंहारं यः करोति विवेकतः ।
मृत्यो र्मृत्युरिति ख्यातः स विद्वानात्मवित् कविः ॥'

कविः क्रान्तदर्शी । पद्मपुराणीय उत्तरखण्डे तु स्मर्य्यते—

'कामकामो यजेत् सोममकामः पुरुषं परम् ।
अकामः सर्व्वकामो वा मोक्षकाम उदारधीः ॥
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥' इति ।

यो हि कामान् कामयते स कामकामः ।

ऐश्वर्य्यमष्टगुणम्—

'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वं च वशित्वं च यत्र कामावसायिता ॥'

इति । यत्रोक्तम्—

'अणिमा महिमा मूर्त्तें र्लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाम्यं श्रुतदृष्टेषु शक्तिः प्रेरणमीशिता ।
गुणेष्वसङ्गो वशिता यत् कामं तदवस्यति ॥'

इति। कामं स्वेच्छयाऽवसाययितुं शीलमस्येति कामावसायी तद्भावः कामावसायिता।

अथ प्रकृतमनुसरामः। 'मन' इति। मनो बुद्धीन्द्रियाणां प्रधानम्। संशयो हि तस्य विषयः। तदुक्तं पञ्चीकरणवार्त्तिके सुरेश्वराचार्य्येण—

'मनो बुद्धिरहंकारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्व्वः स्मरणं विषया इमे॥'

इति। अभियुक्ता वदन्ति—'नीरूपः स्पर्शवान् वायु र्निःस्पर्शं मूर्त्तिमन् मनः' इति। मूर्त्तिस्तु नास्माभिरनुभूयते, अनुभूयते तु योगिभिरेव। संकल्पो वा विकल्पो वा मनसः क्रियाविशेषः। मनः सङ्कल्पात्मकमिति सौश्रुतव्याख्यायां गयी। वस्तुतस्तु सङ्कल्पविकल्पात्मकवृत्तिमदन्तःकरणं मनः एव। अधिकरणत्वमप्यस्य सांख्यवृद्धैः शंसितम्—

'अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम्।
मनसश्चन्द्रमा जातो बुद्धि र्बुद्धे र्गिरां पतिः॥' इति।

'सङ्कल्प' इति। अनासन्नक्रियेच्छा संकल्पः। 'विचारणे'ति। एकस्मिन् धर्म्मिणि विरुद्धनानार्थविमर्शो विचारणा। 'स्मृतिरि'ति। 'आत्ममनसोः संयोगविशेषात् साक्षात्काराच्च स्मृतिरि'ति वैशेषिकाः। न्यायवार्त्तिककार उद्द्योतकर आह—'प्रत्यक्षबुद्धिनिरोधे तदनुसन्धानविषयः स्मृतिरि'ति। तर्कसंग्रहमते 'स्मृतिः संस्कारमात्रजन्यं ज्ञानमि'ति। संस्कारमात्रजन्यमित्यस्य चक्षुराद्यजन्यत्वे सति संस्कारजन्यमित्यभिप्रायः। मात्रपदग्रहणेन प्रत्यभिज्ञायां नातिव्याप्तिः। प्रत्यभिज्ञा हि चक्षुरादिजन्यत्वात्। वेदान्तानां द्वैतमते मध्वाचार्य्य आह—'स्मृति र्मनोजन्या न तु संस्कारजन्या, संस्कारस्तु मनस स्तदर्थसन्निकर्षरूप' इति। अद्वैतमते तु 'स्मृतिः पूर्व्वदृष्टावभासो या हि चित्तस्य धर्म्म' इति सुरेश्वराचार्य्यः। पातञ्जलसांख्यप्रवचनेऽपि सूत्रितम्—'अनुभूतविषयासंप्रमोषः स्मृतिः' (१।११) इति।

'विज्ञानमि'ति। विज्ञानं नानाविद्याधारणम्। डल्लणाचार्य्य आह— 'विज्ञानं शिल्पशास्त्रादिबोध' इति। उक्तं च कोषकारेण—'मोक्षे धी र्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोरि'ति। मोक्षप्रतिपादकशास्त्रादन्यत्र शिल्पे चित्रादौ च शास्त्रे धी र्विज्ञानमित्यर्थः। एषा विशेषप्रवृत्तिः। घटपटादौ च या धीः साऽपि ज्ञानं विज्ञानं चोच्यते। एषा सामान्यप्रवृत्तिः। पौराणिकास्तु चतुर्द्दशविद्याधारणं विज्ञानमित्याहुः। काः पुनस्ता विद्याः? तत्रोक्तम्—

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्म्मशास्त्रं पुराणं च विद्या ह्य ता श्चतुर्द्दश॥'

इति। अत्र 'वेदाश्चत्वार' इत्युक्ते तेषामुपवेदा अपि गृह्यन्ते, यथा वन-मित्युक्ते वृक्षाः, वृक्ष इत्युक्ते वा शाखा अपि तस्य गृह्यन्ते। अतः पुनरेवोक्तम्—

'आयुर्व्वेदो धनुर्व्वेदो गान्धर्व्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः॥' इति।

'अध्यवसाय' इति। अध्यवसानमध्यवसाय उत्साहविशेषः। स च बुद्धिपरिणाम एव। मयेदं कर्त्तव्यमित्याकारनिश्चयो बुद्धिपरिणामाद् भवति। यथा दीपशिखा क्षणे क्षणे विपरिणमति तथैव बुद्धिः परिणमतीति सांख्यवृद्धाः। 'विषयोपलब्धिरि'ति। 'विशब्दो हि विशेषार्थः सिनोति र्बन्धनार्थक' इति निर्व्वचनाद् विशेषेण सिनोति बध्नातीति विषयः। सांख्य-वृद्धा आहुः—'विषिण्वन्ति विषयिणं बध्नन्ति स्वेन रूपेण निरूपणीयं कुर्व्वन्तीति विषयाः पृथिव्यादयः सुखादयश्चेति। स च षड्विधो घ्राणजो रासनश्चाक्षुषः स्पार्शनः श्रौत्रो मानसश्चेति। सुहृल्लेखे नागार्जुनेनोक्तम्—

'विषस्य विषयाणां च दूरमत्यन्तमन्तरम्।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि॥'

इति। शान्तिशतके शिल्हणमिश्र आह—

'विषयविषधराणां दोषदंष्ट्रोत्कटानां
विषमविषविषङ्गव्यक्तदुश्चेष्टितानाम्।
विरम विरम चेतः सन्निधानादमीषां
सुखकणमणिहेतोः साहसं मास्म कार्षीः॥'

इति। भगवाञ्छंकराचार्य्य आह—'विषयेभ्यः परावृत्तिः परमोपरति र्हि से'ति। विषयाणां त्रिविधोदाहरणानि प्रागेव दर्शितानि। विषयोपलब्धिः। विषयज्ञानम्। एते पुरुषगुणाः। अष्टमसूत्रव्याख्या समाप्ता। ८।

**९। 'सात्त्विकास्त्वानृशंस्य' संविभागरुचिता तितिक्षा सत्यं धर्म्ममास्तिक्यं ज्ञानं बुद्धि र्मेधा स्मृति र्धृतिरनभिषङ्गश्च।'**

पुरुषगुणानभिधाय सत्त्वगुणान्वितस्य मनसो गुणान् वक्तुं प्रस्तौति—'सात्त्विका' इति। नॄन् नरान् शंसति हिनस्तीति नृशंसः क्रूरः। अनृशंसस्य भावः कर्म्म वेति 'आनृशंस्यमनैष्ठुर्य्यम्। स्मर्य्यते हि वनपर्व्वणि—'आनृशंस्यं परो धर्म्मः' (४३।६६) इति। 'संविभागरुचिता' संविभज्य भोक्तुमभिलाषुकता। 'तितिक्षे'ति 'निग्रहशक्तावपि परेषामपराधसहनं तितिक्षा। 'सहनं सर्व्वदुःखानां तितिक्षा सा शुभा मता' इत्यपरोक्षानुभूतिः। देहविच्छेदव्यतिरिक्तं शीतोष्णादिद्वन्द्वसहनं तितिक्षेति हैरण्यगर्भाः। 'सत्यमि'ति। सत्यं यथार्थभाषणं भूतहितं च। ब्राह्मे च स्मर्य्यते—

'यथार्थकथनं यच्च सर्व्वलोकसुखप्रदम्।
तत् सत्यमिति विज्ञेयमसत्यं तद्विपर्य्ययः॥'

इति। अत उपक्षिप्यते यत् सत्यं ब्रूयादसत्याच्च निवर्त्तेत, निवृत्तावपि भूतोपघातप्रसङ्गे तदपि ब्रूयादिति। तथा हि दस्युभिः सार्थगमनं पृष्टस्य मुनेः सत्यतपसः सार्थगमनाभिधानं सत्यमपि परापकारजनकत्वात् सत्यत्वेन न गृह्यते स्म। 'धर्म्ममि'ति। कायवाङ्मनोभिः सुचरितमि'ति डल्लणः। तत्र कायेन सुचरितं यथा सेवादानपरपरित्राणादि कर्म्म, वाचा सुचरितं यथा हितसत्यादिभाषणम्, मनसा सुचरितं यथा जिघांसादिवर्ज्जनम्। 'आस्तिक्यमि'ति। आस्तिकस्य भाव आस्तिक्यम् (पा० ५।१।१२८)। परलोकाद्यस्तित्ववादित्वम्। सत्परलोकत्वे वाच्ये अस्तिशब्दाट् ठक्-प्रत्ययत आस्तिकशब्दो भवति (पा० ४।४।६०)। अस्तिशब्दस्तिङन्त-प्रतिरूपको निपातः। केचिदाहुः—लक्षणसामर्थ्यात् तिङन्तादेवाय' प्रत्ययः। उपरिष्टादेकादशसूत्रव्याख्यायां नास्तिकशब्दो द्रष्टव्यः। 'ज्ञान-मि'ति। गुणपुरुषान्यताख्यातिरूपोऽध्यवसायो ज्ञानम्। 'ज्ञानमात्मज्ञान-मि'ति डल्लणाचार्य्यः। आत्मज्ञानमन्तःकरणसंभिन्नबोधो न तु कश्चिद् धर्म्मविशेषः, यथा शर्करा तत्संवेदनवत एव सुखप्रकाशा न तु स्वरूपेण, तथैवात्मज्ञानं सुखरूपित्वेऽपि न स्वरूपतः सुखप्रकाशं तत्संवेदनाभावात्। 'बुद्धिः' प्रागेव व्याख्याता। 'बुद्धिस्तत्कालविषये'ति डल्लणाचार्य्यः। हेमचन्द्रेणाप्युक्तम्—'बुद्धिस्तत्कालदर्शिनी'ति। 'मेधा' धारणशक्ति र्यतो ज्ञातस्य विषयस्य विस्मरणं न भवति। दुर्म्मेधसः पुरुषस्य तत्त्वदर्शना-सम्भवाद् मेधा च सात्त्विकपक्षे निक्षिप्ता। तथा हि शान्तिपर्व्वणि युधिष्ठिरं प्रति भीमवचनम्—

'श्रोत्रियस्येव ते राजन् मन्दकस्याल्पमेधसः।
अनुवाकहता बुद्धि र्नैषा तत्त्वार्थदर्शिनी॥'

(१६।३५) इति। एष श्लोकः ५।४।१२२ सूत्रीयकाशिकायां पाठान्तरत उद्धृतः। स्मर्य्यते हि सप्तशत्याम्—

'मेधाऽसि देवि विदिताखिलशास्त्रसारा
दुर्गाऽसि दुर्गभवसागरनौरसङ्गा' इति ।

'स्मृति'रपि प्राग् व्याख्याता । 'धृति' धैर्य्यम् । निबन्धसंग्रहे डल्लणाचार्य्य आह—'धृति र्मनसा नियमात्मिका बुद्धिरि'ति । 'अनभिषङ्ग' इति । अभिषङ्ग आसक्तिस्तद्विरतिरनभिषङ्गः, अनासक्ति रिति यावत् । नवमसूत्रव्याख्या समाप्ता । ९ ।

**१० । 'राजसास्तु दुःखबहुलताऽटनशीलताऽधृतिरहंकार आनृतिकत्वमकारुण्यं दम्भो मनो हर्षः कामः क्रोधश्च ।'**

रजोगुणोपेतस्य मनसो दुर्गुणान् दर्शयति—'राजसा' इति । 'दुःखबहुलता' इति । दुःखबाहुल्यमिति यावत् । दुःखं त्रिविधम्—आध्यात्मिकमाधिभौतिकमाधिदैविकं चेति । अध्यात्मशब्देन कर्म्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकं प्राणादिवायुपञ्चकं मनआद्यन्तःकरणचतुष्टयं चोच्यन्ते । अत आध्यात्मिकं द्विविधं शारीरं मानसं चेति । शारीरं वातपित्तश्लेष्मणां देहधातूनां वैषम्यनिमित्तं ज्वरातिसारविषूच्यादिकदुःखम् । तत् सर्व्वं शरीरे भवतीति शारीरम् । मानसं कामक्रोधलोभमोहशोकादिनिबन्धनं दुःखम् । एतत् सर्व्वं मनसि जायत इति मानसम् । आन्तरोपायसाध्यत्वात् सर्व्वमेतदाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं च दुःखं द्वेधा—आधिभौतिकमाधिदैविकं चेति । अधिभूतशब्देनेन्द्रियगोचरमुच्यते । आधिभौतिकं चतुर्व्विधं जरायुजाण्डजस्वेदजोद्भिज्जेभ्यः सकाशादुपजायते । अधिदैवशब्देन—

'दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।
चन्द्रो विष्णुश्चतुर्वक्त्रः शम्भुश्च करणाधिपाः ॥'

इति निर्दिष्टा इन्द्रियाधिदेवता स्तन्त्रान्तरे। अतो दिवः प्रभवतीति दैवं तदधिकृत्य यदुपजायते शीतोष्णवातवर्षाऽशनिसम्पातादिदुःखमाधिदैविकमिति सांख्याः। वैद्यके पुनः शरीरे ग्रहावेशादीनि दैवान्यधिकृत्य यद् भवति तदप्याधिदैविकदुःखमिति वैद्यकाः। 'अटनशीलते'ति। वृथाऽटनशीलतेत्याशयः। एषा कामजदोषपद्धे मनुना निन्दिता ( मनुस० ७।४७ ) 'अधृतिरि'ति। अधृतिरधैर्य्यम्। 'अहंकार' इति। गर्व्व इत्यर्थः। तदुक्तम्—

'मनोबुद्धिरहंकारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्व्वः स्मरणं विषया अमी॥'

इति। सांख्यवृद्धा आहुः—'अभिमानोऽहंकार इति। अहमित्यभिमाने। मदर्था एवामी विषयाः, मत्तो नान्योऽत्राधिकृतः कश्चिदस्त्यतोऽहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वादहंकारस्तमुपजीव्य हि बुद्धिरध्यवस्यति कर्त्तव्यमेतन्मये'ति। 'आनृतिकत्वमि'ति। 'आनृतिकत्वं मिथ्यावचनशीलते'ति डल्लणः। गयी तु 'आवृतिकत्वमि'ति पठित्वा मनसः शीलतेत्याह। तच्चिन्त्यम्, रजोहेतुकत्वात्। 'आवृतिकत्वमि'ति पाठे तु ब्रूमः— आवृतिकत्वमावरणं यत् सत्यमावृणोतीति। यद्वा आवृतिकत्वं संवृतिकत्वम्। संवृतिरनिरूपिततत्त्वार्था प्रतीतिः। उक्तं च न्यायावतारे क्षपणकसिद्धसेनगणिदिवाकरेण—

'अनिरूपिततत्त्वार्था प्रतीतिः संवृति र्मता'

इति। 'अकारुण्यं' नैष्ठुर्य्यम्। दम्भः कापट्येन स्वोत्कर्षख्यापनम्। 'कुहकवृत्तिता दम्भ' इति निबन्धसंग्रहे डल्लणाचार्य्यः। उणादिवृत्तिकार उज्ज्वलदत्त आह—'कुहको दाम्भिक' इति। दम्भः कुहकवृत्तिरिति पाठस्तु समीचीनः प्रतीयते। 'मान' इति। 'आत्मोत्कर्षबुद्धि'रिति डल्लणाचार्य्यः। 'हर्ष' इष्टाधिगमजन्यश्चित्तोत्साहविशेषः। रज-आधिक्ये

तु हर्ष उद्धर्ष इत्युच्यते। 'कामश्चे'ति। काम इष्टविषयाभिलाषः। अत्र भगवता मनुना स्मर्य्यते—

'न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥'

( मनुस० २।६४ ) इति। आदिपर्व्वणि भगवान् व्यासोऽपि स्मरति—

'पृथिवीरत्नसम्पूर्णा हिरण्यं पशवः स्त्रियः।
नालमेकस्य तत्सर्व्वमिति मत्वा शमं व्रजेत्॥'

( ७५।५० ) इति। बुद्धचरिते प्रथमखृष्टशताब्दीयकविरश्वघोषो वृद्धमुखेन पटति—

'कामाभिभूता हि न यान्ति शर्म्म
त्रिपिष्टपे किं वत मर्त्त्यलोके।
कामैः सतृष्णस्य हि नास्ति तृप्ति
र्यथेन्धनै र्वातसखस्य वह्नः॥
समुद्रवस्त्रामपि गामवाप्य
पारं जिगीषन्ति महार्णवस्य।
लोकस्य कामै र्न वितृप्तिरस्ति
पतद्भिरम्भोभिरिवार्णवस्य॥

( ११।१०,१२ ) इति।

क्रोधश्चेति। क्रोधोऽमर्षः। कामात् कुतश्चित् प्रतिहतात् क्रोध उत्पद्यते। गीयते च—'सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते' ( २।६२ ) इति। अभियुक्ताश्च वदन्ति—

'अपराधिनि चेत् क्रोधः क्रोधे क्रोधः कथं न ते।
धर्म्मार्थकाममोक्षाणां चतुर्णां परिपन्थिनि॥'

इति। श्रूयते हि भ्रातरं प्रति महाराजो भर्त्तृहरिरवादीत्—

'क्रोधो वैवस्वतो राजन्नाशा वैतरणी नदी ।
विद्या कामदुघा धेनुः सन्तोषो नन्दनं वनम् ॥'

इति । कामक्रोधावधिकृत्य हि स्मर्य्यते—'काम एष क्रोध एष रजोगुण-समुद्भवः' इति । चान्द्रवृत्तौ काशिकावृत्तौ चोद्धृतम्—'कामक्रोधौ मनुष्याणां खादितारौ वृकाविव' (चा० व्या० ४।३।६१, काशिका ५।३।११५ ) इति । मन्ये 'जरामृत्यू हि भूतानां खादितारौ वृकाविव' ( शान्ति ३१६।१६ ) इति भारतवचनमवलम्ब्य रचितमिदम् । कलापवृत्तौ—दुर्गसिंहोद्धृतं भारवि-वचनं च—'कामक्रोधौ स्म मा पुषः' ( किरात ११।२० ) इति । प्रायेणात्र 'अर्थकामौ' इति पाठ उपलभ्यते भारविकाव्ये । ननु, न हि मास्मशब्दवत् स्ममाशब्दोऽप्यस्ति । तर्हि कथं स्ममेत्युच्यते ? अत्र अभिधानस्वाभाव्यं हेतुः । इति दशमसूत्रव्याख्या समाप्ता । १० ।

**११ । 'तामसास्तु विषादित्वं नास्तिक्यमधर्म्मशीलता बुद्धेर्निरोधोऽज्ञानं दुर्म्मेधस्त्वमकर्म्मशीलता निद्रालुता चेति ।'**

तमोगुणोपेतस्य मनसो दोषान् विवृणोति—'तामसा' इति । 'विषादित्व-मि'ति । विषाद इष्टनाशकृतो मनोभङ्ग इति रघुटीकायां मल्लिनाथः । वेदान्तमते तु रोगशोकमोहादिजनितमनोदुर्ब्बलतायां यः सर्व्वव्यापारोपरमः स विषादः । सोऽस्तीति विषादी तद्भावो विषादित्वम् ।

'नास्तिक्यमि'ति । 'अस्ति मति र्यस्य स आस्तिकः, नास्ति मति र्यस्य स नास्तिक' इति काशिका ( ४।४।६० ) । न हि मतिसत्तामात्रे प्रत्यय इष्यते । किं तर्हि ? सदसत्परलोकत्वे वाच्येऽस्तिनास्तिभ्यां प्रत्यय इष्यते । एतदुक्तं भवति—परलोकोऽस्तीति यस्य मति र्वर्त्तते स आस्तिकस्तद्विपरीतो नास्तिक इति । कथं पुनरसति विशेषोपादाने चैतल्लभ्यते ? अभिधान-

शक्तिस्वाभाव्यादिति केचित्। ननु, अस्तीति तिङन्तं नास्तीति वाक्यमित्यत एताभ्यां न प्राप्नोति प्रत्यय इति चेत्? अस्तिनास्तिशब्दौ निपाताविति। अभ्युपगम्यापि तिङन्तत्वं वाक्यत्वं च वचनसामर्थ्यादस्तीत्याख्यातात्, नास्तीति वाक्याच्च प्रत्ययः। नास्तिकस्य भावो नास्तिक्यम् (पा० ५।१।१२८)। नास्तिकानां शास्त्रं लोकायतम्, लोके आयातं प्रसृतमित्यर्थः। तच्च बृहस्पतिचार्वाकविज्ञानकौमुद्यादिप्रोक्तं महाभारतविष्णुपुराणकाशीखण्डादिषूपनिबद्धं वर्त्तते। तस्मिंश्च शास्त्रे नैरात्म्यदृष्टिमाश्रित्य बृहस्पतिराह—

'न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते।
स्वपिता यजमानेन तत्र कस्मान्न हन्यते॥
यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥
त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः।
जर्भरीतुर्फरीत्यादि पण्डितानां वचः स्मृतम्॥'

इत्यादि।

भागुरीमतावलम्बिनी परिव्राजिका तत्रभवती विज्ञानकौमुदी चाप्याह—

'आनन्दो ब्रह्मणो रूपं श्रुत्यैव यन्निगद्यते।
तत् तथैवेह मन्तव्यं मिथ्या नानात्वकल्पना॥
यावत् स्वस्थमिदं वर्ष्म (वपुः) यावन्न न्द्रियविक्लवः।
यावज्जरा च दूरेऽस्ति तावत् सौख्यं प्रसाधयेत्॥
अस्वास्थ्येन्द्रियवैकल्ये वार्द्धक्ये तु कुतः सुखम्।
शरीरमपि दातव्यमर्थिभ्योऽतः सुखेप्सुभिः॥

याचमानमनोवृत्तिप्रीणने यस्य नो जनिः ।
तेन भू र्भारवत्येषा समुद्रागद्रुमै र्न हि ॥
सत्वरो गत्वरो देहः सञ्चयाः सपरिक्षयाः ।
इति विज्ञाय विज्ञाता देहे सौख्यं प्रसाधयेत् ॥
श्ववायसकृमीणां च प्रान्ते भोज्यमिदं वपुः ।
भस्मान्तं तच्छरीरं च वेदे सत्यं प्रपद्यते ॥
मुधा जातिविकल्पोऽयं लोकेषु परिकल्प्यते ।
मानुष्ये सति सामान्ये कोऽधमः कोऽथ चोत्तमः ॥
ब्रह्मादिसृष्टिरेषेति प्रोच्यते वृद्धपूरुषैः ।
तस्य स्रष्टुः सुतौ दक्षमरीची चेति विश्रुतौ ॥
मारीचेन कश्यपेन दक्षकन्याः सुलोचनाः ।
धर्म्मेंण किल मार्गेण परिणीता स्त्रयोदश ॥
अपीदानीन्तनै र्मर्त्यैरल्पबुद्धिपराक्रमैः ।
इयं गम्या त्वगम्येयं विचारः क्रियते मुधा ॥
मुखबाहूरुपज्जातं चातुर्वर्ण्यमिहोदितम् ।
कल्पनेयं कृता पूर्व्वैं र्न घटेत विचारतः ॥
एकस्यां च तनौ जाता एकस्माद् यदि वा क्वचित् ।
चत्वारस्तनयास्तत् किं भिन्नवर्णत्वमाप्नुयुः ॥
वर्णावर्णविवेकोऽयं तस्मान्न प्रतिभासते ।
अतो भेदो न मन्तव्यो मानुष्ये केनचित् क्वचित् ॥'

( काशीस्थनिवारणचन्द्रदासेन प्रकाशितं स्कन्दपुराणान्तर्गतं काशीखण्डम्— उत्तरखण्डस्थ ४८५ पृष्ठे । )

लोकायतशास्त्रे बार्हस्पत्यानि त्रीणि सारवत्सूत्राणि वर्त्तन्ते—

'चैतन्यविशिष्टः कायः पुरुषः ।

काम एवैक पुरुषार्थः ।
मरणमेवापवर्गः ।' इति ।

ननु कथं पुनरचेतनस्य कायस्य चैतन्यविशिष्टत्वमिति जिज्ञासायां बृहस्पतेः प्रियशिष्यो लौकायतिकशिरोमणिश्चार्व्वाकमुनिराह—

'अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ।
मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी ॥' इति ।

अयमेव निष्कर्षः । केवलचूर्णादौ रागाभावेऽपि चूर्णपर्णखदिरादिसमुदाये ताम्बूले यथा रागोत्पत्तिस्तथा भूम्यादेरानुगुण्यसमुदाये काये चैतन्याविर्भाव इति । तत्त्व एवंविधे स्थिते तैः श्लोकितम्—

'प्रमाणमेकं प्रत्यक्षं तत्त्वं भूतचतुष्टयम् ।
मोक्षश्च मरणान्नान्यः कामार्थौ पुरुषार्थकौ ॥
न हि खल्वीश्वरः कर्त्ता परलोककथा वृथा ॥' इत्यादि ।

नास्तिक्यनिराकरिष्णुः सदानन्दयतिरद्वैतब्रह्मसिद्धौ 'परलोककथा वृथे'ति मतमाक्षिप्य प्रश्ननिरूपणाभ्यां श्रेयांसि भूयांसि साध्वेवं समाधत्ते—'नन्वस्त्वदृष्टादिसिद्धिस्तथापि सन्दिग्धत्वात् परलोकस्वीकारो व्यर्थ इति चेत् ? भ्रान्तोऽसि, अस्ति न वेति विकल्पस्य विद्यमानत्वेऽप्यस्तित्वपक्षस्यैव बहुवादिसम्मतत्वेनाभ्यर्हितत्वात् । तदुक्तं न्यायकुसुमाञ्जलौ—

'सन्दिग्धेऽपि परे लोके त्याज्यमेवाहितं बुधैः ।
यदि न स्यात् ततः किं स्यादस्ति चेद् नास्तिको हतः ॥'

इती'ति *। 'अधर्म्मशीलते'ति। 'अधर्म्मः शीलं स्वभावो यस्य तद्भावो-ऽधर्म्मशीलत्वमि'ति डल्लणः। 'बुद्धे र्निरोध' इति। सर्व्वव्यवहारात्मिका या बुद्धिस्तस्या निरोधः स्फुरणाभावः। 'अज्ञानमि'ति। अज्ञानमिह प्रमादो वाक्यार्थानामनवबोधो वा। 'दुर्म्मेधस्त्वमि'ति। नञ्दुःसुभ्य इत्यनुवृत्तौ 'नित्यमसिच् प्रजामेधयोः' (पा० ५।४।१२२) इति सूत्रेण दुर्म्मेधाः। काशिकायां जयादित्येन तु पठ्यते—

'श्रोत्रियस्येव ते राजन् मन्दकस्याल्पमेधसः।
अनुवाकहता बुद्धि र्नैषा तत्त्वार्थदर्शिनी॥' इति।

'अल्पमेधस्' शब्दोऽपाणिनीयः। जैनेन्द्रव्याकरणे तु सूत्रितम्—'मन्दाल्पाच्च मेधायाः' (४।२।१६०) इति। महाभारते श्लोकस्यास्य पाठान्तरमुपलभ्यते, यथा—

'श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः।
अनुवाकहता बुद्धि र्नैषा तत्त्वार्थदर्शिनी॥'

(कर्णप० १६।३५) इति। दुर्म्मेधसो भावो दुर्म्मेधस्त्वं स्मृतिशक्ति-राहित्यम्। यद्वा दुर्म्मेधस्त्वं दुष्टबुद्धित्वम्। 'अकर्म्मशीलते'ति। अकर्म्म कुत्सितकार्य्यं शीलं स्वभावो यस्य सः, तद्भावः। 'निद्रालुत्वमि'ति। ने द्रं आलुचा निद्रालुस्तद्भावो निद्रालुत्वं निद्राशीलत्वम्। एकादशसूत्र-व्याख्या समाप्ता। ११।

* वरदराजकृतायां न्यायकुसुमाञ्जलिबोधन्यामस्य श्लोकस्य पाठान्तर-मुपलभ्यते, यथा—

'सन्देहेऽपि परे लोके वयमास्तिक्यमाश्रिताः।
नास्तिके न हि नो हानिरस्तिके नास्तिको हतः॥' इति।

"अस्ति चेन्नास्ति नो हानि र्नास्ति चेन्नास्तिको हतः" इत्यपि द्वितीयार्धस्य पाठान्तरं क्वचिदुपलभ्यते।

### १२। 'आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्व्वच्छिद्र-समूहो विविक्तता च।'

इदानीं महाभूतगुणान् वक्तुं प्रस्तौति। तत्र शब्दतन्मात्रात् तत्स्थूलावस्थापन्न आकाशस्तद्गुणान् निदर्शयति—'आन्तरीक्षा' इति। अन्तर्मध्यमीक्षं दृष्टिव्याघातशून्यमित्यन्तरीक्षं तत्र भवा आन्तरीक्षा आकाशीयधर्म्मा इत्यर्थः। आकाशस्य विशेषगुणः शब्दः। एकोऽपि स उपाधिभेदादुदात्तानुदात्तस्वरितषड्जर्षभगान्धारमध्यमपञ्चमधैवतादयो भवन्ति। तदुक्तं भाषापरिच्छेदे विश्वनाथेन—

'आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः।
इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः॥' (२८) इति।

'शब्देन्द्रियं' श्रवणेन्द्रियम्। 'सर्व्वच्छिद्रसमूहो विविक्तता चे'ति। स्मृतिरप्याह—

'शब्दः श्रोत्रेन्द्रियं चापि च्छिद्राणि च विविक्तता।
वियतो दर्शिता एते गुणा गुणविचारिभिः॥' इति।

लोकाचार्य्यकृततत्त्वत्रयस्य भगवद्भक्तेन भाष्यकृता नारायणतीर्थमुनिनोद्धृतं स्मृत्यन्तरं च—

'अस्य देहस्य वियतो लाघवं सौक्ष्म्यमेव च।
शब्दः श्रोत्रं बलं ब्रह्मन् सुषिरत्वं विविक्तता॥'

इति। विविक्तता सामान्यतोऽसंपृक्तता। 'च'कारेण संयोगादिसामान्यगुणान्तरग्रहणमिष्यते। द्वादशसूत्रव्याख्या समाप्ता। १२।

### १३। 'वायव्यास्तु स्पर्शः स्पर्शेन्द्रियं सर्व्वचेष्टासमूहः सर्व्वशरीरस्पन्दनं लघुता च।'

अधुना वायुगुणान् वर्णयितुं प्रस्तौति—'वायव्या' इति। शब्दस्पर्शवान् वायुरिति सृष्टितत्त्ववादिनः। 'स्पर्शः' खल्वनुष्णाशीतस्पर्श एव। 'स्पर्शेन्द्रियं' त्वगिन्द्रियम्। 'सर्व्वचेष्टासमूहः' श्वासप्रश्वासनमनोन्नमनादिक्रियाजातम्। 'कायवाङ्मनःक्रियासमूहश्चे'ति डल्लणः। 'सर्व्वशरीरस्पन्दनं प्राणरूपेण समग्रशरीरचलनम्। 'लघुता' लघुत्वम्। भाषापरिच्छेदे वायुलक्षणमुक्तम्—'स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः' (२३) इति। के च ते? तदाह—

'स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम्।
संयोगश्च विभागश्च परत्वं चापरत्वकम्॥'

इत्यष्टाविति। पुनरप्युक्तम्—

'अपाकजोऽनुष्णाशीतस्पर्शस्तु पवनो मतः।
तिर्य्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः॥
पूर्व्ववन्नित्यतायुक्तं देहव्यापि त्वगिन्द्रियम्।
प्राणादिस्तु महावायुपर्य्यन्तो विषयो मतः॥'

(२७) इति। 'चे'ति। चकारेण गमनादिगुणान्तरग्रहणमिष्यते। त्रयोदशसूत्रव्याख्या समाप्ता। १३।

## १४। 'तैजसास्तु रूपं रूपेन्द्रियं वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्य्यं च।'

इदानीं तेजोगुणान् वर्णयति—'तैजसा' इति। शब्दस्पर्शरूपवत् तेज इति सृष्टितत्त्ववादिनः। 'रूपमि'ति। रूपं शुक्लभासुरम्। उक्तं च भाषापरिच्छेदे—'स्पर्श उष्णस्तेजसस्तु स्याद् रूपं शुक्लभासुरम्' (२६) इति। 'रूपेन्द्रियं' चक्षुः। वर्णो गौरादिः। 'सन्ताप' उष्णत्वम्। 'भ्राजिष्णुता' दीप्तता। 'पक्ति'राहारपरिपाकः। 'अमर्षः' क्रोधः। 'तैक्ष्ण्यं'

तीक्ष्णता यत आशुक्रिया भवति। 'शौर्य्यं' विक्रान्तता। 'च'कारेण गुणान्तरग्रहणमिष्यते। अन्येऽपि गुणाः स्पर्शः पृथक्त्वं संयोगो विभागो वेग इत्येवमाद्याः। तदुक्तं भाषापरिच्छेदे—'अष्टौ स्पर्शादयो रूपं द्रवो वेगश्च तेजसि' (२३) इति। अष्टौ स्पर्शादयः प्राग् व्याख्याताः। चतुर्द्दशसूत्रव्याख्या समाप्ता। १४।

## १५। 'आप्यास्तु रसो रसनेन्द्रियं सर्व्वद्रवसमूहो गुरुता शैत्यं स्नेहो रेतश्च।'

आप्यगुणानाह—'आप्या' इति। सांख्यनये शब्दस्पर्शरूपरसवत्य-श्चतुर्गुणा आपो भवन्ति। न्यायनये तु चतुर्द्दश गुणाः। तदुक्तं भाषापरिच्छेदे—

'स्पर्शादयोऽष्टौ वेगाश्च गुरुत्वं च द्रवत्वकम्।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्द्दश॥'

(२३) इति। स्पर्शादयः प्राग् व्याख्याताः (पृः २५४)। 'रसो' माधुर्य्यम्। तथा हि सिद्धान्तमुक्तावली—'जलस्य मधुर एव रस' इति। ननु, न हि प्रत्यक्षेण काऽपि रसो जलेऽनुभूयते, तर्हि जले रसो माधुर्य्यं चेत्यत्र किं मानम्? उच्यते। सूत्रस्थानीयद्विचत्वारिंशत्तमेऽध्याये सुश्रुताचार्य्य आह—'आकाशपवनदहनतोयभूमिषु यथासंख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्श-रूपरसगन्धाः। तस्मादाप्यो रसः परस्परसंसर्गात् परस्परानुग्रहात् परस्परानु-प्रवेशाच्च सर्व्वेषु सर्व्वेषां सान्निध्यमस्त्युत्कर्षापकर्षात्तु ग्रहणम्। स च खल्वाप्यो रसः शेषभूतसंसर्गाद् विदग्धः षोढा विभज्यते, तद् यथा—मधुरोऽम्लो लवणः कटुस्तिक्तः कषाय इति। ते च भूयः परस्परसंसर्गात् त्रिषष्टिधा भिद्यन्त' इति। चरके मुनिरप्याह—'रसनार्थो रसस्तस्ये'ति।

तदुक्तं सम्प्रदायविद्भिः—'सदैव सकलं देहं रसतीति रसः स्मृत' इति। न्यायनये च जलस्य विशेषगुणत्वेन रसशब्दः पठ्यते—

'रूपं स्पर्शो रसः स्नेहो द्रवत्वं चानिमित्तकम्।
एते पञ्च जलस्य स्यु र्विशेषगुणसंज्ञकाः ॥' इति।

'रसनेन्द्रियमि'ति। रसनेन्द्रियं रासनं ज्ञानम्। 'सर्व्वद्रवसमूह' इत्यत्र डल्लण आह—'दोषधातुमलेषु द्रुतिमद्द्रव्यनिवह' इति। 'गुरुता' गुरुत्वं प्रत्यक्षम्। 'शैत्यं' शीतलता। 'स्नेहो' द्रवत्वम्। घृतादावपि तदन्तर्वर्त्तिजलस्यैव स्नेहो जलस्य स्नेहसमवायिकारणत्वात् तेन जले स्नेह इति मन्तव्यमिति सिद्धान्तमुक्तावली। सत्यम्, स्नेहो द्विविध एव—प्रकृष्ट-स्नेहोऽप्रकृष्टस्नेहश्चेति। तत्र तैलादौ प्रतीयमानः प्रकृष्टस्नेहो दीपादि-ज्वालादेरनुकूलः। जलगतस्त्वप्रकृष्टस्नेहो वह्निं नाशयति। तत्त्वावलि-कार आह—'सत्यपि द्रवत्वे द्रुतसुवर्णादिभिः सत्यपि च स्नेहे हिमकरकादिभिः पिण्डीभावाजननात् स्नेहसहितमेव द्रवत्वं पिण्डीभावकारणमि'ति। एतदुक्तं भवति यत् पिण्डीभावे स्नेहस्यैवासाधारणकारणत्वं न तु जलादिगत-द्रवत्वस्येति। उक्तं च भाषापरिच्छेदे—'स्नेहस्तत्र द्रवत्वं तु सांसिद्धिक-मुदाहृतम्' इति। स च न्यायमते गुणविशेषो यद्वशाद् दाहानुकूल्यं करोति। 'रेतो' वृष्टिलक्षणत्वात्। श्रूयते हि—'देवानां रेतो वर्षमि'ति। 'चे'ति। चकारेण स्पर्शसंख्यापरिमितिपृथक्त्वसंयोगवेगरूपादिगुणान्तर-ग्रहणमिष्यते। उक्तं च भाषापरिच्छेदे—

'स्पर्शादयोऽष्टौ वेगाश्च गुरुत्वं च द्रवत्वकम्।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥'

इति। अष्टौ स्पर्शादयस्त्रयोदशसूत्रव्याख्यायामुपदर्शिताः। पञ्चदशसूत्र-व्याख्या समाप्ता। १५।

**१६ । 'पार्थिवास्तु गन्धो गन्धेन्द्रियं सर्व्वमूर्त्तिसमूहो गुरुता चेति ।'**

पृथिवीगुणानाह—'पार्थिवा' इति। पृथिव्या विकाराः पार्थिवाः। पृथिवी पञ्चगुणा शब्दस्पर्शरूपरसगन्धवतीति। भाषापरिच्छेदे विश्वनाथन्यायपञ्चानन आह—

'स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश'

इति। अष्टौ स्पर्शादयस्त्रयोदशसूत्रव्याख्यायामुपदर्शिताः। 'गन्ध' इति। घ्राणग्राह्यो योऽर्थः पृथिवीमात्रवृत्तिः स गन्धः। लोके तस्य द्वैविध्यं प्रसिद्धं सुरभिरसुरभिश्चेति। जलादौ स उपाधिकृत एव। केषांचिन्मते गन्धो दशविधः—

'इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च॥'

इति। तत्रेष्टः कस्तूरिकादौ। अनिष्टो मलमूत्रादौ। मधुरः पुष्पादौ। अम्लो यमदूतिकादौ। कटु मरीचादौ। दूरगामी यो गन्धः स निर्हारी हिङ्ग्वादौ। संहतश्चित्रगन्धो नानाकल्कद्रव्यादौ। स्निग्धो घृतादौ। रूक्षः सार्षपतैलादौ। विशदः कृष्णजीरकादौ। 'गन्धेन्द्रियमि'ति। गन्धोपलब्धिसाधनमिन्द्रियं घ्राणेन्द्रियमिति यावत्। तदेव पार्थिवं नासाग्रवृत्ति च। 'सर्व्वमूर्त्तिसमूहो' 'दोषधातुमलेषु यः कश्चित् काठिन्यनिवह' इति डल्लणः। 'गुरुता' गुरुत्वम्। 'च'कारेण स्पर्शादिगुणान्तरग्रहणमिष्यते। भाषापरिच्छेदे क्षितेश्चतुर्दश गुणा उक्ताः स्पर्शसंख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्ववेगगुरुत्वद्रवत्वरूपरसगन्धा इति। षोडशसूत्रव्याख्या समाप्ता। १६।

**१७। 'तत्र सत्त्वबहुलमाकाशं रजोबहुलो वायुः सत्त्वरजोबहुलोऽग्निः सत्त्वतमोबहुला आपस्तमोबहुला पृथिवीति ।'**

आकाशादीनां गुणविशेषाधिक्यं प्रदर्श्यते—'तत्रे'ति। 'सत्त्वबहुलं' सत्त्वगुणबहुलमित्यभिप्रायः। एतस्य सूत्रस्य भूतव्याख्याने यत्नो न कृतः फल्गुप्रयोजनत्वात् सिद्धपदार्थत्वादतिरोहितार्थत्वाच्च। सप्तदशसूत्रव्याख्या समाप्ता। १७।

**१८। 'श्लोकौ चात्र भवतः—**

**अन्योन्यानुप्रविष्टानि सर्व्वाण्येतानि निर्द्दिशेत्।**

**स्वे स्वे द्रव्ये तु सर्व्वेषां व्यक्तं लक्षणमिष्यते॥**

**अष्टौ प्रकृतयः प्रोक्ता विकाराः षोडशैव तु।**

**क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः॥'**

प्रकरणार्थमुपसंहरन् ब्रूते—'श्लोकौ चात्र भवत' इति। ननु, 'सकृदुपस्पृश्य कृतः शास्त्रार्थ' इति प्रवृत्तौ चोक्तस्य पुनरुक्ततेति चेत्, तन्न। कुतः?

'गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते।
तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गृह्यते॥'

इति न्यायात्। अत एव सूत्रकार उक्तेऽर्थे वृद्धसम्मतिमनुग्राहकत्वेन प्रमाणयति—'श्लोकावि'ति।

प्रथमश्लोकस्य व्याख्यायां निबन्धसंग्रहे डल्लणाचार्य्य आह—'तत्र शब्दगुणमाकाशं मारुते प्रविष्टं शब्दस्पर्शगुणत्वान् मारुतस्य। आकाशमारुतौ तेजसि प्रविष्टौ शब्दस्पर्शरूपगुणत्वात् तेजसः। आकाशमरुत्तेजांसि तोयद्रव्ये प्रविष्टानि शब्दस्पर्शरूपरसगुणत्वात् तोयस्य। आकाशमरुत्तेजस्तोयानि पृथिव्यामनुप्रविष्टानि शब्दस्पर्शरूपरसगन्धगुणत्वात् पृथिव्याः। एवं व्योमानिलानलजलोर्व्वीणां परस्परानुप्रवेशकानुप्रवेश्यत्वेनावस्थितानामन्योन्यानुप्रविष्टत्वमुक्तम्' इति।

व्याख्या पुनरियं हृद्यत्वेन न प्रतीयते, आकाशे वाय्वादीनामनुप्रवेशाभावात् पञ्चभूतानामन्योन्यानुप्रविष्टत्वं व्याहन्यत इति। अत एव ब्रूमः पञ्चमहाभूतनिर्वृत्तये श्लोककारस्त्रिवृदानुरूप्येण पञ्चीकरणं प्रमाणयति—'अन्योन्यानुप्रविष्टानी'ति। पञ्चीकरणप्रकारं च दर्शयता शास्त्रकारेणोक्तम्—

'द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः।
स्वस्वेतरद्वितीयांशै र्योजनात् पञ्च पञ्च ते॥'

इति। पञ्चीकरणवार्त्तिके सुरेश्वराचार्य्यश्चाह—

'पृथिव्यादीनि भूतानि प्रत्येकं विभजेद् द्विधा।
एकैकं भागमादाय चतुर्द्धा विभजेत् पुनः॥
एकैकं भागमेकस्मिन् भूते संवेशयेत् क्रमात्।
ततश्चाकाशभूतस्य भागाः पञ्च भवन्ति हि॥
वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत्।
पञ्चीकरणमेतत् स्यादित्याहुस्तत्त्ववेदिनः॥

(८-१०) इति। अयमाशयः। आकाशादिकमेकैकं प्रथमतो द्विधा द्विधा कृत्वा पुनरपि तं तं प्रथमं भागं चतुर्द्धा कृत्वा स्वस्मात् स्वस्मादितरेषां चतुर्णां भूतानां यो यो द्वितीयो भागस्तेन सह प्रथमभागांशानामेकैकस्य योजनादाकाशवाय्वग्न्यप्पृथिव्यः प्रत्येकं पञ्चपञ्चात्मकं भवन्तीति। ननु, पञ्चीकृतानामाकाशादीनामेकैकस्याकाशवाय्वग्न्यप्पृथिव्य इत्येकैकरूपेण व्यपदेशः कथमुपपद्यते? नैष दोषः। यद्यपि सर्व्वं भूतजातं पञ्चीकृतं तथापि वैशेष्यादाकाशादीनां तत्तत्संज्ञया निर्द्देशो नानुपन्नो भवति। नास्याप्रामाण्यमाशङ्कनीयं त्रिवृत्करणश्रुतेः पञ्चीकरणस्याप्युपलक्षणार्थत्वात्। पुनरपीह केचित् प्रगल्भन्ते सम्प्रदायाध्वना पञ्चीकरणं स्थितमपि वस्तुवृत्तेः साक्षादविसंवादित्वात् प्रामाण्यं त्वस्य भूयो न मन्तव्यमिति। युक्तिं च त इत्थमाचक्षते यद् गगनपवनयोः पृथिव्याद्यात्मकत्वे रूपवत्त्वेन चाक्षुषत्वं

तयोः प्रसज्येत, न चैवं तु प्रसज्यत इति। अत्र ब्रूमः। त्रीणि त्रिशो वर्त्तन्त इति त्रिवृत् तत्करणे यथा तेजसो जलान्नात्मकत्वेऽपि स्वभावतस्तस्य त्रिवृत्कृतस्य जलान्नविशिष्टत्वं नानुभूयते, तद्वत् पञ्चीकरणे गगनपवनयोश्च पृथिव्याद्यात्मकत्वेऽपि स्वभावतस्तयोः पञ्चीकृतयोश्चाक्षुषत्वं नोपलभ्यते, उपलभ्यते तु योगिभिरेवेति।

ननु, भगवता शङ्कराचार्य्येणैव पञ्चीकरणं सिद्धान्तितं वार्त्तिककृता सुरेश्वराचार्य्येण च तत् प्रपञ्चितं व्याख्यातं च, कथं तर्हि सुप्राचीनतरस्य सुश्रुतस्यापि पूर्व्वाचार्य्योऽयं श्लोककारः पञ्चभूतनिष्पत्तौ पञ्चीकरणं प्रमाणयति? नैतच्चित्रम्। औपनिषदत्रिवृत्करणस्थितेः पञ्चीकरणतत्त्वं च श्रुतिस्वारस्यात् पुराकल्पेऽपि नाविदितमासीत्, शङ्कराचार्य्यस्तु पूर्व्वकल्पीयं श्रौतरहस्यं विस्तरतो व्याचख्या इति। तथा हि न्यायमञ्जर्य्यां जयन्तभट्टेनोक्तम्—'नन्वक्षपादात् पूर्व्वं कुतो वेदप्रामाण्यनिश्चय आसीत्? अत्यल्पमिदमुच्यते। जैमिनेः पूर्व्वं केन वेदार्थो व्याख्यातः? पाणिनेः पूर्व्वं केन पदानि व्युत्पादितानि? पिङ्गलात् पूर्व्वं केन च्छन्दांसि रचितानि? आदिसर्गात् प्रभृति वेदवदिमा विद्याः प्रवृत्ताः। संक्षेपविस्तरविवक्षया तु तांस्तांस्तत्र तत्र कर्त्तॄनाचक्षत' इति। तत आकाशादिव्यपदेशं दर्शयन्नाह—'स्वे स्वे द्रव्ये' इति। स्वकीये क्रियागुणवत् समवायिकारणात्मके पदार्थे। 'सर्व्वेषामि'त्यादि। आकाशादौ तत्तल्लक्षणं व्यक्तमित्यभिप्रायः।

उक्तमपि पुनस्तत् स्पष्टीकरोति—'अष्टावि'ति। 'अष्टौ प्रकृतयः' इत्यत्र साम्यरूपा प्रकृतिरेका न कस्यचिद् विकृतिरपि तु परमकारणमेव, त्रिगुणात्मिका महदाद्याः सप्तप्रकृतिविकृतयश्चेत्यष्टौ वैशेष्यादेव तद्वादन्यायेन सर्व्वाः प्रकृतय उच्यन्ते। तत्र महदादिषु महानहंकारं जनयतीति प्रकृतिः, मूलप्रकृतेरुत्पद्यमानत्वाद् विकृतिः, अहंकार इन्द्रियाणि पञ्चतन्मात्राणि च

जनयतीति प्रकृतिः, स्वयं महत उत्पद्यमानत्वाद् विकृतिः ; पञ्चतन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानि परिणामक्रमनियमत आकाशपवनदहनतोय-पृथिव्याख्यानि पञ्चमहाभूतानि जनयन्तीति प्रकृतयः, अहंकारादुत्पाद्यमान-त्वाद् विकृतयः। विशेषपर्व्व व्याचष्टे—'विकाराः षोडशे'ति। गुणा-नामेव षोडशको विशेषपरिणाम इत्यर्थः। अविशेषेभ्य उत्पद्यमानानां विकाराणां नास्ति कश्चित् तत्त्वान्तरपरिणाम इत्यतस्ते विशेषा उच्यन्ते। अयं निष्कर्षः। अहंकारो महत उत्पन्न इति विकृतिः, तन्मात्राणि जनयतीति प्रकृतिः ; पञ्चतन्मात्राण्यहंकारादुत्पन्नानीति पञ्चापि विकृतयः, ततश्च पञ्चमहाभूतानि जायन्त इति प्रकृतयः। अत उत्पन्नत्वादुत्पादक-त्वाच्च सप्तेमाः प्रकृतयो विकृतयश्च। अतस्तद्व्यक्ति र्यथा—वैकृतिका-दहंकारादुत्पन्नान्येकादशेन्द्रियाणि, तन्मात्रेभ्यः पञ्चमहाभूतानीति षोडशको-ऽयं गणो, विकारोऽन्यत उत्पन्न इति, न च ततोऽन्यदुत्पद्यत इति न प्रकृतिरिति। एते च पदार्थाः श्रुतिष्वपि गणिता यथा कृष्णयजुर्व्वेदीय-गर्भोपनिषदि—'तत्र पृथिवी धारणे, आपः पिण्डीकरणे, तेजः प्रकाशने,वायु र्व्यूहने, आकाशमवकाशदाने। पृथक् श्रोत्रे शब्दोपलब्धौ, त्वक् स्पर्शे, चक्षुषी रूपे, जिह्वा रसने, नासिका घ्राणे, उपस्थ आनन्ददाने' इत्यादि। 'अष्टौ प्रकृतयः षोडशविकारा' इति। आथर्वण्यां प्रश्नोपनिषदि च 'पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च वाक् च वक्तव्यं च हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्ज्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं चे'त्यादिना। एवं मैत्रेयोपनिषदादिष्वपि। सांख्यदर्शनस्य १।६१सूत्रीयविज्ञानभिक्षुकृते भाष्ये लिखितमस्ति—'महतश्च कार्य्योऽहंकारः, अहंकारस्य कार्य्यंद्वयं तन्मात्राण्युभयमिन्द्रियं च। तत्रोभयमिन्द्रियं बाह्या-

भ्यन्तरभेदेनैकादशविधम्। तन्मात्राणां कार्य्याणि पञ्च स्थूलभूतानिति। 'क्षेत्रज्ञ' इति। क्षेत्रवदस्मिन् कर्म्मफलं निष्पाद्यत इति क्षेत्रं भूतेन्द्रियसंघातरूपं भोगायतनं ममाद्यभिमानेन यो जानाति वेदनेन विषयीकरोति स क्षेत्रज्ञः। एवं च क्षेत्रात् कृषीवलवत् क्षेत्रज्ञोऽत्यन्तविलक्षण एव। 'समासेन' संक्षेपेण। 'स्वतन्त्रपरतन्त्रयोरि'ति। शल्यशालाक्यतन्त्रयोरिति साम्प्रदायिकाः। अस्मन्मते तु स्वतन्त्रे वैद्यागमे परतन्त्रे सांख्यादाविति। अष्टादशसूत्रव्याख्या समाप्ता। १८। समाप्तश्च सौश्रुते शारीरस्थाने प्रथमोऽध्यायः। प्रकरणं च समाप्तम्। समाप्तं वृद्धसुश्रुतीयवृत्तम्। इदानीं वृद्धवाग्भटीयवृत्तमुपादीयते।

---

# वृद्धवाग्भटीयवृत्तम्

चत्वारो वागभटा आसन्। तत्रैको द्वितीयखृष्टशताब्दीयः स्मृतिनिबन्धकारो वैद्यकनिघण्टुकारः सिंहगुप्तस्य पिता संग्रह-हृदयकृतः पितामहश्च। सोऽत्र प्रथमवाग्भटत्वेनाभिहितो भविता। अन्यो द्वितीय-तृतीयखृष्टशताब्दीयः संग्रहहृदयादिवैद्यकग्रन्थप्रणेता सिंहगुप्तस्य पुत्रः प्रथमवाग्भटस्य पौत्रश्च। सोऽत्र द्वितीयवाग्भटत्वेनाभिधायिष्यते। रूढोऽपि वृद्धवाग्भटशब्द एतस्याष्टाङ्गसंग्रहग्रन्थे वहव एनमपि वृद्धवाग्भटमाहुः। वाहडी वाहटी वाभटश्चेत्यस्य नामान्तराणि भवन्ति। शास्त्रदर्पणनिघण्टु-वैद्यकसंहिताऽपरपर्य्यायवाभटसंहिता-वाभटव्याकरणादिप्रणेता वाभटस्तु कश्चिदन्य एव। स एकादश-द्वादशखृष्टशताब्दीय आसीत्। तार्त्तीयीको वाग्भटो द्वादशखृष्टशताब्द्यां गुर्जराधिपते जयसिंहस्य मन्त्रित्वमकार्षीत्। स नेमिनिर्व्वाणमहाकाव्यं वाग्भटालंकारं च प्रणिनाय। वाहड इत्यस्यापि नामान्तरमेव। साहित्यादौ तस्य ज्ञानातिशयेऽपि स आयुर्व्वेदज्ञो नासीत्। त्रयोदश-चतुर्द्दशखृष्टशताब्दीयस्तुरीयो वाग्भट आलंकारिकत्वेन वैद्यागमिकत्वेन च प्रसिद्धः। अलंकारशास्त्रे तस्य काव्यानुशासनं नितरामुत्तमो ग्रन्थः। वैद्यकशास्त्र तस्य हृदयटिप्पणादिग्रन्थाः सुप्रसिद्धा एव। अन्तिमवाग्भटद्वयं नैतत्प्रबन्धविषयकं भवति। इदानीं प्रागुक्तवाग्भटयो वृत्तान्तावुपवर्ण्येते।

सिन्धुदेशजो द्वितीयोवाग्भट आयुर्व्वेदे ज्ञानातिशयात् सिन्धुदेशीयचरकमुनिनाम्ना ख्यात आसीत्। वाभटो वाभटगुप्तो वाहटो वाहडश्चेत्यस्य नामान्तराण्युक्तान्येव। केचिद् वाग्भटनाम्न उच्चारणशैथिल्याद् गकारं स्थगयन्तो वाभट इत्याहुः। सिंहगुप्तस्य तनयत्वात् स वाभटगुप्त इत्युक्तः।

प्राकृतभाषादौ वाहटवाहडौ संस्कृतभाषायां वाग्भटशब्दस्यापभ्रंशत्वेन गृहीतौ। अनेकेषां मते मुनिरिति ख्यातिरस्य सञ्जाता। एकेषां मते तु स राजर्षिपदभागप्यासीदिति।

अयं पितुः सिंहगुप्तात् समजनि। अष्टाङ्गसंग्रहस्थवाजीकरणविधेरुत्तर-स्थानादस्य वंशविवरणमुपलभ्यते। तत्र लिखितमस्ति—

'भिषग्वरो वाग्भट इत्यभून्मे, पितामहो नामधरोऽस्मि यस्य।
सुतोऽभवत् तस्य च सिंहगुप्तस्तस्याप्यहं सिन्धुषु जातजन्मा॥'
इति। (६)।

एतस्मादवगम्यते यदयं वाग्भटस्य पौत्रः सिंहगुप्तस्य पुत्रश्चेति। नाम-विभ्रमपरिहारार्थं सिंहगुप्तजनकं प्रथमवाग्भट इति, सिंहगुप्ततनयं द्वितीय-वाग्भट ( Vagbhata II ) इति च ब्रूमः। इदानीमनयो र्वृत्तान्तः प्रदीयते।

प्रथमो वाग्भटः सिन्धुदेशजातो वैद्यागमिकः स्मार्त्तः शाब्दिकः सद्-ब्राह्मणश्चासीत्। आयुर्व्वेदशास्त्रे तस्य वैद्यकनिघण्टुरेक उपादेयः प्रकरण-ग्रन्थः। एतज्जातीयकग्रन्थसम्बन्धे चोक्तम्—

'शास्त्रैकदेशसम्बद्धं शास्त्रकार्य्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः॥' इति।

तत्र स दृष्टिविशेषमाश्रित्य वैद्यशास्त्रं दशधा विभेजे—द्रव्याभिधानं रुग्-विनिश्चयः कायसौख्यसम्पादनं शल्यविद्या भूतनिग्रहो विषप्रतीकारो बालोप-चारो रसायनं शालाक्यतन्त्रं वृष्यं चेति। माधवकरस्य निदानापरपर्य्याय-रोगविनिश्चयो वैद्यकनिघण्टो रुग्विनिश्चयादेरधमर्ण इत्युच्यते। एतदुक्ते-रविश्वास्यता तु न प्रसज्यते। तथा हि निदाने ग्रन्थकृता स्वयमेवोक्तम्—

'नानामुनीनां वचनैरिदानीं
समासतः सद्भिषजां नियोगात् ।
सोपद्रवारिष्टनिदानलिङ्गो
निवध्यते रोगविनिश्चयोऽयम् ॥' (२) इति ।

वैद्यकनिघण्टु र्नास्माभि र्दृष्टः। किन्तु प्रथमवाग्भटपौत्रद्वितीयवाग्भटस्य अष्टाङ्गहृदयसंहिताया वहवः श्लोका माधवनिदाने समुद्धृता दृश्यन्ते। तत्र केचित् परकीयश्लोकाः केचित्तु स्वकीयपरकीया एव। मुखरोगनिदाने परकीयश्लोका यथा—'घृष्टेषु दन्तमांसेषु संरम्भो जायते महान्' (१८) इत्येवमाद्याः। अष्टाङ्गहृदयसंहिताया उत्तरस्थानीय एकविंशाध्याये मुखरोगविज्ञानमधिकृत्य द्वितीयवाग्भटोऽप्याह—घृष्टेषु दन्तमांसेष्वित्यादि (२८-२९)। पुनरपि बालरोगनिदाने परकीयाः श्लोका यथा—

'तत्र विद्याद् रुजं मूर्ध्नि रुजं चाक्षिनिमीलनात् ।...
कोष्ठे विवन्धवमथुस्तनदंशान्त्रकूजनैः ॥' ( ५-६ )

इत्येमाद्याः। अष्टाङ्गहृदयसंहिताया उत्तरतन्त्रस्य द्वितीयाध्याये पठ्यन्ते—'तत्रे'त्यादि। (७)। स्वकीयपरकीयश्लोको वालरोगनिदाने यथा—

'शिशोस्तीव्रामतीव्रां च रोदनाल्लक्षयेद् रुजम् ।
स यं स्पृशेद् भृशं देशं यत्र च स्पर्शनात्क्षमः ॥' ( ४-५ )

इत्येवमादिः। अष्टाङ्गहृदयसंहिताया उत्तरतन्त्रस्य द्वितीयाध्याये वाग्भट आह—

'शिशोस्तीक्ष्णामतीक्ष्णां च रोदनाल्लक्षयेद् रुजम् ।
सोऽयं स्पृशेद् भृशं देशं यत्र च स्पर्शनाक्षमः ॥' (५-६) इति।

अत्र माधवकरस्य सविधे हृदयश्लोकानामुत्कर्षदर्शनादुपपद्यते यद् माधवेनैव हृदयश्लोका गृहीता न तु वाग्भटेन माधवनिदानश्लोका इति।

वैद्यनिघण्टोः शास्त्रविभागमननुसृत्य प्रथमवाग्भटपौत्रद्वितीयवाग्भटेन त्वष्टाङ्गसंग्रहे ब्रह्मसंहितोक्तमतेनाष्टाङ्गक आयुर्व्वेद उक्तः—

कायबालग्रहोर्द्ध्वाङ्गशल्यदंष्ट्राजरावृषैः ।
गतमष्टाङ्गतां पुण्यं बुबुधे यं पितामहः ॥

( सूत्र १।८ ) इति । तत्र कायशब्देन ब्रह्मोक्तं कायचिकित्सातन्त्रमुच्यते । बालशब्देन तदुक्तं कौमारभृत्यतन्त्रं लक्ष्यते । बालाः कुमाराः । ग्रहशब्देन ब्रह्मकथितं भूतविद्यातन्त्रं गृह्यते । अष्टौ ग्रहा 'देवासुरगन्धर्व्वयक्षरक्षः-पितृनागपिशाचा' इति । ऊर्ध्वाङ्गशब्देन ब्रह्मोक्तं शालाक्यतन्त्रमुच्यते । तच्च तन्त्रं जत्रुदेशगतानां रोगाणामुपशमार्थमुपदिश्यते । स्कन्धसन्धेरूर्द्ध्वभाग ऊर्द्ध्वजत्रु जत्रु वा । शल्यशब्देन ब्रह्मोक्तं शल्यतन्त्रं लक्षितम् । शल्यतन्त्रं शल्यहरणप्रधानतन्त्रमिति यावत् । दंष्ट्राशब्देन ब्रह्मोक्तमगदतन्त्रं गृह्यते । जराशब्देन तदुक्तं रसायनतन्त्रमुच्यते । निदाने रसायनलक्षणमुक्तम्—

'यज्जराव्याधिविध्वंसि वयःस्तम्भकरं तथा ।
चक्षुष्यं बृंहणं वृष्यं भेषजं तद् रसायनम् ॥'

फलं च तत्रैवोक्तम्—

'दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
देहेन्द्रियबलं कान्ति नरो विन्देद् रसायनात् ॥'इति ।

वृषशब्देन ब्रह्मोक्तं वाजीकरणतन्त्रं लक्ष्यते । वृषं वृष्यं शुक्रवर्द्धनमिति-यावत् ।

प्रथमवागभटस्य स्मृतिसंग्रहोऽल्पीयसैव कालेन प्रसिद्धिं नितरामाप । अपरार्कयाज्ञवल्कीयधर्म्मनिबन्धे नामग्राहं तस्य वचनानि प्रामाणिकत्वेन बहुश उद्धृतान्यासन् । ग्रन्थश्चायं नेदानीमुपलभ्यते ।

मन्ये—द्वितीयखृष्टशताब्द्या अभ्यन्तरवर्त्तिनि कुत्रचित् समये प्रथम-वागभट आविर्बभूवेति । तेन स्वनाम्ना व्याकरणमेकं प्रणीतम् । स च

ग्रन्थो वैयाकरणैरादरातिशयेन परिगृहीत आसीदित्यवगम्यते। तन्मते 'चर्म्मणि द्वीपिनं हन्ती'त्यादौ 'क्रियार्थोपपदस्य कर्म्मणि स्थानिन' इति चतुर्थीनिषेधार्थं हन्तेः कर्म्मणा सोपष्टम्भं संयुक्ते निमित्त सप्तमी व्याख्येया। चूर्णिकृद्भागुरी अनुसृत्यैव वाग्भट एवमुक्तवान्। तदेव षष्ठखृष्टशताब्दीयायां महाभाष्यदीपिकायां भर्त्तृहरिणा श्लोकितम्—

'हन्तेः कर्म्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमीम्।
चतुर्थीबाधिकामाहुश्चूर्णिभागुरिवाग्भटाः॥' * इति।

चूर्णिः सूत्रवार्त्तिकभाष्यमिति दुर्गवृत्तिः (उण् ३।१८६)। चूर्णिरित्यनेन पतञ्जलि र्लक्षितः।

अत्र चूर्णिभागुरिभ्यां सुप्राचीनाभ्यां मुनिभ्यां वाग्भटस्यापि नामकीर्त्तनादुपपद्यते यदसौ भर्त्तृहरितो वहुप्राचीन एवेति। यत ईषत् प्राक्कालिकस्य समकालिकस्य वा ग्रन्थकृतो वचनप्रामाण्यमुपन्यसितुं कस्यापि श्रद्धा नोत्पद्यते। एवं च तस्य द्वितीयखृष्टशताब्दीयत्वं नानुपपन्नमेव। अस्माकं मतमेतद् द्रढयितुं प्रमाणान्तराणि द्वितीयवाग्भटस्य समयनिरूपणावसरे विस्तरतो दर्शयिष्यामः। आपातत एतावद् ब्रूमो यत् प्रथमवाग्भटस्य पुत्रपौत्रयोः सिंहगुप्त-द्वितीयवाग्भटयोः स्थितिकालो द्वितीयतृतीयखृष्टशताब्द्यन्तराल एवासीदिति।

अष्टाङ्गसंग्रहस्य वाजीकरणविधरुत्तरस्थानादवगम्यते यद् द्वितीयो वाग्भटो गुरोरवलोकितात् पितुः सिंहगुप्ताच्च शिक्षां लेभे। तत्र लिखितमस्ति—

---

* शब्दशक्तिप्रकाशिकायां कारकप्रकरणान्ते जगदीशेन लिखितम्—
'हन्तेः कर्म्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमीम्...चूर्णिभागुरिवाग्भटा' इति भर्त्तृहरिस्मरणात्' इति।

'समधिगम्य गुरोरवलोकिताद्
गुरुतराच्च पितुः प्रतिभां मया ।
सुबहुभेषजशास्त्रविलोचनात्
सुविहितोऽङ्गविभागविनिर्णयः ॥' इति । (६) ।

अस्त्येवं प्रसिद्धि र्यदयं गुरुरवलोकितो बौद्ध आसीदिति । श्लोकेऽस्मिन् पितु र्वैदुष्य उद्घोषितेऽपि वैद्यागमे तस्य काचिदपि कृति र्नास्माभिरुपलभ्यते । एकादशखृष्टशताब्द्यां गदनिग्रहे खदिरवटिकाया उपकल्पनमधिकृत्य शार्ङ्ग-देवस्य पित्रा सोढलवैद्येन तु लिखितम्—'नाम्ना खदिरवटिका कथितेयं सिंहगुप्तेन……' इति । एतस्मादनुमीयते यदस्य कश्चिद् वैद्यकग्रन्थ आसीदिति । अधुना तु कदा तस्य विलोपो जात इत्यपि वक्तुं न शक्यते ।

केषांचिद् मते बौद्धगुरुसमीपतो विद्यालाभाद् वाग्भटोऽपि बौद्धभावा-पन्नः प्रच्छन्नबौद्धो वासीत् । तथा हि संग्रहस्य सूत्रस्थानारम्भे सुगतस्मरण-पुरःसरं तन्त्रमारिप्सु र्ग्रन्थकारो मङ्गलमाचरति—

'रागादिरोगाः सहजाः समूला
येनाशु सर्व्वे जगतोऽप्यपास्ताः ।
तमेकवैद्यं शिरसा नमामि
वैद्यागमज्ञांश्च पितामहादीन् ॥' इति ।

न केवलं संग्रहे, परं तु हृदयप्रारम्भेऽपि नमस्कारः पराभवति प्रत्यूहरा-जिमिति संस्मृत्य कल्याणाशंसी ग्रन्थकारः सौगताचारबोधिततया देवं तथागतं भूयिष्ठमुपश्लोकयति—

'रागादिरोगान् सततानुषक्ता-
नशेषकायप्रसृतानशेषान् ।
औत्सुक्यमोहारतिदाञ्जघान
योऽपूर्व्ववैद्याय नमोऽस्तु तस्मै ॥' इति ।

अस्मन्मते पुन र्द्वितीयवाग्भटोऽपि पितृपैतामहमार्गानुसारी परमो हिन्दुरासीत्*। तेन हि ग्रन्थनिर्म्माणे प्रत्यूहनिवारणाय तथा ज्ञानोत्कर्षलाभाय च 'ज्ञानं तु शङ्करादिच्छेदि'ति स्मृतेः शङ्करापरनामकरुद्रसपर्य्यायै श्लोकद्वयं रचितं न तु बुद्धसपर्य्याया एव। ननु, विघ्नहारिणं गणपतिं विहाय कथं शङ्करो नमस्क्रियते? गणपतेरपि पूज्यतया तत्पितुः सपर्य्या नानुपपन्ना भवतीति।

इदानीमष्टाङ्गसंग्रहस्य श्लोको व्याख्यायते। सहजा रागादिरोगाः समूला अपास्ता येन तं नमामीति सम्बन्धः। रागादिरोगा इत्यादि। सुखे तत्साधने वा यो गर्द्धः स रागः। आदिशब्देन त्वविद्यादय उपात्ताः। अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा विपर्य्ययकार्य्यतया तन्त्रान्तरे देहमनसी रुजन्तीति रोगत्वेन परिभाषिताः। ननु, स्वशास्त्रसंज्ञां विहाय परशास्त्रसंज्ञाग्रहणमन्याय्यमिति चेत्? नैष दोषः। योगशास्त्रवेदान्तशास्त्रे अपि वैद्यागमबाह्ये भवतः, ततस्तु चरकसुश्रुताभ्यां योगोपसर्ज्जनीभूतब्रह्मनिर्व्वाणपञ्चीकरणादिविषयाः परिगृहीता इति। सहजाताः प्राकृता इत्यर्थः। 'सहजः प्रकृताव'पीत्युक्तेः। समूला निरस्ताः समूलघातं दूरीकृताः। आजन्म ये रागादिरोगाः शरीरिणं संप्राप्तास्ते मूलहरं निरस्ता इति निष्कर्षः। एकवैद्यमिति। एकः श्रेष्ठो वैद्यो भिषग् एकवैद्यो भिषक्तमो रुद्र इति यावत्।

---

* हिन्दुरित्ययं नापशब्दो भवति। तथाहि मेरुतन्त्रे भगवता तस्य शास्त्रीया व्युत्पत्ति र्दर्शिता—'हीनं च दूषयत्येव हिन्दुरित्युच्यते प्रिये' इति। तथा च शिष्टप्रयोगः—

"यवनैरवनिः क्रान्ता हिन्दवो विन्ध्यमाविशन्।
बलिना वेदमार्गोऽयं कलिना कवलीकृतः॥" इति।

'एकः संख्यान्तरे श्रेष्ठ' इति कोषोक्तेः। यद्वा—एकः प्रथमो वैद्यो भिषग् एकवैद्यो रुद्र इति यावत्। उक्तं च कोषे—'एकोऽल्पान्येप्रधानेषु प्रथमे केवल' इति। 'मा त्वा रुद्र' (ऋग्वेद २।३३।४) इत्यादिमन्त्रभाष्ये सायणाचार्य्येणोक्तम्—"हे रुद्र, त्वां भिषजां चिकित्साभिज्ञानां मध्ये भिषक्तममतिशयेन भैषज्यस्य कर्त्तारं शृणोमि। 'प्रथमो दैव्यो भिषगि'ति च मन्त्रान्तरेऽप्युक्तम् (शुक्लयजुर्वेद १६।५, तै०सं ४।५।१)"इति। अस्मन्मते हि संग्रहश्लोके य एकवैद्यः स ऋग्वेदे भिषक्तम इति तैत्तिरीयसंहितायां प्रथम इति चोच्यते। अयमाशयः। प्रजापतिदक्षादिभिरपि दुरुच्छेदान् सर्व्वतो व्याप्तान् सोपाधीन् रागादिरोगान् यः स्मरहरत्वेन मूलहरं जघान स एकवैद्यः प्रथमो भिषक्तमो रुद्रस्तं नमामी'ति। किं च, नमामि पितामहादींश्च। पितामहो ब्रह्मा। आदिपदेन दक्षप्रजापतिदक्षदेवेन्द्रादयो गृह्यन्ते; नमिरयं पूजार्थे सकर्म्मकः। अवनतिमात्रवाचकत्वे त्वकर्म्मको यथा नमन्ति फलिनो वृक्षा इति।

इदानीमष्टाङ्गहृदयसंहितायाः श्लोको व्याख्यायते। रागादिरोगानिति। रागादिरोगाः पूर्व्वं व्याख्याताः। 'सततानुषक्तानि'त्यादि। जन्मनः प्रभृति शरीरिणः संगतान्। 'औत्सुक्यमोहारतिदानि'ति। मोहः कार्य्यानभिज्ञत्वमिति सर्व्वाङ्गसुन्दरेऽरुणदत्तः। पद्मपुराणीयक्रियायोगसारे तु स्मर्य्यते—

'मम माता मम पिता ममेयं गृहिणी गृहम्।
एतदन्यद् ममत्वं यत् स मोह इति कीर्त्तितः॥' इति।

अरतिरनवस्थितिः स्थानासनादिष्वित्यरुणदत्तः। अरतिरुद्वेग इत्युज्ज्वलदत्तः। अरतिरनवस्थितचित्तत्वमिति रक्षितः। अन्ये पुनः स्वाभीष्टवस्त्वलाभेन चेतसो याऽनवस्थितिः साऽरतिरिति। औत्सुक्यमोहारती र्ददति ये तानित्यर्थः।

अपूर्व्ववैद्यायेति। अपूर्व्ववैद्य एकवैद्यो यः पूर्व्वं व्याख्यातः। नमोऽस्तु तस्मा इति। नमःशब्दस्य नमस्कारार्थकत्वेऽपि तद्योगे 'नमः स्वस्ती'-त्यादिना चतुर्थ्येव भवति। ननु, कथं नारायणं नमस्कृत्येत्यत्र चतुर्थी न भवति? उपपदविभक्तेः कारकविभक्ति र्बलीयसी'ति न्यायात्। उक्तं च—

'नमोयोगे क्रियाशून्ये चतुर्थी सम्मता बुधैः।
करोत्यर्थविवक्षायां द्वितीया तत्र निश्चला ॥' इति।

कैयटेनापि तात्पर्य्यत उक्तम्—क्रियाकारकयोः सम्बन्धोऽन्तरङ्गः, उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्ति-र्बहिरङ्गे'ति। कथं तर्हि नारायणाय नमस्कुर्म्म इति? 'क्रियार्थोपपदस्य कर्म्मणि स्थानिनः' (२।३।१४) इत्यूह्यस्य तुमुनः कर्म्मणि चतुर्थी न तु नमोयोग एव। नारायणमनुकूलयितुमित्यर्थः।

अत उभयग्रन्थयो र्मङ्गलाचरणश्लोकाभ्यां वाग्भटस्य बौद्धभावा-पन्नत्वं नावगम्यते। ग्रन्थकारोऽयं यदि प्रच्छन्नबौद्धोऽभविष्यत् तर्हि प्रयोजनादिकथनानन्तरं शास्त्रस्यागमशुद्धिप्रतिपादनाय गौरवोत्पादनाय च ब्रह्मादिदेवान् सोमात्रेयादिमुनींश्च नास्मरिष्यत्। शास्त्रोत्पत्तिमधिकृत्य संग्रहे तेनोक्तम्—

'आयुर्व्वेदामृतं सार्व्वं ब्रह्मा बुद्ध्वा सनातनम्।
ददौ दक्षाय, सोऽश्विभ्यां, तौ शतक्रतवे ततः ॥
धर्म्मार्थकाममोक्षाणां विघ्नकारिभिरामयैः।
नरेषु पीड्यमानेषु पुरस्कृत्य पुनर्व्वसुम् ॥
धन्वन्तरिभरद्वाजनिमिकाश्यपकश्यपाः।
महर्षयो महात्मानस्तथाऽऽलम्बायनादयः ॥
शतक्रतुमुपाजग्मुः शरण्यममरेश्वरम्।
तान् दृष्ट्वैव सहस्राक्षो निजगाद यथागमम् ॥' इति।

हृदयेऽपि स आह—

'ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् ।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन् ॥' इति ।

असौ मुनि वैद्यकग्रन्थांश्चतुरः प्रणीतवान्—अष्टाङ्गसंग्रहोऽष्टाङ्गसंग्रह-संहिता—ऽष्टाङ्गहृदयसंहिता रसरत्नसमुच्चयश्चेति । एते पुन र्वाग् भट-प्रणीतत्वात् संक्षेपेण प्रातिस्विकसंज्ञया वृद्धवाग् भटो लघुवाग् भटो रस-वाग् भटश्चेति यथाक्रममुच्यन्ते । संग्रह-संग्रहसंहिता-हृदयसंहितासु संग्रहस्य गरिष्ठत्वाद् वरिष्ठत्वाच तस्य वृद्धवाग् भट इत्यभिधानं भवति । अष्टाङ्ग-संग्रहसंहिताया अष्टाङ्गहृदयसंहितायाश्च सर्व्वे विषया इह विस्तरत उपदिष्टा इति प्रामाणिकाः । एष द्वादशसाहस्री ग्रन्थ इति प्रसिद्धिरस्ति । चक्रपाणिविजयरक्षितश्रीकण्ठडल्लणाचार्य्याः शिवदासादयश्चाष्टाङ्गसंग्रहं वृद्धवाग् भट इत्याहुः । वृद्धवाग् भटोऽष्टाङ्गसंग्रहकार उपलक्षणतया तु तत्प्रणीतोऽष्टाङ्गसंग्रहो गृह्यते, यथा 'चरके पतञ्जलिरि'त्युक्तावुपलक्षणतया तत्प्रणीतसंहितायां पतञ्जलिरिति बोधः । षट्पञ्चशदधिकषोडशशततम-खृष्टाब्दीयकवीन्द्रसूच्यामसौ ग्रन्थो वृद्धवाग् भट इति नाम्ना समुल्लिखितो वर्त्तते ।

अष्टाङ्गसंग्रहसंहितेति मध्यवाग् भटस्यैव नामान्तरं भवति । अष्टाङ्ग-संग्रहमपेक्ष्य लघीयस्त्वादष्टाङ्गहृदयसंहितामपेक्ष्य गरीयस्त्वादष्टाङ्गसंहिता मध्यवाग् भट इत्युच्यते । मध्यसंहितेत्यस्य नामान्तरं भवति । चक्र-संग्रहस्य रत्नप्रभानाम्न्यां टीकायां निश्चलकरेणोक्तम्—'वाभटगुप्तेन मध्य-संहितायामन्यथैव चिकित्सा प्रतिपादिते'ति । एतस्मादस्य वाभटगुप्त इत्यभिधानमुपलभ्यते । पुनरपि तत्रैव स आह—'वाभटमुने र्मध्यसंहिताया-मपि तद्वाक्यं स्मर्त्तव्यमि'ति, 'यदुक्तं सिंहगुप्तपुत्रेण राजर्षिणा वाभटेन स्वसंहितायां लक्षणं शीतादीनामि'ति च । इतो हि तस्य मुनित्वेन

राजर्षित्वेन च ख्यातिरवगम्यते। तत्त्वबोधनाम्न्यामष्टाङ्गहृदयटीकायां षोडशशताब्दीयेन शिवदासेनापि नामग्राहं मध्यवाग्भटस्य वच उद्ध्रियते। मध्यसंहिताग्रन्थो दशसाहस्रीति श्रूयते। इदानीमस्य विलोपः सञ्जातः।

लघुवाग्भटः स्वल्पवाग्भटः सूक्ष्मवाग्भटश्चेत्यष्टाङ्गहृदयसंहिताया नामान्तराण्येव। अष्टाङ्गसंग्रहमष्टाङ्गसंग्रहसंहितां चापेक्ष्य स्वल्पत्वात् सूक्ष्मत्वाच्चाष्टाङ्गहृदयसंहिता लघुवाग्भट इत्युच्यते, स चाष्टसाहस्रीति श्रूयते। रत्नप्रभायां निश्चलेनासौ ग्रन्थः सूक्ष्मसंहितेति नाम्ना समुल्लिखितः। षट्पञ्चाशदधिकषोडशशततमखृष्टवर्षीयकवीन्द्रसूच्यामष्टाङ्गहृदयसंहिता लघुवाग्भट इति नाम्ना लिखितो वर्त्तते। अष्टाङ्गसंग्रहस्य बहवो विषया अत्र संक्षेपेण वैशद्येन चोपदिश्यन्ते। ननु, ग्रन्थनाम्नि हृदयशब्दयोजने किमर्थिका ग्रन्थकर्त्तुरेषा प्रवृत्तिः? उच्यते। अस्माकं हृदयं यथा दशभिर्मूलशिराभिः कृत्स्नं शरीरं व्याप्य तिष्ठति, तथैवेषा संहिता षड्भिः सूत्रशारीरनिदानचिकित्साकल्पोत्तरस्थानैः सकलमष्टाङ्गायुर्व्वेदं व्याप्य स्थितेति।

अष्टाङ्गहृदयसंहितायां रसरत्नसमुच्चये च द्वितीयवाग्भटस्य कर्त्तृत्वमधिकृत्य प्राज्ञिकानां वैमत्यं दृश्यते। वयं तु तत्सर्व्वं प्रसङ्गत उपरिष्टादालोचयिष्यामः।

लोकहिताय शास्त्रं प्रणीयते, लोकश्च शास्त्रे प्रवर्त्तमानः प्रयोजनादिकमनुसन्धत्ते। तदुक्तम्—

'सर्व्वस्यैव हि शास्त्रस्य कर्म्मणो वापि कस्यचित्।
यावत् प्रयोजनं नोक्तं तावत्तत् केन गृह्यताम्॥' इति।
'सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥' इति च।

एवंविधशिष्टाचारपालनाय संग्रहस्य सूत्रस्थानारम्भे मङ्गलविधानानन्तरं श्रोतॄन् प्रोत्साहयितुं ग्रन्थकार आह—

'आयुः कामयमानेन धर्म्मार्थसुखसाधनम् ।
आयुर्व्वेदोपदेशेषु विधेयः परमादरः ॥' इति ।

अस्य टीकायां लिखितमस्ति—'अनेन सम्बन्धादीन्यप्युक्तानि भवन्ति । अत्रोपायोपेयभावलक्षणः सम्बन्धः ; अस्य तन्त्रस्यायुर्व्वेदोपदेशत्वादुपायत्वम्, तत्साध्यत्वादायुष उपेयत्वम् ; अभिधेयमायुर्व्वेदः, प्रयोजनमायुर्धर्म्मार्थसुखानि चेति ।' इति ( शशिलेखा ) ।

हृदयस्यापि सूत्रस्थानारम्भे प्रयोजनसम्बन्धौ वक्तुं ग्रन्थकृता स्वकीयः संग्रहस्यैव श्लोक उपन्यस्यते—

'आयुः कामयमानेन धर्म्मार्थसुखसाधनम् ।
आयुर्व्वेदोपदेशेषु विधेयः परमादरः ॥' इति ।

अत्र 'सर्व्वाङ्गसुन्दर'टीकाकृदरुणदत्त आह—'आयु र्वेदयति ज्ञापयति प्रकृतिज्ञानरसायनदूतारिष्टाद्युपदेशादित्यायुर्व्वेदः । तस्योपदेशा आयुर्व्वेदोपदेशाः । उपदिश्यन्त आयुर्व्वेदार्था उपपत्तिभिरित्युपदेशा आयुर्व्वेदतन्त्राणि । तेषु परमादर उत्कृष्टो यत्नो विधेयः कार्य्यः ।...आयुः कामयमानेन जीवितमभिलषता । किम्भूतमायुः ? धर्म्मार्थसुखसाधनम् । ध्रियते लोकेऽनेनेति धर्म्मः । अर्थ्यते याच्यत इत्यर्थः । सुखं द्विविधं तादात्विकमात्यन्तिकं चेति । तादात्विकं कियत्कालान्तरस्थायित्वात् सुखावभासं न परमार्थतः सुखम् । तथा चोक्तम्—'तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यत इति ।......आत्यन्तिकं सुखं मोक्षाख्यं यत्र न दुःखानां श्लेषः । तेषां साधनमुपायो धर्म्मार्थसुखसाधनमि'ति ।

दाक्षिणात्यैरष्टाङ्गसंग्रहो नितरामाद्रियते । त आहुः—

'अष्टाङ्गसंग्रहे ज्ञाते वृथा प्राक्तन्त्रयोः श्रमः ।
अष्टाङ्गसंग्रहेऽज्ञाते वृथा प्राक्तन्त्रयोः श्रमः ॥' इति ।

स्मारयत्यसौ श्लोकः श्लोकान्तराणि—

'अनधीते महाभाष्ये व्यर्था स्यात् पदमञ्जरी ।
अधीतेऽपि महाभाष्ये व्यर्था सा पदमञ्जरी ॥' इति ।
कौमुदी यदि कण्ठस्था वृथा भाष्यपरिश्रमः ।
कौमुदी यद्यकण्ठस्था वृथा भाष्यपरिश्रमः ॥
प्रतारणासमर्थस्य विद्यया किं प्रयोजनम् ।
प्रतारणासमर्थस्य विद्यया किं प्रयोजनम् ॥ इति ।

आराधितो यदि हरिस्तपसा ततः किं
नाराधितो यदि हरिस्तपसा ततः किम् ।
अन्तर्बहि र्यदि हरिस्तपसा ततः किं
नान्तर्बहि र्यदि हरिस्तपसा ततः किम् ॥

( नारदपञ्चरात्रम् ) इति च ।

समरूपः श्लोक आस्ताम् । अष्टाङ्गसंग्रहस्यैको निघण्टु-(concordance) स्तैलङ्गभाषायामस्ति । दशमैकादशखृष्टशताब्द्योरभ्यन्तरवर्त्तिनि कुतश्चित् समये संग्रहस्य शशिलेखानामटीकाग्रन्थ इन्दुपण्डितेन प्रणीत इदानीमपि प्रचरति । शशिलेखायाः प्राक्तना बहव ष्टीकाग्रन्था आसन्नित्यनुमीयते । तदुक्तमिन्दुपण्डितेन—

'दुर्व्याख्याविषसुप्तस्य वाहटस्यास्मदुक्तयः ।
सन्तु संवित्तिदायिन्यः···इति' ( सूत्रस्थानम्—१ ) इति ।

त्रयोदशखृष्टशताब्द्यामरुणदत्तन संग्रहस्यान्यैका टीका व्यरचि । गोण्डाल-प्रदेशीयमहाराजाधिराजपदभाजा M. D., L. L. D., K. C. T. E, F. R. C. P. E.-प्रभृतिलाञ्छनभूषितेन भगवत्सिंजीठाकुरसाहेब-

महोदयेन तत्प्रणीते 'A Short History of Aryan Medical Science'नामकग्रन्थे लिखितम्—"He (Vagbhata) wrote another work called Ashtanga Samgraha on which Pandit Arunadatta wrote a commentary" (p. 34). अस्य तात्पर्य्यम्—'(अष्टाङ्गहृदयादन्यः) एको ग्रन्थः संग्रहनाम्ना वाग्भटेन प्रणीतः; अरुणदत्तन तस्यापि टीकैका विरचिता' इति। किन्तु शशिलेखाया औत्कर्ष्यात् तत्परवर्त्तिनी टीका विलोपमाप्ता। सम्प्रति पुण्यपत्तनाद् वैद्यपण्डितश्रीरामचन्द्रकिंजवडेकरमहोदयेन शशिलेखा-संवलितसंग्रहः सटिप्पणं मुद्रितः प्रकाशितश्च। महतः कालात् पूर्व्वं वाग्भटीयमध्यसंहिताया विलोपः सञ्जातः। अस्यास्तु टीका काचिदासीद्वा न वेति नास्माभि र्वक्तुं शक्यते।

अष्टाङ्गहृदयसंहिताया अनेका व्याख्याः प्रणीताः। तासां काश्चन विलोपमापुः काश्चन त्विदानीमपि विलसन्ति। तद् यथा—

(१) नवमखृष्टशताब्दीतः प्रागपि हिमदत्तापरनाम्ना सर्व्वहितमित्र-दत्तेन हृदयस्य टीकैका प्रणीता। नवमदशमखृष्टशताब्दीयेन जेज्जटेन टीकैका प्रसङ्गत उल्लिखिता। इदानीं तु तस्या अत्यन्तविलोपः सञ्जातः। चरकटीकाऽपि हिमदत्तन प्रणीता।

(२) दशमैकादशखृष्टशताब्द्योरिन्दुपण्डितेन हृदयटीकैका रचितेत्यनु-मीयते। यतः शशिलेखायामिन्दुना लिखितम्—"शास्त्रकृतश्चैतदेवाभि-मतम्। येन हृदये पठति—'तदेव व्यक्ततां यातं रूपमित्यभिधीयते' इति (हृदयनिदानम् १।५)। एवं च स्थिते 'सपूर्व्वरूपाः कफपित्तमेहाः' इति (हृदये निदानस्थानम् १०।४१) यदा हृदयग्रन्थे व्याख्यायते तत्रैव चोदयिष्यामः।' इति (संग्रह नि० १।१३)। एतस्मात् सर्व्वस्मात् प्रतीयते यदिन्दुनाऽपि हृदयटीका प्रणीतेति।

(३) दशमैकादशखृष्टशताब्दीयचन्द्रनन्दनेन हृदयस्यैकः कोषः ( concordance ) पदार्थचन्द्रिकानाम्नी टीका च प्रणीतौ। अस्याः पदार्थचन्द्रिकाया एका टिप्पणी त्रयोदशचतुर्द्दशखृष्टशताब्दीयेन नेमितनयेन चतुर्थवाग्भटेन विरचिता।

(४) एकादशखृष्टशताब्दीय ईश्वरसेनो हृदयस्य टीकामेकां प्रणिनाय। अधुना तु सा टीका नास्माभिरधिगम्यते। चरकटीकाऽप्यनेन प्रणीता। इदानीं सापि टीका नोपलभ्यते। त्रयोदशखृष्टशताब्दीयेन विजयरक्षितेन मधुकोषे चरकटीकाया वचनमुद्धृतम्। एतस्मादुपपद्यते यदसौ टीकाकारस्त्रयोदशखृष्टशताब्दीतः पूर्व्ववर्त्त्येवेति।

(५) द्वादशत्रयोदशखृष्टशताब्द्योररुणदत्तेन हृदयस्य 'सर्व्वाङ्गसुन्दर'नाम्नी टीका प्रणीता। अरुणटीकाया औत्कर्ष्यादिन्दुटीकाया अत्यन्तविलोपः सञ्जातः। तथा विलोपश्च नासम्भवः। यतः सकलवैद्यसम्प्रदाये हृदयस्य 'सर्व्वाङ्गसुन्दर'व्याख्या नितरामाद्रियते।

(६) त्रयोदशचतुर्द्दशखृष्टशताब्द्यो श्चतुर्वर्गचिन्तामणिप्रणेत्रा मक्कि-भट्टापरनाम्ना हेमाद्रिणा हृदयसंहिताया आयुर्व्वेदरसायनं नाम टीका प्रणीता। असौ टीका त्वंशत उपलभ्यते। हृदयटीकाकारो हेमाद्रिः पञ्चदशखृष्टशताब्दीय'लक्षणप्रकाश'कृतः स्वतन्त्र एव।

(७) शाकम्भरीसमीपवर्त्तिनि कुतश्चित् स्थाने त्रयोदशचतुर्द्दशखृष्टशताब्दीय आशाधरपण्डितो हृदयटीकामेकां प्रणिनाय। इदानीं तु सा टीका नास्माभिरधिगम्यते।

(८) षोडशखृष्टशताब्द्यां 'वैद्यमनउत्सवा'दिप्रणेता रामनाथगणको हृदयस्य टीकामेकां प्रणिनाय। सा तु नास्माभि र्दृष्टा।

वैद्यागमिकाः संग्रहकृद्वाग्भट-हृदयकृद्वाग्भटयोरैक्यं मन्यन्ते। पुरातत्त्ववित् कीथ्महोदयस्तु तयो र्भिन्नत्वं कल्पयति ( History of

Sanskrit Literature, p. 510 )। उभयो ग्रंन्थयोः पुष्पिकासु सिंहगुप्तसूनुवाग्भटस्यैव ग्रन्थकर्त्तृत्वं ज्ञापितम् । अतः पुष्पिकादर्शनात् को वा ग्रन्थकारीयवचनं न श्रद्धास्यति ? एवं प्रोत्साहितेन एम्-डि प्रभृत्युपाधि-भूषितेन गोण्डालठाकुरसाहेबमहोदयेन संग्रह-हृदययो र्लेखनशैलीं वचनभङ्गीं च परीक्ष्य तयो र्ग्रन्थयोरेककर्त्तृकत्वमुद्घोषितम् । अध्यापकेन श्रीयुक्तदीनेश-चन्द्रभट्टाचार्य्येण चोभयोरेककर्त्तृकत्वमभ्युपगतम् । रत्नप्रभानाम्न्यां चक्र-टीकायां त्रयोदशखृष्टशताब्दीयेन निश्चलकरेण हृदयमभिलक्ष्य लिखितम्—'यदुक्तं सिंहगुप्तपुत्रेण राजर्षिणा वाभटेन स्वसंहितायां लक्षणं शीतादीना-मि'त्यादि । अतो निश्चलकरमतेन चोभयोरेकत्वमेव । निश्चलकरात् पूर्व्वभवेन दशमैकादशखृष्टशताब्दीयेन इन्दुपण्डितेन संग्रहस्य निदानीय-प्रथमाध्यायस्थितत्रयोदशसूत्रीयशशिलेखानामटीकायां लिखितम्—'शास्त्र-कृतश्चैतदेवाभिमतम् । येन हृदये पठति—'तदेव व्यक्ततां यातं रूपमित्यभिधीयते' ( निदान १।५ ) इति ; एवं च स्थिते 'सपूर्व्वरूपाः कफपित्तमेहाः' इति यदा हृदयग्रन्थे व्याख्यायते तत्रैव चोदयिष्यामः ।' इति । अतश्चोपपद्यते यदिन्दुपण्डितेनापि संग्रहकार-हृदयकारावेकत्वेन गृहीताविति ।

उक्ते राद्धान्ते सन्दिहानेन पुरातत्त्वविदा कीथ्महोदयेन तदीये History of Sanskrit Literature-नामकग्रन्थस्य ५१० पृष्ठे लिखितम्—'Indian tradition traces Vagbhata as the third of the great names of medical science, not without recognition that he is later than Sushruta. Two writers of this name must be distinguished though both claim the same parentage in their works, the **Ashtangasangraha** and the **Ashtangahridaya**

**samhita,** as we have them. The elder Vagbhata—Vriddha Vagbhata, is son of Sinhagupta, and grand-son of Vagbhata, and his teacher was the Buddhist Avalokita. His work was clearly used by the younger writer, whose metrical form as contrasted with the prose mixed with verses of his predecessor confirms his later date.' इति। अस्यायं तात्पर्य्यानुवादः। भारतीयवैद्यसम्प्रदायमते वाग्भट आयुर्व्वेदे तृतीयप्रमाणपुरुषः सुश्रुतात् तु परज एव। वाग्भटनामानौ द्वौ ग्रन्थकारावासाताम्—संग्रहकारो हृदयकारश्चेति। यद्यपि संग्रहप्रणेता हृदयप्रणेता चोभौ सिंहगुप्तसूनुत्वेन तत्तद्ग्रन्थयोः प्रकाशितौ, तथापि तयो र्भिन्नत्वमवश्यमेव कल्पनीयम्। ज्यायान् वाग्भटो वृद्धवाग्भट इति नाम्नाऽपि प्रसिद्धः सिंहगुप्तस्य सूनुः प्रथमवाग्भटस्य पौत्रो बौद्धावलोकितस्य शिष्यश्च; तस्याष्टाङ्ग-संग्रहग्रन्थमुपजीव्य परवर्त्तिकाले कनीयसा वाग्भटेनाष्टाङ्गहृदयसंहिता प्राणायि। अष्टाङ्गसंग्रहो गद्यपद्यमयो ग्रन्थः, अष्टाङ्गहृदयं तु पद्यमयी संहिता; पद्यमयत्वमेवास्याः संहिताया नवीनत्वमर्व्वाचीनत्वं वा प्रतिपादयती'ति।

संग्रह-हृदययो र्भेदानुसन्धायिना कीथ्महोदयेनैतस्मिन् विषये या युक्तिरुपन्यस्ता तत्र गरीयान् संशयो वर्त्तते। न ज्ञायते ह्यस्माभिरीदृशः कश्चिदविंसवादी नियमो ग्रन्थस्य पद्यमयत्वाद् नवीनत्वं गद्यपद्यमयत्वाच्च प्राचीनत्वं निरूप्येते इति। गद्यपद्यात्मकं श्रीमद्भागवतं पद्यमयाद् रामायणात् किं प्राक्तनमित्यभ्युपगम्यते? संग्रहहृदययोरुभयग्रन्थयो र्ग्रन्थ-कृद्भ्यां 'सिंहगुप्तसूनुवाग्भट' इत्यात्मपरिचये प्रदत्ते कारणविशेषमन्तरेण तदुक्तावविश्वासो न न्याय्यः। मुनिकल्पेन विदुषा पुत्रेण जन्मदातु र्नाम

निह्नुत्य पुनरपि पुरुषान्तरे जन्मदातृत्वघोषणा हृदयकारस्य सुतरां प्रकृति-विरुद्धत्वेन किं न प्रतीयते ?

आत्रेयमहर्षिप्रोक्तमष्टाङ्गायुर्व्वेदं सुगमं कर्त्तुं सिंहगुप्तसूनु र्वाग्भट उभौ ग्रन्थौ प्रणिनाय। अष्टाङ्गहृदयस्य सूत्रस्थाने लिखितमस्ति—

'ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत्।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान् मुनीन्।
तेऽग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे।
तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः।
क्रियतेऽष्टाङ्गहृदयं नातिसंक्षेपविस्तरम्॥'

इति। तत उत्तरतन्त्रे लिखितमस्ति—

'अष्टाङ्गवैद्यकमहोदधिमन्थनेन
योऽष्टाङ्गसंग्रहमहामृतराशिराप्तः।
तस्मादनल्पफलमल्पसमुद्यमानां
प्रीत्यर्थमेतदुदितं पृथगेव तन्त्रम्॥'

(४०।८०) इति। अतः स्वग्रन्थस्य गुणस्तुतिं करोति—

'एतत् पठन् संग्रहबोधशक्तः
स्वभ्यस्तकर्म्मा भिषगप्रकम्प्यः।
आकम्पयत्यन्यविशालतन्त्र-
कृताभियोगान् यदि तन्न चित्रम्॥'

(४०।८२) इति।

सोपानारोहणन्यायेन नैतादृशं ग्रन्थप्रणयनमदृष्टपूर्व्वं भवति। पाणिनि-दर्शने नागेशभट्टोऽपि बृहत्सिद्धान्तमञ्जूषां प्रणीय विषयाणां सुगमत्व-विधानाय लघुमञ्जूषां पुनरपि ततः सुगमतरत्वं विधातुं परमलघुमञ्जूषां च प्रणीतवान्। शास्त्रकाराश्चाहुः—'अधिकारिविभेदेन शास्त्राण्युक्तान्य-

शेषत' इति। अतो वाग्भटोऽपि प्रागेवाष्टाङ्गसंग्रहनामकवृद्धवाग्भट-ग्रन्थं प्रणीय तद्विषयाणां सौकर्य्यविधानाय पुनरष्टाङ्गसंग्रहसंहितानामक-मध्यवाग्भटग्रन्थं विरचय्य तस्यापि सुगमतरत्वं विधातुं चाष्टाङ्गहृदयसंहिता-नामक'लघुवाग्भट'ग्रन्थं प्रणीतवान्। एवं च सिंहगुप्तसूनोरप्यधिकारि-भेदानुरोधेन वृद्धवाग्भटो मध्यवाग्भटो लघुवाग्भटश्चेति ग्रन्थत्रयरचनं सुतरां सम्भवत्येव।

संग्रह-हृदययोः पुष्पिकासु ग्रन्थकृता स्वयमेव यदुक्तं तत् कथं कीथ्महोदयस्यानुमानमूलकेन वचसा बाधनीयं स्यात्? अपि च, कीथ्महोदयस्यैतादृक्कष्टकल्पनायां तु किं प्रयोजनमित्यवगन्तुं न पारयामः। ननु, सम्प्रदायमतविरोधेन संग्रह-हृदययो र्भिन्नकर्त्तृत्वकल्पने परिसंख्या*वदेव श्रुतहान्यश्रुताभ्युपगमादिदोषाः किं न प्रसज्येरन्? एवं स्थिते तत्त्वे कीथ्महोदयस्य मतवादमनादृत्य वयं प्रागुक्तग्रन्थत्रयस्यैक-कर्त्तृकत्वमेव मन्यामहे।

सिंहगुप्तस्य पितरि प्रथमवाग्भटे वृद्धशब्दमनारोप्य कथं तत्सूनौ द्वितीयवाग्भटे स शब्दः प्रयुक्त इति मनसि निधाय केनचित् प्रात्निकेनैव यावच्छक्यमुपकल्पितं यदष्टाङ्गहृदयकारस्य सद्भावादष्टाङ्गसंग्रहकारो वृद्ध-शब्देन विशेषित आसीदिति। अस्मन्मते तु तादृग्युक्तिवादो भ्रान्ति-विजल्पित एव। यतोऽयं वृद्धशब्दो नेह तुलनार्थं प्रयुज्यते। किमत्र प्रमाण-मिति चेत्? सिल्भ्याँ लेभि ( Sylvain Levi )-महोदयस्य गवेषणा-फलात् प्रात्निकैरस्माभिश्च प्रथमद्वितीयखृष्टशताब्दीयशकाधिपतिकनिष्क-सभायामन्यस्यैकस्य चरकस्यास्तित्वं स्वीकृतमिति सत्यम्, परं तु सम्प्रदाय-

---

* 'श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदूषणा॥'

विद्भिरेतत् क्वचिदपि नाभ्युपगम्यते। तथापि ते खृष्टजन्मत ऐतिहासिककालाच्च बहुपूर्व्वभवं चरकमुनिं वृद्धचरक इत्याहुः। एवं च सुश्रुतोऽपि वृद्धसुश्रुत इत्युक्तश्चन्द्रटाचार्य्येण चक्रपाणिना च चिकित्सासंग्रहे। मन्ये—वृद्धशब्दोऽयं वयोवृद्धार्थे नेह प्रयुक्तः, प्रयुक्तस्तु ज्ञानवृद्धार्थ इति। अतः संग्रहकारे वृद्धेतिविशेषणयोजनादष्टाङ्गहृदयकारे भिन्नव्यक्तित्वादिकल्पना कदाचिदपि नोपपद्यत एव।

कस्मिन्नवसरे सिंहगुप्ततनयो वाग्भटो निजजनुषा भारतवर्षमलंचकारेत्यत्र पुरातत्त्वगवेषिणां पण्डितानां विशाला मतभेदा उपलभ्यन्ते। तत्र च महत्यां शङ्कायामुदीयमानायां धियस्तत्त्वपक्षपातस्वभावत्वेन किञ्चित् क्रियते विमर्शः।

पञ्चोर्ध्वनवशताधिकसहस्रतमे (१९०५) खृष्टाब्दे पुण्यपत्तनस्थितादानन्दाश्रममुद्रणालयात् सिंहगुप्तसूनो र्वाग्भटस्य रसरत्नसमुच्चयो मुद्रित आसीत्। अस्य ग्रन्थस्य भूमिकायां प्रकाशकृता वैराजक्षेत्रनिवासिना कृष्णारावशर्म्मणा वाग्भटस्य स्थितिकालनिर्णयावसरे लिखितम्—'अत एवावरान्नवशताधिकवर्षसहस्रचतुष्टयादूर्द्ध्वं तनकाले (Circa 4900 years hence) श्रीमद्वाग्भटाचार्य्यप्रादुर्भावसम्भवोऽस्तीति तर्क्यते स्थूलदृष्ट्येति। एतदुक्तं भवति यत् खृष्टजन्मन स्त्रिसहस्रवर्षेभ्यः पूर्वं (3000 B.C.) वाग्भटो विरराजेति।

मुम्बाइ-(Bombay)-प्रदेशीय-मेडिक्यालकलेजाख्य-विद्यायतनस्य प्रधानाध्यापकेन डाक्तारमोरेश्वरकुन्ते (M. D.) महोदयेन तथा गोण्डालठाकुरसाहेब (His Highness Sir Bhagabat Singhee K.C. I.E., M.D.)-महोदयेन च वाग्भटस्य खृष्टजन्मनः द्विशतवर्षेभ्यः पूर्व्ववर्त्तित्वं निरूपितम्।

निर्णयसागराद् मुद्रितस्याष्टाङ्गहृदयस्य भूमिकायां सम्पादकमहोदयेन

लिखितम्—'केषांचिज् जार्म्मान्देशीयविपश्चितां मते खृष्टाब्दस्य द्वितीय-शताब्द्यां वाग्भटो बभूवे'ति ।

श्रीमता जाह्नवीचरणभौमिकमहोदयेन तदीय'संस्कृतसाहित्येतिहास'-नामनि ग्रन्थे तथा श्रीयुक्तया-अक्षयकुमारीदेव्या च तत्प्रणीते 'A History of Sanskrit Literature' नामकग्रन्थे सिंहगुप्तसूनु-वाग्भटः खृष्टजन्मतश्चतुर्थशताब्द्यां स्थापितः ।

अष्टाङ्गसंग्रहस्योत्तरतन्त्रस्थित ऊनपञ्चाशत्तमाध्याये—

"रसोनानन्तरं वायोः पलाण्डुः परमौषधम् ।
साक्षादिव स्थितं यत्र शकाधिपतिजीवितम् ॥
यस्योपयोगेन शकाङ्गनानां
लावण्यसारादिव निर्म्मितानाम् ।
कपोलकान्त्या विजितः शशाङ्को
रसातलं गच्छति निर्विदेव ॥"

इति वाग्भटीयश्लोकद्वयस्थितं शकाधिपति-शकाङ्गनेतिशब्दद्वयमालोक्य युधिष्ठिरमीमांसकेन तस्य 'संस्कृतव्याकरणशास्त्रका इतिहास'नामके ग्रन्थे लिखितम्—'वाग्भटः शकाधिपतिद्वितीयचन्द्रगुप्तस्य समकालिकः । खृष्टजन्मतोऽशीत्यधिकत्रिशतवर्षेभ्यः (380 A.D.) पञ्चदशाधिकचतुःशत-वर्षपर्य्यन्तं (४१५ खृश०) द्वितीयचन्द्रगुप्तस्थितिकालस्य पुरातत्त्वगवेषिभि-रैतिहासिकपण्डितैरसंशयं निर्द्धारितत्वाद् वाग्भटोऽपि तस्मिन्नेव समये विद्यते स्मे'ति ।

वैद्यपण्डितरामचन्द्रशास्त्रिकिंजवडेकरभिषगाचार्य्यमहोदयप्रकाशिता-ष्टाङ्गसंग्रहस्य भूमिकायामायुर्व्वेदसेवकेन रामचन्द्रेण लिखितम्—'We may place him ( Vagbhata II ) in the 4th or 5th C. A.D. at the latest and we should be prepared

to accept a date which is even prior to the period suggested'. अयमस्य तात्पर्य्यानुवादः—अवरतश्चतुर्थपञ्चमखृष्ट-शताब्द्योरस्माभि र्वाग्भटस्य कालः स्थापयितुं शक्यम्। एतस्मादपि प्राचीनतरकालो यदि निर्णीतो भवेत्, तर्हि तत्सिद्धान्ते च वयं सानन्दमेव मूर्द्धानं चालयामः' इति।

इचिं (I-tsing)-नामकश्चैनिकपर्य्यटको भारतवर्षे खृष्टजन्मत एकसप्तत्यधिकषट्शततमवर्षमारभ्य (from 671 A.D.) पञ्चनव-त्यधिकषट्शततमवर्ष-(695 A.D.)-पर्य्यन्तमवतस्थे। एकनवत्यधिक-षट्शततमवर्षे तेनैव स्वकीये 'A Record of the Buddhist Religion as practised in Indian and Malaya Archi-pelago' नामकग्रन्थे लिखितं यद् आयुर्व्वेदस्याष्टसु विभागेषु प्राचीन-कालादवधारितेष्वपि सम्प्रति ते पुनरेकत्र निबन्धिता दृश्यन्ते' इति। इचिंप्रयुक्तं सम्प्रतिशब्दमालोक्य डाक्तारहेर्ण्लिमहोदयेन वाक्यारपाण्डु-लिपे र्भूमिकायां सप्तमखृष्टशताब्द्या आरम्भे संग्रहकृतो वाग्भटस्य स्थितिकाल उक्तः। कीथ्महोदयः पुनस्तदीये History of Sanskrit Literature-ग्रन्थे हृदयकारवाग्भटस्याष्टमखृष्टशताब्दीयत्व-मनुमाय हेर्ण्लिमतानुसारतः संग्रहकार-वाग्भटस्य सप्तमखृष्टशताब्दीयत्व-मुल्लिलेख।

प्राज्ञिकप्रवरश्रीयुक्तदीनेशचन्द्रभट्टाचार्य्यमहोदयेन हृदयकार-संग्रहकारयो-रेकत्वं विधाय तयो र्नवमखृष्टशताब्दीयत्वमुदलेखि। एवं च वस्तुगत्याम् इन्दुजेज्जटौ वाग्भटशिष्यावास्तामिति यन्मतमष्टाङ्गसंग्रहप्रकाशकरामचन्द्र-शास्त्रिकिंजवडेकरभिषगाचार्य्येण पुष्यते तत् खल्वेतेन समर्थ्यत इति सत्यम्, परं तु दीनेशीयमतवादः स्थैर्य्यं लब्धुं न शक्नोति वस्तुगते-रन्यथावृत्तेः।

वैद्यकशब्दसिन्धुभूमिकायाम् उमेशचन्द्रगुप्तमहोदयेन लिखितम्—'सिंहगुप्तसूनुः परमबौद्धो वाभटाचार्य्यः काश्मीरनरपतिजयसिंहस्य प्रजापालनसमये द्वादशखृष्टशताब्दीमध्ये वर्त्तमान आसीदि'ति।

इदानीं प्रागुद्धृतमतवादा विमृश्यन्ते। वाग्भटस्य गुरुरवलोकितो बौद्ध आसीदित्यत्र पुरातत्त्वगवेषिणां पण्डितानां वैमत्यं नास्ति। अवलोकितस्य बौद्धत्वात् पञ्चमषष्ठखृष्टपूर्व्वशताब्दीयाद् भगवतो बुद्धदेवात् तस्यावरत्वं स्वतः सिद्धं भवति। किन्तु वैराजक्षेत्रनिवासिना कृष्णारावशर्म्ममहोदयेनावलोकितशिष्यस्यैव स्थितिकालः खृष्टजन्मतस्त्रिसहस्रवर्षैः पूर्व्ववर्त्तित्वेन निरूपितः।

दशमखृष्टशताब्द्यां चन्द्रनन्दनेन हृदयस्य निघण्टुः 'पदार्थचन्द्रिका'नाम्नी टीका चेति ग्रन्थद्वयम्, इन्दुपण्डितेन संग्रहोपरि शशिलेखा च व्यरच्येताम्। शशिलेखाया आरम्भे लिखितमस्ति—

'दुर्व्याख्याविषसुप्तस्य वाहटस्यास्मदुक्तयः।
सन्तु संवित्तिदायिन्यः सदागमपरिष्कृताः॥' इति

एतस्मादवगम्यते यद् दशमखृष्टशताब्दीतः प्रागपि संग्रहस्य बह्वष्टीका आसन्निति। अत एव दशमखृष्टशताब्दीतः परं वाग्भटस्योदयकालो भवितुं नार्हति। किन्तु वैद्यकशब्दसिन्धुकोष उमेशचन्द्रगुप्तमहोदयेन द्वादशखृष्टशताब्द्याश्चरमभागे वाग्भटः स्थापित एव।

अतश्चाहुः केचन प्राज्ञिकाः—'वाभटव्याकरण-वैद्यकसंहितादिप्रणेतारं द्वादशखृष्टशताब्दीयं वाभटाचार्य्यं सिंहगुप्तसूनुद्वितीयवाग्भटत्वेन गृहीत्वा वैद्यकशब्दसिन्धुकारेणोमेशचन्द्रगुप्तेन प्रमादतस्तस्य द्वितीयवाग्भटस्य द्वादशखृष्टशताब्दीयत्वं सिद्धान्तितमि'ति। उक्तिरेषा तु प्राज्ञिकानां नोपेक्षार्हा भवति। यतो हि वाभटव्याकरणादिप्रणेता वाभटः संग्रहटीकाकृत इन्दुपण्डितात् किञ्चिदुत्तरभव एव।

'शशिलेखा'नामकसंग्रहटीकाकार इन्दुपण्डितो दशमैकादशखृष्ट-शताब्दीय आसीत्; वैयाकरणगोष्ठीषु स इन्दुमित्रनाम्ना प्रसिद्धः। जिनेन्द्रन्यासोपरि सोऽनुन्यासं प्रणीतवान्। वाभटव्याकरणादिकृद् वाभट एकादशद्वादशखृष्टशताब्दीय आसीत्। तस्य द्वादशखृष्टशताब्दीयं वाभट-व्याकरणमिन्दोरेकादशखृष्टशताब्दीयमनुन्यासं च मनसि निधाय संक्षिप्त-सारस्य दशमकारकसूत्रवृत्तौ जुमरनन्दिना लिखितम्—'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाकेत्यसाधुरित्यनुन्यास-वाभटौ' इति। वाभटादनुन्यासकारस्य पूर्ववर्त्तित्वात् पाणिनेः 'अल्पाच्तरम्' (२।२।३४) इति नियमं स्थगयता जुमरनन्दिना स्वल्पस्वरविशिष्टस्यापि 'वाभट'शब्दस्य परनिपातः कृतः। एतेनैतदुपपद्यते संग्रहटीकाकृत इन्दोरर्वाचीनो वाभटः संग्रहकृद्वाग्भटो भवितुं नार्हतीति।

द्वादशखृष्टशताब्द्यां काश्मीराधिपतिजयसिंहस्य शासनकाले सुगृहीत-नामा जयसिंहो गुर्ज्जराधिपतिरणहिलवाडपत्तने राज्यमकार्षीत्। प्रभाकर-सूरेः प्रभावकचरितादवगम्यते वाहडापरपर्य्यायो वाग्भटालंकार-नेमि-निर्व्वाणमहाकाव्यादिप्रणेता तृतीयवाग्भटो गुर्ज्जराधिपते र्जयसिंहस्य विबुधजनबहुलां सभां भूषयामासेति। अस्य तार्त्तीयीकवाग्भटस्य साहित्यादौ पाण्डित्यातिशये सत्यपि चिकित्साशास्त्रे तस्य काचिदपि प्रतिष्ठा नास्माभिः श्रूयते। एवंविधं वस्तुवृत्तमुपलभ्य वयं मन्यामहे वैद्यकशब्दसिन्धुकार उमेशचन्द्रगुप्तमहोदयो जयसिंहेतिनामविभ्रममूलक-त्वादेव तार्त्तीयीकवाग्भटं द्वितीयवाग्भटत्वेन गृहीत्वा तस्य द्वितीय-वाग्भटस्य द्वादशखृष्टशताब्दीयत्वं निरधार्षीदिति।

यद् वा भवतु, उमेश-कृष्णारावयोरुभयोरेव भूयः पार्थक्यं विद्यते। उमेशः पातालदृक् कृष्णारावो गगनस्पृगिति तयो र्मतवादौ सुतरा-मुपेक्ष्येते।

वोग्दाद्प्रदेशीयखलिफाख्यसम्राजो हारुण-अल्-रशीदमहोदयस्य निदेशेनाष्टमखृष्टशताब्द्याम् 'आल् आरावी' 'मङ्का'चेत्यभिहितपण्डितद्वयेन माधवनिदानमारब्यभाषायामनूदितमभूत्। किं च, अष्टमखृष्टशताब्द्यां सुरजिता माधवीयनिदानमुपजीव्य लघुनिदानं कृतम्। सुरजित्कृतं लघुनिदानं मधुकोषे विजयरक्षितेन समुल्लिखितं वर्त्तते। अतोऽस्य माधवनिदानस्य रचनाकालोऽष्टमखृष्टशताब्दीतः पूर्व्ववर्त्त्येव।

माधवनिदाने द्वितीयवाग्भटकृतेरष्टाङ्गहृदयस्य वहवः श्लोका उपलभ्यन्ते। तत्र केचित् साक्षाद् वाग्भटीयाः परकीया इति यावत्, केचित् पुनरीषत्परिवर्त्तितवाग्भटीयाः स्वकीयपरकीया इति यावच्च दृश्यन्ते। साक्षाद् वाग्भटीया यथा हृदयोत्तरीयद्वितीयाध्याये, माधवनिदानस्य बालरोगनिदाने च—

'तत्र विद्याद् रुजं मूर्ध्नि रुजं चाक्षिनिमीलनात्' इति,
'कोष्ठे विबन्धवमथुस्तनदंशान्त्रकूजनैः' इति च।

पुनरपि यथा हृदयोत्तरीयस्यैकविंशाध्यायस्थमुखरोगविज्ञाने, माधवनिदानस्य मुखरोगनिदाने च—

'घृष्टेषु दन्तमांसेषु संरम्भो जायते महान्' इत्येवमाद्याः।

ईषत्परिवर्त्तितवाग्भटीया यथा हृदयोत्तरीयद्वितीयाध्याये

'शिशोस्तीक्ष्णामतीक्ष्णां च रोदनाल्लक्षयेद् रुजम्।
सोऽयं स्पृशेद् भृशं देशं यत्र च स्पर्शनाक्षमः॥' इति।

माधवनिदानीयबालरोगनिदाने तु

'शिशोस्तीव्रामतीव्रां च रोदनाल्लक्षयेद् रुजम्।
स यं स्पृशेद् भृशं देशं यत्र च स्पर्शनाक्षमः॥'

पुनरपि यथा हृदयोत्तरीयस्यैकविंशाध्यायस्थमुखरोगविज्ञाने—

'घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ।
यस्मिंश्चलन्ति दन्ताश्च स विदर्भोऽभिघातजः ॥' इति ;

माधवनिदानस्य बालरोगनिदाने तु—

'घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ।
चला भवन्ति दन्ताश्च स वैदर्भोऽभिघातजः ॥' इत्येवमाद्याः ।

एवंविधं च वस्तुवृत्तं दृष्ट्वा सुप्रसिद्धेन डाक्तार पि. सि. राय ( Dr. P.C. Roy ) महोदयेन तत्कृत'-History of Hindu Chemistry-ग्रन्थस्य भूमिकायां लिखितम्—'Madhabakara in his Nidan quotes bodily from Uttartantra of Ashtanga-hridaya, and as the Nidan was one of the medical works translated for Caliph of Bagdad, it can safely be placed in the 8th Century A. D. at the latest ( p. XVIII ). अयमस्य तात्पर्य्यानुवादः—माधवकरेण तदीयनिदाने हृदयसंहिताया बहवः श्लोका साकल्येन समुद्धृताः । यतो बोगदादप्रदेशीयस्य खलिफामहोदयस्य निदेशेनानूदितेषु चिकित्साशास्त्रीयग्रन्थेषु चान्यतममेव भवति निदानम्, ततश्चावरतोऽष्टमखृष्टशताब्द्यां निदानमिदं स्थापयितुं शक्यमिति । इदानीमेतदपि चिन्त्यं माधवकरेण वागभटीयाः श्लोका उद्धृता अहोस्विद् वागभटेन माधवीया इति ? अस्माकं मते माधवस्य स्वकीय-परकीयश्लोका हृदयश्लोकेभ्य औत्कर्ष्यं समासादिता इति माधवस्यैवाध-मर्ण्यं सूचयति न तु वागभटस्येति । 'Materia Medica of the Hindus' नाम्नो ग्रन्थस्य भूमिकायां सुप्रसिद्धः संस्कृताध्यापकः प्रोफेसर् उइल्सन् ( Professor Wilson ) महोदयेन लिखितम्—'The Arabians of the 8th Century cultivated the Hindu works on medicine and Charak and Susruta and

the treatise called Nidan were translated and studied by the Arabians in the days of Harun and Mansur ( 773 A.D. ), either from the originals or more probably from translations made at a still earlier period into the language of Persia' ( p. X ). अस्यायं तात्पर्य्यानुवादः—अष्टमखृष्टशताब्द्यामारवीया हारुण-मनूसुर-राजयोः शासनावसरे चरकसुश्रुतनिदानानि विपरिणमयन्ति स्मारव्यभाषया। अनुवादोऽयं मूलतः कृत इत्यनुमानम्। सम्भाव्यते तु यत् प्राक्तनेभ्यः पारस्यभाषायामनूदितेभ्यो ग्रन्थेभ्य आरव्यभाषयाऽनुवादाः कृता इति। ग्रन्थान्तरेभ्यश्चावगम्यते यदष्टमखृष्टशताब्द्यां वनायु ( Arab )-प्रदेशीयानां सम्राजः खलिफाहारुण-अल्-रशीदमहोदयस्य सभायां द्वौ संस्कृतशास्त्राभिज्ञौ विद्वांसावास्ताम्—'मङ्का'नामा राजवैद्यः 'आल्-आरावी'नामा वैयाकरणश्चेति। तौ पण्डितौ सम्भूय माधवनिदानस्यानुवादमारव्यभाषायां चक्रतुरिति। एतस्मादुपपद्यते यत् सप्तमखृष्टशताब्द्यां माधवीयनिदानग्रन्थो रचित इति। A History of Sanskrit Literature-ग्रन्थस्य १३६ पृष्ठे प्रत्नतत्त्वज्ञा श्रीअक्षयकुमारीदेवी स्थूलतश्चास्मान् समर्थयत एव। तत्रैव तया लिखितम्—'Madhavakara's Nidana (Diagnosis) is perhaps a work of the seventh century, for it has been translated into the Arabic in the eighth century.' अयमस्यानुवादः—सम्भाव्यते यद् माधवकरस्य निदान-ग्रन्थः सप्तमखृष्टशताब्दीयः, यतोऽसावारव्यभाषायामष्टमखृष्टशताब्द्यामनूदित आसीदिति। अत एव प्रागुद्धृताभिरुक्तिभि र्युक्तिभिश्च द्वितीयवाग्-भटस्य स्थितिकालविषये वैद्यकशब्दसिन्धुकृत उमेशचन्द्रगुप्तस्य द्वादश-खृष्टशताब्दीयत्वं दीनेशचन्द्रभट्टाचार्य्यस्य नवमखृष्टशताब्दीयत्वं कीथ्-

महोदयस्य हृदयसम्पृक्तमष्टमखृष्टशताब्दीयत्वं वा किमपि स्थैर्य्यं नापद्यत एव ।

चीनकपरिव्राड् इचिंमहोदय एकनवत्यधिकषट्शततमखृष्टाब्दे (in 691 A.D.) तस्य भारतभ्रमणं नाम पुस्तकं प्राणैषीत् । तत्रैव तेन लिखितम्—तदानीन्तनकालतश्चत्वारिंशद्वर्षेभ्यः पूर्व्वं भर्त्तृहरिरुपरमते स्मेति । एतदुक्तिमाश्रित्य कीथ्प्रभृतिपाश्चात्त्यपण्डितैरेकपञ्चाशदधिकषट्-शततमखृष्टपराब्दे भर्त्तृहरेः प्रयाणकालो निरूपितः । यद् वा भवतु, मनुष्यो हि स्वभावतः स्खलनशील एव । तथापि चीनकपरिव्राडुक्तिरस्माभि स्तर्कानुरोधेनाङ्गीक्रियते । किन्तु पुनरपि तत्रावधेयं यद् भर्त्तृहरे र्ग्रन्थ-प्रणयनकालः प्रयाणकालतो भूयसा प्राक्तन इत्यनुमातुं शक्यमिति । अतः षष्ठखृष्टशताब्द्याश्चरमभागे सप्तमखृष्टशताब्द्याः प्रारम्भे वा भाष्यदीपिकायां तेनैव भर्त्तृहरिणा—

'हन्तेः कर्म्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमीम् ।
चतुर्थीवाधिकामाहु श्चूर्णिभागुरिवाग्भटाः ॥'*

इति कारिकायां वैयाकरणस्य प्रथमवाग्भटस्य नामोदलेखि । चूर्णिः सूत्रवार्त्तिकभाष्यमिति दुर्गसिंहः ( उण् ३।१८३ ) । चूर्णिकृद् महा-भाष्यकारः पतञ्जलिस्तृतीय-द्वितीयखृष्टपूर्व्वशताब्दीयः । भागुरिः स्मृति-सारसमुच्चयप्रणेता लोकायतशास्त्रस्य 'भागुरी'-( महाभाष्य० ७।३।४५ )-नामकव्याख्याग्रन्थकारश्च पतञ्जलितोऽपि प्राचीन एव । अनयो र्नामभ्यां सार्द्धं वाग्भटस्यापि नामकीर्त्तनात् प्रतीयते यदसौ वाग्भटो भर्त्तृहरे र्महता कालेन पूर्व्वभव इति । यतः समकालिकग्रन्थस्य प्रामाण्यग्रहणे कस्यापि श्रद्धा न समुत्पद्यते । अतः संग्रहादिकृतसम्बन्धे हेर्ण्लि-कीथ्-

---

* भर्त्तृहरेरयं श्लोकः शब्दशक्तिप्रकाशिकायां जगदीशेन नामग्राहमुद्धृतः ।

प्रभृतीनां सप्तमखृष्टशताब्दीयत्वं प्रत्याख्यायते, वाग्भटस्यापि भर्तृहरितो वहुपूर्व्ववर्त्तित्वं सूपपन्नं तिष्ठति ।

चतुर्थपञ्चमखृष्टशताब्दीयद्वितीयचन्द्रगुप्तं शकाधिपतित्वेन गृहीत्वा युधिष्ठिरमीमांसकमहोदयेन वाग्भटोऽपि तस्य समकालिकतया निर्द्दिष्टः । वस्तुतो हि समुद्रगुप्ततनयः संसारावर्त्तकोपप्रणेता द्वितीयचन्द्रगुप्तो न शकाधिपतिरासीत्, परं तु षण्णवत्यधिकत्रिशततमे (३६६ खृ०श०) खृष्टवर्षे शकानामुत्सादितत्वात् स 'शकारिविक्रमादित्य' इत्युपाधिभूषितो वभूव । अस्य सभायां सुप्रसिद्धा नवपण्डिता आसन् । तदुक्तं ज्योतिर्व्विदाभरणे त्रयोदशचतुर्द्दशखृष्टशताब्दीयेन कालिदासेन—

'धन्वन्तरिक्षपणकामरसिंहशंकु-
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचि र्नव विक्रमस्य ॥' इति ।

अत ऐतिहासिकांशे मीमांसकमहोदयस्यालीकवक्तृत्वात् तस्यापि मतवादो निरस्तः ।

श्रीरामचन्द्रशास्त्रिकिंजवडेकरप्रकाशितसंग्रहस्य भूमिकायामायुर्व्वेदसेवकेन श्रीरामचन्द्रमहोदयेन संग्रहकारो वाग्भट श्चतुर्थ-पञ्चमखृष्टशताब्द्यो र्मध्ये स्थापितः । किन्तु तत्कालात् पूर्व्वं च स्थापयितुं प्रवृत्तोऽपि तदनुकूलं प्रमाणमलभमानः स परमताशंसी वभूव । उत्तानहृदयः खल्वयमायुर्व्वेदसेवक इत्यत्र लेशतोऽपि सन्देहो न वर्त्तते ।

श्रीजाह्नवीचरणभौमिकमहोदयेन तथा श्रीयुक्तया अक्षयकुमारीदेव्या हेर्ण् लिकीथ प्रदर्शितमार्गमननुसृत्य स्वं स्वातन्त्र्यं रक्षितम् । प्रशंसार्हः खलु तयोः प्रयत्नोऽयम् ।

अष्टाङ्गहृदयस्य भूमिकायां सम्पादकमहोदयेन जार्म्मान्देशीयकोविदानां

मतमनुसृत्य वाग्भटो द्वितीयखृष्टशताब्द्यां स्थापितः। किन्तु मतवाद-प्रवर्त्तयितॄणां नामानुल्लेखादात्मनश्च स्वतन्त्रयुक्तिप्रदर्शनाभावाद् मतवादोऽयं प्रामाण्यं नावहति।

प्रथमद्वितीयखृष्टशताब्दीयनागार्जुनमतानुवर्त्तित्वादवगम्यते यदयं वाग्भट-स्ततः पराचीन आसीदिति। एवं वाग्भटस्य द्वितीयखृष्टपूर्व्वशताब्दीयत्वं कथञ्चिदपि न सङ्गच्छते। एतेन डाक्तारमोरेश्वरकुन्तेगोण्डालठाकुरसाहेब-भगवत्सिंजी-( M.D. )-महोदययो र्मतवादः प्रत्याख्यायते।

शकाधिपतौ कनिष्के दिवं गते तत्पुत्रो हुविष्क श्चत्वारिंशदधिकशततम-खृष्टवर्षपर्य्यन्तं राज्यमकार्षीत्। तदनन्तरं तत्पुत्रो वासुदेवः शकाधिपती राज्यं शासत्तृतीयखृष्टशताब्द्याः प्रारम्भे षाट्कौशिकं शरीरं व्यजहात्। वासुदेवात् परं तत्पुत्रः कापाली शकराज्यमशिषत्। यद् वा भवतु, प्रथमखृष्टशताब्दीमारभ्य तृतीयखृष्टशताब्दीपर्य्यन्तमेते शकाधिपतयः प्रजा-पालनमकार्षुरित्यत्र न कश्चित् सन्देहो वर्त्तते।

शकाधिपतीनां मध्ये वासुदेवो रससिद्धो रसायनशास्त्रपारगश्चासीत्, तत्प्रणीत'वासुदेवसंहिता'नामको रसग्रन्थ एतदुक्तेः प्रामाण्यं वहते। तस्य तनयः कापाली च रसशास्त्रे विशेषविदासीत्। तेनापि 'रसराज-महोदधि'नामको रसग्रन्थः प्रणीतः। तथापि रसे रसायने च प्रधीरेव राजा वासुदेव इति मन्यामहे।

शकाधिपति र्वासुदेवः सिन्धुदेशाधिपतित्वेनापि प्रसिद्धः, शकस्थानेषु सिन्धुदेशस्यान्तर्भावात्। स हि रसायने विशेषवित्, वाग्भटोऽपि वैद्यागमे पारदृश्वा, अतो ब्रूमः—

"रसोनानन्तरं वायोः पलाण्डुः परमौषधम्।
साक्षादिव स्थितं यत्र शकाधिपतिजीवितम्॥"

( संग्रह-उत्तर, ४६ अ० )

इत्यादि-वाग्भटवचने शकाधिपतिशब्देन वासुदेव एव लक्षितस्तस्य दीर्घायुष्ट्वात्, न तु तत्पुत्रः कापालीति। एवं हि तयो र्द्वितीय-तृतीयखृष्ट-शताब्दीयत्वं सूपपन्नं भवति।

मन्ये—वाग्भटमुनि र्वासुदेव-कापालिनोरन्तरङ्गवैद्य आसीदिति। अतश्च तत्रभवता संग्रहोत्तरीय ऊनपञ्चाशाध्याये राज्ञोः शुद्धान्तवृत्तान्तमाशंसता लिखितम्—

'यस्योपयोगेन शकाङ्गनानां
लावण्यसारादिव निर्म्मितानाम्।
कपोलकान्त्या विजितः शशाङ्को
रसातलं गच्छति निर्व्विदेव॥' इति।

द्वितीयतृतीयखृष्टशताब्दीयशकाधिपतिवासुदेवादेः समकालिकत्वात् संग्रहादिकृद् वाग्भटस्यापि द्वितीयतृतीयखृष्टशताब्दीयत्वं किमिति न गृह्यते? पुनरत्र कोऽपि पर्य्यनुयोक्तुमर्हति यत् संग्रहादिकृद् वाग्भटो यदि द्वितीय-तृतीयखृष्टशताब्दीयः स्यात् तर्हि तत्कृतेः काचिद् व्याख्या नवमखृष्टशताब्दीतः पूर्व्वं केनचित् कथं न प्रकाशिता? अत्यल्पमिदमुच्यते। गोविन्दभगवत्पादस्य रसहृदयमष्टमखृष्टशताब्दीयो ग्रन्थः। सप्तदशखृष्ट-शताब्द्यां तु तस्य प्रथमटीका चतुर्भुजमिश्रेण व्यरचि। गोविन्दभगवत्-पादस्य गुरोः शङ्कराचार्य्यस्य परमगुरोश्च गौडपादाचार्य्यस्य माण्डूक्यकारिका सप्तमखृष्टशताब्दीयो ग्रन्थः। सा हि स्मृतित्वेन सर्व्वकालेषु सर्व्वैः परिगृहीता। टीका तु तस्याः पञ्चदशखृष्टशताब्द्यामानन्दगिरिणा प्रथमं प्रकाशिता। अतः सूच्यते यद् मूलग्रन्थस्योदयकालो व्याख्याप्रणयनकाल-मानेन स्थिरीकर्तुं न युज्यत इति। निरुक्तमैतिहासिकवृत्तमनादृत्य स्वमत-ख्यापने कस्य वा कियानधिकार इति शास्त्रचिन्तकैः प्राज्ञिकैश्च व्यापक-दर्शिभिरेव विचार्य्यम्।

रसरत्नसमुच्चयनामा कश्चित् प्राचीनो रसचिकित्साग्रन्थ इदानीमपि विलसत्येव। रसरूपरत्नानि समुच्चीयन्ते संगृह्यन्तेऽस्मिन्निति रसरत्नसमुच्चयः। रसशास्त्रं पञ्चखण्डात्मकं भवति—रसखण्डं प्रयोगखण्डं वादखण्डं रसायनखण्डं मन्त्रखण्डं चेति। तदुक्तं रसरत्नाकरे नित्यनाथेन—

पञ्चखण्डमिदं शास्त्रं साधकानां हितं प्रियम्।
रसखण्डे तु वैद्यानां व्याधितानां रसेन्द्रके॥
वादिनां वादखण्डे च वृद्धानां च रसायने।
मन्त्रिणां मन्त्रखण्डे च रससिद्धिः प्रजायते॥' इति।

रसेन्द्रके प्रयोगखण्ड इत्यर्थः। मन्त्रिणां मान्त्रिकाणां दैवचिकित्सकानामिति यावत्। रसरत्नसमुच्चय एतेषां सर्व्वेषां खण्डानां सारांशः संगृहीत एव। एतद्वर्ज्जं दैवी चिकित्सापि तत्र शस्यते।

अस्य ग्रन्थस्य त्रिंशदध्यायानां प्रत्यध्यायस्थितपुष्पिकायां लिखितमस्ति—'इति श्रीवैद्यपतिसिंहगुप्तस्य सूनो र्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये अमुकप्रकरणं नाम अमुकोऽध्यायः' इति। ग्रन्थान्ते च लिखितमस्ति—'इति श्रीवैद्यपतिसिंहगुप्तस्य सूनो र्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये रसकल्पो नाम त्रिंशोऽध्यायः' इति। ग्रन्थादौ रसोत्पत्तिनामके प्रथमाध्याये ग्रन्थकृता ज्ञापितं 'सूनुना सिंहगुप्तस्य रसरत्नसमुच्चयः···प्रवक्ष्यत इति। अतो विस्पष्टमुपपद्यते यत् सिंहगुप्ततनयेन वाग्भटेन ग्रन्थोऽयं प्रणीत इति। प्राविकास्तु पुष्पिकावाक्यं न श्रद्दधते।

रसरत्नसमुच्चयस्य प्रणेता सिंहगुप्ततनयो वाग्भट इत्युक्तौ वहवः प्रात्निका विप्रतिपद्यन्ते। History of Sanskrit Literature ग्रन्थस्य ५१२ पृष्ठे कीथ्महोदयेन लिखितम्—"The Rasaratna-samuccaya is ascribed to Vagbhata in some texts, in other to Asvinikumara or Nityanatha ; it has been

assigned conjecturally to 1300 A.D." अयमर्थः। रसरत्नसमुच्चयस्य कर्तृत्वं कुत्रचित् संस्करणे वाग्भटे, कुत्रचिच्च पुनरश्विनीकुमारापरनाम्नि नित्यनाथे समारोपितम्; अतो हि प्रात्नकैरनुमानतो ग्रन्थस्य प्रणयनकालस्त्रयोदशखृष्टशताब्दीयत्वेन गृह्यत इति। History of Hindu Chemistry-ग्रन्थस्य भूमिकायां Dr. P. C. Roy महोदयेन लिखितम्—'The date of Rasaratna-samuccaya may be placed between 13 and 14 C. A.D. ( Vol II, pages l-li and page 122, also Vol I. Introduction p. 89 ). रसरत्नसमुच्चयस्य प्रणयनकाल स्त्रयोदशखृष्टशताब्दीं चतुर्दशखृष्टशताब्दीं चान्तरा कल्पयितुं शक्यमित्यर्थः। एतेनैतदाक्षिप्यते यत् सिंहगुप्तसूनुरष्टाङ्गसंग्रहकृद् वाग्भटो नास्य ग्रन्थस्य प्रणेता भवितुमर्हति; यतो नवमखृष्टशताब्दीतः प्रागारभ्य त्रयोदशखृष्टशताब्दीपर्य्यन्तं यस्यैवाष्टाङ्गसंग्रहस्य वहवो व्याख्याग्रन्थाः प्रणीता स्त्रयोदशचतुर्दशखृष्टशताब्द्योस्तस्य पुना रसरत्नसमुच्चयप्रणयनं न सम्भवतीति।

रसरत्नसमुच्चयस्य प्रणयनकालमधिकृत्य प्रात्नकानां संशया अस्थाने न प्रादुरभवन्। यतो वाग्भटस्य रसायन-( Chemistry )-विषयको ज्ञानप्रसरो नागार्जुनबोधे ज्ञानतो नाधिकः प्रतीयते। नागार्जुनवाग्भटयो रसक्रियादिज्ञानमपेक्ष्य रससिद्धानां शङ्करगुरुगोविन्दभगवत्पादस्य नित्यनाथसोमदेवयोश्च तज्ज्ञानायतनमाधिक्येनासीदित्येषां ग्रन्थत एवाधिगम्यते। रसरत्नसमुच्चये न केवलं सप्तमाष्टमखृष्टशताब्दीस्थितस्य शङ्कराचार्य्यगुरो र्गोविन्दभगवत्पादस्य नाम ( १।४ ) गृहीतम्, परं तु तत्प्रणीतरसहृदयग्रन्थात् सप्तविंशतिश्लोका अविकलं समुद्धृताः, यथा—

'मूर्च्छित्वा हरति रुजं वन्धनमनुभूय मुक्तिदो भवति।
अमरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात्॥

सुरगुरुगोद्विजहिंसापापकलापोद्भवं किलासाध्यम् ।
श्वित्रं तदपि च शमयति यस्तस्मात् कः पवित्रतरः सूतात् ॥
रसबन्ध एव धन्यः प्रारम्भे यस्य सततमतिकरुणा ।
सेत्स्यति रसे करिष्ये महीमहं निर्जरामरणाम् ॥
सुकृतफलं तावदिदं सुकुले यज्जन्म धीश्च तत्रापि ।
साऽपि च सकलमहीतलतुलनफला भूतलं च सुविधेयम् ॥
भूतलविधेयतायाः फलमर्थास्ते च विविधभोगफलाः ।
भोगाश्च सन्ति शरीरे तदनित्यमतो वृथा सकलम् ॥
इति धनशरीरभोगाद् मत्वाऽनित्यान् सदैव यतनीयम् ।
मुक्तौ सा च ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे ॥
तत् स्थैर्य्ये न समर्थं रसायनं किमपि मूललोहादि ।
स्वयमस्थिरभावं दाह्यं क्लेद्यं च शोष्यम् ॥
काष्ठौषध्यो नागे नागो वङ्गेऽथ वङ्गमपि शुल्वे ।
शुल्वं तारे तारं कनके कनकं च लीयते सूतेन ॥
तत्त्वं हि भजन्ते हरमूर्त्तौ योगिनो यथा लीनाः ।
तद्वत् कवलितगगने रसराजे हेमलोहाद्याः ॥
परात्मनीव सततं भवति लयो यत्र सर्व्वसत्त्वानाम् ।
एकोऽसौ रसराजः शरीरमजरामरं कुरुते ॥
स्थिरदेहेऽभ्यासवशात् प्राप्य ज्ञानं गुणाष्टकोपेतम् ।
प्राप्नोति ब्रह्मपदं न पुन र्भवावासजन्मदुःखानि ॥
एकांशेन जगद्युगपदवष्टभ्यावस्थितं परं ज्योतिः ।
पादै स्त्रिभिस्तदमृतं सुलभं न विरक्तिमात्रेण ॥
न हि देहेन कथंचिद् व्याधिजरामरणदुःखविधुरेण ।
क्षणभङ्गुरेण सूक्ष्मं तद्ब्रह्मोपासितुं शक्यम् ॥

नामापि देहसिद्धेः को गृह्णीयाद् विना शरीरेण ।
यद्योगगम्यममलं मनसोऽपि न गोचरं तत्त्वम् ॥
यज्ञाद्दानात् तपसो वेदाध्ययनाद् दमात् सदाचारात् ।
अत्यन्तभूयसी किल योगवशादात्मसंवित्तिः ॥
भ्रूयुगमध्यगतं यच्छिखिविद्युत्सूर्य्यवज् जगद् भाति ।
केषांचित् पुण्यदृशामुन्मीलति चिन्मयं परं ज्योतिः ॥
परमानन्दैकरसं परमं ज्योतिःस्वभावमविकल्पम् ।
विगलितसकलक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम् ॥
तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत् पश्यन् ।
उत्सन्नकर्म्मबन्धो ब्रह्मत्वमिहैव चाप्नोति ॥
रागद्वेषविमुक्ता सत्याचारा मृषारहिताः ।
सर्व्वत्र निर्व्विशेषा भवन्ति चिद्ब्रह्मसंस्पर्शात् ॥
तिष्ठन्त्यणिमादियुता विलसद्देहाः सदोदितानन्दाः ।
ब्रह्मस्वभावममृतं संप्राप्ताश्चैव कृतकृत्याः ॥
आयतनं विद्यानां मूलं धर्म्मार्थकाममोक्षाणाम् ।
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् ॥
प्रत्यक्षेण प्रमाणेन यो न जानाति सूतकम् ।
अदृष्टविग्रहं देवं कथं ज्ञास्यति चिन्मयम् ॥
यज्जरया जर्ज्जरितं कासश्वासादिदुःखविवशं च ।
योग्यं तन्न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम् ॥
बालः षोडशवर्षो विषयरसास्वादलम्पटः परतः ।
सोऽयातविवेको वृद्धो मर्त्यः कथमाप्नुयाद् मुक्तिम् ॥
अस्मिञ्छरीरे येषां परमात्मनो न संवेदः ।
देहत्यागादूर्द्ध्वं तेषां तद् ब्रह्म दूरतरम् ॥

३८

ब्रह्मपदे यतन्ते तस्मिन् दिव्यां तनुं समाश्रित्य ।
जीवन्मुक्ताश्चान्ये कल्पान्तस्थायिनो मुनयः ॥
तां जीवन्मुक्तिं समीहमानेन योगिना प्रथमम् ।
दिव्या तनु र्विधेया हरगौरीसृष्टिसंयोगात् ॥'

इति प्रथमाध्याये ।

गोरक्षपुरे त्रयोदशखृष्टशताब्दीत ईषत्प्रागेव सन्न्यासिनां नवनाथ-सम्प्रदायः प्रतिष्ठितो बभूव। तत्र देवगिरे राज्ञ स्त्रयोदशखृष्टशताब्दीय-सिङ्घनस्य समकालिकः खर्पणनामा कश्चन लोकनाथो रससिद्धपुरुषत्वेन ख्यात आसीत्। नवनाथीयशक्तिसारतन्त्रादवगम्यते यद् दशोर्द्ध्वद्वादशशतखृष्टवर्षे सिङ्घनस्य शासनकाल आरब्ध इति। अस्य खर्पणाख्यलोकनाथस्य नाम मतवादश्च रसरत्नसमुच्चये दृश्येते। तत्र लिखितमस्ति—

'स रसो धातुवादेषु शस्यते न रसायने ।
अयं हि खर्पणाख्येन लोकनाथेन कीर्त्तितः ॥' इति ८।४३ ।

त्रयोदशखृष्टशताब्दीयसोमदेवप्रणीतरसेन्द्रचूड़ामणिनाम्नो रसग्रन्थतो रस-रत्नसमुच्चये नानाश्लोका उद्धृताः। तद् यथा—

'रौप्येण सह संयुक्तं ध्मातं रौप्येण चेल्लगेत् ।
तदा निरुत्थमित्युक्तं लोहं तदपुनर्भवम् ॥
निर्व्वापणविशेषेण तत्तद्वर्णं भवेद् यदा ।
मृदुलं चित्रसंस्कारं तद्बीजमिति कथ्यते ॥
इदमेव विनिर्द्दिष्टं वैद्यैरुत्तरणं खलु ।
संस्पृष्टलोहयोरेकलोहस्य परिसाधनम् ।
प्रध्मातं वङ्कनालेन तत्ताडनमुदाहृतम् ॥' इति ८।२६-३१ ।
'न तत्पुटसहस्रेण क्षयमायाति सर्व्वथा ।
चपलोऽयं समादिष्टो वार्त्तिकै र्नागसम्भवः ॥

इत्थं हि चपलः कार्य्यो वङ्गस्यापि न संशयः।
तत्स्पृष्टहस्तसंस्पृष्टः केवलो वध्यते रसः ॥' इति च, ८।४१-४२।

त्रयोदशखृष्टशताब्दीतः परवर्त्तिनोः कयोरपि ग्रन्थग्रन्थकृतो र्नामवचांसि न समुपलभ्यन्त इत्यतः प्राज्ञिकैः सिद्धान्तितं यदस्य ग्रन्थस्य प्रणयनकालस्त्रयोदशखृष्टशताब्दीति। प्रणेता च तन्मतेन चतुर्थवागभटो नित्यनाथो वेति।

वस्तुगतेरेवंविधत्वेऽपि वयं खलु मन्यामहे यत् साम्प्रतिकरसरत्नसमुचयस्य मूलभाग स्तृतीयखृष्टशताब्दीयेन वागभटेन प्रणीतः, प्रतिसंस्कृतभागस्तु त्रयोदशखृष्टशताब्दीय इति। केन पुनः स ग्रन्थः प्रतिसंस्कृत इत्येतत् तु मीमांसितव्यम्। चतुर्थवागभट स्त्रयोदशचतुर्दशखृष्टशताब्दीय आसीत्। रसाधिकारे तस्य कश्चिदपि ग्रन्थो न दृश्यते न चापि श्रूयते। अतः स रसग्रन्थप्रतिसंस्कर्त्ता भवितुं नार्हति। नित्यनाथश्च त्रयोदशचतुर्दशखृष्टशताब्द्योराविर्बभूव। तेनैव रसरत्नाकर-रसरत्नमालानामकं रसग्रन्थद्वयं प्रणीतम्। तदीयग्रन्थतस्तु रसरत्नसमुच्चये कस्यापि श्लोकादेरनुपलम्भात् तस्य ग्रन्थप्रतिसंस्कर्त्तृत्वमनुमातुं न शक्यते।

त्रयोदशखृष्टशताब्दीयसोमदेवप्रणीतरसेन्द्रचूडामणे र्नानाश्लोका रसरत्नसमुच्चये दृश्यन्ते। ग्रन्थस्य च वहुषु स्थलेषु रसेन्द्रचूडामणेः शैलीदर्शनादवगम्यते यत् सोमदेव एव तस्य प्रतिसंस्कर्त्ता नान्य इति। किमन्यत्, सोमदेवेन स्वनामग्राहं तदीयरसेन्द्रपरिभाषातो ग्रन्थेऽस्मिन् वहवः श्लोका उद्धृता यथा—

'कथ्यते सोमदेवेन मुग्धवैद्यप्रबुद्धये।
परिभाषा रसेन्द्रस्य शास्त्रैः सिद्धैश्च भाषिताः ॥'

(८।१) इति।

अस्याध्यायस्य पुष्पिकायां तु लिखितमस्ति—'इति श्रीवैद्यपतिसिंहगुप्तस्य सूनौ वागभटाचार्य्यस्य कृतौ रसरत्नसमुच्चये रसपरिभाषा-कथनं नामाष्टमो-

ऽध्यायः' इति। ततश्च यन्त्रकथनोपक्रमे पुनरपि सोमदेवः स्वनामग्राह-माह—

'अथ यन्त्राणि वक्ष्यन्ते रसतन्त्राण्यनेकशः।

समालोक्य समासेन सोमदेवेन साम्प्रतम् ॥' (६।१) इति।

'नन्दी नागार्जुनश्चैव ब्रह्मज्योति र्मुनीश्वरः।

वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले ॥ (६।६५) इति च।

अस्याप्यध्यायस्य पुष्पिकायां लिखितमस्ति—'इति श्रीवैद्यपतिसिंह-गुप्तस्य सूनो र्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये यन्त्रनिरूपणं नाम नवमोऽध्यायः' इति।

एवमेवं च प्राप्ते ब्रूमः प्रागेव मूलरसरत्नसमुच्चयः सिंहगुप्तसूनुना प्रणीतः, सिंहगुप्तसूनुश्च तत्प्रणयनाद् रसवाग्भट इतिनाम्ना प्रसिद्धिं प्राप्तः (माधवोपाध्यायस्यायुर्व्वेदप्रकाशे), परं तु मौलिकत्वाभावात् संक्षिप्तत्वाच्च ग्रन्थोऽयं लोके प्रसिद्धिं न लेभे, ततो महति काले व्यतीते रसेन्द्रचूड़ामणि-रसेन्द्रपरिभाषाकृत् सोमदेवस्तत्र कालोपयोगिनं प्रतिसंस्कारं विधाय तद्ग्रन्थं मूलकृतो नाम्नैव प्रचारयामासेति। वाग्भटमुनिश्चेद् मूलकारो न स्यात् तर्हि शङ्करगुरुं गोविन्दभगवत्पादमतिक्रम्य किमर्थं वाग्भटमुने र्नाम्ना ग्रन्थोऽयं प्रकाशितः? रसोपकल्पनसामर्थ्ये रसशास्त्राधिकारे च तस्मा-दधिकतरः प्रामाणिको भगवान् गोविन्दपाद इत्यत्र नास्ति कोऽपि सन्देहा-वकाशः। यदि प्राचीनतरे मुनिनामनि वा प्रीतिः स्यात् तर्हि वाग्भटं हित्वा व्याड़िपतञ्जलिनागार्जुनादीनां मध्ये कस्यचिदेकस्य मुने र्नाम्ना ग्रन्थोऽयं किमिति न प्रकाशितः? सर्व्वं खल्वेतत् प्रतिपादयति यद् वाग्भट एव ग्रन्थस्य मूलकारो न तु कश्चिदन्य इति।

ननु प्रतिसंस्कृतौ प्रतिसंस्कर्त्तु र्नामाख्यापनमनुचितमिति चेत्? न। नवीनग्रन्थकृतामुक्तयः पण्डितै र्नाद्रियन्त इति कृत्वा प्रतिसंस्कर्त्रा ग्रन्थोऽयं

मूलवक्तरि समारोपितः। वाग्भटस्य मूलकर्तृत्वात् तन्नाम्ना ग्रन्थस्यास्य प्रकाशः कथमपि दोषं नावहति। किमन्यत्, सोमदेव एतेन नूनं परां कोटिं स्वार्थत्यागस्य प्राकटयदिति मन्यामहे।

पञ्चदशखृष्टशताब्द्यां चिन्तामणिखरेशास्त्रिणा रसरत्नसमुच्चयस्य 'तरलार्थप्रकाशिनी'नाम्नी टीकैका विरचिता। एष टीकाकारः 'खरे'नाम्ना समधिकं प्रसिद्धः। ग्रन्थस्य प्रणयनकालविषये प्रतिसंस्कारविषये वा टीकाकारो जोषमवतिष्ठते।

रसरत्नसमुच्चयस्य रसोत्पत्तिनामकप्रथमाध्यायारम्भे लिखितमस्ति—

यस्यानन्दभवेन मङ्गलकलासम्भावितेन स्फुर-
द्धाम्ना सिद्धरसामृतेन करुणावीक्षासुधासिन्धुना।
भक्तानां प्रभवप्रसंहृतिजरारागादिरोगाः क्षणा-
च्छान्तिं यान्ति जगत्प्रधानभिषजे तस्मै परस्मै नमः॥
आगमश्चन्द्रसेनश्च लङ्केशश्च विशारदः।
कपाली मत्तमाण्डव्यौ भास्करः शूरसेनकः॥
रत्नघोषश्च शम्भुश्च सात्त्विको नरवाहनः।
इन्द्रदो गोमुखश्चैव कम्बलि र्व्याड़िरेव च॥
नागार्जुनः सुरानन्दो यागबोधि र्यशोधनः।
खण्डः कापालिको ब्रह्मा गोविन्दो लम्पको हरिः॥
सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः।
रसांकुशो भैरवश्च नन्दी स्वच्छन्दभैरवः॥
मन्थानभैरवश्चैव काकचण्डीश्वरस्तथा।
वासुदेव ऋष्यश्रृङ्गः क्रियातन्त्रसमुच्चयी॥
रसेन्द्रतिलको योगी भालुकि र्मैथिलाह्वयः।
महादेवो नरेन्द्रश्च वासुदेवो हरीश्वरः॥

एतेषां क्रियतेऽन्येषां तन्त्राण्यालोक्य संग्रहः ।
रसानामथ सिद्धानां चिकित्सार्थोपयोगिनाम् ॥
सूनुना सिंहगुप्तस्य रसरत्नसमुच्चयः ।
रसोपरसलोहानि यन्त्रादिकरणानि च ॥
शुद्ध्यर्थमपि लोहानां तन्त्रादिकरणानि च ।
शुद्धिः सत्त्वं द्रुतिर्भस्मकरणं च प्रवक्ष्यते ॥···

इति । श्रीवैद्यपतिसिंहगुप्तस्य सूनो र्वाग्भटाचार्य्यस्य कृतौ रसरत्नसमुच्चये रसोत्पत्ति र्नाम प्रथमोऽध्यायः ।' इति ।

रसरत्नसमुच्चयोक्तानां कतिपयानां रसग्रन्थकृतां रसग्रन्थानां च वृत्तान्ता वर्णानुक्रमशो यथासम्भवमिह प्रदर्श्यन्ते—

आगम इति । आगमो वेदः शिवोक्ततन्त्रशास्त्रं वा । इह तन्त्रशास्त्रम् । उक्तं च—

'आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ ।
मतं च वासुदेवस्य तस्मादागम उच्यते ॥' इति ।

'आदिम' इति । टीकाकार आह—'आदिम आदिदेवः प्रथमरसतन्त्रप्रवक्ता देवादिदेवो महादेव इति तर्क्यते । अन्ये पुनराहुः—आदिमशब्देन प्रथमरसतन्त्रप्रणेता कश्चिदन्य इति प्रतिभाति यथा वहुभिः श्रुतः सुश्रुत' इति । 'आदिमसिद्धान्त'स्तु १६५६ खृष्टाब्दीयकवीन्द्रसूच्यामुल्लिखितो दृश्यते । एतस्मादुपपद्यते यत् सप्तदशखृष्टशताब्द्यामादिमसिद्धान्तनामकः कश्चिद् ग्रन्थ आसीदिति ।

'आस्तिक' इति । जरत्कार्व्वोः पुत्रो विषविद्यापारगो मुनिविशेषः । तिङन्तप्रतिरूपकनिपातनाद् 'अस्तिनास्तिदिष्टं मतिरि'ति ठक्प्रत्ययत 'आस्तिकः' ( पा० ४।४।६० ) इति । अयमाशयः । अस्तिनास्तिशब्दौ तिङन्तप्रतिरूपकाव्ययौ भवतः । सत्परलोकत्वे वाच्ये तिङन्तप्रतिरूपकास्तिशब्दादयं

प्रत्ययः। विद्यमानः परलोकभावो यस्य स सत्परलोकत्वः, परलोकोऽस्तीति ज्ञानं यस्येत्यर्थः। अस्य मुने र्नामस्मरणात् सर्पभयं निवर्त्तते। उक्तं च भारते—

यो जरत्कारुणा जातो जरत्कारौ महायशः।
आस्तीकः सर्पसत्रे वः पन्नगान् योऽभ्यरक्षत॥
तं स्मरन्तं महाभागा न मां हिंसितुमर्हथ।
जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर॥
आस्तिकस्य वचः श्रुत्वा यः सर्पो न निवर्त्तते।
शतधा भिद्यते मूर्द्धि शिंशवृक्षफलं यथा॥

(आ० ५८।२४) इति।

'इन्द्रद' इति। ग्रन्थकृत् प्रथमाध्याये स्मरति—'इन्द्रदो गोमुखश्चैव कम्बलि र्व्याड़िरेव च' इति। अयं कश्चिद् रसाचार्य्य आसीदिति तर्क्यते।

ईश्वर इति। रसरत्नसमुच्चयस्य षष्ठाध्याये लिखितमस्ति—

'हर्षयेद् द्विजदेवानां तर्पयेदिष्टदेवताः।
कुमारी-योगिनीयोगीश्वरांश्च म्लेच्छसाधकान्॥' (६२) इति।

ईश्वरान् ब्रह्मविष्णुशिवादीन्। यद्वा योगीश्वरान् योगिश्रेष्ठानिति।

'ऋष्यशृङ्ग' इति। 'ऋश्यशृङ्ग' इति तालव्यवान् पाठो ग्रन्थान्तरे दृश्यते। तथा हि वनपर्व्वणो भारतभावदीपे षोड़शखृष्टशताब्दीयो नीलकण्ठसूरिराह—'ऋश्येति तालव्यादिः, मूर्धन्यादिपाठः प्रामादिकः। 'ऋश्यो न तृष्यन्' [ ऋ० सं० ८।४।१० ] इति मन्त्रवर्णादिति।' अमर आह—'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः' इति। अत्र द्वादशखृष्ट-शताब्द्यां क्षीरस्वामिनोक्तम्—'इयर्त्ति ऋश्यः। ऋषी गतावित्यस्मान् मूर्धन्यः षः स्यादि'ति। ऋष्यशृङ्गे ति मूर्धन्यषकारवन्तः पाठा दृश्यन्ते रामायणे,

भट्टौ (१।१०), महिम्नःस्तोत्रे (२२) चेति। ऋश्येति तालव्यशकारवन्तः पाठाश्च दृश्यन्ते वेदे, लोके च यथा 'वलवदृश्या स्थली'ति वृन्दावनयमके।

ऋश्यशृङ्गो विभाण्डककाश्यपस्य तनयः। तत्कृतेन 'कारीरी'यागेन लोमपादराजर्षेरनावृष्टिसन्तप्ते राज्ये देवः कामं प्रवृष्ट इति दृष्ट्वा स पूर्णकामः सन् स्वसुतां शान्तामृश्यशृङ्गाय ददौ। रतिशास्त्रानभिज्ञस्यास्य मुनेः प्रसङ्गे बुद्धचरितकृत् कविरश्वघोष आह—

'ऋश्यशृङ्गं मुनिसुतं तथैव स्त्रीष्वपण्डितम्।
उपायैर्विविधैः शान्ता जग्राह च जहार च॥' (४।१६) इति।

अनेनैव मुनिना याजयित्वा महाराजदशरथोऽपि श्रीरामादिपुत्रचतुष्टयं लेभे। तथा हि भट्टावुक्तम्—

'पुत्रीयता तेन वराङ्गनाभि-
रानायि विद्वान् क्रतुषु क्रियावान्।
विपक्तिमज्ञानगति र्मनस्वी
मान्यो मुनिः स्वां पुरमृष्यशृङ्गः॥' (१।१०) इति।

एष मुनिवर्य्य 'ऋश्यशृङ्गतन्त्र'नामकं रसग्रन्थं प्रणिनाय। तत् तु तन्त्रं परवर्त्तिकाले 'दाशरथीयतन्त्रमि'त्याख्यया प्रकाशितम्।

अस्य मुने र्जनुरधिकृत्य महाभारतादौ विचित्रमेकं कथानकमस्ति। ब्रह्मशापेन शम्बरारेः कल्याणप्रदभगदेवस्य कन्या स्वर्णमृगी भूत्वा शस्पवहुले रम्यकानने विचचार। तत्रैव ह्रदसमीपे दृष्ट्वाऽप्सरसमुर्व्वशीमप्सूपस्पृशतो मुने र्विभाण्डकस्य रेतः प्रचस्कन्द। सतोयतद्रेतःपानेन सा स्वर्णमृगी गर्भिणी भूत्वा काले तोकमेकं प्रसूय शापमुक्ता सती त्रिदिवं ययौ। ततश्चोक्तं महाभारते—

'तस्यां मृग्यां समभवत् तस्य पुत्रो महानृषिः।
ऋष्यशृङ्गस्तपोनित्यो वन एवाभ्यवर्त्तत॥

तस्यर्षेः शृङ्गं शिरसि राजन्नासीन्महात्मनः ।
तेनर्ष्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत् ॥' इति ।

'कपाली'ति । रसरत्नसमुच्चये लिखितमस्ति—'कपाली मत्तमाण्डव्यौ भास्करः शूरसेनकः' ( प्रथमाध्याये ) इति । अस्य 'कापाली कापालिः कापालिक'श्चेति नामान्तराणि । अनेन कापालीसिद्धान्तः प्रणीतः । ग्रन्थः सुदुर्लभ एव । कवीन्द्रसूच्यां तु स उल्लिखितो दृश्यते । श्रूयते हि यदनेन 'रसराजमहोदधि'नामको रसग्रन्थोऽपि प्रणीत इति ।

एष महाराजः कपाली शककुषाणाधिपतेः कनिष्कस्य प्रपौत्रो वसुष्का-परपर्य्यायवासुदेवस्य पुत्रो हठयोगी सिद्धरसाचार्य्यः प्रकटावधूतस्तृतीय-चतुर्थखृष्टशताब्दीयश्चासीत् । हठयोगदीपिकायां लिखितमस्ति—कपाली विन्दुनाथश्च काकचण्डीश्वराह्वयः' इति । रसेश्वरसिद्धान्ते लिखितमस्ति—'चर्व्वटिः कपिलो व्याड़िः कापालिः कन्दलायनः' इति ।

कम्बलिरिति । रसरत्नसमुच्चयारम्भे लिखितमस्ति—इन्द्रदो गोमुखश्चैव कम्बलि र्व्याड़िरेव च' इति । कम्बलिस्तान्त्रिकः सन्न्यासीति श्रूयते ।

'कराल' इति । करालजनकः । यमुद्दिश्य कविरश्वघोष आह—

'करालजनकश्चैव हृत्वा ब्राह्मणकन्यकाम् ।
अवाप भ्रंशमप्येवं न तु सेजे न मन्मथम् ॥'

इति (बुद्धच० ४।८०) ।

'काकचण्डीश्वर' इति । काकचण्डेश्वरीतन्त्रादवगम्यते यदेष काक-चण्डीश्वरो भगवतो रुद्रस्यैव मूर्त्तिभेद इति । रसरत्नसमुच्चयस्यारम्भे लिखित-मस्ति—'मन्थानभैरवश्चैव काकचण्डीश्वरस्तथा' इति । हठयोगदीपिकायां चास्य नाम दृश्यते । काकचण्डीश्वरतन्त्रं कवीन्द्रसूच्यामुल्लिखितं दृश्यते ।

'कुमारी'ति । रसरत्नसमुच्चयस्य शिष्योपनयननामके षष्ठाध्याये लिखितमस्ति—'कुमारीयोगिनीयोगीश्वरांश्च म्लेच्छसाधकान्' ( ६२ ) इति ।

कुमारीप्रभृतीन् हर्षयेत् तर्पयेच्च रससाधक इत्युपदेशः। कुमारीपूजा शास्त्रे नितरां प्रशंसिता। तदुक्तं तन्त्रसारे—

'होमादिकं तु सकलं कुमारीपूजनं विना।
परिपूर्णफलं न स्यात् पूजया तद् भवेद् ध्रुवम्॥
कुमारीपूजया देवि फलं कोटिगुणं भवेत्।
पुष्पं कुमार्य्यै यद्दत्तं तन् मेरुसदृशं भवेत्॥
कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम्।' इति।

यामले वयोभेदेन कुमारीणां नामभेदा उक्ताः, यथा—

'एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती।
त्रिवर्षा त्रिविधा मूर्त्तिश्चतुर्वर्षा तु कालिका॥
सुभगा पञ्चवर्षा तु षड्वर्षा च उमा भवेत्।
सप्तभि र्मालिनी साक्षादष्टवर्षा च कुब्जिका॥
नवभिः कालसङ्कर्षा दशभिश्चापराजिता।
एकादशे तु रुद्राणी द्वादशाब्दे हि भैरवी॥
त्रयोदशे महालक्ष्मी द्विसप्ता पीठनायिका।
क्षेत्रज्ञा पञ्चदशभिः षोडशे चान्नदा स्मृता॥
एवं क्रमेण संपूज्या यावत् पुष्पं न विद्यते।
कुमारी योगिनी साक्षात् कुमारी परदेवता॥
असुरा दुष्टनागाश्च ये च दुष्टग्रहा अपि।
भूतवेतालगन्धर्व्वडाकिनीयक्षराक्षसाः॥
याश्चान्या देवताः सर्व्वा भूभुवःस्वःस्थभैरवाः।
पृथिव्यादीनि सर्व्वाणि ब्रह्माण्डं सचराचरम्॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
ते तुष्टाः सर्व्वदेवाश्च यस्तु कन्यां प्रपूजयेत्॥' इति।

कन्यां कुमारीम्। यद्यपि स्मृत्युक्ता कन्या दशमवर्षीया भवति—

'अष्टवर्षा भवेद् गौरी दशवर्षा च कन्यका।
संप्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते ॥'

इति वचनात्, तथाप्यत्र कन्याशब्देनानागतार्त्तवा कुमारी बोध्या।

'खण्ड' इति। रसरत्नसमुच्चयारम्भे लिखितमस्ति—'खण्डः कापालिको ब्रह्मे'ति। स हठयोगी रसाचार्य्यश्चासीत्। अनेन 'खण्ड-सिद्धान्तः' प्रणीतः। स ग्रन्थः कवीन्द्रसूच्यामुल्लिखितो दृष्टः।

'खर्पण' इति। एष गोरक्षपुरीयनवनाथसम्प्रदायस्य खर्पणलोकनाथ-नामकः सन्न्यासी रसाचार्य्यश्च। रसेन्द्रचूड़ामणौ सोमदेवेन लिखितम्—

'स रसो धातुवादेषु शस्यते न रसायने।
अयं हि खर्पणाख्येन लोकनाथेन कीर्त्तितः ॥' इति।

एष श्लोको रसरत्नसमुच्चयस्याष्टमाध्याये समुद्धृतो दृश्यते (८।४३)।

'गोमुख' इति। अयं वत्सराजकुमारनरवाहनस्य नर्म्मसचिवो रससिद्धश्चासीत्। अस्य गोमुखसिद्धान्तनामा रसग्रन्थः कवीन्द्रसूच्या-मुल्लिखितोऽस्ति। रसरत्नसमुच्चयस्यारम्भे लिखितमस्ति—'इन्द्रदो गोमुख-श्चैवे'ति। अयं खृष्टपूर्व्वषष्ठशताब्दीतः किञ्चिदुत्तरभव एव।

'गोविन्द' इति। अयं शङ्कराचार्य्यस्य गुरु र्माण्डूक्यकारिकादि-प्रणेतु र्गौड़पादस्य शिष्यः सप्तमखृष्टशताब्द्यामुत्पन्नो नवमखृष्टशताब्द्यां तिरोदधे। गोविन्दसिद्धान्तनामको रसायनग्रन्थः कवीन्द्राचार्य्यसूच्या-मुल्लिखितो दृष्टः। एष ग्रन्थो गोविन्दनायकप्रणीत उत वा गोविन्दभगवत्-पादप्रणीत इति तु निश्चयेन वक्तुं न शक्यते। रसेश्वरदर्शनेऽस्य रसहृदय-नामको रसग्रन्थो गोविन्दभिक्षुरिति नाम्ना प्रकाशितः। एष हैहयकुलोत्-पन्नस्य किराताधिपतेः कामदेवापरनाम्नो मदनदेवस्य गुरुरासीत्। तथा हि रसहृदये तेन लिखितम्—

'तस्मात् किरातनृपते र्बहुमानमाप्य रसकर्म्मनिरतः ।
रसहृदयाख्यं तन्त्रं विरचितवान् भिक्षुगोविन्दः ॥'
( १६।८० ) इति ।

मदनदेवो विन्ध्यप्रदेशीयो नृपतिरासीत् । गोविन्दोऽपि तत्रावस्थितत्वाद् विन्ध्यवासीति नाम्ना प्रसिद्धो बभूव ।

रसहृदये लिखितमस्ति—

बालः षोड़शवर्षो विषयरसास्वादलम्पटः परतः ।
जातविवेको वृद्धो मर्त्यः कथमाप्नुयाद् मुक्तिम् ॥' इति ।

इमां च भावधारामादाय चर्पटपञ्जरिकायां सुललितगिरा गोविन्दशिष्य-शङ्कराचार्य्य आह—

'बालस्तावत् क्रीड़ासक्तस्तरुणस्तावत् तरुणीरक्तः ।
वृद्धस्तावच्चिन्तामग्नः परमे ब्रह्मणि कोऽपि न लग्नः ॥' इति ।

इतो गोविन्दशङ्करयो र्गुरुशिष्यसम्बन्धे नास्ति कश्चित् सन्देहावकाशः । गोविन्दो गौड़पादाचार्य्यस्य शिष्य आसीत् । रसशास्त्रे स नितरां प्रमाण-पुरुष एव । रसरत्नसमुच्चये लिखितमस्ति—'खण्डः कापालिको ब्रह्मा गोविन्दो लम्पको हरिः' ( रसोत्पत्ति-४ ) इति ।

आत्मपरिचयप्रदानाय रसहृदये गोविन्देन लिखितम्—

'नप्त्रा मङ्गलविष्णोः सुमनोविष्णोः सुतेन तन्त्रोऽयम् ।
श्रीगोविन्देन कृतस्तथागतश्रेयसे भूयात् ॥' इति ।

लोकाश्रयत्वाल्लिङ्गमशिष्यमित्यवधारणात् तन्त्रशब्द इह पुंस्त्वेन प्रयुक्तः । उक्तं च—'शब्दानां चित्रशक्तित्वात् षण्डशब्दो यथा पुमानि'ति । क्वचिद् 'भिक्षुः' क्वचित् 'तथागतश्चे'ति शब्दद्वयं दृष्ट्वा डाक्तारप्रफुल्लचन्द्रमहोदयेन गोविन्दो बौद्धत्वेन निरूपितः । History of Hindu Chemistry-ग्रन्थस्य द्वितीयखण्डे पुनरपि तेन लिखितम्—'The author (रसहृदय-

कृद् गोविन्दभगवत्पादः ) was evidently a Buddhist, as we learn from the colophon to the Benares Mss. ( of Rasa-hridaya, vide translation, p. 12 ). It is however not to be found either in the India Office or in the Nepal Mss. This important omission is easily accounted for. It is the reluctance of the latter-day Hindus to acknowledge their obligations to a Buddhist author ( Intro. p. L III ). अस्यायं तात्पर्य्यानुवादः । वाराणसीस्थहस्तलिखितायाः कस्याश्चित् पुस्तिकायाः पुष्पिकातः सुस्पष्टं ज्ञायते यदसौ रसहृदयकृद् गोविन्दो बौद्ध आसीदिति । 'इण्डिया अफिस्'नामकग्रन्थालयस्थितस्य नेपालग्रन्थागारस्थितस्य वा हस्तलिखितपुस्तिकासु तु नैतद् दृश्यते । अस्य वर्जनहेतुः सौकर्य्येण निर्णेतुं शक्यः । अर्व्वाचीनकाले बौद्धग्रन्थकर्त्तरि सनातनधर्म्मावलम्बिनामृणस्वीकारे पराङ्मुखतैव तद्वर्जनकारणत्वेन प्रतीयत' इति ।

विचित्र उपन्यासः । बौद्धोऽपि किं पुष्पिकापरिवर्त्तनेन सनातनधर्म्मावलम्बिनां ग्रन्थमात्मसात् कर्त्तुं न प्रभवति ? अतश्चास्माभिर्म्मतमेतन्न समर्थ्यते । सनातनधर्म्मविहिततुरीयाश्रमस्थोऽपि भिक्षुनाम्ना प्रसिद्धिं लेभे, यथा विज्ञानभिक्षु र्ज्ञानेन्द्रभिक्षू रामेश्वरभिक्षुरित्येवमादयः । 'यथागतास्ते मुनयः शिवां गतिं तथागतिं सोऽपि तथागतो गतः' इत्युक्तेस्तथागतो बुद्धवचन इति सत्यम् । इह तु 'तथागतश्रेयसे' इत्यनेन बौद्धानां मङ्गलार्थमित्युच्यते । मन्ये—शङ्कराचार्य्यात् प्राग् बौद्धानामतिप्राबल्यात् तेषां सन्तोषविधानेन ग्रन्थप्रचारप्रत्यूह-निवृत्त्यर्थं 'तथागतश्रेयस' इत्युक्तम् । किं बहुना, कलापस्य 'चैत्रकूटी'वृत्ते नमस्कारपादे मुनिकल्पो वररुचिरपि पञ्चमखृष्टशताब्द्यामाह—

'देवदेवं प्रणम्यादौ सर्व्वज्ञं सर्व्वदर्शिनम् ।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्व्ववर्म्मिकम् ॥' इति ।

सर्व्वज्ञ इति बुद्धनाम । यद् वा भवतु, न हि कश्चिद् बौद्धानां श्रेयःप्रार्थनया बौद्धो भवति, भवति तु बौद्धस्तदाचारवशेनास्माकं श्रुतिस्मृतिशास्त्रप्रत्यादेशादेव । रसहृदयस्याभ्यन्तरप्रमाणेन गोविन्दपादस्य सनातनधर्म्मावलम्बित्वमेव प्रतिपाद्यते । तथा हि ग्रन्थेऽस्मिन्—

(१) वेदान्तवेद्यं ब्रह्म स्वीक्रियते, यथा—
'परमे ब्रह्मणि लीनः प्रशान्तचित्तः समत्वमापन्न
आश्वासयंस्त्रिवर्गं विजित्य रसानन्दपरितृप्तः ॥' इति ।

(२) श्रुतिस्मृतिविहितकर्म्मणां श्रेयस्त्वमुद्घुष्यते, यथा—
'यज्ञाद्दानात् तपसो वेदाध्ययनाद् दमात् सदाचारात् ।
अत्यन्तं श्रेयः किल················॥' इति ।

(३) ब्राह्मणपूजायाः कर्त्तव्यता च परामृश्यते, यथा—
'म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुन र्वेदविद्द्विजाः ॥' इति ।

इहावधातव्यं नमिसाधूद्धृतं सुभाषितं रुद्रटालंकारटीकायाम्—
"आयु र्घृतं नदी पुण्यं भयं चौरः सुखं प्रिया ।
वैरं द्यूतं गुरु र्ज्ञानं श्रेयो ब्राह्मणपूजनम् ॥" इति ।

गोविन्दाचार्य्यो यदि बौद्धोऽभविष्यत् तर्हि शङ्कराचार्य्यस्तं गुरुत्वेन कदाचिदपि नावरिष्यदिति मन्यामहे । अस्त्येवं काचित् प्रसिद्धि र्यद् गोविन्दभगवत्पादान् गुरुत्वेन ग्रहीतुं तत्समीपं गत्वा—

'कस्त्वं शिशो कस्य कुतोऽसि गन्ता
किं नाम ते त्वं कुत आगतोऽसि ।

इति पृष्टेन शंकराचार्य्येणोक्तम्—

'स्वामिन्नहं न पृथिवी न जलं न तेजो
न स्पर्शनो न गगनं न च तद्गुणा वा।
नापीन्द्रियाण्यपि तु विद्धि ततो विशिष्टो
यः केवलोऽस्ति परमः स शिवोऽहमस्मि ॥' इति।

महति काले व्यतीते गुरो र्वाक्यमिदं हस्तामलके भगवता प्रयुक्तमिति। किमन्यदधिकं वाच्यम्, अद्वैतवादिनां मठाम्नायस्थनाममालायामपि तस्य नाम पठ्यते—

'ॐ नारायणं पद्मभवं वशिष्ठं शक्तिं च तत्पुत्रपराशरं च
व्यासं शुकं गौड़पदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम्।
श्रीशङ्कराचार्य्यमथास्य पद्मपादं च हस्तामलकं च शिष्यं
तं त्रोटकं वार्त्तिककारमन्यानस्मद्गुरुसन्ततमानतोऽस्मि ॥' इति।

एतस्मादुपपद्यते यदसौ गोविन्दाचार्य्योऽद्वैतसम्प्रदायप्रवर्त्तकानामन्यतम आसीदिति।

सप्तदशखृष्टशताब्दीयेन चतुर्भुजमिश्रेण रसहृदयस्य 'मुग्धाववोधिनी'-नाम्नी टीकैका प्रणीता। काशीखण्डस्य टीकाकारो रामानन्दश्चतुर्भुजस्य शिष्य आसीत्।

'चन्द्रसेन' इति। कालाञ्जरदुर्गनिर्म्माता चन्देलवंशप्रतिष्ठाता च तृतीयचतुर्थखृष्टशताब्दीयो महाराजश्चन्द्र एव चन्द्रसेनः। अयं समुद्रगुप्तस्य समकालिक एव। दिल्लीस्थितसुप्रसिद्धलौहस्तम्भेऽस्यैव नाम समुत्कीर्णं वर्त्तते।

चन्द्रसेनो लोकविश्रुतो रसशास्त्रवित् पण्डित आसीत्। रसशास्त्रे च चन्द्रसेनसिद्धान्तं रसचन्द्रोदयं च प्रणिनाय। तयोः कोऽपि ग्रन्थ इदानीं नोपलभ्यते। १६५६-खृष्टवर्षीयकवीन्द्रसूच्यां चन्द्रसेनसिद्धान्तस्य समुल्लेखो दृश्यते। रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखितमस्ति—
'आदिमश्चन्द्रसेनश्च लङ्केशश्च विशारद' इति।

'दस्रौ' 'नासत्यौ' चेति। अश्विनाविति यावत्। नासत्याविल्यत्र नञः प्रकृतिभावः (पा० ६।३।७५)। भवति च तत्र कारिका, यथा—

'नाको नवेदा नकुलश्च नक्रो नासत्या नक्षत्रं नपातो नभ्राट्।
नपुंसकं वै नमुंचि र्नखं च नादेशमेतेषु वदन्ति धीराः॥' इति।

नास्ति अकं दुःखं यत्र स नाकः स्वर्गः। न विदन्ति विपरीतं ये ते नवेदाः पण्डिताः। नास्ति कुलं यस्य स नकुलो महादेवः। न क्रामति गच्छति दूरस्थलमिति नक्रः कुम्भीरः। असत्यं न विद्यते ययोः तौ नासत्यौ तौ दस्रौ। न क्षरति पतति यत् तन्नक्षत्रम्। न पाति रक्षति कुलमिति नपात् नप्ता ते नपातः। न भ्राजते दीप्यते यः स नभ्राण् मेघः। न स्त्री न पुमानिति निपातनान्नपुंसकम्। न मुञ्चति दौष्ट्यं यः स नमुचि र्दैत्यः। नास्ति खं त्वगाख्यमिन्द्रियमिति नखम्। एता व्युत्पत्तयः कथञ्चिदुन्नेयाः।

'देवीशास्त्रमि'ति। गिरिजाप्रोक्तं तन्त्रशास्त्रं निगम इति यावत्। स्मर्य्यते हि यामले—

'निर्गतं गिरिजावक्त्राद् गतं शिवमुखेषु यत्।
मतं श्रीवासुदेवस्य निगमस्तेन कीर्त्तितः॥' इति।

निश्चयेन तान्त्रिकक्रियाफलं गमयतीति निगम इति स्वच्छन्दशास्त्रम्। नियमेन मन्त्रार्थस्य गमयितेति निगम इति नैरुक्ताः। गणरत्नमहोदधेः २१० पृष्टे वर्द्धमान आह—'नितरां गम्यन्ते पदार्था अनेनेति निगम' इति। देवीशास्त्रं यथा रसनिगमः।

'नन्दी'ति। अयं शिलादमुनेः पुत्रः, शालङ्कायनमुनेः प्रियशिष्यो रसविद्यापारग उग्रतपःप्रभावेन शिवानुचरो बभूव। रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखितमस्ति—'रसांकुशो भैरवश्च नन्दी स्वच्छन्दभैरव' इति। अस्य ग्रन्थस्य नवमाध्याये लिखितमस्ति—

'नन्दी नागार्जुनश्चैव ब्रह्मज्योति र्मुनीश्वरः ।
वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले ॥' (६५) इति ।

रसेन्द्रचूडामणौ सोमदेव आह—

'ऊर्द्ध्वपातनयन्त्रं हि नन्दिना परिकीर्त्तितम् ।
कोष्ठिकायन्त्रमेतद्धि तेनैव परिभाषितम् ॥' इति ।

योगसारसंग्रहो नन्दिगुरुणा कृत इत्येका प्रसिद्धिरस्ति । पूर्णानन्दतीर्थो ग्रन्थस्यास्य टीकामकरोत् । कवीन्द्राचार्य्यसूच्यां नन्दितन्त्रमुल्लिखितमस्ति ।

नन्दिनो गुरुत्वात् प्रमथाधिपो महादेवो नन्दीश्वर इति नाम्ना रसशास्त्रे प्रसिद्ध इति केचित् । अस्माकं मते तु नन्दीश्वरो नन्दिकेश्वरश्च नन्दिनो नामान्तरे भवतः । नन्दिकेश्वरनाम्ना स कामशास्त्रं चतुर्दशशिवसूत्राणां 'काशिका'वृत्तिं च प्रणिनाय । असौ काशिकावृत्ति र्जयादित्य-वामनीय-काशिकावृत्तेः पृथगेव । आयोदधौम्यस्य शिष्य उपमन्यु र्नन्दिकेश्वरप्रणीताया वृत्तेः 'काशिकातत्त्वविमर्शिनी'नाम्नीं व्याख्यामकरोत् ।

'नरवाहन' इति । एष नरवाहनसिद्धान्तकर्त्ता । ग्रन्थश्च कवीन्द्र-सूच्यामुल्लिखितो वर्त्तते । षष्ठखृष्टपूर्व्वशताब्द्यां वत्सदेशीयसम्राडु-दयनेन सम्राजि वासवदत्तायां नरवाहन उत्पादितः । नरादुत्तरो वाहनस्य नकारो णो न भवति । 'ण्युट् कव्यहव्यपुरीष्येष्वि'ति कलापसूत्रस्य चैत्र-कूटीवृत्त्यां वररुचिराह—'नरो वाहनो यस्य स नरवाहनः' शिविकारोहीत्यर्थः। महाराजपदभाजो नरवाहनस्य पुत्रो महाराजो वैहीनरिदण्डपाणिस्तस्य वृत्तान्ता इतिहासे सन्निवेशिता वर्त्तन्ते ।

विहीनरो नरवाहनबोधिरित्यस्य सम्पूर्णं नाम बौद्धग्रन्थे दृश्यते । अयं हि बुद्धदेवस्य साक्षाच्छिष्य आसीत् । अस्मै बुद्धदेव उपसंपादकाले (दीक्षाकाले) बोधिरित्युपनाम ददौ । पाणिनिवार्त्तिककारः कात्यायन एतं कुमारं वहीनरं व्याहरति ( ७।३।१ ) । वहतीति वहः सोऽस्यास्तीति

वही, स चासौ नरश्चेति वहीनरः, 'अन्येषामपि दृश्यत' इति दीर्घः। कुण्रवाडवस्त्वाह—'नैष वहीनरः। किं तर्हि ? विहीनर एषः। विहीनो नरः कामक्रोधाभ्यामिति विहीनरः, पृषोदरादित्वाद् नलोप इति' (७।३।१)। पञ्चमखृष्टशताब्दीवर्त्तिबुद्धस्वामिनो 'बृहत्कथाश्लोकसंग्रह'-ग्रन्थादवगम्यते यद् उपसंपादतः कियतिचित् काले व्यतीते स्वयं बुद्धदेवः कामक्रोधवर्ज्जितत्वात् कुमारमेतं विहीनर इत्युपनाम्नाऽपि लाञ्छितं चकारेति।

महाराजो नरवाहनस्तन्मन्त्री गोमुखश्चोभौ रसविद्यापारगावास्तामित्यत्र नास्ति कोऽपि सन्देहावकाशः। एतयोरुभयो र्नामनी रसरत्नसमुच्चये पठ्यते—

'रत्नकोशश्च शम्भुश्च सात्त्विको नरवाहनः।
इन्द्रदो गोमुखश्चैव कम्बलि र्व्याडिरेव च ॥' इति।

बौद्धनिर्व्वाणादनन्तरं प्रधानमन्त्रिणो गोमुखस्य साहायकेन नरवाहनः पत्नीवर्ज्जं गन्धर्व्वदत्ता-प्रियदर्शना-मदनमञ्जुकादिद्वाविंशतेरुपपत्नीनां सद्-वाहको भवितुमाप्राणपातमचेष्टत। एवं स महाराजो गुरुदत्तनामोपनामभि-रुपहसितो बभूव।

'नागबोधिरि'ति। अस्य नागबोधिसिद्धान्तः कवीन्द्राचार्य्यसूच्या-मुल्लिखितो वर्त्तते। नागबुद्धिरित्यस्य नामान्तरं भवति। रसरत्नसमुच्चये लिखितमस्ति—'नागार्जुनः सुरानन्दो नागबोधि र्यशोधन' इति। अत्र नागबोधि-नागार्जुनयोरभेदं मन्यमानैरञ्जसा निर्द्धारितं नागार्जुन एव नागबोधिरिति। श्लोककृत्प्रयुक्तशब्दद्वयस्य व्यवहितत्वं विप्रकृष्टत्वं चोभयो-रैक्ये यान् संशयान् समापातयतस्ते सर्व्वे नागबोधे र्नागार्जुनस्य स्वातन्त्र्यं कल्पयन्ति। एतत्सम्प्रदायमते तृतीय-चतुर्थखृष्टशताब्दीय ईषत्तन्त्रा-परपर्य्यायरसाध्यायप्रणेता जयदेवो हि नागबोधिरित्युपाधिभूषित आसीत्। एवं चेत् तर्हि जयदेवस्यापि किञ्चित् परिचयप्रदानं नात्यन्तमसङ्गतं भवेत्।

रसशास्त्रवेदिता भिषग् जयदेव ईषत्तन्त्रापरपर्य्यायरसाध्यायनामकमतितरामुत्कृष्टमेकं रसग्रन्थं प्राणैषीत्। ईषत्तन्त्रं कातन्त्रमित्यपि भण्यते, यतस्तन्त्रशब्दात् पूर्व्वत ईषदर्थे कोः कादेशो भवति। अतो हि 'कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्व्ववर्म्मिकमि'त्यस्य नमस्कारपादीयदीर्घश्लोकस्य पञ्जिकायां वैद्यसारादिप्रणेता त्रिलोचन आह—'ननु, ईषत्तन्त्रं जयदेवादिप्रोक्तमप्यस्तीत्याह शार्व्ववर्म्मिकमिती'ति। ततश्च कातन्त्रपरिशिष्टटीकाकृता गोपीनाथेन कातन्त्रशब्दस्य व्याख्यावसरे त्रिलोचनोक्तिं निरसितुं पञ्चमखृष्टशताब्दीयस्य चान्द्रव्याकरणप्रणेतु श्चन्द्रगोमिनः सिद्धान्तः प्रमाणत्वेन समुपस्थाप्यते यत् कातन्त्रशब्दस्य लोके कौमारव्याकरणत्वेन रूढ़त्वात् ततो जयदेवादितन्त्रं न प्रतीयत इति। पञ्चमखृष्टशताब्दीयेन चन्द्रगोमिना जयदेवनामग्रहणात् तस्य तृतीयचतुर्थखृष्टशताब्दीयत्वमनुमातुं युक्तम्।

चतुर्द्दशखृष्टशताब्द्यां रसाध्यायस्यैका जनप्रिया टीका मेरुतुङ्गेन प्राणायि (Keith's H. S. L. p. 512)। नवमखृष्टशताब्दीयो मुकुलतनयो हर्षटाचार्य्यश्छन्दःसूत्रस्य 'छन्दोविवृति'नाम्नीं व्याख्यामेकां रचितवान्। गीतगोविन्दप्रणेता परमवैष्णवो जयदेव ईषत्तन्त्रकर्त्तुर्जयदेवादष्टशतवर्षैः पराचीन आसीत्। रसामृतादिप्रणेता जयदेवकविराज ईषत्तन्त्रकृत एकादशशतवर्षैरर्व्वाग् भवति।

'नागसम्भव' इति। नागात् सर्पराजाद् वासुकेः सम्भवो जनु र्यस्य स नागसम्भवः पतञ्जलिः। नागसम्भवं तु सिन्दूरम्। यद्यपीह पतञ्जलिना सह नागसम्भशब्दस्य कोऽपि सम्बन्धो न वर्त्तते, तथापि वार्त्तिकशब्दसाहचर्य्यात् पतञ्जलिपर्य्यायनागसम्भवशब्देन पतञ्जले र्नाम स्मार्य्यत एव। रसरत्नसमुच्चयस्याष्टमेऽध्याये लिखितमस्ति—

'न तत्पुटसहस्रेण क्षयमायाति सर्व्वथा।
चपलोऽयं समादिष्टो वार्त्तिके र्नागसम्भवः॥' (८।४१) इति।

नागात् सीसकात् सम्भवो यस्य तद् नागसम्भवं सिन्दूरम्। 'अवर्ज्यो बहुव्रीहि र्व्यधिकरणो जन्माद्युत्तरपद' इति काव्यालङ्कारसूत्रवृत्तौ वामनः। वार्त्तिकैः पतञ्जलिकृतचरकवार्त्तिकैरित्यर्थः। अत्र वार्त्तिकशब्देन महाभाष्यकृतः पतञ्जले र्नामैव ध्वन्यते। ननु, वैयाकरणस्य पतञ्जले वैद्यशास्त्रेण कः सम्बन्धः? पतञ्जलिरपि वैद्यागमिक आसीत्। अत्रार्थे चक्रपाणिराचष्टे—'पातञ्जलमहाभाष्य-चरकप्रतिसंस्कृतैः' इति। लघुमञ्जूषायां नागेश आह—'आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलिः' इति। पतञ्जलिचरिते रामभद्रदीक्षितेनोक्तम्—'वैद्यशास्त्रके च वार्त्तिकानि ततः' इति। मधुकोषे विजयरक्षितेन—'कट्वम्लमुष्णं विरसं च पूतिपित्तेन विद्याल्लवणं च वक्त्रम्' इति चरकीयश्लोको ( चि २६।१८२ ) वार्त्तिककृत्वेनोक्तः। श्रूयते हि नवमखृष्टशताब्दीय आषाढवर्म्मा तदीयपरिहारवार्त्तिकनामकचरकटीकायां पतञ्जलिकृतं वार्त्तिकमदूदुषदिति। अत एव पतञ्जलेश्चरकवार्त्तिककर्त्तृत्वं नासम्भवमेव। अपि च, तेन 'वातस्कन्धपैत्तस्कन्धोपेतसिद्धान्तसारावली'नामको वैद्यकग्रन्थोऽपि कृतः (See Trien. Cat. of Mss. 1916-19, Vol. III, Part I, Sanskrit B.B. No. 2371, p. 3271 )।

भद्रम्, यदि वा पतञ्जलिश्चरकवार्त्तिककारः सिद्धान्तसारावलीकारश्च स्यात्, तथापि कस्तावत् तस्य परिचयो रसशास्त्रेण सहेति चेत्? मैवम्। न केवलं पतञ्जली रसाचार्य्यः परं तु स रसे रसायने धातुवादे च महासिद्ध आसीत्। चक्रसंग्रहस्य तत्त्वचन्द्रिकाटीकायां शिवदासेन लिखितम्—'यदाह पतञ्जलिः—'दिव्यं दावं समादाय लौहकर्म्म समाचरेदि'ति। किमन्यत् गणेशबृहस्पतिभास्करलोकपालग्रहक्षेत्रपालादिदेवता अभ्यर्च्चर्य ततो धन्वन्तरिपतञ्जलिभ्यां नानाभक्ष्योपचारसमन्वितं बलिं दत्त्वा लोहादिधातुपाककार्य्य-

मारभ्यते। तथा हि तत्त्वचन्द्रिकायां शिवदासेन प्राचीनमेकं प्रमाण-मुद्धृतम्—

'अर्चयित्वा विधानेन हेरम्बं गुरुभास्करौ।
लोकपालान् ग्रहांश्चैव क्षेत्रपालानथौषधम्॥
आदित्यदेवताश्चेष्ट्वा धन्वन्तरिपतञ्जली।
दद्याद् बलिं च सर्व्वेभ्यो नानाभक्ष्योपचारतः॥' इति।

पतञ्जलिमुनिः कश्चिद् रसग्रन्थं प्रणिनाय। स च ग्रन्थ एकादशखृष्टशताब्द्याम् आल्वेरुणि-महोदयेन दृष्टः (Alberuni's India—Sachaw, pp. 80, 189)। अतो रसशास्त्रेऽपि पतञ्जलेः प्रामाण्यमविशङ्कनीयं भवति।

नागार्जुन इति। रसरत्नसमुच्चयस्य प्रथमाध्याये पठ्यते—'नागार्जुनः सुरानन्दो नागबोधि र्यशोधन' इति। पुनरपि नवमाध्याये लिखितमस्ति—

'नन्दी नागार्जुनश्चैव ब्रह्मज्योति र्मुनीश्वरः।
वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले॥' (६५) इति।

अस्य नागार्जुनसिद्धान्तो नेदानीमुपलभ्यते, परं तु १६५६ खृष्टाब्दीय-कवीन्द्राचार्य्यसूच्यामस्य ग्रन्थस्य समुल्लेखो दृश्यते।

नागार्जुनबोधिरित्यस्य नामान्तरं भवति। केचिदेनं नागार्जुन-बोधि-सत्त्वं व्याहरन्ति। चक्रदत्ते लिखितमस्ति—'घृतं सिंह्यमृतं नाम बोधिसत्त्वेन भाषितमि'ति। अस्य 'तत्त्वचन्द्रिका'टीकायां षोडशखृष्टशताब्दीयेन शिवदासेनोक्तम्—'बोधिसत्त्वेन योगिविशेषेण, अन्ये तु लोकनाथेनेत्याहुः' इति। तावुभौ विभ्रान्तावेव। यतो बोधिसत्त्वशब्देन नागार्जुन उद्दिष्टः। तथा हि राजतरङ्गिण्यामेकादशखृष्टशताब्दीय ऐतिहासिकप्रवरः कह्लणमिश्र आह—

'तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः।
नागार्जुनेन सुधिया बोधिसत्त्वेन पालिताः॥' (१।१७७) इति।

बौद्धेषु नागार्जुनवत् पण्डितो नाविर्बभूव। स हि विदर्भेषु कस्मिंश्चिद् ब्राह्मणवंशे जातस्तक्षशिलायां शिक्षां लेभे। अनन्तरं राहुलभद्रसमीपे बौद्धदर्शनमधीत्य वटयक्षिणीं चोपास्य रसवैद्यके सिद्धिमवाप। तथा हि तदीयरसरत्नाकरे लिखितमस्ति—

'श्रीवटयक्षिण्युवाच—'साधु साधु महासिद्ध किञ्चित् प्रार्थय मे सिद्ध तत् सर्व्वं प्रददाम्यहम्॥

श्रीनागार्जुन उवाच—

यदि तुष्टासि मे देवि सर्वदा भक्तवत्सले।
दुर्ल्लभं त्रिषु लोकेषु रसबन्धं ददस्व मे॥' इति।

ततो रसशास्त्रादिकं प्रणीय माध्यमिकसूत्रादिकं प्रणीतवान्। एषु ग्रन्थेषु तेन सनातनधर्म्मप्रतिपक्षतया ये युक्तिवादा उपन्यस्तास्तान् सर्व्वानष्टम-खृष्टशताब्द्यां भगवान् शंकराचार्य्यः शारीरकभाष्ये समूलमुन्मूलयामास। एवं च नागार्जुनस्य प्रातिकूल्येन सनातनधर्म्मो लेशतोऽपि न प्रतिजघ्ने। ततश्च स पुरुषपुरे शककुषाणाधिपतेः कनिष्कस्य सभायां प्रधानपण्डित आसीत्। ऐतिहासिका एनयोः स्थितिकालं प्रथमद्वितीय-खृष्टशताब्द्योरनुमिन्वन्ति। डल्लणस्य निबन्धसंग्रहत एवमस्माभिः श्रुतं यत् सुश्रुततन्त्रं नागार्जुनेन प्रतिसंस्कृतमिति। एतद्विषये यानि विचित्रवृत्तानि सन्ति तानि सर्व्वाण्यधस्तादस्माकं सुश्रुतप्रस्तावे सन्निवेशितानीति तत एवावगन्तव्यानि।

कनिष्कसभायामश्वघोषस्य साहित्ये सत्यपि पाण्डित्यातिशये दर्शनशास्त्रे नागार्जुनात् तस्य प्रतिष्ठाबाहुल्यं नासीत्। अतो हि महाराजः कनिष्को नागार्जुनबोधेराध्यक्ष्येण काश्मीरप्रदेशे चतुर्थसङ्गीतेराह्वानं चक्रे। तत्रैव नागार्जुनस्य प्रयत्नेन बौद्धानां हीनयान-महायानाविति विभागद्वयं समासादितम्।

नागार्जुनेन नानाग्रन्थाः प्रणीताः, यथा—रसशास्त्रे 'नागार्जुनसिद्धान्तो रसरत्नाकरो रसेन्द्रमङ्गलमि'त्यादि, वैद्यशास्त्रे—'आरोग्यमञ्जरी योगमञ्जरी वार्त्तामाले'ति, कामशास्त्रे 'रतिशास्त्रमि'ति, तन्त्रानुमोदितचिकित्साशास्त्रे 'नागार्जुनीयचिकित्सा कक्षपुटतन्त्रं नागार्जुनाञ्जनं नागार्जुनयोग'-श्चेत्यादि, साहित्ये 'सुहृल्लेख' इत्यादि, बौद्धदर्शने 'माध्यमिककारिका' इति, तन्त्रशास्त्रे तारासाधनमिति।

पतञ्जलिरिति। वातपैत्तस्कन्धोपेतसिद्धान्तसारावलीनामकवैद्यग्रन्थप्रणेता, चरकवार्त्तिककारो महाभाष्यकारश्च। अधस्ताद् 'नागसम्भव'शब्दो द्रष्टव्यः।

'बुद्ध' इति। हिमवत्पादस्थिते रम्यवनापरनाम्नि लुम्बिनीकानने खृष्ट-जन्मतः प्राक् चतुःषष्ट्यधिकपञ्चशततमे वर्षे शाक्यराजकन्या मायादेवी शिशुमेकं हूणपुत्रशुद्धोदनादजीजनत्। प्रसूत्यनन्तरं मायायामुपरतायां तस्या भगिनी सपत्नी च महाप्रजावती गौतमी देवी तं सद्योजातं शिशुं ततः प्रभृति पालयांचकार। जन्मनः कियतिचित् काले व्यतीते पिता शुद्धोदन-स्तोकस्य सिद्धार्थ इति नामधेयमकार्षीत्।

शुद्धोदनः कपिलवस्तुराजस्य सिंहहूणस्य पुत्रो, मायादेवी देवदहजनपद-स्थित-शाक्यराजस्य सुभूतेः कन्या चास्ताम्। हूणजातीयपुरुषेण शकजातीय-स्त्रियामुत्पन्नस्य तोकस्य सङ्करवर्णत्वात् सिद्धार्थः सर्व्वैरुपहसित आसीत्। एतन्निकारमसहमानः कुमारो वैराग्यात् संसारं विहाय तपश्चोग्रं तेपे। तदनन्तरं परां सिद्धिं समधिगम्य बुद्धनाम्नासौ विश्वविश्रुतो भूत्वा सनातन-धर्म्मप्रातिकूल्येन बौद्धधर्म्मस्य प्रचारमारब्धवान्।

श्रूयते हि बुद्धदेवेन सह राज्ञ उदयनस्य सखित्वमासीत्। अतो हि स उदयनपुत्रं नरवाहनं मन्त्रशिष्यमकरोत्। उपसंपादकाले च तस्मै शिष्याय स बोधिरित्युपनाम ददौ। ततश्च शिष्यस्य कामक्रोधवर्जितत्वं दृष्ट्वा

पुनरपि स विहीनर इत्युपनाम्नाऽपि तं भूषितं चकार। यद् वा भवतु, बुद्धदेवस्य जीवद्दशायामपि सुन्दरीमनूढ़ां कन्यां मृगयितुं स आप्राण-पातमचेष्टत। अन्ये चास्य वृत्तान्ता अधस्ताद् नरवाहनकथाप्रसङ्गे द्रष्टव्याः।

खृष्टजन्मनः प्राक् सप्ताशीत्यधिकचतुःशततमे वर्षे स भगवान् बुद्धो निर्व्वाणं लेभे। तत उपलानन्दादयः शिष्या गुरूपदिष्टधर्म्माणां गुप्तये सङ्गीतिमेकामाहूय सूत्रविनयाभिधर्म्मात्मकं त्रिपिटकं प्राणैषुः। किन्तु प्रतिपत्तिभेदात् ते शिष्यास्त्रिधा विभक्ता आसन्—सर्व्वास्तित्ववादी विज्ञानास्तित्ववादी सर्व्वशून्यत्ववादी चेति। तथापि महाकाश्यपभिक्षो-राध्यक्ष्येण बौद्धधर्म्मो यथाकथंचित् सुस्थिरीभूतः प्रचारयोग्यश्चासीत्। प्रवृत्ते तु तस्य धर्म्मस्य प्रचारे भगवानुपवर्षो वेदादिशास्त्ररक्षार्थं पूर्व्वोत्तर-मीमांसयो र्वृत्तिं प्रणीय वेदबाह्यबौद्धादिधर्म्मप्रतिपक्षतया सनातनधर्म्मस्य प्रथमं प्रतिप्रचारमारब्धवान्। इदानीं तदीयग्रन्थः कालगर्भे विलीनः, परं तु शबरस्वामिना परवर्त्तिभिरन्यैश्च कैश्चिदाचार्यैरसौ ग्रन्थो समुपलब्धो दृष्टश्च। वाक्यकारः कात्यायनोऽपि गुरोः पन्थानमनुसृत्य स्वकीयानां धर्म्माणां शास्त्राणां च रक्षार्थं मीमांसाद्वयस्य वृत्तिं प्रणयन् वेदबाह्यधर्म्ममतस्य प्रतिवादं व्यधत्त। ततः सनातनधर्म्मावलम्बिनो वात्स्यायनभाष्यादिभिरस्य धर्म्मस्य सारहीनत्वं प्रतिपादयामासुः।

तदनन्तरमशोकमहाराजस्य राजत्वकाले मुद्गलीपुत्रस्तिष्यपादो विनय-समुत्कर्षादिबौद्धग्रन्थान् यद्यपि प्रणीतवांस्तथापि बौद्धशास्त्रस्य प्रतिष्ठाबाहुल्यं न सञ्जातम्। एतन्न्यूनतापरिहारार्थमशोकमहाराजेनान्यूनद्विसहस्रकोटि-परिमितानर्थान् विनियुज्य बौद्धानां कथंचित् सुस्थता सम्पादिता। किन्तु नृपतेरशोकात् परं पुनः शबरस्वामी पूर्व्वमीमांसाभाष्ये तिष्यपादस्य युक्ति-जालं निरस्य बौद्धान् हीनबलान् विदधे।

एतादृशमवस्थाविपर्य्ययं पदार्थविप्लवं च दृष्ट्वा सर्व्वतन्त्रस्वतन्त्रेण नागार्जुनेन न्यायद्वारतारकादिशास्त्रे शाश्वतवादप्रतिवादमुपादाय बौद्ध-शास्त्रस्य दर्शनपदवाच्यता सम्पादिता। तस्यैव प्रयत्नेन सर्व्वास्तित्ववादात् सौतान्त्रिक-वैभाषिकौ, विज्ञानास्तित्ववादाद् योगाचारः, सर्व्वशून्यत्ववादाद् माध्यमिकाश्चेति विभिन्नाः सम्प्रदायाः समुत्पन्नाः। ततः प्रभृति सौत्रान्तिक-वैभाषिकौ हीनयाननाम्ना योगाचार-माध्यमिकौ महायाननाम्ना च प्रसिद्धिं लेभिरे। पुनः कियतिचित् काले व्यतीते नागार्जुनस्यापि युक्तिजालं प्रशस्तपाद-कुमारिल-शङ्कराचार्य्यादिभिरभीक्ष्णं खण्डितम्।

पुराणतन्त्रयोरस्माकमपि बुद्धदेवो हरि-हरेश्वर्य्यो र्दशावतारेषु नवमा-वतारत्वेन प्रकल्पितः। तदुक्तम्—

'मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः।
रामो रामश्च रामश्च बुद्धः कल्की च ते दश॥'

इति।

'रामो रामश्च रामश्चे'ति। स्मरति च भगवान् वह्निः—

'भार्गवो राघवो गोपस्त्रयो रामाः प्रकीर्त्तिताः।

इति।

श्रीमद्भागवतेऽपि स्मर्य्यते—

'ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम्।
बुद्धो नाम्नाऽजिनसुतः कीकटेषु भविष्यति॥'

(१।३) इति।

कीकटेषु मगधप्रदेशेषु (वायुपुराणीय १०५ अ०)। तारातन्त्रमते कीकटो दक्षिणमगधः। मुण्डमालायां तु प्रकृतेरेतेऽवतारा उक्ताः—

'प्रकृति र्विष्णुरूपाऽत्र पुंरूपश्च महेश्वरः।
एवं प्रकृतिभेदेन भेदास्तु प्रकृते र्दश॥

कृष्णरूपा कालिका स्याद् रामरूपा च तारिणी ।
वगला कूर्म्ममूर्त्तिः स्याद् मीनो धूमावती भवेत् ॥
छिन्नमस्ता नृसिंहः स्याद् वराहश्चैव भैरवी ।
सुन्दरी जामदग्न्यः स्याद् वामनो भुवनेश्वरी ॥
कमला बुद्धरूपा स्याद् मातङ्गी कल्किरूपिणी ।
स्वयं भगवती काली कृष्णस्तु भगवान् स्वयम् ॥
स्वयं च भगवान् कृष्णः कालीरूपोऽभवद् व्रजे ।'
इति ।

श्रीकृष्णविषये भगवता शङ्कराचार्य्येणोक्तम्—'स च भगवान् ज्ञानैश्वर्य्य-शक्तिवलवीर्य्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जातो लोकानुग्रहं कुर्व्वन् लक्ष्यते स्वप्रयोजना-भावेऽपी'ति । वैष्णवचूड़ामणिना जयदेवगोस्वामिपादेन बुद्धदेव एवं स्तूयते—

'निन्दसि यज्ञविधेरहह श्रुतिजातं
सदयहृदयदर्शित-पशुघातम् ।
केशव धृतबुद्धशरीर जय जगदीश हरे ॥' इति ।

एवं च शास्त्रे बौद्धमतानां हेयत्वेऽपि बुद्धदेवस्तु नारायणत्वेन निरूपितः । अत एव प्रत्याख्यातेष्वपि महाकाश्यप-तिष्यपाद-नागार्जुनादिशिष्यप्रशिष्याणां बौद्धानां युक्तिजालेषु स्वयं बुद्धदेवः कदाचिदपि शङ्कराचार्य्येण कटाक्षिता नासीत् । तदुक्तमद्वैतप्रत्यर्थिभिः—'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च' इति ।

'ब्रह्मज्योतिरि'ति । एष कश्चिदेको मुनी रसाचार्य्यश्चासीत् । काल-नाथ-सिद्धलक्ष्मीश्वरशिष्य-ढुण्ढुकनाथकृत-रसेन्द्रचिन्तामणावपि नामैतदुप-

लभ्यते। सम्भाव्यते च यदस्य ग्रन्थो 'मुनिश्रेष्ठसिद्धान्त' इति नाम्ना कवीन्द्रसूचयामुल्लिखितो वर्त्तते। रसरत्नसमुच्चयस्य नवमाध्याये सोमदेव आह—

'नन्दी नागार्जुनश्चैव ब्रह्मज्योति र्मुनीश्वरः।
वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले॥'

इति।

'ब्रह्मा' इति। रसरत्नसमुच्चयारम्भे लिखितमस्ति—'खण्डः कापालिको ब्रह्मा गोविन्दो लम्पको हरिः' इति। सूत्रस्थानस्य प्रारम्भे भगवांश्चरकः स्मरति—'ब्रह्मणा हि यथा प्रोक्तमायुर्व्वेदं प्रजापतिः। जग्राह······।' इति। सुश्रुते दिवोदास आह—'इह खल्वायुर्व्वेदो नामोपाङ्गमथर्व्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्रं च कृतवान् स्वयम्भूः। ततोऽल्पायुष्ट्वमल्पमेधस्त्वं चालोक्य नराणां भूयोऽष्टधा प्रणीतवान्' (सू० १।६) इति। 'ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे' (सू० १।२०) इति च। अष्टाङ्ग आयुर्व्वेदो यथा—शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रं चेति। एतानि सर्व्वाण्येव ब्रह्मसंहितायामुपदिष्टानीति शास्त्रीया प्रसिद्धिः। अष्टाङ्गसंग्रहस्य सूत्रस्थानारम्भे वाग्भट आह—'आयुर्व्वेदामृतं सार्व्वं ब्रह्मा बुद्ध्वा सनातनम्। ददौ दक्षाये'ति। अष्टाङ्गहृदयस्यापि सूत्रस्थानारम्भे स आह—'ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहदि'ति। ब्रह्मवैवर्त्तपुराणस्य षोड़शाध्याये स्मर्य्यते—

'ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः।
विचिन्त्य तेषामर्थं चैवायुर्व्वेदं चकार सः॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः।'

इति।

अत्र प्रजापति र्ब्रह्मे ति यावत् ।

भावप्रकाशे तूक्तम्—

'विधाताऽथर्व्वसर्व्वस्वमायुर्व्वेदं प्रकाशयन् ।
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम् ॥
ततः प्रजापतिं दक्षं दक्षं सकलकर्म्मसु ।
विधि र्धीनीरधिं साङ्गमायुर्व्वेदमुपादिशत् ॥' इति ।

हरिहरमहिम्नःस्तोत्रे धर्म्मप्रवर्त्तकस्यापि ब्रह्मणो जुगुप्सितमाचरणं श्रूयते । तत्राह पुष्पदन्तः—

'प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणे र्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥'

( २२ ) इति ।

प्रजानाथं धर्म्मप्रवर्त्तकम् । अभिकं कामुकम् । स्वां दुहितरं सन्ध्यानाम्नीमात्मकन्याम् । रोहिद् मृगविशेषः । पिता मामुपगच्छतीति लज्जया रोहिद्भूता मृगीभूतेत्यर्थः । रिरमयिषुं रमयितुमिच्छुम् । ब्रह्मा स्वकन्यां सन्ध्यामतिरूपिणीमालोक्य कामवशो भूत्वा तामुपगन्तुमुद्यतः, सा च व्रीड़या मृगीरूपा बभूव, पिता ब्रह्मा च तां तथा दृष्ट्वा मृगरूपमातस्थौ, तच्च दृष्ट्वा शिवेन पिनाकमाकृष्य शरः प्रक्षिप्तः । ततः स प्रजानाथो व्रीड़ितः पीड़ितश्च सन् मृगशिरोनक्षत्ररूपो बभूव । शैवशरोऽप्यार्द्रानक्षत्ररूपो भूत्वा तस्य पश्चाद्भागे स्थित इति पौराणिकी प्रसिद्धिः । इदमप्यत्रावधेयं यत् सर्व्वमेतत् पौराणिकै रूपकभङ्गया वर्णितमिति । वस्तुतस्तु ब्रह्मणः स्वतनयायामभिलाषः कथमपि न सम्भवति ।

नानाविधान्यौषधानि ब्रह्मस्मृतानीति श्रूयते, यथा—

(१) सर्व्वाङ्गसुन्दरो रसः—'ब्रह्मणा निर्म्मितः पूर्व्वं रसः सर्व्वाङ्गसुन्दरः' इति।

(२) वातकुलान्तकः—'ब्रह्मणा निर्म्मितः पूर्व्वं नाम्ना वातकुलान्तकः' इति।

(३) आमवातगजसिंहमोदकः—'आमवातकुलध्वंसी केसरी विधिनिर्म्मितः' इति।

(४) सूतिकाघ्नो रसः—'सूतिकाघ्नो रसो नाम ब्रह्मणा परिकीर्त्तितः' इति।

(५) नीलकण्ठो रसः—'नीलकण्ठो रसो नाम ब्रह्मणा निर्म्मितः पुरा' इति।

(६) मृतसञ्जीवनोऽगदः—'मृतसञ्जीवन एव ब्रह्मणा कथितः पुरा' इति।

(७) माचिकासवः—'माचिकासव इत्येष ब्रह्मणा निर्म्मितः पुरा' इति।

(८) दशसारसर्पिः—'दशसारमिदं सर्पि ब्रंह्मणा निर्म्मितं पुरा' इति।

(९) कर्णामृतं तैलम्—'नाम्ना कर्णामृतं तैलं ब्रह्मणा निर्म्मितं पुरा' इति।

'भालुकिरि'ति। आयुर्व्वेदीयतन्त्रकारो मुनिविशेषः। अस्य नाम महाभारतेऽपि दृश्यते—'पवित्रपाणिः सावर्णि र्याज्ञवल्क्योऽथ भालुकिः' (सभा०-७।११२) इति। भेलभालुक्योरैक्यं न कल्पनीयम्, यतो भेलतन्त्रे स्वातन्त्र्येण भालुके र्नामोपलभ्यते। १६५६ खृष्टाब्दीयकवीन्द्रसूच्यां भालुकितन्त्रोल्लेखादनन्तरं भेलतन्त्रस्यापि समुल्लेखो दृश्यते। रसरत्नसमुच्चये लिखितमस्ति—'रसेन्द्रतिलको योगी भालुकी मैथिलाह्वयः' इति। असौ मैथिलः पण्डित आसीत्।

'भास्कर' इति। भानोरायुर्व्वेदप्राप्ति र्ब्रह्मण इति पौराणिकाः। तस्य षोड़श शिष्याः प्रसिद्धा आसन्। भास्करारुणयोः संवादतो ज्ञान-भास्करनामको वैद्यकग्रन्थ उदित आसीत्। अरुणः सूर्य्यसारथि र्गरुड़स्य भ्राता।

भैरव इति। रसरत्नसमुच्चयस्य षष्ठाध्यायान्ते लिखितमस्ति—

'अनेन मूलमन्त्रेण भैरवं तत्र पूजयेत्।
सर्व्वेषां रससिद्धानां नाम सङ्कीर्त्तयेत् तदा॥' (६।५६) इति।

अष्टावस्य मूर्त्तिभेदाः सन्ति—असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तः कालो भीषणः संहारश्चेति। महादेवो हि भैरव इत्युच्यते। नानौषधानि भैरवनाम्ना प्रचलितानि दृश्यन्ते, यथा—

(१) सूचिकाभरणो रसः—'सूचिकाभरणो नाम भैरवेण प्रकीर्त्तितः' इति।

(२) तालकराजरसः—'शुभ्रं कुर्य्यात् सर्व्वरोगप्रणाशं सत्यं चैतद् भाषितं भैरवेण' इति।

(३) वातनाशनो रसः—'हन्यात् सत्यं भाषितं भैरवेण' इति।

(४) चिन्तामणिरसः—'चिन्तामणिरसोऽयं किल स्वयं भैरवेण निर्द्दिष्टः' इति।

(५) चन्द्राननो रसः—'एष चन्द्राननो नाम साक्षात् श्रीभैरवोदितः' इति।

भैरव इति। रसरत्नसमुच्चयारम्भे लिखितमस्ति—'रसांकुशो भैरवश्च नन्दी स्वच्छन्दभैरवः' इति। सप्तमखृष्टशताब्द्यां भैरवाचार्य्यो नाम कश्चित्तान्त्रिको रससिद्धः सन्न्यासी बभूव। बाणभट्टकृते हर्षचरितेऽस्य विवरणमुपलभ्यते। अनेन भैरवतन्त्रं प्रणीतम्। स च ग्रन्थः कवीन्द्रसूच्यामुल्लिखितो दृश्यते।

मत्त इति। एष कश्चित् तान्त्रिको रसाचार्य्य आसीत्। रसरत्नसमुच्चयारम्भे लिखितमस्ति—'कपाली मत्तमाण्डव्यौ' इति। मत्तमाण्डव्यसिद्धान्ते मत्तमाण्डव्ययोः कर्त्तृत्वमुपपद्यते। स च ग्रन्थः कवीन्द्राचार्य्यसूच्यामुल्लिखितो दृश्यते।

मत्तभैरव इति। सम्भाव्यते यदेष उन्मत्तभैरवनामकः शिवस्य मूर्त्तिभेदविशेष इति।

मन्थानभैरव इति। रसरत्नसमुच्चयारम्भे लिखितमस्ति—'मन्थानभैरवश्चैव काकचण्डीश्वरस्तथा' इति। एष एकः सुप्रसिद्धो रसाचार्य्य आसीत्। अस्य नाम्ना 'क्रव्यादरसः' प्रचलितो दृश्यते। तदुक्तम्—रसः क्रव्यादनामाऽयं प्रोक्तो मन्थानभैरवैः' इति। अस्य 'मन्थानभैरवतन्त्रं' कवीन्द्रसूच्यां दृश्यते।

महादेव इति। रुद्र इति यावत्। स वैद्यनाथादिनाम्नाऽपि प्रसिद्धः। ऋग्वेद आह—'भिषक्तमं त्वा भिषजां शृणोमि' (२।३३।४) इति। यजुर्व्वेदे चाम्नायते—'ॐ भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम्। सुखं मेषाय मेष्यै' (३।५९) इति। उवटाचार्य्य आह—'हे रुद्र, यतस्त्वं स्वभावत एव भेषजमौषधं सर्व्वप्राणिनाम्, अतः सुखं देहि मेषाय मेष्यै मेषादिवदज्ञनरनारीभ्य' इति।

रसरत्नसमुचयारम्भे लिखितमस्ति—'महादेवो नरेन्द्रश्च वासुदेवो हरीश्वरः' इति। महादेवतन्त्रं कवीन्द्राचार्य्यसूच्यामुल्लिखितमस्ति।

शिवस्याष्टमूर्त्त्यन्तर्गतसोममूर्त्तिरयम्, यथा 'महादेवाय सोममूर्त्तये नमः' इति शिवपूजापद्धतिः। तन्नाम्नो व्युत्पत्ति र्ब्रह्मवैवर्त्तस्य प्रकृतिखण्डे प्रदर्शिता—

"ब्रह्मादीनां सुराणां च मुनीनां ब्रह्मवादिनाम्।
तेषां च महतां देवो महादेवः प्रकीर्त्तितः॥

महती पूजिता विश्वे मूलप्रकृतिरीश्वरी ।
तस्या देवः पूजितश्च महादेवः स च स्मृतः ॥'

(५३ अ०) इति ।

ब्रह्मविष्णुरुद्राणां भिन्नत्वेऽपि तेषामभिन्नत्वमेव चिन्तनीयम् । परमात्मन एकत्वेनाभिव्यक्तत्वात् । आम्नायते चाथर्ववशिरउपनिषदि—'देवा ह वै रुद्रमपृच्छन् को भवानिति । सोऽयमब्रवीदहमेकः प्रथममासीद् वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति ·· ।" इति । आसीदिति व्यत्ययेन प्रथमपुरुषः । वर्त्तामीति च व्यत्ययेन परस्मैभाषा । ततः पुनरप्याम्नायते—"देवा ऊर्द्ध्वबाहवो रुद्रं स्तुवन्ति—

ॐ यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ।
यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै वै नमो नमः ॥" इति ।

भवति च श्रुत्यनुवादिनी स्मृतिरपि—

'ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि ।
रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयंभुवः ॥' इति ।

सौरपुराणे च स्मर्य्यते—

'त्वं शिवस्त्वं हरि र्देवस्त्वं ब्रह्मा त्वं दिवस्पतिः ।
त्वमोङ्कारो वषट्कारः स्वधा स्वाहा त्वमेव हि ॥' इति ।

शिवं प्रति भगवत उक्तिरपि निगमे श्रूयते—

'न ब्रह्मा भवतो भिन्नो न शम्भु र्ब्रह्मणस्तथा ।
न चाहं युवयो र्भिन्नो ह्यभिन्नत्वं सनातनम् ॥
कस्त्वं कोऽहं च को ब्रह्मा ममैव परमात्मनः ।
अंशत्रयमिदं भिन्नं सृष्टिस्थित्यन्तकारणम् ॥
चिन्तय स्वात्मनात्मानं संस्तवं कुरु चात्मनि ।
एकत्वं ब्रह्मवैकुण्ठशम्भूनां हृद्गतं कुरु ॥

शिरोग्रीवादिभेदेन यथैवैकस्य धर्म्मिणः ।
अङ्गानि मे तथैकस्य भागत्रयमिदं हर ॥'

( कालिकापु० ३१ अ० ) इति ।

( यत्तु ) शैववैष्णवपुराणेष्वितरेतरनिन्दा श्रूयते, न हि सा निन्दा निन्द्यं निन्दितुं परं तु विधेयं स्तोतुमिति न्यायेन विधेयस्तुत्यर्थमिति बोध्यम् । अन्यथा सर्व्वपुराणोच्छेदः प्रसज्येत । अतो हि श्यालकशुनकन्यायेन शिवविष्णुगोचरे निन्दास्तुती इति सङ्केतभेदमाश्रित्य कार्य्यकारणब्रह्मगोचरतया व्याख्येये । यथा हि कश्चित् कौतुकप्रियः पुरुषः स्वां भार्य्यां कोपयितुं गृहशुनकं श्यालनाम्ना संकेत्य गालयति, सा च स्वभ्रातरमयं गालयतीति कुप्यति, तद्वदेव शैवे विष्णुशब्देन कार्य्यब्रह्म विवक्षित्वा हीनसम्पदां पुंसां दुःखमुत्पादयत्येव इति तत्त्वम् ।

बहुभि र्नामभी रुद्रदेवो व्यपदिष्टो भवति, यथा शिवः शङ्करः शम्भुरपूर्व्ववैद्य एकवैद्यः परवैद्यः श्रेष्ठतमवैद्यः स्वयम्भू र्भिषक्तमो वैद्यनाथ इत्येवमादिभिः । ननु, कथं श्रेष्ठतमवैद्य इति ? यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्येव, यथा—'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे', 'युधिष्ठिरः श्रेष्ठतमः कुरूणाम्'—चेति ।

नानाविधान्यौषधानि भगवद्दत्तानीति श्रूयते, यथा—

(१) अग्निकुमाररसः—'रसश्चाग्निकुमारोऽयं महेशेन प्रकाशितः' इति ।

(२) अर्द्धनारीश्वररसः—'अर्द्धनारीश्वरो नाम रसः शम्भुप्रकीर्त्तितः' इति ।

(३) आमवातारिवटिका—'आमवातारिवटिका पुरेशानेन चोदिता' इति ।

(४) कुमार्य्यासवः—'कुमार्य्यासव इत्येष कथितः शूलपाणिना' इति ।

(५) कौलीतिका वर्त्तिः—'कौलीतिका वर्त्तिरियं सर्व्वनेत्ररुजापहा। सर्व्वाभिष्यन्दशमनी स्वयं प्रोक्ता पिनाकिना ॥' इति।

(६) गन्धकतैलपातनम्—'गन्धकस्य गुणान् वक्तुं शक्तः कः शम्भुना विना।' इति।

(७) चन्द्रप्रभागुटिका—'शम्भुं समभ्यर्च्च्य कृतप्रसादं प्राप्ता गुटी चन्द्रमसा प्रशस्ता' इति।

(८) चिन्तामणिरसः—'चिन्तामणिरसो ह्ययं भैरवेण प्रकाशितः' इति।

(९) चूड़ामणिरसः—'चूड़ामणिरसो ह्येष शिवेन परिकीर्त्तितः' इति।

(१०) चूर्णराजः—'चूर्णराजस्तथा चायं स्वयं रुद्रेण भाषितः' इति।

(११) नारिकेलासवः—नारिकेलासवः प्रोक्तः शम्भुना परमेष्ठिना' इति।

(१२) नृपवल्लभरसः—'नृपवल्लभरसो ह्ययं महेशेन प्रकाशितः' इति।

(१३) पुत्रप्रदरसः—'कुर्य्याद् रोगहरः पुत्रप्रदो रुद्रविनिर्म्मितः' इति।

(१४) पूर्णचन्द्ररसः—'रावणस्य हितार्थाय ह्यकरोच्छङ्करः पुरा। पूर्णचन्द्रो रसो नाम सर्व्वरोगेषु दुर्ल्लभः ॥' इति।

(१५) भस्मेश्वररसः—'अयं भस्मेश्वरो नाम शम्भुना परिकल्पितः' इति।

(१६) बालरसः—'शिशूनां रोगनाशाय शिवेन परिकीर्त्तितः' इति।

(१७) मकरध्वजः—'सर्व्वलोकहितार्थाय शिवेन परिकीर्त्तितः' इति।

(१८) महाभल्लातकावलेहः—'महाभल्लातको ह्येष महादेवेन भाषितः' इति।

(१९) मृतसञ्जीवनरसः—'मृतसञ्जीवनो नाम रसोऽयं शङ्करोदितः' इति।

(२०) महामृत्युञ्जयरसः—'महामृत्युञ्जयो नाम महेशेन प्रकाशितः' इति।

(२१) योगेश्वरः—'योगेश्वरो रसो नाम महादेवेन भाषितः' इति ।

(२२) वज्रक्षारम्—'वज्रक्षारमिदं सिद्धं स्वयं प्रोक्तं पिनाकिना' इति ।

(२३) वसन्ततिलकरसः—'श्रेष्ठः पुष्टिकरो वसन्ततिलको मृत्युञ्जयेनोदितः' इति ।

(२४) विजया गुटिका—'विजया नाम गुटिका विख्याता रुद्रभाषिता' इति ।

(२५) विश्वेश्वररसः—'विश्वेश्वरो रसो नाम विश्वनाथेन भाषितः' इति ।

(२६) बृहत्सहचरतैलम्—'सहचरमिति नाम्ना तैलमेतत् प्रसिद्धं धनपतिनृपयोग्यं भाषितं शम्भुनैव' इति ।

(२७) बृहच्चूड़ामणिरसः—'चूड़ामणिरसो ह्येष शिवेन परिभाषितः' इति ।

(२८) वैद्यनाथवटी—'गुड़ीसिद्धफला चेयं वैद्यनाथेन भाषिता' इति ।

(२९) शङ्करलौहम्—'नारदस्य वचः श्रुत्वा नराणां हितकाम्यया । अर्शसां नाशनं श्रेष्ठं भैषज्यं शङ्करोऽवदत् ॥' इति ।

(३०) शीतभञ्जीरसः—'नाशयेच्छीतभञ्ज्याख्यो रसो रुद्रेण निर्म्मितः' इति ।

(३१) शूलराजलौहम्—'शूलराजमिदं लौहं हरेण परिनिर्म्मितम्' इति ।

(३२) श्रीकामेश्वरमोदकः—'अभ्यासेन विहन्ति मृत्युपलितं कामेश्वरो वत्सरात् । सर्व्वेषां हितकारिणा निगदितः श्रीवैद्यनाथेन सः ॥' इति ।

(३३) श्रीमन्मथरसः—'रसः श्रीमन्मथो नाम महेशेन प्रकाशितः' इति ।

(३४) सर्व्वतोभद्ररसः—'सर्व्वलोकहितार्थाय शिवेन भाषितः पुरा । सर्व्वतोभद्रनामायं रसः साक्षान्महेश्वरः ॥' इति ।

(३५) सर्व्वव्याधिहरः—'सर्व्वव्याधिहरो नाम पुरा रुद्रेण भाषितः' इति।

(३६) सूचिकाभरणरसः—'सूचिकाभरणो नाम भैरवेण प्रकीर्त्तितः' इति।

(३७) सिंहनादगुग्गुलुः—'सिंहनाद इति ख्यातो रोगवारणदर्पहा। वह्निवृद्धिकरः पुंसां भाषितो दत्तपाणिना॥' इति।

(३८) स्वर्णसिन्दूरम्—'स्वर्णसिन्दूरमित्येतत् सर्व्वरोगनिसूदनम्।······ सर्व्वलोकहितार्थाय स्वयं प्रोक्तं पिनाकिना॥' इति।

माण्डव्य इति। रसरत्नसमुच्चयस्यारम्भे लिखितमस्ति—'कपाली मण्डमाण्डव्यौ भास्करः शूरसेनक' इति। एष मुनिरात्रेयशिष्यत्वेन प्रसिद्धः। अष्टाङ्गसंग्रहस्य द्वितीयखण्डारम्भे वाग्भट आह—

'आययु र्मानुषं लोकं मुदिताः परमर्षयः।
स्थित्यर्थमायुर्व्वेदस्य तेऽथ तन्त्राणि चक्रिरे॥
कृत्वाऽग्निवेशहारीतभेड़माण्डव्यसुश्रुतान्।
करालादींश्च तच्छिष्यान् ग्राहयामासुरादृताः॥'

(६-१०) इति।

मानुषं लोकमाययुः प्रापुः। आगत्य च धरातलमायुर्व्वेदो मान्तर्धादिति तन्त्राणि चक्रिरेऽकुर्व्वन्नित्याशयः। सुश्रुतानिति। बहुभिः श्रुता इति सुश्रुतास्तान्। ग्राहयामासुरधिगमयामासुरित्यर्थः। नागर्जुनीयरसरत्नाकरेऽपि माण्डव्यमुने र्नाम दृश्यते। मत्तमाण्डव्यसिद्धान्ते मत्तमाण्डव्ययोरुभयोः कर्त्तृत्वमुपपद्यते। स च ग्रन्थः १६५६ खृष्टाब्दीयकवीन्द्राचार्य्यसूच्यामुल्लिखितो दृश्यते।

द्वौ माण्डव्यावास्ताम्—अणीमाण्डव्य एकः श्वेतमाण्डव्यश्चापर इति। अणीमाण्डव्यस्योपाख्यानं महाभारते वर्णितमस्ति। श्वेत-

माण्डव्यस्य नाम च्छन्दःशास्त्रत उपलभ्यते। तत्रोक्तम्—'श्वेतमाण्डव्य-मुख्यास्तु नेच्छन्ति मुनयो यतिम्' इति। अनयोः कतर आत्रेयशिष्य इत्यत्र निश्चायकं किमपि प्रमाणं नोपलभामहे।

'म्लेच्छसाधकानि'ति। रसरत्नसमुच्चयस्य शिष्योपनयननाम्नि षष्ठाध्याये पठ्यते—

'हर्षयेद् द्विजदेवानां तर्पयेदिष्टदेवताः।
कुमारीयोगिनीयोगीश्वरान् म्लेच्छकसाधकान्॥' इति (६२)।

म्लेच्छसाधकांस्ताम्रादिधातुकल्पकुशलानित्याशयः। म्लेच्छशब्देन ताम्रा-परनामकं म्लेच्छमुखमुच्यते। म्लेच्छदेशो मुखमुत्पत्तिर्यस्य तद् म्लेच्छ-मुखमित्यमरे क्षीरस्वामी। प्रकृते हि म्लेच्छशब्दो लाक्षणिकः। अनेन नैपालिकमपि ताम्रं गृह्यते। तदुक्तं रसरत्नसमुच्चयस्य 'लोहानी'ति नाम्नि पञ्चमाध्याये—

'म्लेच्छं नेपालकं चेति तयो र्नैपालमुत्तमम्।
नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते॥' (४४) इति।

ननु, लोहबन्धे कथं ताम्रस्यापि ग्रहणम्? नैष दोषः। लोहेषु सुवर्णरजतताम्रादीनामन्तर्भावात्। तदुक्तं धातुवादविचक्षणैः (Metal-lurgists)—

सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु।
सीसं च वीमरं चैव ह्यष्टौ लोहानि चक्षते॥' इति।

धातूनामुत्पत्तिविषये काचिदाख्यायिका श्रूयते। तथा हि पुरा गुडाकेशनामा कश्चिदसुर उग्रतपसा ताम्रवर्णो भूत्वा विष्णुमाराधयामास। कियतिचित् काले व्यतीते विष्णुरपि तत्रागत्य 'वरं वृणीष्वे'ति प्रोवाच। असुरश्च सुदर्शनचक्रेण स्वदेहपातं चकमे। भगवांश्च भक्तानुरोधाय तथाकरोत्। अत उक्तम्—

'तदेव चक्रेण विपाटितोऽसौ प्राप्तोऽपि मां भागवतप्रधानः ।
ताम्रं तु तन्मांसमसृक् सुवर्णमस्थीनि रूप्यं बहुधातवश्च ॥' इति ।

भावप्रकाशकारो भवनाथमिश्रस्त्वाह—

'शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले ।
तस्मात् ताम्रं समुत्पन्नमिदमाहुः पुराविदः ॥' इति ।

'यशोधन' इति । रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखितमस्ति— 'नागार्जुनः पुरानन्दो नागबोधि र्यशोधनः' इति । एष कश्चिद् राजा रसाचार्य्यश्चेति श्रूयते । अस्य यशोधनसिद्धान्तनामको ग्रन्थः १६५६ खृष्टाब्दीयकवीन्द्रसूच्यामुल्लिखितो वर्त्तते ।

'योगिनी'ति । रसरत्नसमुच्चयस्य षष्ठाध्याये लिखितमस्ति —

'हर्षयेद् द्विजदेवानां तर्पयेदिष्टदेवताः ।
कुमारीयोगिनीयोगीश्वरान् म्लेच्छकसाधकान् ॥' (६२) इति ।

योगयुक्ता नारी च योगिनीत्युच्यते । इह तु भगवत्याः सखीरूपाऽऽवरण-देवता । सा वहुविधा । तासां मध्ये चतुःषष्टिः प्रधानाः, यथा कालिका-पुराणे—

ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च ।
कौमारी वैष्णवी दुर्गा नारसिंही च कालिका ॥
चामुण्डा शिवदूती च वाराही कौशिकी तथा ।
माहेश्वरी शाङ्करी च जयन्ती सर्व्वमङ्गला ॥
काली कपालिनी मेधा शिवा शाकम्भरी तथा ।
भीमा शान्ता भ्रामरी च रुद्राणी चाम्बिका तथा ॥
क्षमा धात्री तथा स्वाहा स्वधाऽपर्णा महोदरी ।
घोररूपा महाकाली भद्रकाली भयङ्करी ॥

क्षेमङ्करी चोग्रचण्डा चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चण्डी महामोहा प्रियङ्करी ॥
बलविकरिणी देवी बलप्रमथिनी तथा ।
मनोन्मथिनी देवी च सर्व्वभूतस्य दामिनी ॥
उमा तारा महानिद्रा विजया च जया तथा ।
पूर्व्वोक्ताः शैलपुत्र्याद्या योगिन्यष्टौ च याः क्रमात् ॥
ताभिराभिश्च सहिताश्चतुःषष्टिश्च योगिनीः ।
पूजयेन् मण्डलस्यान्तः सर्व्वकामार्थसिद्धये ॥

इति ६३ अध्यायः । अष्ट योगिन्यश्च तत्रैव ५४ अध्याये—

शैलपुत्रीं चण्डघण्टां स्कन्दमातरमेव च ।
कालरात्रिं च पूर्व्वादिचतुर्द्दिक्षु प्रपूजयेत् ॥
चण्डिकामथ कुष्माण्डीं तथा कात्यायनीं शुभाम् ।
महागौरीं चाग्निकोणे नैर्ऋत्यादिषु पूजयेत् ॥' इति ।

'योगी'ति । योगयुक्तः पुरुषो योगीत्युच्यते । कः पुन र्योगः ? हरिगीतायामष्टादश योगा भगवता गौणमुख्यभेदेन दर्शिताः, यथा—

१ । अर्जुनविषादयोगः प्रथमाध्याये ; २ । सांख्ययोगो द्वितीये ; ३ । कर्म्मयोगस्तृतीये ; ४ । ज्ञानकर्म्मन्यासयोगश्चतुर्थे ; ५ । सन्न्यासयोगः पञ्चमे ; ६ । ध्यानयोगः षष्ठे ; ७ । ज्ञानविज्ञानयोगः सप्तमे ; ८ । अक्षरब्रह्मयोगोऽष्टमे ; ९ । राजगुह्ययोगो नवमे ; १० । विभूतियोगो दशमे ; ११ । विश्वरूपदर्शनयोग एकादशे ; १२ । भक्तियोगो द्वादशे ; १३ । क्षेत्रक्षेत्रज्ञविभागयोगस्त्रयोदशे ; १४ । गुणत्रयविभागयोगश्चतुर्द्दशे ; १५ । पुरुषोत्तमयोगः पञ्चदशे ; १६ । दैवासुरसम्पद्विभागयोगः षोड़शे ; १७ । श्रद्धात्रयविभागयोगः सप्तदशे ; १८ । मोक्षयोगोऽष्टादशाध्याय इति ।

गारुड़े वेदान्तिनामष्टाङ्गयोग उक्तः, यथा—

'मुक्तिरष्टाङ्गविज्ञानात् संक्षेपात् तद् वदे शृणु।
यमाः पञ्चत्वहिंसाद्या अहिंसा* प्राण्यहिंसनम् ॥

---

* अहिंसेति। केचिदाहुः। 'विधात्रैव भक्षणार्हा भक्षयितारश्च निर्म्मिता' इति न्यायेन प्राणिनां कामचारः स्वाभाविक एव। अतो हि चकितमभिधत्ते श्रुतिरपि—'स होवाच किं मेऽन्नं भविष्यतीति। यत्किञ्चिदिदमा श्वभ्य आ शकुनिभ्य इति होचुः।' इति। अत्रार्थे स्मृतिश्च श्रुतिसौहार्द्दादाह—

प्राणस्यान्नमिदं सर्व्वं प्रजापतिरकल्पयत्।
स्थावरं जङ्गमं चैव सर्व्वं प्राणस्य भोजनम् ॥' इति।

भागवतेऽपि स्मर्य्यते—

'अहस्तानि सहस्तानामपदानि चतुष्पदाम्।
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥' (१।१३।४७) इति।

एवं हि हिंसायां न दोष इति।

अन्ये पुनराहुः। हिंसा च यावन्नाचरिता तावद् विहितं प्राणस्य भोजनं नोपपद्यत इति हिंसाया अनिष्टानुबन्धित्वं न युक्तमिति। मैवम्, सैव श्रुतिः सर्व्वभूतानां वृत्त्यर्थमुद्दिष्टा। विश्वस्य भूतिसंवर्द्धनाय सर्व्वे प्राणिनो नित्यं मत्स्या इव परस्परं भक्षयन्तीत्यत्र न हिंसादोषः, प्रजापतेरेकत्वेन जगत्कल्पितत्वात्। स्मृतिश्च तत्र श्रुतिसौहार्द्दात् 'प्राणस्यान्नमिदं सर्व्वमि'त्यनेन न्यायप्राप्तमर्थानुवादमुदाहरति न तु प्राणिवधं चोदयति, हिंसाया अचोदितत्वात्। इहावधातव्यं देवीभागवतवचनं च—

'अहिंसा परमो धर्म्मो विप्राणां नात्र संशयः।
दया सर्व्वत्र कर्त्तव्या ब्राह्मणेन विजानता ॥
यज्ञादन्यत्र विप्रेन्द्र न हिंसा याज्ञिकी मता ॥' इति।

सत्यं भूतहितं वाक्यमस्तेयं * स्वाग्रहं परम् ।
अमैथुनं ब्रह्मचर्य्यं सर्व्वत्यागोऽपरिग्रहः ॥
नियमाः पञ्च सत्याद्या बाह्यमाभ्यन्तरं द्विधा ।
शौचं तुष्टिश्च सन्तोषस्तपःश्चेन्द्रियनिग्रहः ॥
स्वाध्यायः स्याद् मन्त्रजापः प्रणिधानं हरे र्यजिः ।
आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥
मन्त्रध्यानयुतो गर्ब्भो विपरीतो ह्यगर्ब्भकः ।
अगर्ब्भात्तु सगर्ब्भस्थः प्राणायामस्ततोऽधिकः ॥
एवं द्विधा त्रिधाऽप्युक्तः पूरणात् पूरकः स च ।
कुम्भको निश्चलत्वात् स रेचकाद् रेचकस्त्रिधा ॥

---

शरीरस्थितिहेत्वर्थमल्पसत्त्वा हन्यन्त इति स्थितिविहितं विज्ञाय भूरिसत्त्वानां देहवतामभिद्रोहं च विहाय सत्त्वबहुला ऊर्द्ध्वस्रोतसो योगिनो व्रीहियवशाकादिना प्राणान् बिभ्रति, तथा च भूतोपघातभीरवस्ते भूरीष्टानुबन्धी यज्ञः परपीड़ाद्वारेणैव सम्पादयितव्या इत्यतोऽपि विरक्तास्तपःस्वाध्यायध्यानवन्त आत्मानमुपयन्ति । एतत् सर्व्वं स्पष्टयितुं योगियाज्ञवल्क्य आह—

मनसा कर्म्मणा वाचा सर्व्वभूतेषु सर्व्वदा ।
अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ॥ इति (१।५०) ।

* स्तेयमशास्त्रपूर्व्वकं द्रव्याणां परतः स्वीकरणं तदभावोऽस्तेयम् । अत्रार्थे योगियाज्ञवल्क्य आचष्टे—

'कर्म्मणा मनसा वाचा परद्रव्येषु निस्पृहा ।
अस्तेयमिति संप्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥' इति ।

† तप इति । हितमितमेध्यासनं तपः । आहारेण सह तपसः संबन्धभावात् ।

लघु र्द्वादशमात्रः स्याच्चतुर्विंशतिकः परः ।
षट्त्रिंशन्मात्रिकः श्रेष्ठः प्रत्याहारश्च रोधनम् ॥
ब्रह्मात्मचिन्ता ध्यानं स्याद् धारणा मनसो धृतिः ।
अहं ब्रह्मेत्यवस्थानं समाधि र्ब्रह्मणः स्थितिः ॥
अहमात्मा परं ब्रह्म सत्यं ज्ञानमनन्तकम् ।
विज्ञानमानन्दो ब्रह्म सत् तत्त्वमसि केवलम् ॥
अहं ब्रह्मास्म्यहं ब्रह्म अशरीरमनिन्द्रियम् ।
अहं मनोबुद्धिमरुदहंकारादिवर्जितम् ॥
जाग्रत्स्वप्नसुषुप्त्यादिमुक्तं ज्योतिस्तदीयकम् ।
नित्यं शुद्धं बुद्धियुक्तं सत्यमानन्दमद्वयम् ॥
योऽसावादित्यपुरुषः सोऽसावहमखण्ड ॐ ।
इति ध्यायन् विमुच्येत ब्राह्मणो भवबन्धनात् ॥'

(४६ अ०) इति ।

'रत्नकोश' इति । रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखितमस्ति— 'रत्नकोशश्च शम्भुश्च सात्त्विको नरवाहनः' इति । श्लोके रत्नकोश इति पाठः प्रामादिकः । यतो रत्नघोष इत्येवास्य पारमार्थिकं नाम । अनेन 'रत्नघोषसिद्धान्त'नामको रसग्रन्थः प्रणीतः । स च ग्रन्थ इदानीमपि विलसति । ग्रन्थकारस्य स्थितिकालस्तु न ज्ञायते ।

'रसनिगमः'—देवीप्रोक्तं रसतन्त्रम् । अधस्ताद् देवीशास्त्रं द्रष्टव्यम् ।

'रसांकुश' इति । रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखितमस्ति— 'रसांकुशो भैरवश्च नन्दी स्वच्छन्दभैरवः' इति । रसांकुशभैरवनामा कश्चित् तान्त्रिको रससिद्ध आचार्य्य आसीदिति तर्क्यते । तेन रसांकुशनामको रसायनग्रन्थः प्रणीतः । स च ग्रन्थः कवीन्द्राचार्य्यसूच्यामुल्लिखितो वर्त्तते ।

'रसार्णव' इति। रसरत्नसमुच्चयस्यैकादशाध्यायारम्भे रसार्णवनाम दृश्यते। आदिनाथापरनाम्ना नित्यनाथेन त्रयोदशखृष्टशताब्द्यामयं रसार्णवनामको रसग्रन्थः प्रणीतः। तत्र पारदस्य परार्थदानसामर्थ्यं दर्शयितुमुक्तम्—

'पारदो गदितो यस्मात् परार्थं साधकोत्तमैः।
सुप्तोऽयं मत्समो देवि मम प्रत्यङ्गसम्भवः॥
मम देहरसो यस्माद् रसस्तेनायमुच्यते।' इति।

पार्व्वतीं प्रति शिवमुखेन श्लोकोऽयमुक्तः। देहत्यागानन्तरं दर्शनशास्त्रेरितमोक्षप्राप्तौ पाठकानामविश्वासतो निःसंशयप्रवृत्त्यभावात् तेषां रसरसायनादिभिः पिण्डरक्षाकर्त्तव्यतामुपदेष्टुं पुनरपि ग्रन्थकारः स्वात्मानं स्थगयन् भगवद्मुखेन पठति—

'षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने।
करामलकवत् सापि प्रत्यक्षा नोपलभ्यते॥
तस्मात् तं रक्षयेत् पिण्डं रसैश्चैव रसायनैः।' इति।

रसस्य माहात्म्यं प्रख्यापयितुं पुनरपि ग्रन्थकारस्तन्मुखेन पाठयति—

'केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित्।
तानि दृष्ट्वा तु यत् पुण्यं तत् पुण्यं रसदर्शनात्॥' इति।
'पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम्।
यो यजेत् पारदं लिङ्गं स एव शम्भुरव्ययः॥' इति च।

रावणशब्दस्यापि निरुक्ती रामायणे स्मर्य्यते—

'यस्माल्लोकत्रयं चैतद् द्रावितं भयमागतम्।
तस्मात् त्वं रावणो नाम नाम्ना वीरो भविष्यसि॥' इति।

व्युत्पत्तिश्चास्य शब्दस्य—विश्रवसोऽपत्यमिति वाक्ये विश्रवण-रावणाभ्यां वृत्तिरिति। तथा हि भोजसूत्रम्—'नश्च विश्रवसो विश्लोपश्च वा'

( ४।१।६० ) इति। अतो हि विश्रवसोऽपत्यं वैश्रवणः, विशलोपपक्षे रावण इति।

रसेन्द्रतिलकयोगीति। रसरत्नसमुच्चये लिखितमस्ति—'रसेन्द्रतिलको योगी भालुकी मैथिलाह्वय' इति। असौ कश्चित् प्राचीनो रसाचार्य्य आसीत्। अनेन रसेन्द्रतिलकनामको रसायनग्रन्थः प्रणीतः। स च ग्रन्थः कवीन्द्राचार्य्यसूच्यामुल्लिखितो वर्त्तते।

'लङ्केश' इति। रसरत्नसमुच्चयारम्भे लिखितमस्ति—'आदिमश्चन्द्रसेनश्च लङ्केशश्च विशारदः' इति। अस्य नाम्ना लङ्केशसिद्धान्तः प्रचलित आसीत्। स च ग्रन्थ इदानीं नोपलभ्यते, परं तु १६५६ खृष्टाब्दीयकवीन्द्रसूच्यामस्य समुल्लेखो वर्त्तते। रावणो हि लङ्केश इति नाम्नाऽभिहितो भवति। तन्नाम्ना कुमारतन्त्र-नाड़ीपरीक्षादिपञ्चखण्डात्मको रावणीयनिबन्धसंग्रह इदानीमपि प्रचलत्येव। अर्कप्रकाशोऽस्य प्रथमं खण्डम्। तस्य प्रारम्भे लिखितमस्ति—

'द्रव्यकल्पं पञ्चधा स्यात् कल्कं चूर्णं रसस्तथा।
तैलमर्कं क्रमाज् ज्ञेयं यथोत्तरगुणं प्रिये॥' इति।

प्रिये मन्दोदरि। अर्कप्रकाशो राजमार्त्तण्डनाम्नापि प्रसिद्ध एव। अस्य नाड़ीपरीक्षायामुक्तम्—

'गदाक्रान्तस्य देहस्य स्थानान्यष्टौ परीक्षयेत्।
नाड़ीं मूत्रं मलं जिह्वां शब्दस्पर्शदृगाकृतिम्॥' इति।

कुमारतन्त्रस्य वचांसि जगन्नाथस्य योगसंग्रहे गयदासस्य न्यायचन्द्रिकायां चोपलभ्यन्ते।

द्वेष्यभावेनापि भगवदुपासना दृश्यते। एवं हि श्रीरामचन्द्रं द्विषताऽपि रावणेनोक्तम्—'रामनामौषधं तत्र कारयेत् पारलौकिकमि'ति। यतश्च रामनाम्नो माहात्म्यं शास्त्रकारैरुद्घोषितम्—

'राशब्दो विश्ववचनो मश्चापीश्वरवाचकः ।
विश्वानामीश्वरो यो हि स राम इति कीर्त्तितः ॥'

'लम्पको लम्पटो'वेति । लम्पट इति पाठस्तु प्रामादिक इति प्रतिभाति । रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखितमस्ति—'खण्डः कापालिको ब्रह्मा गोविन्दो लम्पको हरिः' इति । अत्र लम्पट इति पाठान्तरमपि दृश्यते । असौ कश्चिदेव रससिद्ध आचार्य्य आसीदिति तर्क्यते ।

'वासुदेव' इति । नरेन्द्रश्च वासुदेव इति च । रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखिते स्तः—'वासुदेव ऋष्यशृङ्गः क्रियातन्त्रसमुच्चयी'ति, 'महादेवो नरेन्द्रश्च वासुदेवो हरीश्वरः' इति च । द्वौ वासुदेवौ रसाचार्य्यावास्ताम् । एकः क्षेमादित्यतनयस्त्रयोदशखृष्टशताब्दीयो वासुदेवतन्त्ररससर्व्वस्वादिप्रणेता वासुदेवः, अपरः शककुषाणाधिपतेः प्रथमखृष्टशताब्दीयस्य कनिष्कस्य पौत्रो 'वासुदेवसंहिता'नामकरसग्रन्थप्रणेता महाराजो वासुदेवश्चेति । प्रथमोक्तं वासुदेवनाम रससर्व्वस्वादिप्रणेतुरुद्देशे प्रयुक्तम्, 'नरेन्द्रश्च वासुदेव'इत्यनेन तु वासुदेवसंहिताप्रणेता महाराजो वासुदेव उद्दिष्ट इति मन्यामहे । राज्ञो वासुदेवस्य वृत्तान्तः प्राचीन इतिहासे वर्णितचर एव । वासुदेवतन्त्रं वासुदेवसंहिता च कवीन्द्राचार्य्यसूच्यां दृश्येते ।

विशारद इति । रसरत्नसमुच्चयारम्भे लिखितमस्ति—'आदिमश्चन्द्रसेनश्च लङ्केशश्च विशारद' इति । द्वौ विशारदावास्ताम् । एकस्तृतीयखृष्टशताब्दीयो 'विशारदसिद्धान्त'प्रणेता विशारदः, अपरः शाण्डिल्यसूत्रभाष्यकृतः स्वप्नेश्वरसूरेः पितामहः प्रपितामहो वा विशारदश्चेति । रसरत्नसमुच्चये त्वनयोः क उद्दिष्ट इत्यत्र निश्चायकं प्रमाणं नास्ति । सम्भाव्यते तु द्वितीय-तृतीयखृष्टशताब्दीयं विशारदसिद्धान्तप्रणेतारमभिलक्ष्य विशारद इत्युक्तम् । कवीन्द्राचार्य्यसूच्यां विशारदसिद्धान्त उल्लिखितो वर्त्तते ।

'व्याड़िरि'ति। रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखितमस्ति— 'इन्द्रदो गोमुखश्चैव कम्बलि र्व्याड़िरेव च' इति। द्वौ व्याड़ी रसाचार्य्यावास्ताम्। तत्रैकः खृष्टजन्मतः पूर्व्वं सप्तमशताब्दीवर्त्ती दाक्षिपुत्रो दाक्षीपुत्रस्य मातुलतनयः संग्रहकारो दाक्षायणो व्याड़िः, अपरस्तु खृष्टजन्मतः परं सप्तमशताब्द्यामुज्जयिन्यां विक्रमसभ्यो भैषज्यतन्त्रप्रणेता व्याड़ि र्यस्य सविशेषवृत्तान्त एकादशखृष्टशताब्दीयस्य 'आल्‌बेरुणि-भारत'नामकग्रन्थस्य 'The alchemist Vyadi in the time of Vikramaditya' इत्यभिधेये प्रस्तावे वर्णितचर आसीत् ( Alberuni's India Vol I. pp. 189-191, Sachaw ). रसरत्नसमुच्चये त्वनयोः क उद्दिष्ट इत्यत्र निश्चायकं प्रमाणं नास्माभिरुपलभ्यते। सम्भाव्यते तु दाक्षायणमुनिं लक्षयित्वा ग्रन्थकारेण व्याड़िनाम सन्निवेशितमिति। यतो नवीनव्याड़ेः प्राचीनव्याड़िरतीव प्रसिद्धतर आसीत्। चतुर्थखृष्टशताब्दीयः सम्राड्वर्य्यः समुद्रगुप्तस्तत्प्रणीतकृष्णचरितस्य मुनिकविवर्णनप्रसङ्गे प्राचीनव्याड़िमुद्दिश्य व्यलिखत्—

'रसाचार्य्यः कवि र्व्याड़िः शब्दब्रह्मैकवाङ्मुनिः।
दाक्षीपुत्रवचोव्याख्यापटु र्मीमांसकाग्रणीः॥
वलचरितं कृत्वा यो जिगाय भारतं व्यासं च।
महाकाव्यविनिर्म्माणे तन्मार्गस्य प्रदीपमिव॥' इति।

'दाक्षीपुत्रवचोव्याख्यापटु'रित्यनेन व्याड़ेः संग्रहो लक्षितः। इमं ग्रन्थं प्रशंसितुं महाभाष्ये पतञ्जलिराह—'शोभना खलु दाक्षायणेन संग्रहस्य कृतिरि'ति। दाक्षायण इति संग्रहकर्त्तु र्व्याड़े र्नामान्तरमेव। संग्रहारम्भे भगवान् व्याड़ि र्मङ्गलवाचकं 'सिद्ध'शब्दं प्रायौक्षीत्। तमेवानुसृत्य वार्त्तिकपाठारम्भे कात्यायनमुनिनाऽपि 'सिद्ध'शब्दमादाय पठ्यते—'सिद्धे शब्दार्थसंवन्धे' इति। तदुक्तं महाभाष्यदीपिकायां भर्त्तृहरिणा—'संग्रहो-

ऽप्यस्यैव शास्त्रस्यैकदेशः, तत्रैकतन्त्रत्वाद् व्याड़ेश्च प्रामाण्यादिहापि ( वार्त्तिकपाठेऽपि ) तथैव सिद्धशब्द उपात्तः' इति। मन्ये—द्वयोरेतयो ग्रन्थयोः सिद्धशब्दस्य फलोत्पादनसामर्थ्यदर्शनात् कलापारम्भे च 'सिद्धो वर्णसमाम्नायः' इत्यत्र शर्व्ववर्म्मणापि स एव शब्द उपात्त इति।

व्याड़ीयसंग्रह-मीमांसाग्रन्थयो र्विलोपः सञ्जातः। तथा विलोप-श्चेदानीं नासम्भवः। 'उत्पलिनी'नामकः कश्चित् प्रमाणिकः कोषग्रन्थो व्याड़िना प्रणीत इत्येका प्रसिद्धिरस्ति। सोऽपि नास्माभिरुपलभ्यते। द्वादशखृष्टशताब्दीयटीकासर्व्वस्वनाम्न्याममरव्याख्यायां सर्व्वानन्दवन्द्योपाध्याय आह—'चाषः किकीदिविः स्मृत इति व्याड़िना दीर्घ उक्तः' इति, 'आज्ये च घृतम्—'अयाचिते यज्ञशेषे निर्व्वाणे चापि सुन्दरे। अमृतं वारिणि प्रोक्तमतिहृद्ये च वस्तुनि ॥' इति व्याड़िः' इति च।

'शम्भुरि'ति। रसरत्नसमुच्चये लिखितमस्ति—'रत्नकोशश्च शम्भुश्चे'ति। शम्भु र्महादेवः। अधस्ताद् महादेवप्रसङ्गो द्रष्टव्यः। कवीन्द्रसूच्यां शम्भु-सिद्धान्त उल्लिखितो दृश्यते।

'शिव' इति। रसरत्नसमुच्चयस्य शिष्योपनयननामके षष्ठाध्याये लिखित-मस्ति—'रसविद्या शिवेनोक्ता दातव्या साधकाय वै (३०)' इति। शिवो महादेवः। अधस्ताद् महादेवनामप्रसङ्गो द्रष्टव्यः।

'शूरसेनक' इति। रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखित-मस्ति—'कपाली मत्तमाण्डव्यौ भास्करः शूरसेनकः' इति। शूरसेन इत्यस्य प्रकृतं नाम, स्वार्थिकः क श्छन्दोनुरोधात्। शूरसेनो नाम यदुवंशीयो राजा रसाचार्य्यश्चासीत्। स मधुरायां प्रतिवसति स्म। अनेन 'शूरसेनसिद्धान्त'नामैको रसग्रन्थः प्रणीतः। ग्रन्थस्तु नास्माभि र्दृष्टः। कवीन्द्राचार्य्यसूच्यां सुरसेनसिद्धान्तनाम्नैको ग्रन्थ उल्लिखितो दृश्यते।

'सात्विक' इति। रसरत्नसमुच्चयस्य रसोत्पत्तिप्रस्तावे लिखितमस्ति— 'रत्नकोशश्च शम्भुश्च सात्त्विको नरवाहनः' इति। सात्त्विकः सात्वतो विष्णुरिति यावत्। असौ पुरुषः सत्त्वगुणात् कदाचिन्न परिच्युतो भवतीति सात्त्विकः सात्वतो वा। विष्णुपुराणे विष्णुशब्दस्य व्युत्पत्ति र्दर्शिता, यथा—

'यस्माद् विश्वमिदं सर्व्वं तस्य शक्त्या महात्मनः।
तस्मादेवोच्यते विष्णु र्विशधातोः प्रवेशनात्॥' इति।

ब्रह्मविष्णुमहेशानां भेदो न कल्पनीयः। तदुक्तं कौर्म्मे—

एकोऽपि सन् महादेवस्त्रिधाऽसौ समवस्थितः।
सर्गरक्षालयगुणै र्निर्गुणोऽपि निरञ्जनः॥
त्रिधा विभज्य चात्मानं त्रैलोक्ये संप्रवर्त्तते।
सृजते वीक्षते चैव ग्रसते च पुनः प्रजाः॥
अग्रे हिरण्यगर्भः स प्रादुर्भूतः सनातनः।
आदित्वादादिदेवोऽसावजातत्वादजः स्मृतः॥
देवेषु च महादेवो महादेव इति स्मृतः।
पाति यस्मात् प्रजाः सर्व्वाः प्रजापतिरिति स्मृतः॥
बृहत्त्वाच्च स्मृतो ब्रह्मा परत्वात् परमेश्वरः।
वशित्वादप्यवश्यत्वादीश्वरः परिभाषितः॥
ऋषिः सर्व्वत्रगत्वेन हरिः सर्व्वहरो यतः।
अनुपादाच्चानुपूर्व्वात् स्वयम्भूरिति स स्मृतः॥
नराणामयनं यस्मात् तस्मान्नारायणः स्मृतः।
हरः संसारहरणाद् विभुत्वाद् विष्णुरुच्यते॥
बहुनात्र किमुक्तेन सर्व्वं विष्णुमयं जगत्॥ (४ अ०) इति।

असौ भगवान् विष्णुयामल-विष्णुधर्म्मोत्तरादिप्रवक्तेति शास्त्रीया प्रसिद्धिः। गर्भाधाने स विष्णुराराध्यते। मन्त्रश्च—'विष्ण योनिं कल्पयत्वि'-

त्यादिः । महाभारतोक्तनामसहस्रेण तस्मै तुलसीदानं महाज्वरानपहन्तीति शास्त्रविधानम् । तदुक्तं चक्रपाणिना—

विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम् ।
स्तुवन् नामसहस्रेण ज्वरान् सर्व्वान् व्यपोहति ॥
( १।५।१८३ ) इति ।

अस्य नाम्ना विविधान्यौषधानि प्रचलन्ति यथा—

(१) विष्णुतैलम्—'एतदेव वरं तैलं विष्णुना परिकीर्त्तितम्' इति ।

(२) बृहद्विष्णुतैलम्—'विष्णुतैलमिदं श्रेष्ठं सर्व्ववातविकारनुत्' इति ।

(३) स्वल्पविष्णुतैलम्—'एतदङ्गवरं तैलं विष्णुना परिकीर्त्तितम्' इति ।

(४) नारायणतैलम्—'शतावरीरसं चैव तैलतुल्यं प्रदापयेत्' इति । एतदधिकृत्य तत्त्वचन्द्रिकायां शिवदासेनोक्तम्—'नारायणसंज्ञा चास्य विष्णुनिर्म्मितत्वात्, शतावरीरससाधितत्वाद् वेति ।

(५) शतावरीतैलम्—'नारायण इति नाम्ना विष्णुना समुदाहृतम्' इति ।

(६) मध्यमनारायणतैलं नारायणतैलमेव ।

(७) महानारायणतलम्—'तैलमेतद् भगवता विष्णुना परिकीर्त्तितम्' इति ।

(८) बृहच्छृङ्गाराभ्रम्—'बृहच्छृङ्गाराभ्रनाम विष्णुना परिकीर्त्तितम्' इति ।

(९) नित्योदयरसः—'नाम्ना नित्योदयश्चायं रसो विष्णुविनिर्म्मितः' इति ।

(१०) आमवातेश्वरो रसः—'आमवातेश्वरो नाम विष्णुना परिकीर्त्तितः' इति ।

(११) सर्व्वाङ्गसुन्दरो रसः—'सर्व्वाङ्गसुन्दरो नाम्ना रसोऽयं विष्णुनिर्म्मितः' इति ।

सिङ्घण इति । एष नरपतिः सिङ्घणो देवगिरौ (दौलताबादनगरे) दशाधिकद्वादशशततमखृष्टवर्षादारभ्य सप्तचत्वारिंशदधिकद्वादशशततमखृष्टवर्षपर्य्यन्तं राज्यमकरोत् । सङ्घणश्चर्पटिनाथादिरसाचार्य्याणां समकालिक आसीत् । नासौ राजा स्वयं रसाचार्य्यः, परं तु रसाचार्य्याणामाश्रय इति श्रूयते ।

सिद्धनाथ इति । अश्विनीकुमार आदिनाथो नित्यनाथश्चेत्यस्य नामान्तराणि भवन्ति । नित्यनाथ इत्यस्य पितृदत्तं नाम । त्रयोदशखृष्टशताब्द्यां शङ्करगुप्ताचार्य्यः स्वभार्य्यायां पार्व्वतीदेव्यां नित्यनाथं जनयामास । खरतरगच्छनाम्नि जैनसङ्घे यतिधर्म्ममतमवलम्ब्य स आदिनाथ इत्युपनाम लेभे । एष आदिनाथो वैद्यग्रन्थप्रतिसंस्कारादश्विनीकुमार इत्युपाधिभूषित आसीत् । त्रयोदशखृष्टशताब्द्यामनेन रसरत्नाकर-रसार्णव-रसरत्नमाला-कामरत्न-योगसारादिवैद्यकग्रन्थाः प्रणीताः । तत्र रसरत्नाकरस्य हस्तलिखिते कस्मिंश्चिद् ग्रन्थ आदिनाथकर्त्तृत्वे समुल्लिखितेऽपि कलिकातास्थित-गणेशचन्द्रघोष-महोदयेन मुद्रिते ग्रन्थे नित्यनाथविरचितत्वं दृश्यते । उपवर्णितास्तु विषया उभयत्र न विभिन्नाः ।

अधस्ताद् रसार्णवप्रस्तावो द्रष्टव्यः । रसरत्नाकरस्य प्रथम उपदेशे लिखितमस्ति—

'यदुक्तं शम्भुना पूर्व्वं रसखण्डे रसार्णवे ।
रसस्य वन्दनार्थे च दीपिकारसमङ्गले ॥
व्याधितानां हितार्थाय प्रोक्तं नागार्जुनेन यत् ।

उक्तं धूर्जटिसिद्धेन स्वर्गवैद्य-कापालिके ॥
अनेकरसशास्त्रेषु संहितास्वागमेषु च ।
यदुक्तं वाहटे तन्त्रे सुश्रुते वैद्यसागरे ॥
अन्यैश्च बहुभिः सिद्धै र्यदुक्तं च विलोक्य तत् ।
तत्र यद् यदसाध्यं स्याद् यद् यद् दुर्ल्लभमौषधम् ॥
तत्तत् सर्व्वं परित्यज्य सारभूतं समुद्धृतम् ।
क्वचिच्छास्त्र क्रिया नास्ति क्रमश्चापि न च क्वचित् ॥
मात्रायुक्तिः क्वचिन्नास्ति सम्प्रदायो न च क्वचित् ।
तेन सिद्धि र्न तत्रास्ति रसे वाथ रसायने ॥
वैद्ये वादे प्रयोगे च तस्माद् यत्नो मया कृतः ।
यद् यद् गुरुमुखाज् ज्ञातं स्वानुभूतं च यन्मया ॥
तत्तल्लोकहितार्थाय प्रकटीक्रियतेऽधुना ।' इति ।

एकादशखृष्टशताब्दीयचक्रपाणेरपि श्लोको रसरत्नाकरे समुद्धृतो दृश्यते ।

सुरानन्द इति । रसरत्नसमुच्चयस्य प्रारम्भे लिखितमस्ति—'नागार्जुनः सुरानन्दो नागबोधि र्यशोधन' इति । एष कश्चित् प्रसिद्धो हठयोगी रसाचार्य्यश्चासीत् । सुरानन्द इति पाठः प्रामादिक एव । अस्य यथार्थं नाम सुरामन्द इति । अनेन सुरानन्दसिद्धान्तः प्रणीतः । स च ग्रन्थ इदानीमपि विलसति ।

सोमदेव इति । एष राघवदेवस्य तनयो गोणिकापुत्रस्याच्युतस्य शिष्यः श्रीकृष्णशार्ङ्गधरस्य पिता करालभैरवपुरस्य सामन्तो द्वादश-त्रयोदशखृष्ट-शताब्दीयश्चासीत् । अनेन रसेन्द्रपरिभाषा-रसेन्द्रचूड़ामणी प्रणीतौ । गुरुशिष्यौ सम्भूय रसेश्वरसिद्धान्तं कृतवन्तावित्येका प्रसिद्धिरस्ति । रसरत्न-समुच्चयो वाग्भटेन प्रणीतः, सोमदेवस्तु तं ग्रन्थं प्रतिसंस्कृत्य मूलग्रन्थ-कर्त्तृनाम्ना प्रकाशितवान् ।

तन्त्रशास्त्रीयरीत्या रसेश्वरसिद्धान्तः प्रणीतः । तत्र लिखितमस्ति—

'कर्म्मयोगेण देवेशि प्राप्यते पिण्डधारणम् ।
रसश्च पवनश्चेति कर्म्मयोगो द्विधा मतः ॥
मूर्च्छितो हरति व्याधीन् मृतो जीवयति स्वयम् ।
बद्धः खेचरतां कुर्य्याद् रसो वायुश्च भैरवि ॥
नानावर्णो भवेत् सूतो विहाय घनचापलम् ।
लक्षणं दृश्यते यस्य मूर्च्छितं तं वदन्ति हि ॥
आर्द्रत्वं च घनत्वं च तेजो गौरवचापलम् ।
यस्यैतानि न दृश्यन्ते तं विद्यान् मृतसूतकम् ॥
अक्षतश्च लघुद्रावी तेजस्वी निर्म्मलो गुरुः ।
स्फोटनं पुनरावृत्तौ बद्धसूतस्य लक्षणम् ॥' इत्यादि ।

कृतेऽपि ग्रन्थे तन्त्ररीत्या तत्र लौकिकवृत्तान्तानामभावो नोपलभ्यते । तत्र लिखितमस्ति—

'देवाः केचिन् महेशाद्या दैत्याः काव्यपुरःसराः ।
मुनयो बालखिल्याद्या नृपाः सोमेश्वरादयः ॥
गोविन्दभगवत्पादाचार्य्यो गोविन्दनायकः ।
चर्वटिः कपिलो व्याड़िः कापालिः कन्दलायनः ॥
एतेऽन्ये बहवः सिद्धा जीवन्मुक्ताश्चरन्ति हि ।
तनुं रसमयीं प्राप्य तदात्मककथाचणाः ॥' इति ।

बालखिल्याः स्वल्पप्रमाणा ऋषयो ब्रह्मपुत्रत्वेन प्रसिद्धा आयुर्व्वेदवित्तमाश्च । सोमेश्वरः कीर्त्तिकौमुदीप्रणेता १०-११ खृष्टशताब्दीयः । गोविन्दभगवत्-पादाचार्य्यो रसहृदयप्रणेता, सप्तमखृष्टशताब्दीयगौड़पादस्य शिष्यः, शङ्करा-चार्य्यस्य गुरुश्चासीत् । गोविन्दनायको द्वादशखृष्टशताब्दीयो रसाचार्य्य एव । चर्व्वटिश्चर्व्वटिसिद्धान्तकृद् द्वादशत्रयोदशखृष्टशताब्दीयमत्स्येन्द्रनाथस्य

गुरु र्हठयोगी रसाचार्य्यश्च। व्याड़ि र्दाक्षितनयः पाणिनिमुने र्मातुलपुत्रो दाक्षायणव्याड़िः संग्रहकारो रसाचार्य्यो बलचरितप्रणेता सप्तमखृष्टपूर्व्व-शताब्दीवर्त्त्यैव। परमर्षिः कपिलः सांख्यप्रवक्ता सिद्धपुरुष एव। कापालिः कापाली वा द्वितीयतृतीयखृष्टशताब्दीवर्त्तिनः शककुषाणाधिते र्वासुदेवस्य पुत्रो वामाचारी रससिद्धः कन्दलायनस्तस्य प्रियशिष्यः प्रकटावधूतो रसाचार्य्यश्चास्ताम्। एते सर्व्वे पुण्यश्लोका महापुरुषा इति सत्यम्, किन्तु तन्त्रे तेषां नामसन्निवेश आगमविरुद्धत्वेन प्रतिभाति।

रसरत्नसमुच्चये सोमदेवः स्वनामग्राहमाह—

'कथ्यते सोमदेवेन मुग्धवैद्यप्रबुद्धये।
परिभाषा रसेन्द्रस्य शास्त्रैः शिद्धैश्च भाषिताः॥' (८।१) इति।
'अथ यन्त्राणि वक्ष्यन्ते रसतन्त्राण्यशेषतः।
समालोक्य समासेन सोमदेवेन साम्प्रतम्॥' (६।१) इति च।
'नन्दी नागार्जुनश्चैव ब्रह्मज्योति र्मुनीश्वरः।
वेत्ति श्रीसोमदेवश्च नापरं पृथिवीतले॥' (६।६५) इत्यपि।

सोमदेवीयरसेन्द्रचूड़ामणे र्नानाश्लोका रसरत्नसमुच्चये समुद्धृता दृश्यन्ते—

(१) 'रौप्येण सह संयुक्तं ध्मातं रौप्येण चेल्लगेत्।
तदा निरुत्थमित्युक्तं लोहं तदपुनर्भवम्॥' (८।२६) इति।
(२) 'न तत्पुटसहस्रेण क्षयमायाति सर्व्वथा।
चपलोऽयं समादिष्टो वार्त्तिकै र्नागसम्भवः॥' (८।४१) इति च।
(३) 'इत्थं हि चपलः कार्य्यो वङ्गस्यापि न संशयः।
तत्स्पृष्टहस्तसंस्पृष्टः केवलो बध्यते रसः॥' (८।४२) इति च।
(४) 'स रसो धातुवादेषु शस्यते न रसायने।
अयं हि खर्पणाख्येन लोकनाथेन कीर्त्तितः॥' (८।४३) इति च।

इत्येवमाद्याः।

'स्वच्छन्दभैरव' इति। रसरत्नसमुच्चयस्यारम्भे पठ्यते—'रसांकुशो भैरवश्च नन्दी स्वच्छन्दभैरवः' इति। अयं शिवानुचरविशेष इति प्रसिद्धिः। अनेन स्वच्छन्दभैरवनामकं तन्त्रं स्मर्य्यते। कवीन्द्रसूच्यामस्य समुल्लेखो वर्त्तते। दुर्गापूजायां स्वच्छन्दभैरव आवरणदेवतात्वेन संपूज्यते। ज्वराधिकारे तन्नाम्नौषधं प्रचलत्येव।

हरीश्वर इति। एष त्रिगर्त्तदेशीयनरपति र्हरीश्वरतन्त्रप्रणेता रसाचार्य्यश्चासीत्। त्रिगर्त्तदेश इदानीं जालन्धरनाम्ना प्रसिद्धः। हरीश्वरो द्वितीयतृतीयखृष्टशताब्दीवर्त्त्येव।

समाप्तं वृद्धवाग्भटीयवृत्तम्।

समाप्ता च वृद्धत्रयी।

**रहस्योद्घाटनं कृत्स्नं यत्नतो यत् कृतं मया।**
**तेनैव प्रीयतां देवी विद्याऽविद्यासु या स्थिता॥**

---

# अथो ग्रन्थसूची

सङ्केताः—खृश = खृष्टशताब्दीयः खृष्टशताब्दीया खृष्टशताब्दीयं वा
खृपूश = खृष्टपूर्व्वशताब्दीयः, खृष्टपूर्व्वशताब्दीया, खृष्टपूर्व्वशताब्दीयं वा
संग्रहः = अष्टाङ्गसंग्रहः, वृद्धवाग्भटो वा ।
संग्रहसंहिता = अष्टाङ्गसंग्रहसंहिता, मध्यवाग्भटः, मध्यसंहिता वा ।
हृदयम् = अष्टाङ्गहृदयसंहिता, लघुवाग्भटः, स्वल्पवाग्भटो वा ।

## ग्रन्थस्थितश्लोकानां सूची

---

# कतिपयशब्दानां सूचीपत्रम्

---

महताऽपि प्रयत्नेन
तमिस्रायां परामृशन् ।
कृष्णशुक्लविवेकं हि
न कश्चिदधिगच्छति ॥

## स्थितिकालानुसारेण शास्त्रचिन्तकादीनां संक्षिप्तविवरणम् ।

मनीषिषु शास्त्रचिन्तकेषु च कतिपयानामानुमानिकस्थितिकालादयोऽधः प्रदर्श्यन्ते। न खलु वयं प्रागैतिहासिकमुनीनां कालनिरूपणे प्रयतामहे। एवंविधकर्मणि हि व्यर्थप्रयत्नेनाष्टमशताब्दीयेन भट्टपादकुमारिलसदृश-सूक्ष्मशेमुषीसम्पन्नजनेनापि साक्षेपमुक्तम्—

"महतापि प्रयत्नेन तमिस्रायां परामृशन्।
कृष्णशुक्लविवेकं हि न कश्चिदधिगच्छति ॥" इति।

तथापि पाठकानां तृप्तयर्थमैतिहासिकमजुमदारमहोदयस्य "The Hindu History"—नामकग्रन्थे केषाञ्चन शास्त्रचिन्तकानां स्थितिकाला यथा निर्णीता स्तथा हि प्रथमतोऽत्रोपनिबध्यन्ते। मजुमदारमहोदयेनोक्तम्—

१। वैद्यसन्देहभञ्जनकृद् विदेहाधिपो जनकः पञ्चविंशतिखृष्टपूर्व्व-शताब्दीवर्त्ती ;

२। द्वैधनिर्णयतन्त्रकृदगस्त्यमुनि र्द्वाविंशखृष्टपूर्व्वशताब्दीयः ;

३। तन्त्रसारकप्रणेता जाजलिमुनि र्विंशखृष्टपूर्व्वशताब्दीयः ;

४। वेदाङ्गसारप्रणेता जाजलिमुनिरूनविंशखृष्टपूर्व्वशताब्दीयः ;

५। निदानकृत् पैलमुनिरष्टादशखृष्टपूर्व्वशताब्दीयः ;

६। सर्व्वधरतन्त्रकृत् कवथमुनिरष्टादशखृष्टपूर्व्वशताब्दीयः ;

७। चिकित्साकौमुदीकृद् वामकापरपर्य्यायो द्वितीयकाशीराजः सप्तदशखृष्टपूर्व्वशताब्दीयः ;

८। चिकित्सातत्त्वविज्ञानप्रणेता चतुर्थकाशीराजधन्वन्तरिः षोड़श-खृष्टपूर्व्वशताब्दीयः ;

९। चिकित्सादर्शनकृत् सप्तमकाशीराजो दिवोदासो धन्वन्तरिः पञ्चदशखृष्टशताब्दीयस्तस्य च सुश्रुतादयः शिष्या स्तत्समयवर्त्तिनः ;

१०। संहिताकारश्चरकमुनि श्चतुर्द्दशखृष्टपूर्व्वशताब्द्या न हि परवर्त्ती ;

११। पाणिनिमुनिरष्टमखृष्टपूर्व्वशताब्दीयः—इति।

नेदृशः सिद्धान्तस्तु हृदयग्राहित्वेन प्रतिभाति। पञ्चविंशखृष्टपूर्व्व-शताब्द्यां कुरुपाण्डवानां युद्धमभूदित्युक्तं गणनया वराहमिहिरेण। अस्माद् महता कालेन पूर्व्ववर्त्ती विदेहाधिपो जनकः। युद्धसमये व्यासदेवो जीवन्नासीत्। तस्य शिष्यस्थानीयो वैशम्पायनः। चरकयाज्ञवल्क्यौ वैशम्पायनस्य शिष्याविति श्रीमद्भागवतम्। अत एव चरकमुनि-श्चतुर्द्दशखृष्टपूर्व्वशताब्द्या महता कालेन पूर्व्वभवः। व्यासजनकः पराशर-मुनि र्वैद्यागमे महर्षेरात्रेयस्य शिष्यत्वेनोद्घोषितः। आत्रेयेण सह काशीराजस्य वामकस्य रसादिविषयकः संलापः श्रूयते। संलापोऽयं चरक-संहितायामुपनिबद्धो वर्त्तते। अत एव यो हि व्यासपितुः समकालिकः कथं स सप्तदशखृष्टपूर्व्वशताब्दीयो भवितुमर्हति।

'वेवरमोक्षमूलरे'त्याख्यपण्डितद्वयेन पाणिनिश्चतुर्थखृष्टपूर्व्वशताब्द्यां विनिक्षिप्तः। सत्यव्रतसामश्रमिमहोदयेन तु स चतुर्विंशखृष्टपूर्व्वशताब्द्यां संस्थापितः। एको हि गगनस्पर्शी, इतरद्वयं पातालदर्शि। अत उभय-मतवाद उपेक्षणीयो भवति। Vincent Smith-महोदयेन तदीय-Oxford History of India-नामक ग्रन्थस्य ५७ पृष्ठे पाणिनेः सप्तमखृष्टपूर्व्वशताब्दीयत्वं निर्द्धारितम्। S. K. Belvalkar-महोदय इमं मतवादं कक्षीकरोति।

थेयोडोर गोल्डष्टिकर ( Theodor Goldstücker )-नामकः कश्चित् संस्कृतव्याकरणाभिज्ञो जार्म्मन्देशीयः पण्डितप्रवर स्तदीये 'पाणिनि'-नामकग्रन्थे विविधं युक्तिजालं प्रदर्श्य पाणिनि ग्रींस्देशीय-कविवरस्य

होमरस्य समकालिक इत्यपि वक्तुं न पराङ्मुखोऽभूत्। वर्त्तमानसमये पाश्चात्त्यप्राज्ञिकै र्द्वादशखृष्टपूर्व्वशताब्दीञ्च नवमखृष्टपूर्व्वशताब्दीञ्चान्तरा होमरकवेः स्थितिकालोऽनुमीयते। C. V. Vaidya-महोदयेन तदीये 'History of Sanskrit Literature'-नामकग्रन्थे पाणिने र्नवम-खृष्टपूर्व्वशताब्दीयत्वं प्रतिपादितम् ( Vol. III pp. 119 etc )। वयमपि पाणिनिं तत्समयवर्त्तिनं मन्यामहे। अतो नवमखृष्टपूर्व्वशताब्दीं यात्रास्तम्भत्वेन ( startiug point ) गृहीत्वा वयं कालनिरूपणे प्रवृत्ता भवेम। ग्रन्थप्रणयनावसरे ये ये वृत्तान्ताः पूर्व्वमज्ञाता विस्मृता वासन् पश्चात्तु ज्ञानगोचरं प्राप्ता स्तेऽपि सूच्यां सन्निवेशिताः। कालादिविषये पूर्व्वपूर्व्वग्रन्थेषु यदस्माभिरुक्तं तेन सह ग्रन्थस्यास्य विरोधे समुपस्थिते परवर्त्तिनो ग्रन्थस्य प्रामाण्यं ग्राह्यं यतः शास्त्रकाराः समामनन्ति 'विप्रतिषेधे परं कार्य्यमिति, उक्तिश्च लौकिकी वर्त्तते—'भवति विज्ञतमः क्रमशो जनः' इति ( भानुभट्टीयरसतरङ्गिणी )। येषामेकस्यां शताब्द्यामाविर्भावः परवर्त्तिन्याञ्च शताब्द्यां तिरोभावोऽभूतां तेषां विषये 'संख्याऽनादेशे शतमि'ति न्यायेनानुपूर्व्विकशताब्दीद्वयमेकत्रोल्लिखितं भविष्यति।

९-८ खृष्टपूर्व्वशताब्द्योः

पाणिनिः—विश्वविश्रुतो वैयाकरणो मुनिः। साम्प्रदायिक-न्यूनता-परिहारार्थमयमष्टाध्यायीं धातुपाठं प्रातिपदिकपाठं गणपाठं वा लिङ्गानु-शासनं शिक्षाशास्त्रञ्च प्रणिनाय। उक्तिश्च साम्प्रदायिकी वर्त्तते—

"अष्टकं धातुपाठश्च गणपाठस्तथैव च।
लिङ्गानुशासनं शिक्षा पाणिनीया अमी क्रमात्॥" इति।

पाणिनिगोत्रसम्भूतत्वादयं पाणिनिनाम्ना प्रसिद्धः। परवर्त्तिनि काले पाणिनिगोत्रं सौपायनगोत्रनाम्नाऽभिहितमभवत्। पाणिननामकस्य कस्य-चित् पूर्व्वपुरुषस्य नामानुसारतोऽस्य पाणिननाम सम्भूत्। गवेषिणा

"डाउसन्" (Dowson)-महोदयेन समर्थितोऽयं मतवादः। देवलमुनिः पाणिनेः पितामह इत्यप्युद्घोषितं Dowson-महोदयेन। पाणिनेः शालङ्किरिति नामदर्शनादयं शलङ्कस्य पुत्र इति प्रतीयते। अभिधानरत्ने जटाधरेणोक्तम्—"अयं शालङ्कनाम्नापि प्रसिद्धः" इति। कल्पद्रुकोषे केशवस्वामिना दाक्षेयनाम्नाऽयमभिहितः। महाभाष्ये हि स्मर्य्यते "दाक्षी-पुत्रस्य पाणिनेः" इति (१।१।८)। पाणिनिमाता दाक्षी दक्षमुनेरात्मजा। दाक्षिस्तस्य भ्राता। दाक्षायणस्तस्य भ्रातुष्पुत्रः।

"आहिक" इति पाणिनेः पितृदत्तं नाम। शिवदत्तशर्म्मणा लिखितम्—"दाक्षीपुत्रः पाणिनिगोत्र आहिकनामा मुनि गोंत्राश्रयनाम्नैव प्रसिद्धः" इति (महाभाष्यम्—१४ पृः निर्णयसागरसंस्करणम्)। पुरुषोत्तम-देवस्य त्रिकाण्डशेषे लिखितमस्ति—"पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्कि-पाणिनौ" इति। कल्पद्रुकोषे केशवस्वामिना त्वयं शिवपर्य्यायभक्तत्वेन विनिर्द्दिष्टः।

शालातुरीयः सालातुरीयो वेति पाणिने र्नामान्तरे। जटाधरस्य मतेन शालोत्तरीयोऽप्यस्य नामान्तरम्। शालातुरे भव इत्यणा शालातुरीयः। तथा च गणरत्नमहोदधौ वर्धमानः—शलातुरीयशकटाङ्गज-चन्द्रगोमीति। जटाधर आह—"शालातुरग्रामवासिनि पाणिनिमुनौ शाला-तुरीयः" इति। 'सलातुरग्रामाभिजनः शलङ्कतनयः" इति शिवदत्तस्य मतम् (महाभाष्यम्—१४ पृः—निः साः)। सम्भाव्यते यत् "तूदीशलातुर……" (४।२।९४) इत्यादिसूत्रमवलोक्य समुपस्थितः स एवंविधे सिद्धान्ते।

अतो हि पाणिनेः पितामहो देवलमुनिः, मातामहो दक्षमुनिः, जनकः शलङ्कमुनिः, माता दाक्षीदेवी, मातुलो दाक्षिमुनिः, मातुलपुत्रश्च रसाचार्य्यो दाक्षायणो व्याड़ि र्यो व्याकरणे लक्षश्लोकात्मकं संग्रहग्रन्थं साहित्ये च

'बलरामचरित'नामकं विपुलं काव्यमेकं प्रणिनाय ( समुद्रगुप्तस्य कृष्णचरिते स्थितो मुनिवर्णनाप्रसङ्गो द्रष्टव्यः )। श्लोकवार्त्तिककारव्याघ्रभूतिः शिक्षा-प्रवक्ता त्रिनयनमुनिश्चास्य प्रियशिष्यावास्ताम्।

जाम्बवतीविजयकाव्यकृत् पाणिनिः कश्चिदेकः स्वतन्त्रः पुरुषः। न हि स नवमखृष्टशताब्दीतः पूर्व्वभवः। अतो ह्यष्टाध्यायीकृतः पाणिनेः प्रायशो द्विसहस्रवर्षैरर्व्वाचीने काले स आविरासीत्।

७—खृष्टपूर्व्वशताब्द्याम्

कुणिगर्गः—पाणिनेः प्रथमो वृत्तिकारः। वृत्तिरियं कुणिवृत्तिनाम्ना प्रसिद्धाऽऽसीत्। पतञ्जलिना बहुत्रास्य प्रामाण्यं स्वीकृतम्।

६—खृष्टपूर्व्वशताब्द्याम्

महावीरो वर्द्धमानः—जैनानां चरमस्तीर्थंकरः। अयं ५९७ खृष्ट-पूर्व्वाब्दे जातः, ५२८ खृष्टपूर्व्वाब्दे च तिरोदधे।

६—५ खृष्टपूर्व्वशताब्द्योः

सिद्धार्थो बुद्धदेवो वा—सिंहगुप्तो मायादेव्याममजीजनत्। अयं हि ५६७ खृष्टपूर्व्वाब्दे मतान्तरेण ५५७ खृष्टपूर्व्वाब्दे वा जातः, ५२७ खृष्टपूर्व्वाब्दे खारवेललिपिमतेन ५४३ खृष्टपूर्व्वाब्दे वा बुद्धतत्त्वं समधिगम्य ४८७ खृष्टपूर्व्वाब्दे मतान्तरेण ४७७ खृष्टपूर्व्वाब्दे वा निर्व्वाणं लेभे।

उदयनः—वत्सदेशस्य महाराजः। वासवदत्ताभार्य्यः। बुद्धसखः। नरवाहनबोधेः पिता। पाण्डवकुमारस्यार्जुनस्य वंशधरः। जीवितस्य पुरुषार्थकर्त्तव्यता नावशिष्टेति मन्यमानौ ४६० खृष्टपूर्व्वाब्दे महाराज उदयनो राज्ञी वासवदत्ता च भृगुपतनेन प्राणांस्तत्यजतुः।

नरवाहनबोधिः—उदयनपुत्रो रसाचार्य्यो नरवाहनसिद्धान्तप्रणेता। वृत्तान्तोऽस्य ४-५ खृष्टशताब्दीयबुद्धस्वामिकृते बृहत्कथाश्लोकसंग्रहे समुप-निबद्धो वर्त्तते।

गोमुखः—पूर्व्वं नरवाहनस्य नर्म्मसचिवस्ततश्च तस्य मन्त्री । रसाचार्य्यः। गोमुखसिद्धान्तनामकरसग्रन्थकृत् ।

बिम्बिसारः—मगधस्य महाराजः, अभयस्य जनकः, बौद्धजीवकवैद्यस्य पिता पितामहो वा ।

भिक्षुकात्रेयः—तक्षशिलायाः प्रधानाध्यापकः, प्रसिद्धश्चिकित्सकः शस्त्रोपचारकः, बौद्धश्च । एष हि बौद्धजीवकस्य गुरुः । पाश्चात्त्यपण्डिता इममत्रिपुत्रो महर्षिरात्रेय इति मत्वा विभ्रान्ता एव ।

जीवकः—बौद्धवैद्यः, महाराजबिम्बिसारस्य पुत्रो बिम्बिसारतनयस्याभयस्य पुत्रो वा, भिक्षुकात्रेयस्य शिष्यो बालचिकित्सादक्षश्च । शुभचन्द्रप्रणीते जीवकचरिते वृत्तान्तोऽस्य समुपनिबद्धो वर्त्तते । वृद्धजीवकः स्थविरजीवको वा कश्चिदेकः सुप्राचीनवैद्यागमिकमुनिः कश्यपमुनेः शिष्यश्च ।

महाकाश्यपो बौद्धकनकमुनिश्च प्रथमं सङ्गीते त्रिपिटकस्थबौद्धमतं प्रचारयामासतुः । अनेन हिन्दुधर्म्मस्य महदनिष्टं साधितम् ।

वर्षोपाध्यायः—उपवर्षस्य ज्येष्ठो भ्राता वाक्यकार-कात्यायनस्य गुरुश्च ।

उपवर्षः—उपकोशायाः पिता वाक्यकारकात्यायनस्य श्वशुरः । तेन ह्युभयमीमांसावृत्ती प्रणीय बौद्धधर्म्मप्रचारप्रतिबन्धत्वेन हिन्दुधर्म्मस्य प्रतिप्रचारः समारब्धः । अस्य हि मार्गमनुसृत्य वात्स्यायन-शबरस्वामि-प्रशस्तपादोद्द्योतकरभारद्वाज-कुमारिलभट्ट-शङ्कराचार्य्यादयो मनीषिणो बौद्धमतखण्डने बद्धपरिकरा बभूवुः । उपवर्षं बोधायनत्वेन केचिद् मन्यन्ते । परं तु सनिश्चयं वक्तुमिदं न शक्यते ।

५-४ खृष्टपूर्व्वशताब्द्योः

वररुचिः कात्यायनः—वररुचिरित्यस्योपाधिः । एष हि वाक्यकारः पाणिनिवार्त्तिककार इत्यर्थः । उपवर्षस्य जामाता, उपकोशाभार्य्यो वर्षस्य शिष्यश्च ।

वात्स्यायनः—न्यायभाष्यं प्रणीय वौद्धधर्म्मोत्सादनार्थमनेन हिन्दु-धर्म्मप्रचारः कृतः। चाणक्यः कौटिल्यः पद्मिलस्वामी चेत्यस्य नामान्तराणि। विषयेऽस्मिन् हैमकोषादिग्रन्था द्रष्टव्याः। "धर्म्मार्थकामाः सममेव सेव्याः" इति न्यायानुसारतो वौद्धधर्म्मप्रतिकूलं परं तु वर्णाश्रमधर्म्मानुमोदितं प्रवृत्तिमार्गं प्रकटीकुर्व्वता धर्म्मविप्लवाच्च हिन्दुसमाजं रक्षितुमनेन कामसूत्रं प्राणायि।

## ४-३ खृष्टपूर्व्वशताब्द्योः

चन्द्रगुप्तविन्दुसाराशोकानां राज्यकालाः। चन्द्रगुप्ते दिवं गते विन्दुसारः सिंहासनमारुरोह। तस्य सभायां वत्सदेशीयो ज्योतिर्व्विच्छन्दः-सूत्रकारः पिङ्गलनागाचार्य्यः प्रधानसभापण्डितो बभूव। तस्मिन्नेव समयेऽपरेषु भ्रातृषु विद्यमानेष्वपि गणनयाऽशोकस्य राज्यप्राप्तिविषये भविष्यत्कथनात् २७४ खृष्टपूर्व्वाब्दे राज्याधिष्ठितेनाशोकेन पिङ्गलाचार्य्य 'आर्य्यभट्ट' इत्युपाधिना भूषितोऽभवत्। अयं हि प्रथम आर्य्यभट्टः। परवर्त्तिनि काले ज्योतिर्विद एनमार्य्यभट्टमाहुः। आर्य्यभट्टीयनाम्ना सम्प्रति प्रचरतो ग्रन्थस्य प्रथमे खण्डे गीतिच्छन्दसा रचिता ये दश श्लोका दृश्यन्ते ते ह्यनेनैव विरचिता इत्यनुमीयते। केषाञ्चिन्मते एष हि सूर्य्य-सिद्धान्तकारः। आर्य्यसिद्धान्तकार आर्य्यभट्टः ४७६ खृष्टाब्दे जन्म लेभे।

## ३-२ खृष्टपूर्व्वशताब्द्योः

पुष्पमित्रः—मौर्य्यवंशीयो महाराजो बृहद्रथस्य सेनापतिः। एकदा स सेनानां शस्त्राभ्यासप्रदर्शनाय स्वस्वामिनमाहूय सहसा तं शाठ्य न जघान। तदुक्तं वाणभट्टेन हर्षचरिते—"प्रज्ञादुर्व्वलं च वलदर्शन-व्यपदेशदर्शिताशेषसैन्यः सेनानीरनार्य्यो मौर्य्यं बृहद्रथं पिपेष पुष्पमित्रः"

इति ( ६ उच्छ्वासः )। राजहननात् परं सिंहासनमारुह्य कलङ्कप्रक्षालनाय पतञ्जलिमुनेराध्यर्द्येण हयमेधयज्ञोऽनेन सम्पादितः।

पतञ्जलिः—महाभाष्यप्रणेता। एष चरकवार्त्तिकं सिद्धान्तसारावलीं च वैद्यकग्रन्थद्वयं प्राणैषीत्। राजघस्य पुष्पमित्रस्य हयमेधयागेऽध्यर्द्युत्व-स्वीकरणं विवेकविरुद्धत्वेन नायममन्यत।

## २-१ खृष्टपूर्व्वशताब्द्योः

देवाचार्य्यापरपर्य्यायः शबरस्वामी—एष मीमांसाभाष्यं प्रणिनाय। पुत्रोऽस्य ५७ खृष्टपूर्व्वाब्दे शाक्यक्षत्रपानामुच्छेदसाधनपूर्व्वकम् उज्जयिनीराजो भूत्वा विक्रमादित्येत्युपाधिं जग्राह। अयं हि प्रथमो विक्रमादित्यः। अतो हि ५७ खृष्टपूर्व्वाब्दोऽधुनापि विक्रमाब्दत्वेन प्रचलति। अस्य सभायां वराहतनयेन प्रथमवराहमिहिरेण बृहत्संहिताया बीजरोपणं समारब्धमिति किंवदन्ती वर्त्तते। वर्त्तमानकालस्य प्रतिसंस्कृता बृहत्संहिता ६ खृष्टशताब्दीया-दादित्यतनयाद्वराहमिहिरात् समधिगम्यतेऽस्माभिः।

ईश्वरकृष्णाचार्य्यः—कपिलवस्तु निकषा कनकपुरग्रामे सांख्यकारिका-परपर्य्याया कनकसप्ततिरनेन प्रणीता। ग्रन्थस्यास्य प्रथमवृत्तिकारो माठराचार्य्यः।

कनिष्कः—पुरुषपुरस्य विद्वत्प्रियः शककुषणाधिपति बौद्धभावापन्नश्च सम्राट्। अस्य सभा पण्डितभूयिष्ठाऽऽसीत्। एषोऽपि पण्डितान् जातिधर्म्मनिर्व्विशेषं पुपोष। रायोलपिण्डिदेशान्तर्गत'म्यानिक्याला'ख्य-ग्रामोद्धृतकनिष्कमुद्रायां श्रद्धधानानां प्राज्ञिकानां मतेन कनिष्कः ३२ खृष्टपूर्व्वाब्दवर्त्ती। परं त्वनेके पण्डिताः कनिष्कं १।२ खृष्टपूर्व्वशताब्दीय-त्वेन मन्यन्ते। ७८ खृष्टपूर्व्वाब्दे कनिष्कस्य राज्याभिषेकात् तत्कालतः शकाब्दारम्भोऽपि दृश्यते। अतस्तं १-२ खृष्टपूर्व्वशताब्द्यां वयं स्थापयामः।

१-२ खृष्टशताब्द्योः

कनिष्कः---पुरुषपुरस्य विद्वत्प्रियः शककुषणाधिपति बौद्धभावापन्नश्च सम्राट्। सभायामस्य वहवः पण्डिताः सम्मिलिता बभूवुः। ते च यथा, नागार्जुनबोधिः, कपिलवलनामकनवीनचरकः, कापिलवलनामकनवीनसुश्रुतः, कविरश्वघोष इत्यादयः। ७८ खृष्टाब्देऽयं सिंहासनमारुरोह। अतः खलु ७८ खृष्टाब्दः प्रथमशकाब्दत्वेन प्रसिद्धः।

नागार्जुनबोधिः—कनिष्कसभ्यो ब्राह्मणकुलसम्भवो भास्करापरपर्य्याय-राहुलभद्रस्य शिष्यो भूत्वा बौद्धधर्म्मे दीक्षितो बभूव। महाराजकनिष्का-दिष्टेनैतेन काश्मीरे बौद्धसङ्गीतिराहूता। नागार्जुनबोधि र्महायानहीन-यानानामकबौद्धसम्प्रदाययोः प्रतिष्ठाता। बौद्धदर्शनेऽस्य माध्यमिक-कारिकादिग्रन्थाः सुप्रसिद्धाः।

नवीनसुश्रुतः—प्राचीनं सुश्रुततन्त्रं प्रतिसंस्कृत्य वर्त्तमानसुश्रुतसंहितां प्रणिनाय। कापिलवलोऽस्य नाम। एष कपिलवलनामकनवीनचरकस्य पुत्रः। नागार्जुनस्याध्यादेशेण सुश्रुततन्त्रं प्रतिसंस्कृत्याऽयं सुश्रुतोपाधिं लेभे। ततोऽनेन चरकप्रतिसंस्कारः समारब्धोऽपि समाप्तिं नेतुं न शेके। अतश्चरकीयचिकित्सितस्थानस्थितत्रिंशाध्याये दृढ़बलाचार्य्येण लिखितं "तानेतान् कपिलबलः शेषान् दृढ़बलाऽकरोदि"ति।

नवीनचरकः—नागार्जुनस्याध्यादेशेण कपिलवलपण्डितश्चरकसंहिताया योग्यस्थाने पातञ्जलवार्त्तिकानां सन्निवेशपूर्व्वकं किञ्चित् किञ्चित् संस्कृत्य चरकोपाधिं लेभे। पुत्रोऽस्य कापिलवलश्चरकसंहितायाः कियतश्चनांशान् प्रतिसञ्चस्कार (दृढ़बलो द्रष्टव्यः)।

कविरश्वघोषः—कनिष्कसभ्यो ब्राह्मणकुलोद्भवोऽप्ययं भास्करापरनामक-राहुलभद्रस्य शिष्यत्वं स्वीकृत्य बौद्धधर्म्मे दीक्षितो बभूव। ततश्च स भदन्तोऽश्वघोष इति नाम्ना प्रसिद्धोऽभवत्। एष साकेतनगरे कस्यचिद्

ब्राह्मणस्यौरसेन तत्पत्न्यां सुवर्णाख्यायां जन्म लेभे। अस्य पितृदत्तं नाम पुण्यादित्य इति। कामसूत्रादिकृतो वात्स्यायनस्य प्रवृत्तिमार्गप्रचाराभिप्रायमुपलभ्य तत्प्रतिकारार्थं बौद्धधर्म्मस्थितनिवृत्तिमार्गस्य प्रतिप्रचारं विधातुं सौन्दरन्दं बुद्धचरितञ्चेति काव्यद्वयं प्राणैषीत्। सौन्दरनन्दस्याष्टादशसर्गान्ते स्पष्टमेव तेनोक्तम्—

"इत्येषा व्युपशान्तये न रतये मोक्षार्थगर्भाकृतिः
श्रोतॄणां ग्रहणार्थमन्यमनसां काव्योपचारात् कृता।
यन्मोक्षात् कृतमन्यदत्र हि मया तत् काव्यधर्म्मात् कृतं
पातुं तिक्तमिवौषधं मधुयुतं हृद्यं कथं स्यादिति॥" इति।

ग्रन्थान्तेऽश्वघोष आत्मानं महाकविं महावादिनञ्चोदघोषयत्।

गुणाढ्यः—प्रतिष्ठानाधिपतेः सातवाहनस्य मन्त्री बृहत्कथाप्रणेता च। बृहत्कथामधिकृत्य दण्डिनोक्तम्—"भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथामि"ति। कथाग्रन्थमतेन पुष्पदन्तमित्रो मलयवान् गौरीदेव्याः शापेन पैठाननगरे गुणाढ्यरूपेण जन्म लेभे।

शर्व्ववर्म्माचार्य्यः—एष पैठाने कलापसूत्राणि प्रणिनाय। शर्व्ववर्म्माचार्य्यो वानप्रस्थाश्रमग्रहणानन्तरं स्कन्दस्वामीति नाम परिगृह्य निरुक्तभाष्यं व्याचख्य इति प्रवादः श्रूयते। प्रमाणसापेक्षस्त्वयं मतवादः।

शालिवाहनः—राजा, वटयक्षिण्याः शिष्यः, नागार्जुनस्य सतीर्थ्यः, रसार्णवनामकरसग्रन्थकृच्च।

माठराचार्य्यः—एष सांख्यकारिकावृत्तिं प्राणैषीत्।

## २—खृष्टशताब्द्याम्

कापिलवलः—कपिलवलनामकनवीनचरकस्य पुत्रः। एष पितृसंस्कृतचरकसंहितायाः कियतश्चनांशान् प्रतिसञ्चस्कार। दृढ़बलाचार्य्येण समर्थित-

मेतत्। यतश्चिकित्सास्थानीयत्रिंशाध्याये स्पष्टं तेन लिखितम्—"तानेतान् कापिलबलः शेषान् दृढ़बलोऽकरोदि"ति।

वाग्भटः—सिंहगुप्तस्य जनकः प्रथमो वाग्भटः, शास्त्रनिष्ठो ब्राह्मणः, स्मार्त्तपण्डितः, वैद्यनिघण्टुकारो वाग्भटव्याकरणप्रणेता च। षष्ठखृष्टशताब्दीयभर्त्तृहरिप्रणीतभाष्यदीपिकास्थिते "हन्तेः कर्म्मण्युपष्टम्भात्..." इत्यादिश्लोके वाग्भटव्याकरणस्य प्रामाण्यमुल्लिखितम् ( शब्दशक्तिप्रकाशिकास्थितकारकप्रकरणस्य चरमो भागो द्रष्टव्यः )।

२-३ खृष्टशताब्द्योः

कनिष्कात् परं हुविष्कजुविष्कवसिष्कानां राज्यकालाः।

सिंहगुप्तः—प्रथमवाग्भटस्य पुत्रो द्वितीयवाग्भटस्य जनको वैद्यकशास्त्राभिज्ञश्च।

वाग्भटो द्वितीयः—प्रथमवाग्भटस्य पौत्रः सिंहगुप्तस्य पुत्रो बौद्धावलोकितस्य पितृदेवस्य च शिष्यः संग्रहहृदयादिप्रणेता चरकादिवृद्धत्रय्यामन्यतमत्वाद् वृद्धवाग्भटनाम्ना प्रसिद्धो धनातिशयाद् विद्यातिशयाच्च राजर्षिः सिन्धुदेशीयचरकमुनित्वेन ख्यातः कनिष्कपौत्रशककुषाणाधिपते र्वासुष्कापरपर्य्यायवासुदेवस्यान्तरङ्गवैद्यश्च।

वासुदेवः—शककुषाणाधिपति र्वासुष्कः कनिष्कपौत्रो रसशास्त्रज्ञो वासुदेवसंहितानामकरसग्रन्थकृच्च।

विशारदः—विशारदसिद्धान्तकृत्।

हरीश्वरः—त्रिगर्त्तदेशस्य ( वर्त्तमानजालन्धरस्य ) नृपतिः, रसाचार्य्यो हरीश्वरनामकरसतन्त्रकृच्च।

शूद्रकः—विदिशायां महाराजः शूद्रको मृच्छकटिकं प्रणिनाय। विषयेऽस्मिन् प्राज्ञिकानां वैमत्यमस्ति। आभीरराजपुत्रः शिवदत्त एव

शूद्रक इति कना ( Konow )-महोदयो मन्यते । क्षीरस्वामी त्वाह—'शूद्रकस्त्वग्निमित्राख्यः' इति ( २।८।२ )।

कवि र्भासः—एष मध्यभारते स्वप्नवासवदत्तादीनि नाटकानि प्राणैषीत्। राजशेखरमतेन भासो धावको रजक इत्यर्थः। कविविमर्शे तेन लिखितम्—

"कारणं तु कवित्वस्य न सम्पन्नकुलीनता।
धावकोऽपि हि यद्भासः कवीनामग्रिमोऽभवत् ॥" इति।

भासनाटकेषु स्वप्नवासवदत्तमेव ( स्वप्नवासवदत्ता वा ) सर्व्वोत्कृष्टो ग्रन्थः। अत्र चास्ति राजशेखरवचनम्—

"भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्ताया दाहकोऽभून्न पावकः ॥" इति।

भासप्रणीता इतरे ग्रन्थाः प्रतिमानाटकाऽभिषेकनाटक-मध्यमव्यायोग-दूत-घटोत्कच-कर्णभारोरुभङ्ग-पञ्चरात्र-चारुदत्तादयः।

"चञ्चलचूड़ञ्चपलै र्वत्सकुलैः केलिपरम्।
ध्याय सखे स्मेरमुखं नन्दसुतं माणवकम् ॥" इति

श्लोको भासप्रणीतबालचरिते दृश्यते।

२-४ खृष्टशताब्द्योः

कापालिः कापालिकः कापाली वा—शककुषणाधिपतिः कनिष्कस्य वंशधरो वासुदेवस्य पुत्रः प्रकटावधूतः कन्दलायनस्य गुरू रसराजमहोदधि-प्रणेता द्वितीयवाग्भटस्य कनीयान् सामसमयिकः।

चन्द्रसेनः—महाराजो 'दिल्ली'-नगरे लौहस्तम्भप्रतिष्ठाता कालञ्जरदुर्ग-निर्म्माता च। एष चन्द्रसेनसिद्धान्तो रसचन्द्रोदयश्चेति रसग्रन्थद्वयं प्रणिनाय।

जयदेवो नागबोधिः—बौद्धपण्डितः। एष ईषत्तन्द्रापरनामकं रसाध्यायं प्राणैषीत्।

समुद्रगुप्तः—चन्द्रगुप्तस्य पुत्रः शकारिविक्रमादित्यचन्द्रगुप्तस्य जनकः कुमारगुप्तस्य पितामहः। एष कृष्णचरितकाव्ये रसाचार्य्यं व्याड़िमुनिं वर्णयामास।

प्रशस्तपादाचार्य्यः—वैशेषिकोपरि पदार्थधर्म्मसंग्रहनामकं भाष्यं प्रणीतवान्।

दिङ्नागो भदन्तः—कुन्दमालादिसाहित्यग्रन्थान् प्रमाणतत्त्वसमुच्चयादि-बौद्धदर्शनग्रन्थांश्च रचयामास।

४-६ खृष्टशताब्दीषु

समुद्रगुप्तात् परं तत्पुत्रस्य शकारिविक्रमादित्यद्वितीयचन्द्रगुप्तस्य राज्यकालः। तत्परं बालादित्यापरनामककुमारगुप्तस्य राज्यकालस्तत्परं स्कन्दगुप्तस्य राज्यकालः।

शकारिविक्रमादित्यस्य सभायां धन्वन्तरिप्रभृतिनवरत्नानां समावेशो-ऽभूदिति प्रसिद्धि वर्त्तते। पश्चिमवङ्गस्थितकर्णसोनायां नरेन्द्रगुप्तनामक-शशाङ्कराजस्य राज्यमासीत्। थानेश्वरे प्रभाकरवर्द्धनस्य राज्यं मालवे महाराजभर्त्तृहरे र्यशोधर्मस्य च राज्य आसन्।

धन्वन्तरिः—वैद्यो धन्वन्तरीयनिघण्टुकृद् विक्रमसभ्यः, ४-५ खृष्ट-शताब्दीयश्च।

क्षपणकः—सिद्धसेनगणिदिवाकरः, विक्रमसभ्यत्वेन विश्रुतः। न्याया-वतारनामकजैनदार्शनिकग्रन्थं कल्याणमन्दिरस्तोत्रञ्चैष प्राणैषीत्। अयं स्तुतिव्याजेन राजानं कञ्चित् कुरुचिपूर्णं श्लोकमेकं श्रावयामास। तच्छ्रुत्वा तात्कालिकैः पण्डितैरेष दिवाकरमातङ्ग इत्यभिहितः। अस्य श्लोकस्यैवं-रूपः पाठः श्रूयते—

"आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं
सम्प्रत्येव हि साऽम्बुराशिरशना जाया जयोद्भूतये।

पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा
युक्तं नाम समस्तशास्त्रविदुषां लोकेश्वराणामिदम् ॥" इति।

अश्लील लज्जाव्यञ्जकं घृणाव्यञ्जकं वा भवति। अस्य तूभयव्यञ्जकत्वात् पण्डितैरेष क्षपणको मातङ्गत्वेनाभिहितः।

अमरसिंहः—अमरव्याकरणकृत् कोषकृच्च। कविकल्पद्रुमस्य प्रारम्भे वोपदेव एनम् आदिशाब्दिकानामन्यतमत्वेन निर्द्दिदेश। कोषो ह्यस्योत्कृष्टो ग्रन्थः। भाष्यापहरणपूर्व्वकं व्याकरणमेतत् प्रणीतमिति श्रूयते। सम्भाव्यते यत् कारणादस्मादस्य व्याकरणस्यात्यन्तविलोपः सञ्जात इति। उक्तिश्च वर्त्तते प्राचीनानाम्

"अमरसिंहो हि पापीयान् सर्व्वं भाष्यमचूचुरदि"ति।

शङ्कुः शङ्कुको वा—तात्कालिकः कश्चित् पण्डितः। भुवनाभ्युदय-प्रणेता शङ्कुः शकारिविक्रमादित्याद् महता कालेनार्व्वाचीनः। एष नवमखृष्टशताब्दीयः।

"धन्वन्तरिक्षपणकामरसिंहशङ्कुः......" इत्यादिश्लोको न खलु चतुर्द्दशखृष्टशताब्दीवर्त्तिना ज्योतिर्व्विदाभरणकृता कालिदासेन विरचितो यतः १०-११ खृष्टशताब्दीयभोजराजस्य समयेऽपि श्लोकोऽयं प्रचलित आसीत्। प्राचीनश्लोकमिमं दृष्ट्वा कालिदासादीनां समकालिकत्वेन नवीनशङ्कोः कालनिर्द्देशो न सम्भाव्यते।

वेतालभट्टः—विक्रमसभ्यो नीतिप्रदीपकृच्च। एष वेतालपञ्चविंशति-प्रणेता वा न वेत्यधुनाऽप्यनुसन्धेयम्। जम्भलदत्तः शिवदासो वा वेताल-पञ्चविंशतेर्न हि मूलकारः। एतौ संग्रहकारौ।

घटकर्परः—विक्रमसभ्यो घटकर्परकाव्यकृच्च। १७-१८ खृष्टशताब्दीयः कविराजो भरतमल्लिकोऽस्य टीकाकारः।

कालिदासः—विश्वविश्रुतः कविः। अश्वघोषभदन्त-भासकविभ्यां परवर्त्तित्वादयमेनयोः प्रभावेण कथञ्चिदुपकृत इति मन्यते। सम्भाव्यते यत् कालिदासो दिङ्नागभदन्तस्य प्रतिपक्ष आसीदिति। पूर्व्वमेघस्य चतुर्द्दश-श्लोकादनुमेयमेतत्। अनुमानेऽस्मिन् मल्लिनाथस्यानुकूल्यमस्ति। कालिदासस्य भार्य्या कमलादेवी मतान्तरेण वासन्तीदेवी वा।

वराहमिहिरः—एष आदित्यदासस्य पुत्रः। एष काम्पिल्यनगरे ५०५ खृष्टाब्दे जातः ५८७ खृष्टाब्दे तिरोहितश्च। एवं सति नवरत्न-सभायामस्य समुपस्थानं न हि सम्भवति। अस्य बृहत्संहिताया मूलग्रन्थं संस्कृत्य कश्चिज्ज्योतिर्विद् वराहमिहिरनाम्ना ख्यातो बभूव। किमयं नवरत्नानामन्यतमः ?

वररुचिः—प्राकृतप्रकाशकारः कलापस्य चैत्रकुटिवृत्तिप्रणेता च। एष पञ्चमखृष्टशताब्दीवर्त्ती।

वैद्यवाचस्पतिः – शब्दार्णवकोषकृत्।

बुद्धस्वामी—बृहत्कथाश्लोकसंग्रहकृत्। ग्रन्थेऽस्मिन् नरवाहनबोधे विवरणं दृश्यते।

भारविः—किरातार्जुनीयकाव्यप्रणेता जगद्विश्रुतः कविः। "कर्त्रभिप्राये क्रियाफले" (१।३।७२) इत्यात्मनेपदं पाणिनिना विहितम्। "शेषात् कर्त्तरि परस्मैपदम्" [ १।३।७८ ] इति सूत्रेणाकर्त्रभिप्राये परस्मैपदप्रयोगः विहितः। नियमस्यास्य व्यतिक्रमोऽपि दृश्यते। फलवति कर्त्तरि परस्मैपद-स्योदाहरणं यथा—

"एकोऽपि कर्म्मकर्त्ता चेदनेके फलभागिनः।
तदा परस्मै विज्ञेयमिति भागुरिभाषितम्॥" इति।

अफलवति कर्त्तरि पुनरात्मनेपदस्योहरणं दर्शयितुं वैयाकरणरुच्यते—"महाकविप्रयोगश्च दृश्यते, यथाह भारविः "तव हे दर्शनं किं न धत्ते"

इति ; न चेह दर्शनस्य कर्त्तुः फलमस्ति किं तर्हि ? द्रष्टुरि"ति ( कलापपञ्जी, आः ७६ )। उपचारस्वीकारेणैव पाणिनिः समर्थितो भवति। समुद्धृतः श्लोकांशः किरातार्जुनीयकाव्ये नोपलभ्यते ! यथास्माभि र्दृश्यते तथा "सन्दर्शनं लोकगुरारमोघः तवात्मयोनेरिव किं न धत्त" [ ३।७ ] इति श्लोकांशस्यैव विकृतिः कविनोपनिबद्धा। किरातस्य प्रथमटीकाकारो महाराजकुमारो दुर्व्विनीतो यो हि कवेरन्तरङ्गो वन्धुरासीत्। सुचिरमदर्शनाद् भारविणा तस्मै पत्रमेकं लिखितम्। तत्राधस्तनश्लोकोऽवर्त्तत—

"अद्याभूत् सुप्रभातं प्रथममनु हठात् पापमुक्तं शरीरं
प्रोत्तीर्णो दुःखसिन्धो र्हृदयमपि तथा त्वक् सुधासेकमाता।
चक्षुः स्निग्धाञ्जनाक्तं न च तदनुमितं यद् यदार्त्तं सुखं च
हस्ताद्यैरिन्द्रियै र्मे प्रियतम तव हे दर्शनं किं न धत्ते॥" इति।

---

भारवि र्नासिकं निकषाऽचलपुरवास्तव्यो नारायणस्वामिनः पुत्रो मनोरथस्य जनको वीरदत्तस्य पितामहो दण्डिनः प्रपितामहः। पाणदेवोऽस्य लौकिकं नाम। एष काञ्च्यां महाराजसिंहविष्णुवर्म्मणः सभापण्डित आसीत्। भारवेः पितृदत्तं नाम हि दामोदरः ( अवन्तिसुन्दरीकथा द्रष्टव्या )।

विप्रचण्डाचार्य्यः—सुश्रुतव्याख्याप्रणेता।

भर्त्तृहरिः प्रथमः—मालवेश्वरो वैराग्यशतकादिप्रणेता च। राजावल्यामस्य विवरणमुपलभ्यते।

यशोधर्म्मा विक्रमादित्यः—भर्त्तृहरे र्भ्राता। भर्त्तृहरेः सन्न्यासग्रहणानन्तरमेष सिंहासनमारुरोह।

शशाङ्को नरेन्द्रगुप्तो वा—गौड़ेश्वरः। एष प्रभाकरवर्द्धनं जघान। भट्टारहरिचन्द्रस्याश्रयः।

६-७ खृष्टशताब्द्योः

भट्टारो हरिचन्द्रः—चरकटीकां भट्टारसंहिताञ्च प्रणीय खरनादतन्त्रं प्रतिसञ्चस्कार। विश्वप्रकाशकृद् महेश्वरवैद्योऽस्य वंशधरः। बाणभट्टो हरिचन्द्रं प्रशशंस। अयं हि धर्म्मशर्म्माभ्युदयनाटककृत्।

भर्त्तृहरि द्वितीयः—वाक्यपदीय-भाष्यदीपिका-प्रणेता। स्वग्रन्थोत्कर्षं समधिगम्य सोच्छ्वासं तेनोक्तम्—

"अहो भाष्यमहो भाष्यमहो भाष्यमहो वयम्।
अदृष्ट्वा मां गतः स्वर्गमकृतार्थः पतञ्जलिः॥ इति।

मुनिं प्रतीदृशप्रगल्भताप्रदर्शनाद् ब्राह्मणसमाजे ग्रन्थोऽयं चिरमनादृत आसीत्। भाष्यदीपिका भारतभूमे र्निर्व्वासिताऽधुना जार्म्मानदेशेऽवतिष्ठते। अधुनाप्यस्य कियांश्चनांशो दृश्यते। इचिं ( I-Tsing )-महोदयमतेन ६५०-६५१ खृष्टाब्दयो र्मध्येऽयं तनुं तत्याज।

बाणभट्टः—हर्षचरित-कादम्बरी-प्रणेता। एष महाराजहर्षवर्द्धनस्य सभापण्डित आसीत्। हर्षचरितमस्य प्रथमो ग्रन्थः कादम्बरी त्वन्तिमो ग्रन्थः। बाणभट्टः कादम्बर्य्याः सम्पूर्णतां विधातुं न शशाक। अतस्तस्य पुत्रो भूषणबाणभट्टो गुणाढ्यकृतबृहत्कथामवलम्ब्य ग्रन्थस्य न्यूनतां पूरयामास। कादम्बरी कथाजातीयो ग्रन्थविशेषः।

सुबन्धुः—वासवदत्ताप्रणेता। वासवदत्ता श्लेषप्रधानाख्यायिका। अस्यां ग्रन्थकृता न्यायवार्त्तिककारोद्द्योतकरो दण्डिप्रणीतच्छन्दोविचिति-श्चोल्लिखितौ। बाणभट्टेन हर्षचरितारम्भे वासवदत्तां प्रशंसितुमुक्तम्—

'कवीनामगलद्दर्पो नूनं वासवदत्तया'। इति।

राघवपाण्डवीयकाव्ये लिखितमस्ति—

"सुबन्धु र्बाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा॥" ( १।४१ ) इति।

८-९ खृष्टशताब्दीयः कविराज एव राघवपाण्डवीयस्य प्रणेता।

दण्डी—काव्यादर्श-दशकुमारचरितादिप्रणेता ।

उद्द्योतकरो भारद्वाजः—एष थानेश्वरे न्यायवार्त्तिकं प्रणिनाय ;

मयूरः कविः—सूर्य्यशतकादिप्रणेता ।

माघः—शिशुपालवधकाव्यकृत् सुप्रभदेवस्य पौत्रः श्रीदत्तकसर्व्वाश्रयस्य पुत्रः । अस्य सम्पूर्णं नाम घण्टामाघः ( शि० व० ४।२० ) इति ।

६-७ खृष्टशताब्द्योः

भर्त्तृहरिस्तृतीयः—सौराष्ट्रान्तर्गतवलभीनगरस्य नृपतेः श्रीधरसेनस्य सभापण्डितः । सप्तमखृष्टशताब्द्या स्तृतीयपादेऽनेन भट्टिकाव्यं विरचितम् ।

व्याड़िपण्डितः—भैषज्यतत्त्वकृत् । आल्बेरुणि ( Alberuni )-प्रणीते इण्डिया ( India )-नामकग्रन्थेऽस्योल्लेखो दृश्यते ।

धर्म्मविन्दुः—न्यायविन्दुकृद् बौद्धपण्डितः ।

७-८ खृष्टशताब्द्योः

दृढ़बलः—कापिलवलश्चरकसंहिताया यावत् प्रतिसञ्चस्कार, ततोऽवशिष्टांशोऽनेन प्रतिसंस्कृतः ; चिकित्सितस्थानीयत्रिंशाध्याये दृढ़बलेन स्वयमुक्तम्—

"तानेतान् कापिलबलः शेषान् दृढ़बलोऽकरोत्" । इति ।

प्रतिसंस्कारात् परं दृढ़बलेन चरकव्याख्या प्रणीता ।

गोविन्दभागवतः—रसशास्त्रादिषु प्रमाणपुरुषः, रसहृदयग्रन्थकृत्, रसप्रक्रियायां हैहयदेशीयमहाराजकामदेवस्य गुरुः, आध्यात्मिकविषये शङ्कराचार्य्यस्यापि गुरुः, गौड़पादाचार्य्यस्य शिष्यः, ताम्रलिप्तस्थितब्रह्मानन्दस्वामिनः सतीर्थ्यश्च । एष नवमखृष्टशताब्द्याः प्रारम्भे तिरोदधे । गोविन्दो विशिष्ट एको विद्वद्योगी चासीत् ।

माधवकरः—शिलाहृदवास्तव्य इन्दुकरतनयश्च । ७६५ खृष्टाब्दात् परं महाराजधर्म्मपालस्य राज्यकाले शिलाहृदो विद्रुमशिलानाम्ना ख्यातो

बभूव। माधवनिदानं रोगविनिश्चयो वाऽस्य यशःस्तम्भः। उक्तिश्च वर्त्तते—"निदाने माधवः श्रेष्ठः सूत्रस्थाने तु वाग्भटः"—इति। एतदुपरि मैत्रेयरक्षितकृतटीका वैद्यवाचस्पतिप्रणीतमातङ्कदर्पणं विजयश्रीकण्ठकृतमधुकोषादिव्याख्याग्रन्थाश्च विलसन्ति।

८ खृष्टशताब्द्यामारब्यदेशीयखालिफाहारुण-अल्-रशीदस्य निदेशेन "आल् आराबी मङ्का"चेत्याख्यसंस्कृताभिज्ञपण्डितद्वयेनारब्यभाषायां निदानमनूदितमभूत्। माधवनिदानेऽष्टाङ्गहृदयस्य बहवः श्लोकाः क्वचिदवैकल्येन क्वचिद्वोत्कर्षायेपत्परिवर्त्तनेन सह समुद्धृता दृश्यन्ते। माधवः सुकवीनामन्यतम आसीत्।

उग्रादित्यः—कल्याणसिद्धिप्रणेता। एष सप्तमाष्टमखृष्टशताब्दीयचालुक्यराजविष्णुवर्द्धनस्य सभायामवतिष्ठते स्म।

महीधरः—योगशतोपरि "विश्ववल्लभा"-नामकटीकाकृत्। अहिच्छत्रवास्तव्यो ह्ययम्। रोहिलखण्डस्थितवेरिलिनामकनगरात् पश्चिमायामवस्थितोऽयमहिच्छत्रग्रामः। बालतन्त्रादिकृत् कल्याणभट्टोऽस्य पुत्रः। ७२२ खृष्टाब्दे कल्याणभट्टस्य बालतन्त्रप्रणयनं समाप्तिमगमत्।

कुमारिलभट्टः—तन्त्रवार्त्तिकादिप्रणेता।

शङ्कराचार्य्यः—शारीरकभाष्यादिकृत्। बालगङ्गाधरतिलकमहोदयमतेन ६८० खृष्टाब्दात् ७२० खृष्टाब्दपर्य्यन्तोऽस्य जीवितसमय आसीत्। ऐतिहासिकैः पुन र्मतवादोऽयं प्रत्यादिश्यते। तेषां मतेनैष ७-८ खृष्टाब्दे समुत्पन्नः ८२० खृष्टाब्दे तिरोहितश्च।

हारुण-अल्-रशीदः—-आरब्यदेशीयखालिफाख्यधर्म्मरक्षकनृपतिर्माधवनिदानानुवादमकारयत्।

रविगुप्तः—सर्व्वदण्डनायकः सिद्धसारकृद् विशिष्टबौद्धवैद्यश्च। न्यायमञ्जर्य्यां नवमखृष्टशताब्दीयजयन्तभट्टेन नामग्राहमस्य मतवादः समुद्धृतः।

मन्यतेऽयं वङ्गीयशूरवंशजातस्य कस्यचिद् राज्ञो धर्म्माधिकरणे संश्लिष्ट आसीदिति।

स्वामिकुमारः स्वामिदासो वा—चरकपञ्जिकाप्रणेता। ८-९ खृष्टशताब्दीयत्वमस्यानुमानतः सिध्यति। नायं विविधकाव्यटीकाकृतो मल्लिनाथस्यात्मजः १५ खृष्टशताब्दीयः कुमारस्वामी।

कुमारदासः—जानकीहरणकाव्यप्रणेता सिंहलस्य बौद्धनृपतित्वेन ख्यातश्च। जनुषान्धोऽयमासीदिति श्रूयते। अस्य काव्यमधिकृत्य नवमखृष्टशताब्दीयेन राजशेखरेणोक्तम्—

"जानकीहरणं कर्त्तुं रघुवंशे स्थिते सति।
कविः कुमारदासश्च रावणश्च यदि क्षमः॥" इति।

'मास्म'शब्दस्य व्यस्तविपर्य्यस्तदूरस्थप्रयोगान् दर्शयितुं पाणिनीयेतरवैयाकरणौ जानकीहरणस्थितप्रयोगा उल्लिख्यन्ते—"जुगुप्सत स्मैनमदुष्टभावं मैवं भवानक्षतसाधुवृत्तः" इति। सिंहलदेशीयग्रन्थस्थितपाठोऽयं वैयाकरणानामुद्देश्यं साधयति। भारतीयग्रन्थे त्वेवंविधपाठो दृश्यते—

"मैवं भवानेनमदुष्टभावं जुगुप्सतां स्माक्षतसाधुवृत्तम्।
इतीव वाचो निगृहीतकण्ठैः प्राणैररुध्यन्त महर्षिसूनाः॥" इति।

अत्र 'मास्म'शब्दस्य व्यस्तदूरस्थप्रयोगौ दृश्येते। विपर्य्यस्तप्रयोगोऽस्य शर्व्ववर्म्मणा सम्मन्यते। विषयमिममधिकृत्य चैत्रकूटीवृत्तौ पञ्चमखृष्टशताब्दीयेन वररुचिनोक्तम्—"स्ममायोग इत्यकरणान्नेह द्वन्द्वः, न हि मास्मशब्दवत् स्ममाशब्दोऽप्यस्ति" (आ० २३ कविराजो द्रष्टव्यः) इति।

## ९-खृष्टशताब्द्याम्

भोजः—कान्यकुब्जाधिपतिः, वृद्धभोजः, वाचस्पतिमिश्रस्याश्रयः, राजशेखरशिष्यमहेन्द्रपालस्य पिता, राजवार्त्तिकयुक्तिदीपिकाप्रणेता च।

वाचस्पतिमिश्रः—षड्दर्शनटीकाकारः कान्यकुब्जाधिपतिवृद्धभोजस्य सभापण्डितः ।

नारायणदासः सिद्धः—वैष्णववैद्यकशास्त्रप्रणेता । श्रूयते यद् रसायनपादस्य प्रारम्भेऽनेन श्रीमद्भागवतस्याधस्तनश्लोकः सन्निवेशितः—

"निगमकल्पतरो र्गलितं फलं, शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥" इति ।

पादान्ते च वंशस्थविलच्छन्दसा स्वरचितः श्लोक एकः सन्निविष्टः—

"अविश्रमं यावदिदं शरीरकं
पतत्यवश्यं परिणामदुर्व्वहम् ।
किमौषधं पृच्छसि मूढ़ दुर्म्मते
निरामयं कृष्णरसायनं पिब ॥" इति ।

एष विष्णुशर्म्माणमनुसृत्य हितोपदेशं प्रणिनाय ।

सूर्य्यपण्डितः—रसभेषजकल्पकृत् ।

## ९-१० खृष्टशताब्द्योः

जेज्जटाचार्य्यः—ब्राह्मणः, भाष्यप्रदीपकृत्, कैयटस्य ( केज्जटस्य ) पिता, निरन्तरपदव्याख्यानामकचरकटीकाकृत् सुश्रुतस्य व्याख्याकारश्च ।

वृन्दकुण्डो वृन्दावनो वा—कुण्डवंशस्य वीजिपुरुषः (propositus), वृन्दमाधवापरपर्य्यायसटिप्पणसिद्धयोगवृन्दसिन्धुकृत् पदविनिश्चयप्रणेता च । एष माधवकरात् परवर्त्ती वैद्यशास्त्रे प्रमाणपुरुषश्च । योगशास्त्रीयवृत्तौ चानेन वृन्दावनेतिनाम गृहीतम् । वृन्दकुण्डप्रणीतसिद्धयोगस्योपरि श्रीकण्ठदत्तेन वृन्दटीका व्याख्याकुसुमावली वा प्रणीता ।

अच्युताचार्य्यः—आयुर्व्वेदसारकृत् । आयुर्व्वेदसारश्चक्रपाणिना समुल्लिखितः ।

दुर्गसिंहः—कलापस्य बौद्धटीकाकारः। कलापवृत्तिकारो दुर्गसिंहो हिन्दुरासीत्। ८-६ खृष्टशताब्दी हि तस्य समयः।

तीसटाचार्य्यः—चन्द्रटस्य पिता, चिकित्सासमुच्चय-चिकित्साकलिका-प्रणेता। चिकित्साकलिकाटीका चन्द्रटेन प्रणीता। तस्य ग्रन्थेऽगृहीत्वैव नाम तीसट आर्य्यशब्देन व्यपदिष्टः। सम्भाव्यते वैद्यत्रिंशत् तीसटकृतेति।

विन्दुनाथो बिन्दुभट्टो वा—विन्दुसारो बिन्दुसंग्रहो वेत्याख्यवैद्यक-ग्रन्थं रसपद्धतिनामकरसशास्त्रीयग्रन्थञ्चायं प्राणैषीत्। एष हठयोगी चासीत्। अस्य 'बन्धुत्रयविधानं' हठयोगविषयको ग्रन्थः। चन्द्रटेन चक्रपाणिना च नामग्राहमस्य वचनमुद्धृतम्।

हलायुधः—अभिधानरत्नमालाकृद् व्याकरणे कविरहस्यप्रणेता दाक्षिणात्यवास्तव्यश्च।

हारावलीकृत्—अज्ञातनामा ग्रन्थकारः। अस्य हारावल्याः परं पुरुषोत्तमेनापरैका हारावली प्रणीता।

## १० खृष्टशताब्द्याम्

इन्दुपण्डितः—अष्टाङ्गसंग्रहोपरि शशिलेखाटीकाकृत्। एष इन्दुमित्र-नाम्ना जिनेन्द्रबुद्धिकृतकाशिकान्यासोपरि चानुन्यासं प्रणिनाय।

केज्जटः कैयटो वा—जेज्जटस्य पुत्रो भाष्यप्रदीपप्रणेता च। भर्तृहरिकृत-भाष्यदीपिकाया बहवो विषया भाष्यप्रदीपे प्रविष्टाः।

चन्द्रटाचार्य्यः—तीसटस्य पुत्रस्तीसटीयचिकित्साकलिकाटीकाकारश्च। अनेन चरकसुश्रुतयोः कालदुष्टाः पाठाः संशोधिताः।

नरदत्तः—चक्रपाणे र्गुरु र्बृहत्तन्त्रप्रदीपस्तन्त्रप्रदीपो वेतिनामकवैद्यक-ग्रन्थकृच्च। मैत्रेयरक्षितस्य तन्त्रप्रदीपः पाणिनीयधातुविषयको ग्रन्थः। एष ११-१२ खृष्टशताब्दीय आसीत्।

भोजदेवः —धाराधिपतिः केज्जटस्याश्रयः। एष वैद्यकशास्त्रे हृदयोपरि "आयुर्वेदरसायन"-नामकटीकां सिद्धान्तसंग्रहादीन् ग्रन्थांश्च प्राणैषीत्। ज्योतिषस्मृतियोगव्याकरणालङ्कारशास्त्रेषु भोजदेवप्रणीता विविधा ग्रन्था विलसन्ति।

१०-११ खृष्टशताब्दीः

भास्करभट्टो भट्टभास्करो वा—भोजसभ्यः सुश्रुतपञ्जिका-रसेन्द्रभास्कर-प्रणेता च।

महीपालः—गौड़ाधिपतिर्ग यदासस्याश्रयो नयपालस्य जनकश्च।

गयदासमहाचार्य्यः—महीपालस्य वैद्यः। सुश्रुतोपरि बृहत्पञ्जिका न्यायचन्द्रिका वा चन्द्रिका वानेन प्रणीता। एष विशिष्ट एकः प्रमाणपुरुषः।

सोढ़लः—वैद्यकायस्थः शार्ङ्गदेवस्य पिता, 'गदनिग्रह'-नामकप्रामाणिक-ग्रन्थकृच्च।

११ खृष्टशताब्द्याम्

गोवर्द्धनदत्तः—चक्रपाणेः सखा, नरदत्तस्य शिष्यः, गुरुकृततन्त्रप्रदीपस्य टीकाकारश्चिकित्सालेशादिप्रणेता च।

चक्रपाणिदत्तः—नारायणदत्तस्य पुत्रः, नरदत्तस्य शिष्यः, भानुदत्तस्य भ्राता, महाराजनयपालस्य मन्त्री च। एष सुश्रुतोपरि "भानुमती"-टीकां चरकोपरि चायुर्वेददीपिकानाम्नीं टीकां प्रणिनाय। वैद्यशास्त्रेऽस्य नाना-ग्रन्था विद्यन्ते, ते यथा चिकित्सासंग्रहो द्रव्यगुणसंग्रहः सर्व्वसारसंग्रहो व्यग्रदरिद्रशुभङ्करो वैद्यकोष इत्यादयः। चिकित्सासंग्रह श्चक्रदत्तसंग्रहत्वेनापि प्रसिद्धः। अस्योपरि निश्चलकरेण रत्नप्रभाटीका शिवदासेन च 'तत्त्व-चन्द्रिका'नाम्नी व्याख्या प्रणीते। चक्रदत्तस्यापरे ग्रन्था मूले द्रष्टव्याः।

भानुदत्तः—चक्रदत्तस्य भ्राता 'कुमारभार्गवीय'नामकवैद्यकग्रन्थकृच्च। मूलं द्रष्टव्यम्।

भव्यदत्तदेवः—वैद्यप्रदीपादिकृल्लोहशास्त्रविशेषज्ञश्च ।

त्रिलोचनः—कलापपञ्जीकृद् गदाधरदासस्य पिता कायस्थवैद्यो वैद्य-कायस्थो वा वैद्यसारप्रणेता च ।

लोलिम्बराजः प्रथमः—'भेषजकल्प'नामकवैद्यग्रन्थप्रणेता, साहित्ये वैद्यविलासादिप्रणेता च । वैद्यविलासस्तु न हि वैद्यकग्रन्थः ।

सन्ध्याकरनन्दी—वैद्यो रामचरितकाव्यकृच्च । रामचरितं द्व्यर्थाश्रयं काव्यम् । ग्रन्थमिमं रचयित्वाऽयं 'कलिकालवाल्मीकि'रित्युपाधिभूषितोऽभवत् । सन्ध्याकरः सुप्रसिद्धवङ्गाधिपते रामपालस्य मन्त्रित्वमकरोत् ।

११-१२ खृष्टशताब्द्योः

अच्युतो गोणिकापुत्रः—सोमदेवस्य गुरुः । इमौ गुरुशिष्यौ सम्भूय रसेश्वरसिद्धान्तं प्रणीतवन्तौ ।

ईशानदेवः—त्रिपुराराज श्चरकमाधवनिदानयो ष्टीकाकारश्च ।

क्षीरस्वामी—अमरकोषस्य सुप्रसिद्धटीकाकारः ।

गदाधरः—कलापपञ्जीकृतस्त्रिलोचनस्य पुत्रो वैद्यप्रसारककृच्च ।

गयीसेनः ( गयिसेनो वा )—वङ्गीयविषपाड़ावास्तव्यः सुश्रुतव्याख्याकारश्च ।

वकुलकरः—निश्चलकरस्य ज्येष्ठतातः । अनेन 'सारोच्चय'नामकवैद्यकग्रन्थः प्रणीतः ।

वकुलेश्वरसेनः—चरकटीकाकृत् ।

भवदेवभट्टबालबलभीभुजङ्गः—सुप्रसिद्धः स्मार्त्तपण्डितः । अनेन वैद्यकशास्त्रे 'सन्निपातचन्द्रिका' प्रणीता ।

मैत्रेयरक्षितः—अस्य पितृदत्तं नाम मैत्रेयश्रीरक्षित इति । बौद्धपण्डितोऽयम् । माधवनिदानस्य व्याख्याकृत् । व्याकरणे 'धातुप्रदीप'नामकपाणिनीयधातुग्रन्थकृत् तन्त्रप्रदीपनामक-काशिकान्यासव्याख्याकृच्च ।

वङ्गसेनः—चरकसुश्रुतयो ष्टीकाकृत्। अयं गदाधरस्य तनयः। अनेन चिकित्सासारसंग्रहो वङ्गसेनसंग्रहश्च प्रणीतौ। चिकित्सासारसंग्रहश्चक्रदत्तीयचिकित्सासंग्रहस्य व्याख्याविशेषः। आत्रेयसंहिताया आभासमवलम्ब्य वङ्गसेनसंग्रहोऽनेन प्रणीतः।

वाभटाचार्य्यः—वाभटव्याकरणकृत्। शब्दशक्तिप्रकाशिकायां जगदीशेनोक्तम्—'प्राच्यैः पञ्चविधः प्रोक्तः समासो वाभटादिभिः' इति। न ह्येष भर्त्तृहरिप्रोक्तो वाग्भटः। एष वैद्यकशास्त्र वैद्यकसंहितां वाभटसंहितां वा शास्त्रदर्पणनिघण्टुं च प्रणिनाय।

हलायुधः—राज्ञो लक्ष्मणसेनस्य सभापण्डित ईशान-पशुपत्यो र्भ्राता। अनेन ब्राह्मणसर्व्वस्वादिग्रन्थाः प्रणीताः।

हेमचन्द्रसूरिः—शुक्लपटा जैनः। अनेन निघण्टुशषो हैमव्याकरणादिग्रन्थाश्च बहवः प्रणीताः।

## १२ खृष्टशताब्द्याम्

लक्ष्मणसेनः—गौड़ाधिपतिस्तत्पुत्रः केशवसेनः। केशवसेनस्य दौहित्रो मधुकोषादिकृद् विजयरक्षित एव। लक्ष्मणसभायां सुप्रसिद्धपञ्चरत्नव्यतिरिक्ता इतरे बहवः पण्डिता आसन्, ते यथा भाषावृत्तिकारः पुरुषोत्तमः, पशुपतिः, ईशान इत्यादयः। उमापतिधरो जयदेवः शरणदेवो गोवर्द्धनः धोयीश्चेति पञ्चरत्नम्। १११६ खृष्टाब्देऽस्य जन्मस्मारकत्वेन पित्रा बल्लालसेनेन लक्ष्मणसंवद्गणना प्रवर्त्तिताऽभूत्।

वाग्भटस्तृतीयः—अवैद्यकः, आलंकारिकपण्डितः, जैनकविः, नेमिनिर्व्वाणमहाकाव्यप्रणेता च।

सर्व्वानन्दवन्द्योपाध्यायः—आर्त्तिहरस्य पुत्रः, लक्ष्मणसेनस्य सभापण्डितः, अमरकोषोपरि टीकासर्व्वस्वप्रणेता च।

५९

सुकीरवैद्यः—माधवनिदानस्य टीकाकारः।

सुदान्तसेनः—चरकव्याख्याकृत्।

१२-१३ खृष्टशताब्द्योः

अरुणदत्तः—अष्टाङ्गहृदयोपरि 'सर्व्वाङ्गसुन्दर' टीकाप्रणेता।

केदारभट्टः—अयं छन्दःशास्त्रे वृत्तरत्नाकरं वैद्यकशास्त्रे वैद्यरत्नं च प्राणैषीत्।

केशवभिषक्—वोपदेवस्य पिता सिद्धमन्त्रनिघण्टुकृत्। अयं ब्राह्मण आसीत्।

निश्चलकरः—वकुलकरस्य भ्रातुष्पुत्रो विजयरक्षितस्य शिष्य श्चक्रदत्तीय-चिकित्सासंग्रहस्य 'रत्नप्रभा'नामकटीकाकारश्च। टीकैषा न मुद्रिता।

विजयरक्षितः—राज्ञः केशवसेनस्य दौहित्रः। माधवनिदानस्याश्मरी-प्रकरणपर्य्यन्तां मधुकोषटीकां प्रणीय स दिवं प्रयातः। तत स्तच्छिष्येण श्रीकण्ठदत्तेन ग्रन्थः समाप्तिं प्रापितः।

श्रीकण्ठदत्तः—विजयरक्षितस्य शिष्यः। अनेन मधुकोषः समाप्तिम-नायि। अनेन वृन्दकृतसिद्धयोगोपरि व्याख्याकुसुमावली प्रणीता। व्याख्याकुसुमावलीवर्जममृतवल्ली वैद्यहितोपदेशश्चानेन प्रणीतौ।

सोमदेवः—श्रीकृष्णशार्ङ्गधरस्य पिता, अच्युतगोणिकापुत्रस्य शिष्यो रसेन्द्रपरिभाषा-रसेन्द्रचूड़ामणिनामकग्रन्थद्वयप्रणेता च। श्रूयते हि यद् गुरुशिष्यौ सम्भूय रसेश्वरसिद्धान्तं सङ्कलितवन्ताविति। सोमदेवेन मूलरस-रत्नसमुचयस्य कालोपयोगिनं प्रतिसंस्कारं विधाय मूलग्रन्थकारद्वितीय-वाग्भटस्य नाम्ना रसरत्नसमुच्चयः प्रकाशितः। एष व्यापारो वैद्यकवृत्तान्तस्य ४२५-४३१ पृष्ठेषु व्याकृत आस्ते।

१३ खृष्टशताब्द्याम्

गोपालकृष्णभट्टः—रसेन्द्रसारसंग्रहकृत्। रामसेनकवीन्द्रमणिना

ग्रन्थस्यास्य टीकैका प्रणीता। टीकाया नामार्थबोधिकेति। रसेन्द्रसार-संग्रहो वङ्गीयवैद्यकसम्प्रदाये नितरां समादृत एव। रसेन्द्रचिन्तामणिकृद्-रामचन्द्रो गोपालकृष्णभट्टस्याधमर्णः।

डल्लणाचार्य्यः—सुश्रुतस्य 'निबन्धसंग्रह'नामकटीकाकृत्। एष सहनपालदेवस्य समितौ विरराज। अधुना टीकैषा सर्व्वजनप्रिया भवति।

नारायणभट्टः—कण्ठप्रकाश-वैद्यचिन्तामणिनामकवैद्यकग्रन्थद्वयप्रणेता। श्रीकण्ठकृतव्याख्याकुसुमावल्युपरि टिप्पणग्रन्थ एक स्तेन प्रणीतः। अनेन गीतगोविन्दस्य पद्यद्योतिनी टीका च विरचिता।

शार्ङ्गधरः प्रथमो विद्याहम्मीरमिश्रो वा—शार्ङ्गधरसंहिताकृत्, पर्य्याय-मञ्जरी धातुमारणञ्चेति वैद्यकग्रन्थद्वयस्य प्रणेता च। शार्ङ्गधरसंहिता तस्यैकः प्रामाणिको ग्रन्थः।

## १३-१४ खृष्टशताब्द्योः

वोपदेवः—केशवभिषजः पुत्रो ब्राह्मणो मुग्धबोधव्याकरणादिकृच्च। वैद्यकशास्त्रेऽस्य बहवो ग्रन्था विलसन्ति—यथा सिद्धमन्त्रप्रकाशटीका, शार्ङ्गधरसंहिताटीका, सटीकशतश्लोकी, हेमाद्रिकृत"शतश्लोकी"ग्रन्थोपरि चन्द्रिकाटीका, हृदयदीपनिघण्टुश्चेति। धर्म्मशास्त्रे श्रीमद्भागवतोपरि मुक्ताफलनामकनिबन्धग्रन्थं महिम्नःस्तोत्रटीकां हरिलीलादींश्चायं प्रणिनाय। व्याकरणेऽपि कविकल्पद्रुमकाव्यकामधेनुप्रभृतयः ग्रन्था वर्त्तन्ते।

महादेवपण्डितः—हिकमत्प्रकाशकृत्, हाकिमिचिकित्साकारश्च।

वाग्भटश्चतुर्थः—शब्दार्थचन्द्रिकागुणपाठादिटीकाकृत्।

वाचस्पतिवैद्यः—आतङ्कदर्पणनामकनिदानटीकाकृत्।

विश्वनाथकविराजः—औत्कलो ब्राह्मणः, अलंकारशास्त्रे साहित्यदर्पणं वैद्यशास्त्रे पथ्यापथ्यनिघण्टुश्चेतिग्रन्थद्वयं प्रणिनाय च।

अश्विनीकुमारो नित्यनाथो वा सिद्धनाथो वा—अश्विनीकुमारसंहिता-संस्कर्त्ता। अस्य ग्रन्थान्तराणि रसरत्नाकर-रसरत्नमाला-कामरत्न-योग-सारादीनि। रसशास्त्रेऽयं प्रामाणपुरुषः।

आशाधरः पण्डितः—शाकम्भरीं निकषाऽष्टाङ्गहृदयटीकाऽनेन प्राणायि।

त्रिविक्रमदेवभट्टः—लौहप्रदीपकृत्। अत्र लौहशब्दो धातुमात्रवचनः (A flood of light on the Science of certain metals including iron from therapeutic points of view.)

नरहरिपण्डितः—राजनिघण्टुनामकवैद्यककोषकृत्।

शार्ङ्गधरो द्वितीयः—शार्ङ्गधरसंहिताकृद् वैद्यवल्लभापरनामकज्वर-त्रिशत्या ( त्रिशत्या वा ) प्रणेता च। वैद्यवल्लभोपरि बह्वष्टीका अस्य जनप्रियत्वं प्रमापयन्ति।

हेमाद्रि र्मङ्किभट्टो वा— कामदेवस्यात्मजः, अष्टाङ्गहृदयोपरि "आयुर्व्वेद-रसायन"नामकटीकाकृच्च। स्मृतिशास्त्रेऽस्य चतुर्व्वर्गचिन्तामणिनामक-सुप्रसिद्धनिबन्धग्रन्थोऽस्ति। हेमाद्रि र्वोपदेवस्याश्रय आसीत्।

## १४ खृष्टशताब्द्याम्

काशोनाथो द्विवेदी—एष रसकल्पलतां चिकित्साक्रमवल्लीमजीर्णमञ्जरीं काशीनाथीं शार्ङ्गधरसंहितोपरि गूढ़ार्थदीपिकानाम्नीं टीकाञ्च प्राणैषीत्। ग्रन्थसमालोचना मूले द्रष्टव्या।

जयदेवः कविराजः—रसकल्पद्रुमो रसामृतञ्चति रसशास्त्रीग्रन्थद्वयस्य प्रणेता। १५ खृष्टशताब्दीयरामकृष्णभट्टप्रणीतरसेन्द्रकल्पद्रुमे रसामृत-स्योल्लेखदर्शनादस्य चतुर्द्दशखृष्टशताब्दीयत्वमुपपन्नं भवति।

विष्णुदेवपण्डितः—बुक्त्वदेवस्य राजवैद्यः सायणाचार्य्यस्य सम-

कालिकश्च। अस्य पुत्रेण रामेश्वरभट्टेन विष्णुदेवकृत-'रसराजलक्ष्मी'-नामकरसशास्त्रीयग्रन्थोपरि टीकैका प्रणीता।

वीरसिंहः—तोमरवंशीयनरपते र्देववर्म्मणः पुत्रः कमलसिंहस्य पौत्रश्च। अनेन वैद्यकशास्त्रे 'वीरसिंहावलोकनं' भक्तिशास्त्रे 'दुर्गाभक्तितरङ्गिणी' च प्रणीते। मैथिलकविविद्यापते र्दुर्गाभक्तितरङ्गिणी कश्चिदेकः स्वतन्त्रो ग्रन्थः।

माधवाचार्य्यः—बुक्कदेवस्य मन्त्री। तस्य भ्राता सायणाचार्य्यो राजनिदेशेन वेदभाष्यादीन् प्रणिनाय।

## १४-१५ खृष्टशताब्द्योः

गङ्गादाससूरिः—वैद्यसारसंग्रह-चिकित्सामृतकृद् गोपालदासस्य पुत्रः कृष्णदासस्य भ्राता छन्दोमञ्जरीप्रणेता च। भ्रातृसहयोगेनायं चिकित्सामृतं प्रतिसञ्चस्कार।

गोविन्दाचार्य्यः—रससार-सन्निपातमञ्जरीप्रणेता। अस्य वृत्तान्तो मूले द्रष्टव्यः।

नारायणदासकविराजः—चिकित्सापरिभाषाऽपरनामकवैद्यपरिभाषा वैद्यवल्लभोपरि सिद्धान्तसञ्चयनामकज्वरत्रिशतीटीका चेतिग्रन्थद्वयस्य प्रणेता।

मदनपालः—काष्ठानगरस्य राज्ञा मदनविनोदेन मदनपालेन वा निघण्टुः प्रणीतः। सङ्गीतशास्त्रेऽस्यानन्दसञ्जीवनं सुप्रसिद्धम्। स्मृतिशास्त्रेऽस्य 'मदनपारिजात'नामकनिबन्धग्रन्थः सर्व्वैराद्रियते।

माधवाचार्य्यो द्वितीयः—सायणाचार्य्यस्य पुत्रः सर्व्वदर्शनसंग्रहप्रणेता च। ग्रन्थेऽस्मिन् रसेश्वरदर्शनं समालोचितम्।

रुद्रधरभट्टः—सन्निपातकलिकाकृत्, शार्ङ्गधरसंहितोपरि 'गूढ़ान्तदीपिका'नामकटीकाकारश्च। शार्ङ्गधरसंहिताया गूढ़ार्थदीपिकाटीका तु काशीनाथकृता।

विश्वनाथसेनः—उत्कलस्थितगजपतिप्रतापरुद्रस्य सभापण्डितः। एष हि पथ्यापथ्यविनिश्चयकृच्चक्रदत्तीयसर्व्वसारसंग्रहोपरि 'सारसंग्रह'नामकटीकाकृच्च।

## १५ खृष्टशताब्द्याम्

खरे, चिन्तामणिशास्त्री वा—रसरत्नसमुच्चयस्य 'तरलार्थप्रकाशिनी'-टीकाकृत्।

ढुण्ढुकनाथः—'रसेन्द्रचिन्तामणि'-नामकरसशास्त्रीयग्रन्थप्रणेता।

रामकृष्णभट्टः—रसेन्द्रकल्पद्रुमकृत्, तदुपरि 'वैद्यरत्नाकर'टीकाकृच्च। सम्भाव्यते य'च्छृङ्गाररसोदय'प्रणेता रामकविरस्यात्मज इति।

रामराजो रामरायो या—विजयनगरे राज्ञः सदाशिवात् परमयं सिंहासनमारुरोह। वैद्यशास्त्रेऽयं रसरत्नप्रदीपं रसदीपिकां नाड़ीपरीक्षाञ्च प्रणिनाय।

विद्यापतिः—सुप्रसिद्धः कश्चिन्मैथिलो ब्राह्मणकविः। अनेन रचिता पदावली सर्व्वैराद्रियते। शान्तरक्षितस्य भावधारामवलम्ब्य 'पुरुषपरीक्षा' चानेन प्रणीता। भक्तिशास्त्रेऽस्य दुर्गाभक्तितरङ्गिणी वीरसिंहकृतदुर्गाभक्तितरङ्गिण्याः प्रशस्ततरा। एष मिथिलाधिपतिशिवसिंहादीनां सभापण्डित आसीत्।

स्थूलकायः कवि र्विद्यापतिः कृशकायो नैयायिको रघुनाथशिरोमणिश्च परस्परं मैत्रीसूत्रेणाबद्धावास्ताम्। एकदा विद्यापतिना समाहूतो रघुनाथो गृहस्यैकदेशे समुपविष्ट आसीत्। अभ्यागतानां सभाजने नियुक्तः कर्म्मकर्त्ता विद्यापतिरेकदेशस्थितं रघुनाथं न ददर्श। पश्चात्तं तत्र दृष्ट्वैव विद्यापतिनोक्तम्—

"प्राघुणो घुणवत् कोणे सूक्ष्मत्वान्नोपलक्षितः"। इति।

अस्य प्रतिवचने रघुनाथ आह—

"न हि स्थूलधियः पुंसः सूक्ष्मे दृष्टिः प्रजायते।" इति।

हेमाद्रिः—ईश्वरसूरेरात्मजः। अनेन १४६८ खृष्टाब्दे लक्ष्मणप्रकाशः प्रणीतः। अत्रायुर्व्वेदप्रवर्त्तकानां वहूनां मुनीनां नामान्युपलभ्यन्ते।

१५-१६ खृष्टशताब्द्योः

श्रीश्रीचैतन्यदेवः—१४८५ खृष्टशताब्द्यामाविर्भूय १५३३ खृष्टशताब्द्यां तिरोवभूव।

मथनसिंहः—मालभूमस्य राजवैद्यः। अस्य "रसनक्षत्रमालिका"-नामकरसग्रन्थ स्वच्छन्दभैरवरसस्य निर्म्माणपद्धति वैशब्द्येन प्रदर्शिता।

शिवदाससेनः—मालविकावास्तव्यः। शिवदासप्रणीता वहवो वैद्यक-ग्रन्था दृश्यन्ते ते यथा चरकतत्त्वदीपिका, अष्टाङ्गहृदयोपरि 'तत्त्ववोध'टीका, चक्रदत्तीयचिकित्सासंग्रहोपरि 'तत्त्वचन्द्रिका'-टीका, द्रव्यगुणसंग्रहस्य द्रव्यगुणसंग्रहटीका चेति।

१६ खृष्टशताब्द्याम्

तोदरमल्लः—तोदरानन्दकृत्। ग्रन्थेऽस्मिन्नायुर्व्वेदीया वहवो विषया आलोचिताः। तोदरमल्लश्चैष आकवरस्यार्थसचिव आसीत्।

भवनाथमिश्रो भावमिश्रो वा—अनेन भावप्रकाशो गुणरत्नमाला च प्रणीतौ। भावप्रकाशः सर्व्वैरादियते।

रामकृष्णवैद्यराजः—राज्ञः कनकसिंहस्य सभापण्डितः। एष हि कनकसिंहप्रकाशनामकवैद्यकग्रन्थप्रणेता।

रामचन्द्रदासगुहः—अयं रसचिन्तामणिं रसेन्द्रचिन्तामणिं वा, रस-रत्नाकरं रसपारिजातञ्च प्राणैषीत्। रसेन्द्रचिन्तामणि वङ्गीयवैद्यनिकाये-ऽत्यन्तम् आद्रियते। अस्य ग्रन्थस्य वहवष्टीका विलसन्ति। तासु १८ खृष्ट-शताब्दीयमीरजाफारस्य वैद्येन रामसेनकवीन्द्रमणिना प्रणीता टीका

समुल्लेखयोग्यैव। १३ खृष्टशताब्दीयगोपालकृष्णभट्टकृतरसेन्द्रसार-संग्रहस्याधमर्णस्थानीयो रसेन्द्रचिन्तामणिः।

शुभचन्द्रः—जीवकचरितप्रणेता। अत्र बौद्धजीवकस्य वृत्तान्त उपनिबद्धो वर्त्तते।

१६-१७ खृष्टशताब्द्योः

कविकण्ठहारः- राधाकान्तेत्यस्य नाम। 'रत्नावली'नामकवैद्यकग्रन्थकृत्त्रिलोचनस्य पुत्रः कलापसंप्रदायस्थित'चर्क्करीतरहस्य'प्रणेता च। अनेन प्रयोगरत्नाकरनामकवैद्यग्रन्थो विरचितः। अस्य वैद्यकुलपञ्जिकातो राधाकान्त इति नाम विज्ञायते।

त्रिमल्लभट्टः—वल्लभभट्टस्य पुत्रो रसप्रदीपप्रणेतुः शङ्करभट्टस्य जनकश्च। अस्य वैद्यकग्रन्थाः—योगतरङ्गिणी, रसदर्पणं, सुखलताकृतशतश्लोक्याष्टीका, द्रव्यगुणशतश्लोकी, पथ्यापथ्यनिघण्टुः, वृत्तमाणिक्यमाला, वैद्यचन्द्रोदय इत्यादयः। योगतरङ्गिण्याम् औदार्य्यपरिचयो ग्रन्थकारस्य, संवादश्च नानाप्राचीनग्रन्थकृतासुपलभ्येते। मूलं द्रष्टव्यम्।

लोलिम्बराजा द्वितीयः—वैद्यजीवननामकवैद्यकग्रन्थप्रणेता। उपाधिश्चास्य वैद्यराज इत्यासीत्। वैद्यजीवनमस्य सर्व्वैरत्यन्तमाद्रियते। अस्योपरि नानाटीकाः प्रणीताः। मूलं द्रष्टव्यम्।

सदानन्दयतिः। अद्वैतब्रह्मसिद्धिप्रणेता। अत्र नास्तिक्यवादः प्रत्यादिष्टा दृश्यते।

श्रीनिवासोऽवधानसरस्वती—'शतश्लोकी'-'शृङ्गारमञ्जरी'-प्रणेता।

१७ खृष्टशताब्द्याम्

कवीन्द्राचार्य्ययतिः—काश्यां क्षेत्रसन्न्यासोऽवलम्बितोऽनेनेति सम्भाव्यते। एको विशालो ग्रन्थागारोऽस्यासीत्। के के ग्रन्था स्तदा विद्यमाना आसन्नित्युपलभ्यतेऽस्य ग्रन्थसूचीतः। इयं ग्रन्थसूची Gaekwad's Sanskrit Series इत्यतो मुद्रिता जाता।

मथुरेशो मथुरेशविद्यालंकारश्च—मथुरेशः 'शब्दरत्नावली'नामककोष-प्रणेता, मथुरेशविद्यालंकारस्तु सौपद्मपण्डितः सारसुन्दरीनामकामर-टीकाप्रणेता च। कल्पद्रुकोषस्य भूमिकायां रामावतारशर्म्मणोक्तं यद् उभौ ग्रन्थकारावभिन्नौ। मतवादेऽस्मिन् सन्दिहानः पुनः श्रीहरप्रसादशास्त्रि-महोदयः।

राममाणिक्यसेनः—'प्रयोगचिन्तामणि'नामकसंग्रहग्रन्थकृत्। वैद्य-समाजे ग्रन्थोऽयं सादरं गृहीतः।

वंशीधरः—वैद्यरहस्यपद्धतिकृद् विद्यापते र्जनको वैद्यकुतूहलादिप्रणेता च। अस्यात्मजेन यिद्यापतिना वैद्यकुतूहलसंवलितवैद्यरहस्यपद्धतिः १६६८ खृष्टशताब्द्यां प्रकाशिता।

१७-१८ खृष्टशताब्द्योः

जैननारायणशेखरो नारायणशेखरजैनाचार्य्यो वा—१६७६ खृष्टाब्दे योगरत्नाकरनामकवैद्यकग्रन्थोऽनेन प्रणीतः। अस्यापरे ग्रन्थाः—वैद्यवृन्द-वैद्यामृत-ज्वरनिर्णयाख्यज्वरत्रिशतीटीकाप्रभृतयः।

भरतमल्लिकः—रत्नकौमुदी-सारकौमुदी-प्रभृतिवैद्यकग्रन्थकृत् द्रुतबोध-व्याकरणमहाकाव्यटीकाकृच्च। यशश्चन्द्रराय इत्यस्योपाधिः। मूलं द्रष्टव्यम्।

विद्यापतिः—वंशीधरस्य पुत्रश्चिकित्साञ्जनकृच्च। अनेन वंशीधरस्य वैद्यकुतूहलसंवलितवैद्यरहस्यपद्धतिः प्रकाशिता।

नागेशभट्टः—मञ्जूषाशेखरादिकृत्। नानाशास्त्रवित् पण्डितश्च।

माधव उपाध्यायः—आयुर्व्वेदप्रकाशादिकृत्।

१८ खृष्टशताब्द्याम्

आनन्दवर्म्मा—सारकौमुदीकृत्।

राजवल्लभः—एष वैद्यकग्रन्थत्रयं प्रणिनाय, ते च यथा द्रव्याभिधान-विषयक'रत्नमाला' 'राजवल्लभपर्य्यायमाला' 'राजवल्लभीयद्रव्यगुणो'

'द्रव्यगुणराजवल्लभो' वेति। राजवल्लभीयद्रव्यगुणोपरि नारायणदासकृता टीका वर्त्तते।

रामसेनः कवीन्द्रमणिः—मीरजाफारस्य राजवैद्यः। अनेन गोपालकृष्णभट्टकृतरसेन्द्रसारसंग्रहोपरि रसेन्द्रसारसंग्रहटीका प्रणीता। रामचन्द्रगुहकृतरसेन्द्रचिन्तामणिनामकग्रन्थस्यातीव जनप्रियत्वादस्योपरि 'अर्थबोधिका'-नाम्नी टीकाऽप्यनेन रचिता।

देवदत्तः—धातुरत्नमालाप्रणेता। समालोचना मूले द्रष्टव्या।

१८-१९ खृष्टशताब्द्योः

गङ्गाधरकविराजः—एष 'जल्पकल्पतरु'नाम्नीं चरकटीकां योगरत्नावलीम् आग्नेयायुर्वेदीयभाष्यादींश्च प्राणैषीत्। अस्य ग्रन्थाः शास्त्रान्तरे मूले च द्रष्टव्याः। एष प्रथितयशाश्चिकित्सक आसीत्। १७९८ खृष्टाब्दे यशोहरग्रामे गङ्गाधरो जातः, १८८५ खृष्टाब्दे च तिरोहितोऽभूत्।

धनपतिः—दिव्यरसेन्द्रसारनामकरसग्रन्थकृत्। एष धनपतिसूरिरिति नाम गृहीत्वा भाष्योत्कर्षदीपिकां प्रणिनीय। ग्रन्थोऽयं शाङ्करभाष्योपेतगीताया व्याख्याविशेषः। १७९९ खृष्टाब्दे माधवीयशंकरविजयस्य 'डिण्डिम'नाम्नी टीकाऽनेन रचिता।

नारायणदासवैद्यः—प्रयोगामृतप्रणेतु श्चिन्तामणे गुरुः। एष राजवल्लभीयद्रव्यगुणस्य टीकां, मधुमतीं नानौषधपरिच्छेदादिवैद्यकग्रन्थांश्च प्रणिनाय।

१९-२० खृष्टशताब्द्योः

हाराणचन्द्रचक्रवर्त्ती—सुश्रुतार्थसन्दीपनभाष्यप्रणेता। अयं हि पूर्वं राजशाहीवास्तव्यः परस्ताच्च कलिकातावास्तव्य आसीत्।

गोण्डालठाकुरसाहेबः—His Highness Sir Bhagat Singhee K. C. I. E., M. D.-महोदयेन 'A Short History of Aryan Medical Science'-नामकग्रन्थो प्रणीतः।

प्रफुल्लचन्द्ररायः (Dr. P. C. Roy)—'History of Hindu Chemistry'-नामकग्रन्थप्रणेता।

अक्षयकुमारी देवी—History of Sanskrit Literature-इत्याख्यग्रन्थप्रणेत्री।

भिन्सेण्टस्मिथ् (Vincent Smith)—"The Early History of India"-प्रणेता।

मोक्षमूलरः—(MaxMüller).

वेबरः—(Weber).

गिरीन्द्रनाथ मुखोपाध्यायः—"History of Indian Medical Science"-ग्रन्थकृत्।

कीथ् (A. B. Keith)—"History of Sanskrit Literature"-ग्रन्थकृत्।

कील्हर्ण—(Kielhorn) महाभाष्यस्य भर्त्तृहरिकृतभाष्यदीपिकांशस्य च प्रकाशकः प्रात्निकप्रवरश्च।

हरप्रसादशास्त्री—प्रात्निकपण्डितः। इतिहासादिविविधग्रन्थप्रबन्धानां प्रणेता।

हेर्ण्ले (Hoernle)—"बायोयार"-पाण्डुलिपितो रसोनकल्प-नावनीतकादीनामनुवादकः प्रकाशकश्च। वैद्यकवृत्तान्ते यल्लिखितं तत्प्रमादमूलकमेव।

---

# प्रकाशकसङ्कलित-ग्रन्थकारीयवृत्तम् ।

प्रकाशक इङ्ग-वङ्गभाषयोः स्थितानां पत्रादीनामनुवादकः
श्रीभारतीविकाशहालदार-शर्म्म-एम्.-ए. बी.-एल्-लाञ्छनभूषितः ।
ग्रन्थकारो वृद्धत्रयीप्रणेता श्रीगुरुपदहालदारशर्म्मा बी.-एल्.—सरस्वती-
वेदान्तभूषण-दर्शनसागर-शास्त्ररत्न-शास्त्ररत्नाकरप्रभृत्युपाधिलाञ्छितः ।

चरमे वयसि सर्व्वविधमभिमानजनकं विद्यादिमानलाञ्छनं परिजिहीर्षुणा ग्रन्थकृता स्वप्रणीतायां वृद्धत्रय्यां वंशोपाधिना सह केवलं पितृदत्तं नाम प्रायोजि । अहं ग्रन्थप्रकाशकस्तस्य कनिष्ठस्तनयः । वाचकजनकौतूहल-विनिवृत्तये तदीयसंक्षिप्तपरिचयप्रदाने प्रवृत्तोऽस्मि ।

१८७६ खृष्टाब्दीय-१७ जुलाइदिवसे कालीघट्टीयमहापीठस्थकालिका-सेवाभृत्कुलोत्पन्नकेनारामहालदारशर्म्म-महोदयेन तत्पत्न्यां हेमाङ्गीदेव्यां समुत्पादितोऽयं ग्रन्थकारः । अस्य पितृपैतामहादिपरिचयो वृद्धत्रय्या आरम्भे समुपनिबद्ध आस्ते । व्यतीते सप्तमे वर्षे स उपनीतः । ततश्च तस्य पिता श्रीमत्सुकुमारीदेव्या सह त्रयोदशवर्षीयस्य पुत्रस्य परिणयं सम्पाद्य दिवं प्रयातः । तदा पैतृकसम्पद्रक्षणायाः पितृस्थानीयस्य परिरक्षकस्या-भावाद् वैभवतत्त्वावधाने व्यापृतस्य तस्य विद्यानुशीलनं व्याहतमासीत् । 'गतेऽपि वयसि ग्राह्या विद्या सर्व्वात्मना बुधैरि'ति न्यायानुसारेण महति च काले व्यतिगते पुनरपि स विद्याभ्यासं कुर्व्वन् क्रमेण बी.-एल्-परीक्षा-मुत्तीर्णोऽपि कदाचिद् धर्म्माधिकरणे व्यवहाराजीवत्वं नाशिश्रिये ।

परीक्षानन्तरं विश्वविद्यालयाद् विश्लिष्टोऽपि स कदाचिद् विद्याभ्यासे शिथिलप्रयत्नो नासीत् । गृहे कृतावस्थानः स संस्कृतसाहित्यं साङ्गवेद-

वेदान्तदर्शनादींश्चाप्राणपातं न्यषेवत। परं तु स क्वचिदपि कंचन चतुष्पाठ्यादिविद्यालयं नाविवेश, न च कैश्चिद् गुरुभिरपि समुपदिष्टो बभूव। किं बहुना, निःसङ्ग एव स शास्त्रचर्चायां निमग्न आसीत्। जिज्ञास्यमानेन तेन चोक्तम्—'श्रीश्रीकालिकादेव्यम्बा मे परमाचार्य्या, तस्या श्चरणोपान्ते विद्याभ्यासो मया साधितः, समुपस्थितायां तत्र कस्यांचिदनुपपत्त्यां तयैव संशयो निराकृतः स्वापकाले प्रात्यद्दयेण वस्तुनः स्वरूपदर्शनमपि प्रापितम्। अतो नाहमनुपासितगुरु र्भवामी'ति।

कालीघट्टे हालदारपाड़ारोडस्थिते सप्तचत्वारिंशत्संख्यकभवने ग्रन्थकारः कृतावस्थानो वर्त्तते। अत्र तस्य पितृदेवेन १८५६ खृष्टाब्दे नाट्यशालादिसमन्वितानि मन्दिराणि निर्म्माय पूर्व्वपुरुषाणामक्षयस्वर्गकामनया तत्र श्रीश्रीकल्याणेश्वरादिशिवलिङ्गपञ्चकं प्रतिष्ठापितम्। कालवशेन मन्दिरेषु जीर्णत्वं प्राप्तेषु यथोचितं तानि संस्कृत्य ग्रन्थकारेण सदेवायतनं वासभवनं 'दर्शनागार' इति नाम्नाऽभिहितम्। एवंविधनामकरणे त्रयोऽस्याभिप्राया आसन्। प्रथमत आगारप्रवेशेन देवदर्शनमधिगम्येत, द्वितीयतो मन्दिरकुड्येषु ग्रन्थकाररचिता मोक्षप्रतिपादिका ये श्लोका उट्टङ्किताश्ते सर्व्वे प्रवेष्टुश्चक्षुर्गोचरा भवेयुः, अन्ततो ग्रन्थकारेण ये ये सुदुर्ल्लभा ग्रन्थाः सञ्चिता स्ते च सर्व्वे विद्यायाः सर्व्वजनीनत्वात् पिपठिषूणां जिज्ञासूनां च व्यवहारार्थं सुरक्षिता स्तिष्ठेयुः।

दर्शनागारीयसिंहद्वारमतिक्रम्य प्रवेष्टा भवनस्याग्रिमद्वारमासादयति। तस्याः शीर्षस्थिते प्रस्तरफलके स्वाराज्याभिलाषिणं विविक्षुं प्रति सादरसम्भाषणार्थं लिखितमस्ति—

"जिज्ञासुरात्मनस्तत्त्वं प्रविशान्तः क्रमेण भोः" इति।

इतो नाट्यमन्दिरपर्य्यन्तं नानाशिलाफलकमतिक्रम्य देवदर्शनं लभ्यते। एते श्लोका उपरिष्टात् 'क'-परिशिष्टे सन्निबद्धा वर्त्तन्ते।

१९२२ खृष्टाब्दे ग्रन्थकारेण शुक्लयजुर्वेदान्तर्गतषोड़शाध्यायस्थित-शतरुद्रियमन्त्राणां सरला टीकैका रचिता। मन्त्रशास्त्रस्य प्रचारस्त्वनुचित इति कृत्वा सा न मुद्रिता। १९२४ खृष्टाब्दे तेन सप्तशत्या दर्शनमूलक-वृत्तिरेका प्रणीता, सापि न मुद्रिता। ततो मन्दिरकुड्यस्थप्रस्तरफलकेषु प्रायशः स्वरचितश्लोकानामुट्टङ्कने स व्यापृत आसीत्।

१९२६ खृष्टाब्दादारभ्य ग्रन्थकारो महाभारतीयसनत्सुजातीयपर्व्वणः कालिकानाम्नीं टीकां, वङ्गभाषायां तस्यास्तात्पर्य्यद्योतकं कालिकाभासं, ग्रन्थस्थपारिभाषिकशब्दानां व्याख्यां, कतिपयशास्त्रचिन्तकानां जीवनवृत्तान्त-संवलितपरिशिष्टञ्च प्रणिनाय। स च ग्रन्थो मूल-शांकरभाष्य-कालिका-कालिकाभास-परिशिष्टसमेतः १३०० पृष्ठात्मकः १९३१ खृष्टाब्दे प्रकाशं गतः। अवसरे चास्मिन् स श्रीयुक्तकेशरिकान्तशर्म्ममहोदयेन कालिकाभासस्य हिन्दीभाषानुवादं कारयित्वा तं देवनागरवर्णात्मकं ग्रन्थं प्रकाशितवान्। ग्रन्थप्रचारानन्तरं नानावेदान्तग्रन्थानां टीकादिप्रणेता पण्डितप्रवरो राजेन्द्र-नाथघोषः ( यश्चतुर्थाश्रमे वाराणस्यां चिद्घनानन्दपुरीनाम्ना सुप्रसिद्ध एव ) पुङ्खानुपुङ्खरूपेण सनत्सुजातं पठित्वा ग्रन्थकारसमीपे १९३२ खृष्टाब्दीय-२४ मे-दिवसे पत्रमेकं प्रेषितयान्। तत्र लिखितमस्ति—

"I have gone through your book—Sanat-Sujatiya. I cannot find the language to give an expression of my mind. Our language is proud of your book."

अस्य तात्पर्य्यार्थः—'सनत्सुजातं मया पठितम्। भाषाया दारिद्र्यात् तत्पाठहेतुकं मे मनोभावं व्यक्तीकर्त्तुं न प्रभवामि। मन्ये—तव ग्रन्थं प्राप्य भाषा नो धन्या भवती'ति।

ततः १९३२-खृष्टाब्दीय-१९ आगष्टदिवसे श्रीरामकृष्णसम्प्रदायस्थ-

गम्भीरानन्दस्वामिमहोदयो ग्रन्थकारसकाशे पत्रमेकं प्रेरयामास। तत्र लिखितमस्ति—

"Sanat-Sujatiya. The book is written in a masterly way and is an excellent exposition of the underlying philosophy."

अस्य तात्पर्य्यार्थः—'सनत्सुजातीयं परमप्रावीण्येन विलिखितम्। मूलस्य रहस्योद्घाटने भवतो ग्रन्थो नितरामुपयोगी'ति।

ततः १६३२ खृष्टाब्दीय-१८ आगष्टदिवसात् २४ आगष्टदिवसपर्य्यन्तं भागवतचतुष्पाठ्या अध्यक्षः पण्डितप्रवरो महामहोपाध्यायः श्रीदुर्गाचरण-सांख्यतीर्थः, महाभारतानुवादकृतः प्रातःस्मरणीयकालीप्रसन्नसिंहस्य पण्डित-पुत्रो श्रीविजयसिंहमहोदयः, त्यक्तमहामहोपाध्यायोपाधिकः पद्मनाभ-शर्म्मा, काशीस्थपण्डिताग्रगण्या अन्नदाचरणशर्म्मप्रभृतयो ग्रन्थप्रशंसाः स्वस्वपत्रेषु भूरिशः कृतवन्तः। तानि च पत्राणि 'ख'-परिशिष्टे द्रष्टव्यानि।

इतः परं १६३२-खृष्टाब्दीय-२६ आगष्टदिवसे काशीतः पण्डिताग्र-गण्यस्त्यक्तमहामहोपाध्यायोपाधिकः सकलदर्शनाचार्य्यः सर्व्वजनवरेण्यः पञ्चाननतर्करत्नमहोदयः सनत्सुजातीयं पठित्वा तत्प्रशंसासूचकं पत्रमेकं प्रेरयामास ततश्च स सरस्वतीत्युपाधिना ग्रन्थकारं मण्डयामास। पत्रमिदं 'ख'-परिशिष्टे द्रष्टव्यम्।

तर्करत्नमहोदयतः सरस्वत्युपाधिप्राप्तयनन्तरं १६३२-खृष्टाब्दीय-३० आगष्टदिवसे काशीस्थित'भारतधर्म्ममहामण्डल'नामकविद्वत्सन्नयासि-सम्प्रदायः सनत्सुजातीयं पठित्वा ग्रन्थकारसमीपे प्रशंसासूचकं पत्रमेकं प्रेषितवान्, तथा च 'वेदान्तभूषण' इत्युपाधिना ग्रन्थकारः समलंकृतोऽभूत् तेन महामण्डलेन।

ततः १९३७-खृष्टाब्दीय-१० आगष्टदिवसे पूर्व्ववङ्गस्थढाकानगरीय-सारस्वतसमाजेन कमपि गुणोपयोगिनं सम्मानद्योतकमुपाधिं भायोयालप्रदत्त-'मानन्दकुमारी-रिसार्चप्राइज'-नामकं पदकं च श्रीयुक्त गुरुपदहालदार-महोदयं ग्राहयितुं भवानीपुरस्थमहामहोपाध्यायश्रीदुर्गाचरणसांख्यवेदान्त-तीर्थमहोदयाय सानुरोधं पत्रमेकं प्रेषितम्। समाजप्रदत्तमेतदनुरोधपत्र-मुपरिष्टाद् द्रष्टव्यम्।

ढाकानगरीतो मानपत्रानयने सौकर्याभावाद् ग्रन्थकारः समाजं प्रति धन्यताज्ञापनपूर्व्वकं सांख्यवेदान्ततीर्थमहोदयं सविनयमाह—कस्मैचिद् योग्यतराय विदुषे यत्किञ्चिद्दक्षिणया सहैतत्पदकादिदानमेव मम तत्-स्वीकरणं भविष्यतीति। इत्युक्त्वा स सांख्यवेदान्ततीर्थमहोदयद्वारा एकोत्तर-शतमुद्रास्तदुल्लिखितदक्षिणार्थं समाजाय प्रेरयामास।

सांख्यवेदान्तमहोदयाय सारस्वतसमाजो यत् पत्रं प्रददौ तदिह प्रदर्श्यते—

श्रीहरिः शरणम्

Priyanath Vidyabhusan M. A. Jnan-Gunge
Hony. Secretary, E. B. Saraswat Samaj. Dacca.
10-8-1933.

श्रीश्रीचरणकमलेषु

असंख्यप्रणतिपूर्व्वकमावेदनम्—

देव,

कालीघाटनिवासी श्रीयुक्त गुरुपदहालदारमहोदय ताँहार गभीर गवेषणार फल विराट्ग्रन्थ सारस्वतसमाजे पाठाइया दियाछेन ··इत्यादि। तदनुवादः—

श्रीहरिः शरणम्

प्रियनाथविद्याभूषणः एम्.-ए. ज्ञानगञ्जः
अवैतनिकसम्पादकः पूर्व्ववङ्गीयसारस्वतसमाजस्य। ढाका।

१०।८।१९३३

देव!

कालीघट्टनिवासिना श्रीयुक्तगुरुपदहालदारमहोदयेन तदीयगभीर-गवेषणायाः फलस्वरूपं विपुलो ग्रन्थः सारस्वतसमाजाय प्रेषितः। वयमपि ग्रन्थमिमं पठित्वा विमोहिता उपकृताश्च जाताः। सम्मानभाजो गुरुपद-महोदयस्य राजर्षिजनोचितसाधना तदनुरूपां सिद्धिं प्रातेत्यसंशयं वक्तुं शक्यते।

सारस्वतसमाजतस्तस्मै तदुपयुक्तसम्मानप्रदर्शनं सर्व्वथा वाञ्छनीयं भवति। केन प्रकारेण तत् करणीयमित्येतद् भवता गुरुपदमहोदयेन सह सम्मन्त्र्याचिरमस्मभ्यं विज्ञापयितव्यम्।

गवेषकेभ्यः पारितोषिकदानाय भायोयालराजप्रदत्तं 'रिसार्चप्राइज'-पदकं सारस्वतसमाजात् पण्डितवर्गैः सादरं गृह्यते। तस्य तु मुद्रामूल्य-मकिञ्चित्करं भवति। गुरुपदमहोदयतुल्याय पुरुषाय तद्दानकल्पनापि धार्ष्ट्यं समावहेदिति प्रतीयते।

आगामिनि सौरभाद्रस्य द्वितीयदिवसे यदि गुरुपदमहोदयः 'कन्भोकेशन्'-सभामागच्छेत् तर्हि समाजस्तस्मै मानलाञ्छनदानं व्यवस्था-पयिष्यति। अस्मिन् विषये तेन सह विचार्य्य तन्मतमचिरं वयं ज्ञापयितव्या इत्येकान्ततः प्रार्थ्यते। इति निवेदनम् सेवकाधमस्य श्रीप्रियनाथदेवशर्म्मणः। इति।

तदनन्तरं १९३३-खृष्टाब्दीय-६डिसेम्बरदिवसे भट्टपल्लीस्थसंस्कृत-विद्यालये तत्रत्यपण्डितवर्गैराहूतो ग्रन्थकारो 'दर्शनसागर'इति विद्यमान-

लाञ्छनेन भूषितोऽभवत्। अस्मिन्नवसरे काशीस्थतर्करत्नमहोदयेन प्रदत्त-'सरस्वत्यु'पाधिश्च सभास्थपण्डितवृन्देनानुमोदितः समर्थितश्चासीत्।

सनत्सुजातीयशास्त्रे ब्रह्मर्षेः सनत्कुमारस्योपदेशवाक्ये ग्रन्थकारेण स्वानुभूताया उपास्तिपद्धतेः समर्थनासूचकमाभासमुपलभ्य तत्सर्व्वं प्रपञ्च्य सनत्सुजातीयमध्यात्मशास्त्रं लोकसमाजे प्रचारीकृतम्। अत एव तेन काचित् कपोलकल्पना नाश्रिता। अस्माद् ग्रन्थात् तेन यद् यद् रहस्य-मुद्घाटितं तत्सर्व्वं भाष्ये विकसनाभावाद् नीलकण्ठादिकृतव्याख्या-ग्रन्थेषु नोद्बोधितं दृश्यते।

ननु, भगवद्गीतां विहाय सनत्सुजातव्याख्याने किं बीजम्? ग्रन्थकारमते गीता वेदवत् कश्चिद्दैशोन्मेषविशेषः। तत्र प्रतिभाशालिनां महाविशिष्टपुरुषाणां भाष्यादिग्रन्था विलसन्ति। अतोऽधुना गीता-व्याख्याने मौलिकत्वं दर्शयितुं न कोऽपि प्रभवति। सनत्सुजातोपरि भाष्यमेकं वर्त्तते। तच्च शङ्कराचार्य्यप्रणीतमिति प्रसिद्धिरस्ति। स च शङ्कराचार्य्यः स्वयं शारीरकभाष्यकार आहोस्विच्छाङ्करसम्प्रदायस्थ-स्तत्प्रतिनिधिस्वरूपः कश्चिदन्य इत्यत्र विद्यते भूयिष्ठः सन्देहावसरः पण्डितेषु। यतः सनत्सुजातभाष्यं शारीरकभाष्यवत् प्रसन्नगम्भीरं दार्शनिकभावबहुलं वा न प्रतीयते। सनत्सुजातपर्व्वाध्यायोपरि नीलकण्ठीया 'भारतभावदीप'नाम्नी या टीका वर्त्तते सा हि न केवलं संक्षिप्ता परं तु साधारणी च। अत एव सनत्सुजाते बहु वक्तव्यमस्तीति बुद्ध्वा तद्ग्रन्थ एव तेन व्याख्यातः।

ज्ञाननिष्ठा कर्म्मनिष्ठा भक्तिनिष्ठा चेति निष्ठात्रयस्य तुल्यभावेन गीतायां कीर्त्तितत्वात् सर्व्वेष्वाश्रमेषु सा नितरां समादृता भवति। सनत्सुजातीयशास्त्रे पर्य्यायक्रमेण ज्ञानयोगयोरुपदेशबाहुल्यात् केवलं चतुर्थाश्रमे तदेव समाश्रीयते। सन्न्यासिनः सनत्सुजातीयमुपास्तिरहस्यं स्वेष्टमन्त्रवद् संगोप्य तदुपदिष्टेन

मार्गेण भगवन्तमाराधयन्त्येव। मन्त्रशास्त्रविलोड़नं सन्नयासधर्म्मविरुद्धमिति कृत्वा ते हि कदापि व्याख्यादिसहकृतमिमं ग्रन्थं लोकेषु प्रचारयितुं न प्रायतन्त। ग्रन्थकारस्तु गार्हस्थ्यधर्म्मावलम्बित्वात् तत्प्रचारं विवेकविरुद्धं न मेने। ग्रन्थस्थितरहस्यस्य घुणाक्षरीयमाभासं सूचयितुं कालिकाटीकारम्भे तेन लिखितम्—'भगवान् सनत्सुजातो धृतराष्ट्रस्य कञ्चिद् मानससंशयमपनेतुं तं ज्ञानप्रधानां योगोपसर्ज्जनां ब्रह्मविद्यामुक्त्वा पुन र्योगप्रधानां ज्ञानोपसर्ज्जनां तां ग्राहयामास। यत्र पूर्व्वं चित्तवृत्तिनिरोधेन युष्मदर्थत्वं विज्ञाय पश्चाद् वेदान्तश्रवणादिना तस्य ब्रह्मत्वं निश्चीयते सैव आद्या। यत्र तु श्रवणादिना पूर्व्वं पारोक्ष्येण प्रतीचो ब्रह्मभावं निश्चित्य पश्चान्निदिध्यासनात्मकेन संयमेन सोऽपरोक्षीक्रियते सैव द्वितीया। तामेव विद्यां सनत्कुमारेण यथोपदिष्टां पाराशरो योगज्ञानादिसम्पन्नो मुमुक्षूपचिकीर्षया सनत्सुजातवाक्याख्यैः श्लोकैरुपनिबबन्ध।' इति।

योगोपसर्ज्जनीभूताया ज्ञानप्रधानाया ब्रह्मविद्याया उपदेशानन्तरं चतुर्थाध्याये ज्ञानोपसर्ज्जनीभूताया योगप्रधानाया ब्रह्मविद्याया उपदेशोपक्रमे ग्रन्थकार-श्रीगुरुपदहालदारमहोदयेन तत्प्रणीतायाः कालिकाटीकायाः प्रारम्भे सनत्सुजातीयमतवादं विवरीतुं पुनरपि लिखितम्—"द्वावुपायौ ब्रह्मविद्याया भवतः। विचारपूर्व्वक एको योगपूर्व्वकोऽन्यश्चेति। तत्र प्रथममुपायं प्रपञ्चापरमार्थवादिन औपनिषदा उपेयुः साक्षिणि कल्पितं साक्ष्यमनृतं साक्षी तु परमार्थसत्यः केवल इति विचारात्, द्वितीयं प्रपञ्चपरमार्थवादिनो हैरण्यगर्भादयोऽभ्युपेयुः साक्षिदर्शने तेषां निरोधातिरिक्तोपायासम्भवात्। एवं विरुद्धमतयोः सामञ्जस्यं मन्यमान आचार्य्यशिरोमणिः सनत्सुजातो मन्यते प्रथमोपायस्य विचारपूर्व्वकस्य पूर्व्ववृत्तं सत्यादियोगाङ्गविषयविशेषेषु समाधानम्, द्वितीयोपायस्य योगपूर्व्वकस्य तु पूर्व्ववृत्तं वेदान्तादिमोक्षशास्त्राणामध्ययनमिति। तत्र क्रमद्वयेऽपि फलैक्यात् साधनजातमेकरूपं,

किन्त्वन्तिमक्रमे निदिध्यासनेनापरोक्षीक्रियायां शून्यशेषतैव साधिता भवतीत्याशङ्क्य शून्यस्यापि साक्षित्वात् सद्रूपं ब्रह्म प्रत्यगभिन्नत्वेन ज्ञेयमस्तीति तस्य ब्रह्मणः सत्यत्वं प्रतिपादयितुं स इह योगप्रत्यक्षं प्रमाणत्वेन पुनः पुनरुपन्यस्यति—योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनमिति ।

उपन्यस्यतु नाम योगप्रत्यक्षं 'योगिनस्तं प्रपश्यन्ती'ति, किन्तु कः पुन र्योगः ? प्रमाणादिचित्तवृत्तयो या अङ्गाङ्गिभावपरिणामरूपास्तासां बहिर्मुखतया विलोमपरिणामेन स्वकारणे लयस्तेन तत्त्वदर्शनोपायो योगः। 'अभ्यासात् कादिवर्णानि यथा शास्त्राणि बोधयेत्। तथा योगं समासाद्य तत्त्वज्ञानं च लभ्यते ॥' इत्यागमात् स एव विद्यायाः प्रागभाव इति परस्परविवदमानेष्वपि दर्शनेष्वजातशत्रुरुच्यते । यदुक्त'मेतेन योगः प्रत्युक्त' इति तदपि प्रधानादितत्त्वांशे ब्रह्मत्वाभावात्, न तु यागप्रतिपत्तिमात्रविषये, तस्य श्रुतिमूलत्वात् । श्रुतयश्च—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'त्रिरुन्नतं स्थाप्य समं शरीरम्', 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्', 'विद्यामेतां योगविधिं च कृत्स्नमि'त्येवमाद्याः। स्मृतयश्च तत्र बहुश उपलभ्यन्ते—'स्वसंवेद्यं हि तद् ब्रह्म कुमारी स्त्रीसुखं यथा। अयोगी नैव जानाति जात्यन्धो हि यथा घटम्' ॥ इत्येवमाद्याः। अपि च यमादिबहिरङ्गमपहाय संयमो न भवति, न च संयममन्तरेणौपनिषदात्मतत्त्वसाक्षात्कारो भवितुमर्हतीति ब्रह्मवादिभिरभ्युपगतो योग 'आसीनः सम्भवादि'ति। एवं तत्त्वज्ञानेनापेक्षणाद् वेदेन सह संवादबाहुल्याच्च योगप्रतिपत्तिमात्रविषय आचार्य्यैः सनत्सुजातपादादिभिरङ्गीक्रियते।' इति।

योगोपसर्जनीभूता ज्ञानप्रधाना ब्रह्मविद्येत्युक्तावद्वैतवादिनो विप्रतिपत्तुं नार्हन्ति । यतः 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदि'ति श्रुत्यभ्युपगमाद् योगस्तै र्ब्रह्मप्राप्तेः पूर्ववृत्तत्वेनाभ्युपगम्यते।

पुनरपि ज्ञानोपसर्ज्जनीभूता योगप्रधाना ब्रह्मविद्येत्युक्तौ योगिनो हि प्रत्य-वस्थातुं नार्हन्ति। यतो वेदान्तप्रतिपाद्यब्रह्मविचारणैव योगस्य पूर्व्ववृत्तं भवति। स्मृतयश्च तत्र श्रुतिसौहार्द्दात् समुद्घोषयन्ति—'स्वाध्यायाद् योग-मासीत योगात् स्वाध्यायमामनेत्। स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥' 'वेदान्तश्रवणं कुर्व्वंस्तस्मिन् योगं समभ्यसेत् ॥' इत्येवमाद्याः। अत्राचार्य्यः सनत्कुमारः प्रकरणार्थमुपसंहरन्नाह—योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्' इति। एतदुक्तं भवति यद् वेदान्तप्रतिपाद्ये ब्रह्मणि सिद्धप्रणिधाना योगिन एव परमात्मानं लभत इति। एवं च मतयोरुभयोः पार्थक्येऽपि फलतस्तयोरनैक्यं नास्ति।

सनत्सुजातं गीताकल्पो ग्रन्थः। सप्तश्लोकीगीतापाठवत् चतुःश्लोकी-सनत्सुजातपाठः सन्न्यासिसम्प्रदाये भक्तिसहकारेणानुष्ठीयते। अस्त्यत्र वृद्धानामनुशासनम्—

'भारते सार उद्योगस्तत्रापि विदुरोक्तयः।
तत्र सनत्सुजातं च तत्र श्लोकचतुष्टयम् ॥' इति।

श्लोकचतुष्टयं यथा—

१। 'दोषो महानत्र विभेदयोगे……' १।२०
२। 'न वेदानां वेदिता कश्चिदस्ति……' २।४१
३। 'नैतद् ब्रह्म त्वरमाणेन लभ्यम्……' ३।२
४। 'एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन्…' ४।१२।

तत्र प्रथमश्लोकद्वये ज्ञानप्रधानाया योगोपसर्ज्जनीभूताया ब्रह्मविद्यायाश्चरम-श्लोकद्वये योगप्रधानाया ज्ञानोपसर्ज्जनीभूताया ब्रह्मविद्याया इङ्गितमस्तीति ग्रन्थकारेण सिद्धान्तितम्। सनत्सुजातपाठात् पूर्व्वं मन्दिरकुड्ये लिखितं ज्ञानसेवितयोगभूमिका योगसेवितज्ञानभूमिका चेतिभूमिकाद्वयं प्रागुक्तन

श्लोकचतुष्टयेन सम्पूर्णं समर्थितमिति मन्यमानो ग्रन्थकारो लोके सनत्सुजातीयमतवादमुपन्यसितुं प्रयेते।

सनत्सुजातीयकालिकादिपाठान्ते सन्न्यासिसम्प्रदायविद्वत्समाजयोरभिमतद्योतकानि पत्राणि 'क'-परिशिष्टात् परवर्त्तिनि 'ख'-परिशिष्टे द्रष्टव्यानि।

सनत्सुजातप्रकाशादारभ्य १९३५-खृष्टाब्दपर्य्यन्तं रामचन्द्रशर्म्मप्रचारितदेवोद्दिष्टपशुबलिवर्जनप्रातिकूल्यं विदधत् शास्त्रीयबलिसमर्थनार्थं कालीघट्टे वङ्गीयब्राह्मणसभायां च काञ्चीतः ( Conjeeverum ) समागतस्य श्रीश्रीचन्द्रशेखरशंकराचार्य्यमहात्मनोऽभिवादनावसरे ग्रन्थकारस्तानि तानि भाषणानि प्रददौ। तेषु यद् वङ्गीयब्राह्मणसभायां प्रदत्तं भाषणं तदनुवादः 'ख'-परिशिष्टस्य चरमभागे द्रष्टव्यः। ततो रामचन्द्रेण प्रचोदितः प्रातःस्मरणीयो मदनमोहनमालव्यमहोदयः कालीघट्टीयमन्दिरप्राङ्गणमागत्य सनातनधर्म्मप्रतिपन्नतया शास्त्रीयबलिदानस्य प्रतिप्रचारमारब्धवान्। अस्मिन्नेव समये सेवाभृत्सम्प्रदायप्रेरितो ग्रन्थकारो दिवसत्रयं शास्त्राशयं विचार्य्य तस्य वेदबाह्यधर्म्ममतस्य प्रतिवादं व्यधत्त। मालव्यमहोदयोऽपि ग्रन्थकारीययुक्तिकलापेन परितुष्टः सन् प्रत्याजगाम।

कालिकादौ भावधारां भाषासरणिं च दृष्ट्वा व्यक्तिगतशास्त्रालापेन प्रीत्वा ब्राह्मणसभायां भाषणं तथा मन्दिरप्राङ्गणे मालव्यमहोदयेन सह बलिप्रतिषेधस्य प्रतिवादफलञ्च श्रुत्वा सर्व्वजनवरेण्यः पञ्चाननतर्करत्नमहोदयः सर्व्वतः परितृप्तः सन् वेदान्तसूत्राणां स्वप्रणीतशाक्तभाष्योपरि वृत्तिमेकां समालोचनां च कर्त्तुं ग्रन्थकारमभ्यर्थितवान्। विषयमिमं पुनरपि ग्रन्थकारं स्मारयितुं १३४४।११ चैत्रदिवसे काशीतः पत्रमेकं प्रेरितवान्। तत्पत्रं च यथा—

'स्वस्ति श्रीपञ्चाननदेवशर्म्मणः परमशुभाशीर्व्वादपूर्व्वकं सादरं......

भ्रातः सरस्वति ! 'वसुमती'पत्रिकायाः स्वत्वाधिकारी श्रीमत्सतीशचन्द्र-मुखोपाध्यायो मां साक्षात्कर्त्तुमाजगाम। तस्मै मासिकवसुमतीप्रभृति-पत्रिकासु समालोचनार्थं शक्तिभाष्यं मयाऽर्पितम्। सतीशमुखोपाध्याय आह—"यदि शक्तिभाष्यसमालोचना गुरुपदमहोदयेन लिखिता भवेत् तर्हि तां सम्पादकीयभावेन प्रचारयितुं शक्नुमः, परं तु शक्तिभाष्यसमालोचना-समर्थः कोऽपि नास्मासु वर्त्तत इति"। सर्व्वमेतत्ते ज्ञापयितुं लिखितं पत्रमिदं मया। आशीर्व्वादो मे सपुत्रेण त्वया ज्ञेयः। इति ११ चैत्र १३४४।'

तर्करत्नमहोदयस्याभिप्रायानुसारेण ग्रन्थकारो वृत्त्यादिरचनायां प्रवृत्त आसीत्, परंतु कार्य्यान्तरे व्याप्टतत्वात् तत्कार्य्यं समाधातुं न शशाक।

शास्त्रीयवलिसमर्थनादनन्तरं ग्रन्थकारेण 'व्याकरणदर्शनेतिहास'प्रणयन-मारब्धम्। तस्य च ग्रन्थस्य ६०० पृष्ठात्मकं प्रथमखण्डं १६४३ खृष्टाब्दे प्रकाशितम्। ब्रह्मविन्दूपनिषदादिविघोषिते 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती'त्येवमादिवाक्ये श्रद्धातिशयादुक्तो ग्रन्थस्तेन प्रणीतः। स च ग्रन्थः कलिकाताविश्वविद्यालयायोत्सर्गीकृतः। उत्सर्गपत्रे लिखितमस्ति—"To my Alma Mater—the University of Calcutta—is dedicated in filial piety this Volume of 'व्याकरण-दर्शनेर इतिहास' which is essentially An Historical Study of Sanskrit Grammatical Literature in all its philosophical bearings from the critical and comparative points of view."

भारतीयव्याकरणमधिकृत्य John Dowson-महोदयेन लिखितम्—'There is a great difference between the European and the Hindu ideas of a grammar. In Europe grammar has hitherto been looked upon

as only a means to an end..., with the Pundit, grammar was a science,...hence, as Goldstücker says, 'Panini's work is indeed a kind of natural history of the Sanskrit language' ( p 228. H. C. D).

अस्माकं ग्रन्थकारेण व्याकरणं दर्शनपदमधिरोपितम्। व्याकरणं कथं दर्शनपदवाच्यतां भजत इत्येतद्विषयमधिकृत्य तेन लिखितम्—'ज्ञानार्थदृश्धातुनिष्पन्नेन दर्शनशब्देन ज्ञानस्य करणं द्वारं वा बोध्यते। व्याकरणं शब्दविषयस्य ज्ञानस्य कारणं भवति। एवं हि व्याकरणस्य दर्शनसमाख्या नासङ्गतैव।

दर्शनं द्विविधम्—आस्तिकदर्शनं नास्तिकदर्शनं चेति। तत्र वेदानुसारेण वेदगम्यस्य परमात्मनोऽस्तित्वं यत् प्रतिपादयति तत्प्राप्तेरुपायं च सूचयति तदेवास्तिकदर्शनम्। तदन्यत्वे तु नास्तिकदर्शनमेव। व्याकरणमास्तिकदर्शनं भवति यतोऽस्मिन् वेदप्रामाण्यं न कुत्रापि व्याहन्यते। शाब्दज्ञानेन चैव शब्दब्रह्म समधिगतं भवति, समधिगते च शब्दब्रह्मणि परब्रह्माधिगम्यते। तथा हि श्रुतिभिराम्रेडितम्—'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' (मै० उ०, ब्रह्मबिन्दूप०) इति। शब्दब्रह्मणि निष्णातैरपि यदि कैश्चिद् भाग्यवशात् परब्रह्म नाधिगम्यते, तथापि तत्प्रयासस्य नैष्फल्यं न भवति, यतः स्वयमेव भगवता स्मर्यते—'न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति' इति।

वेदस्य प्रामाण्यस्वीकरणं तद्द्वारा भगवत्प्राप्तेरुपायनिरूपणं चेति दर्शनस्य प्रधानलक्षणद्वयं दार्शनिकेषु सुप्रसिद्धम्। व्याकरणे हि प्रागुक्तं लक्षणद्वयं विद्यते। तथा हि शब्दज्ञानस्य ब्रह्मज्ञानफलकत्वाद् द्वितीयं लक्षणं व्याकरणे सम्यक्चरितार्थमेव। किं च, वेदप्रामाण्यस्वीकरणं दूरे तिष्ठतु व्याकरणेन वेदानामङ्गाङ्गिभावः शास्त्रे सूपपन्न एव। तथा चाप-

स्तम्बीयधर्म्मसूत्र स्मर्य्यते—'षड़ङ्गो वेद' इति। अतः प्रथमलक्षणं व्याकरणे नितरां चरितार्थम्।

व्याकरणं दर्शनपदे प्रतिष्ठाप्यापि ग्रन्थकार स्तृप्तिं नाधिगतः। तन्मते दर्शनशास्त्राणां स्मृतित्वेऽपि वेदानामुपाङ्गतया तानि गृह्यन्ते। अभियुक्तैश्चोच्यते—

'अङ्गैकदेशमाश्रित्य प्रवृत्ति र्यस्य जायते।
उपाङ्गः स समाख्यातः कविभिस्तत्त्वदर्शिभिः॥' इति।

व्याकरणं तु वेदानामङ्गत्वेन गृह्यते। एतदङ्गं पुन र्न साधारणमेव। मन्त्रार्थप्रत्ययस्योपकारकत्वादिदं वेदानां मुखस्वरूपमुच्यते। स्मर्य्यते हि शिक्षाशास्त्रे—'मुखं व्याकरणं स्मृतमि'ति। तदुक्तं महाभाष्यकारेण—'प्रधानं च षट्स्वङ्गेषु व्याकरणमि'ति। धर्म्मशास्त्रकृता भगवता गौतमेन षड़ङ्गानां वेदभिन्नतामनादृत्य तेषां वेदतुल्यता कल्पिता। अत एव भाट्टदीपिकायाः प्रभावल्यां लिखितमस्ति—'मन्त्रब्राह्मणयो र्वेदनामधेयं षड़ङ्गमेक इति गौतमस्मृतेः स्पष्टमेव तेषां वेदत्वमपि प्रतिपादितम्' इति। अपरतो भगवती श्रुतिः स्वयमेव व्याकरणस्य गौरवप्रतिपादनार्थमिदं शास्त्रं वेदस्य वेद इत्याह ( छा० ७।१ )। तदनुसृत्य महाभाष्यकारेण पतञ्जलिना लिखितम्—'सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिरि'ति। एवं वस्तुवृत्तमुपलभ्य ग्रन्थकार आह—'एवं च तत्त्वे स्वतःसिद्धं ब्रह्मराशिं दर्शनपदे स्थापयित्वा कश्चिन्मयाऽपराद्धम्?' इति।

व्याकरणदर्शनेतिहासीयप्रथमखण्डे शब्दादिगतनानाविषयवर्णनान्तरं पाणिनिपुरोगामिनां दैवार्षवैयाकरणानां वृत्तान्ता उपनिबद्धा वर्त्तन्ते, यथा—(१) देवादिदेवस्य शङ्करस्य माहेशव्याकरणम्, (२) सुरमणेरैन्द्रव्याकरणम्, (३) भागुरिमुनिस्मृतं भागुरीयव्याकरणम्, (४) कर्म्मन्द-

मुनिस्मृतं कार्म्मन्दव्याकरणम्, (५) काशकृत्स्नमुनिस्मृतं काशकृत्स्न-व्याकरणम्, (६) सेनकमुनिस्मृतं सेनकीयव्याकरणम्, (७) काश्यपमुनि-स्मृतं काश्यपिव्याकरणम्, (८) औशिजमुनिस्मृतं स्फोटायनव्याकरणम्, (९) चाक्रवर्म्मणमुनिस्मृतं चाक्रवर्म्मणीयव्याकरणम्, (१०) आपिशलिमुनि-स्मृतमापिशलव्याकरणम्, (११) प्रवृद्धव्याड़िमुनिस्मृतं व्याड़ीयव्याकरणम्, शाकल्यमुनिस्मृतं शाकल्यव्याकरणम्, (१३) भरद्वाजमुनिस्मृतं भारद्वाज-व्याकरणं भरद्वाजीयव्याकरणं वा, (१४) गालवमुनिस्मृतं गालवव्याकरणम्, (१५) शकटि-शाकटि-शाकटायननामकप्राचीनमुनित्रयस्मृतं द्वापरीयं वृद्धत्रिमुनिव्याकरणम्, (१६) गार्ग्यमुनिस्मृतमक्षरतन्त्रसूत्रनामकगार्गीय-व्याकरणं चेति ।

एतदन्तरा पाणिनिपुरोगामिनो ये व्याकरणग्रन्थाः क्षीणा हीना वाऽभवंस्तेषामपि विवरणं संक्षेपत उपनिबद्धमेव, क्षीणग्रन्था यथा—वृद्धकातन्त्रम्, वाजप्यायनीयव्याकरणं सौनागव्याकरणमित्येवमादयः; हीनसम्प्रदायानां ग्रन्था यथा—वृद्धचान्द्रव्याकरणं वृद्धव्याघ्रपादव्याकरणं जातूकर्णव्याकरणमौदव्रजिव्याकरणमित्येवमाद्याः ।

व्याकरणदर्शनेतिहासस्य द्वितीयखण्डीयपाण्डुलिप्यां वर्त्तमानत्रिमुनि-व्याकरणस्य तदितरव्याकरणानामपि विवरणानि वर्त्तन्ते । पाणिनेः सूत्रं कात्यायनस्य वार्त्तिकपाठः पतञ्जलेर्महाभाष्यं चेत्येतत् समुदितं सर्व्वं कलौ त्रिमुनिव्याकरणत्वेन गृह्यते । एतत्प्रसङ्गेन चान्यान्यग्रन्थकाराणां वृत्तान्ताः प्रदत्ता यथा—श्लोकवार्त्तिककृत् पाणिनिशिष्यो व्याघ्रभूतिः, संग्रह-कृत् पाणिने र्मातुल-पुत्रो भ्रातृकल्पो दाक्षायणो व्याड़िः, प्रथमपाणिनिवृत्ति-कृत् कुणिगर्गः, अष्टाध्यायीवृत्तिकृद् वररुचिः, भाष्यदीपिकाकृद् भर्त्तृहरिः, काशिकाप्रणेतारौ जयादित्यवामनौ, काशिकन्यासप्रणेता जिनेन्द्रबुद्धिः, भाष्यप्रदीपकृत् कैयटाचार्य्यः, अनुन्यासकृदिन्दुमित्रः, तन्त्रप्रदीपप्रणेता

मैत्रेयरक्षितः, भाषावृत्तिकृत् पुरुषोत्तमदेवः, दुर्घटवृत्तिप्रणेता शरणदेवः प्रक्रियाकौमुदीप्रणेता रामचन्द्रः, सिद्धान्तकौमुदीप्रणेता भट्टोजिदीक्षित इत्येवमादीनाम् ।

पाणिनीयेतरा सम्प्रदाया यथा—द्वितीयखृष्टशताब्दीवर्त्तिशर्व्ववर्म्माचार्य्यप्रणीतं कातन्त्रम्, पञ्चमखृष्टशताब्दीवर्त्तिचन्द्रगोमिप्रणीतं चान्द्रव्याकरणम्, षष्ठखृष्टशताब्दीवर्त्तिदेवनन्दिप्रणीतं जैनेन्द्रव्याकरणम्, नवमखृष्टशताब्दीवर्त्तिजैनशाकटायनप्रणीतं शब्दानुशासनम्, एकादशखृष्टशताब्दीवर्त्तिधाराधिपतिभोजप्रणीतं सरस्वतीकण्ठाभरणम्, एकादशखृष्टशताब्दीवर्त्तिक्रमदीश्वरप्रणीतं संक्षिप्तसारव्याकरणम्, द्वादशखृष्टशताब्दीवर्त्तिशुक्लपटहेमचन्द्रप्रणीतं सिद्धशब्दानुशासनम्, त्रयोदशखृष्टशताब्दीयसरस्वतीस्मृतं सारस्वतव्याकरणम्, वोपदेवकृतं मुग्धवोधव्याकरणम्, पञ्चदशखृष्टशताब्दीवर्त्तिपद्मनाभकृतं सुपद्मव्याकरणम्, १६-१७ खृष्टशताब्दीयश्रीजीवगोस्वामिकृतं हरिनामामृतव्याकरणम्, १६-१७-खृष्टशताब्दीयपुरुषोत्तमविद्यावागीशकृता प्रयोगरत्नमालेत्यादयः ।

व्याकरणदर्शनेतिहासस्य प्रथमखण्डे प्रकाशं गते तद्ग्रन्थविषये पण्डितवर्गैर्यद् यल्लिखितं तत् सर्व्वं 'ख'-परिशिष्टस्योत्तरभागे द्रष्टव्यम् ।

१३५२ वङ्गाब्दे शारदीयपूजोपलक्ष्येण 'पूर्णिमा'नाम्न्यां मासिकपत्रिकायां ग्रन्थकारः 'श्रीश्रीदशभुजादुर्गा'नामकं प्रवन्धमेकं रचयामास, स च प्रवन्धो भक्तानां पण्डितानाञ्च हृदयसौख्यमुदवहत् । प्रवन्धोऽयं 'ख' परिशिष्टोत्तरभागस्यान्तिमे द्रष्टव्यः ।

सम्प्रतितने काले ग्रन्थकृता वृद्धे वयसि पुनरथर्व्ववेदं गोपथब्राह्मणमथर्व्ववेदीया उपनिषदो वैतानसूत्रं कौशिकसूत्रं शौनकीयचतुरध्यायिकादिनी अथर्व्वप्रातिशाख्ये वैद्यकशास्त्रीयविविधग्रन्थांश्चैतिहासिकदृष्ट्या पठित्वा ५५० पृष्ठात्मकवैद्यकवृत्तान्तनामक इतिहासजातीयो ग्रन्थः प्रणीतः । एतत्

समाप्य तेन पुनः संस्कृतभाषया 'वृद्धत्रयी'नामकः कश्चिदपरग्रन्थः प्रणीतः। अधुना स देवनागरवर्णैं स्तं मुद्रापयति। अत्र वृद्धचरकीयवृत्तं वृद्धसुश्रुतीयवृत्तं वृद्धवाग्भटीयवृत्तं चेतिवृत्तत्रयं प्राधान्येन वर्णितमस्ति। उभयग्रन्थावितिहासजातीयौ स्तः। नायं ग्रन्थकारश्चिकित्सक इत्यस्य ग्रन्थद्वयं चिकित्साविषयकज्ञानस्य नोद्बोधकं नापि भेषजप्रयोगसौकर्यविधायकं भवति। वैद्यकशास्त्रे कश्चिदितिहासो नास्तीत्युक्तौ कापि नात्युक्तिर्भवति। अतो भविष्यति काले ग्रन्थद्वयं कस्यचिदैतिहासिकस्य सहायकं भवितुमर्हतीति कृत्वा ग्रन्थद्वयं तेन प्रणीतम्।

सनत्सुजातप्रकाशादधुनातनकालपर्य्यन्तं ग्रन्थकारो 'नामपारमिता'-नामकस्य विपुलग्रन्थस्यैकस्य पाण्डुलिपिसङ्कलने व्यापृत आस्ते। काममत्र प्रागैतिहासिकानामृषिमुनीनां वृत्तान्तो नास्ति तथाप्यैतिहासिककाले प्रादुर्भूतानां प्रायशः षट्सहस्रशास्त्रचिन्तकानां स्थितिकाला जीवनवृत्तान्तास्तत्तत्प्रणीतग्रन्थानां परिचयस्तत्सम्बन्धिनी संक्षिप्तसमालोचना चोपनिबद्धा वर्त्तन्ते। व्याकरणदर्शनस्य द्वितीयखण्डं नामपारमिता चेत्युभयोर्ग्रन्थयोः प्रकाशने यो विपुलार्थव्ययो भविष्यति तस्य संयोगाभावाद् ग्रन्थद्वयमिदममुद्रितं वर्त्तते।

ग्रन्थविक्रयेण व्ययसमस्यायाः समाधानं सम्भवति परं ग्रन्थकृतो नाहमुत्गतेष्वपि प्राणेषु विद्याविक्रयं करिष्यामिति व्रतमत्र प्रत्यर्थीभूतत्वेन तिष्ठति। न हि ग्रन्थान् विक्रीणे—इति द्रढीयसी तस्य प्रतिज्ञा। विक्रयस्य का कथा, स स्वयमेव पत्रवाहनव्ययभारस्वीकारेण प्रार्थिभ्यो ग्रन्थान् ऐरयत्। १९३३-खृष्टाब्दीयशिवचतुर्द्दश्यां नेपालं गत्वा नेपालराजकीयग्रन्थागाराय सनत्सुजातं स उपहृतवान्। नेपालराजगुरुणा माननीयेन सि.-आइ.-इ. प्रभृतिमानलाञ्छितेन हेमचन्द्रमहोदयेन ग्रन्थमिमं पठित्वा ग्रन्थकारस्य शास्त्रप्रचाररक्षादिसम्बन्धि सदुद्देश्यमवबुध्य राजकोषात् समग्रं मुद्रणव्ययं

प्रदातुं प्रस्तावे कृते स सविनयं मन्मुखेन तं प्रस्तावं प्रत्याचष्ट। प्रायशः पञ्चशताधिकसहस्रं ग्रन्था मुद्रिता स्तेषु सर्व्वं एवातिचिरं वितरणेन निःशेषा अभवन्। ग्रन्थप्रेप्सूनां ग्राहकाणां संख्याबाहुल्यमभिलक्ष्य सम्प्रति 'निउ-महामाया-प्रेस्'कार्य्यालयाधिकारिणा ग्रन्थान् पुन र्मुद्रापयित्वा विक्रेतुमनुमतौ प्रार्थितायां स प्रस्तावेऽस्मिन् सम्मतिं न ददौ। यद्यपि वैतनिकसेवाकर्म्मणि सपुत्रं प्रवृत्ते तस्मिन् धनचिन्तायाः किञ्चिदपि समाधानं सम्भवति, तथापि स स्वयं वृत्तिं भुञ्जानो न भविष्यति न च पुत्राणां वृत्तिभोगित्वमनुमंस्यते। वृत्तिग्रहणे को दोष इति जिज्ञास्यमानेन तेनोच्यते—

'वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम्।
स्वधर्म्मं रक्षतां पुंसां सेवया न धनार्जनम्॥' इति।

अस्माभिस्तु सेवाकर्म्मणि तस्यानुमोदने प्रार्थिते स्वल्पकटाक्षं मानववचन-मुद्धृत्य स वक्ति—

'सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते।
सेवा श्ववृत्तिराख्याता तस्मात् तां परिवर्जयेत्॥' (मनुः)।

इति। एवं स्थिते भगवत्कृपया यावत् तस्य किञ्चिदर्थस्वाच्छन्द्यं न भवति, तावदेव 'नामपारमिता'दिग्रन्थानां प्रकाशनं न सम्भवति। यदि केनापि दानशौण्डेन शास्त्रप्रचारानुरागाद् ग्रन्थान् मुद्रापयित्वा विना मूल्यं ग्रन्थवितरणं स्वीक्रियते तर्हि ग्रन्थकारो दात्रे तस्य स्वेच्छानुरूपं पाण्डुलिपीनां स्वत्वं ससन्तोषं समर्पयिष्यति। यतः शास्त्रप्रचारेण तस्य परमा तृप्ति र्भवति स्वनामप्रचारे तु नास्ति तस्य कश्चिदाग्रहो लेशतोऽपि।

---

# 'क' परिशिष्टम् ।

दर्शनागारे ग्रन्थकाररचितानां शास्त्रीययुक्तिपेशलानां
श्लोकानां विवरणम् ।

दर्शनागारस्य सिंहद्वारमतिक्रम्य प्रवेष्टा भवनस्याग्रिमद्वारं प्राप्नोति। तद्द्वारस्थवृत्तमण्डलस्योर्द्ध्वभागे लिखितमस्ति—

'साध्यसाधनभावे च साधके च शुभेच्छया ।
अन्तर्यामितया तिष्ठन् फलदो हि स्वयं हरिः ॥' १ ॥ इति ।

तदधस्ताल्लिखितमस्ति—

'विवेकिनो विरक्तस्य शमादिगुणशालिनः ।
मुमुक्षोरेव हि ब्रह्म-जिज्ञासा-योग्यता मता ॥' २ ॥ इति ।

तदधस्तात्—

जिज्ञासुरात्मनस्तत्त्वं प्रविशान्तः क्रमेण भोः ।

द्वारस्तम्भद्वये लिखितमस्ति—

साधनोपायाः ।

सत्यकामात् स्वयंसिद्धाल्लभेतानुग्रहं न चेत् ।
तदा न साधनं पुंसां विवेकादिचतुष्टयम् ॥ ३ ॥
मनःसाध्यै र्यमैः पुंसां नियमैः कायिकैरथो ।
साधनं लभ्यते लोके विवेकादिचतुष्टयम् ॥ ४ ॥
श्रुतिसिद्धान्तसारेण तपसा गुरुतोषणात् ।
साधनं च भवेत् पुंसां विवेकादिचतुष्टयम् ॥ ५ ॥

अथो विवेकः ।

नित्यानित्यविचारेण नित्यवस्तुनि वस्तुता ।
अनित्ये तुच्छताबुद्धिः स विवेको निगद्यते ॥ ६ ॥

भातीत्युक्ते जगत् कृत्स्नं भातं ब्रह्मैव नापरम् ।
इत्येवं सद्विचारो हि विवेकः कथ्यते बुधैः ॥ ७ ॥
उत्पत्तिस्थितिसंहारस्फूर्त्तिज्ञाने न सत्यता ।
इति या सुदृढ़ा बुद्धिस्तद्विवेकस्य लक्षणम् ॥ ८ ॥
एकरूपं परं ब्रह्म नानात्वेनावभासते ।
इत्येवं या शुभा बुद्धिस्तद् विवेकस्य लक्षणम् ॥ ६ ॥

अथो वैराग्यम् ।

वैराग्यं द्विविधं प्रोक्तं सर्व्वस्मिन् भोगवस्तुनि ।
जिहासापरमेकं स्याज् जिज्ञासालक्षणं परम् ॥ १० ॥
रोगशोकभयोद्वेग-पारतन्त्र्यादियन्त्रिताः ।
येन मोक्षं समीहन्ते जिहासापरमेव तत् ॥ ११ ॥
मानुष्यं दुर्लभं प्राप्य वाञ्छितार्थप्रसाधकम् ।
यदि न ब्रह्मसंप्राप्तिस्तदास्माभिः किमर्ज्जितम् ॥ १२ ॥
इत्येवं व्यवसायेन सत्यसन्धानतत्पराः ।
गवेषयन्ति यद् धीरा जिज्ञासालक्षणं हि तत् ॥ १३ ॥

अथ शमादिषट्सम्पत्तयः ।

शमदमौ ।

'स्वलक्ष्ये नियतावस्था मनसः शम उच्यते ।'
'निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते ॥' १४ ॥

उपरतिः ।

निर्व्विण्णा निष्ठिता रुण्डा कदर्य्या भोगवासना ।
या ततस्तु परा वृत्तिः सामान्योपरति र्हि सा ॥ १५ ॥

शास्त्रोक्तन विधानेन कर्म्मसङ्गो व्यवस्थितः ।
विधिना तत्परित्यागः परमोपरति र्हि सा ॥ १६ ॥

तितिक्षा ।

सोढत्वं सर्व्वदुःखानामप्रतीकारपूर्व्वकम् ।
दौर्म्मनस्याविनिर्म्मुक्तं तितिक्षा भण्यते बुधैः ॥ १७ ॥

समाधानम् ।

अक्षुब्धा स्थिरता बुद्धेरद्वये शुद्ध आत्मनि ।
समाधानमिति प्राहु र्द्वन्द्वेष्वनुपघाति यत् ॥ १८ ॥
जलसैन्धवयोः साम्यं यथा भवति मेलने ।
तथात्ममनसोरैक्यं समाधाने प्रतीयते ॥ १६ ॥
सान्तेऽनन्तं समारोप्यानन्ते सान्तं विलोपयन् ।
भूमानं केवलं ध्यायन् समाधायामृतो भवेत् ॥ २० ॥

श्रद्धा ।

इष्टे देवे गुरौ वेदे धर्म्मशास्त्रपुराणयोः ।
इतिहासे च या निष्ठा सा भक्तिरभिधीयते ॥ २१ ॥
तत एव विनिर्म्मोक्षः संसारादन्यथा न हि ।
इति विज्ञाननिष्पत्तिः श्रद्धेति परिकीर्त्तिता ॥ २२ ॥

अथ मुमुक्षुता ।

मनसैव मनश्छित्त्वा सर्व्वतः पाशबन्धनम् ।
दुःखनाशाय या वृत्तिरुच्यते सा मुमुक्षुता ॥ २३ ॥
विधौ च प्रतिषेधे च शृङ्खलत्वं विनिश्चितम् ।
तस्य नाशाय या चेष्टा मुमुक्षालक्षणं हि तत् ॥ २४ ॥

निष्कामा वा सकामा वा भक्ति र्विष्णौ शिवेऽपि वा ।
न्यग्भूतहृदये जाता मुमुक्षाकारणं हि तत् ॥ २५ ॥
जिज्ञासुरात्मनस्तत्त्वं प्रविशान्तः क्रमेण भोः ॥ २६ ॥

अग्रिमद्वारमतिक्रम्य भवनप्रवेशस्य च्छन्नमार्गं सम्प्राप्तस्य विविक्तोः प्रस्तरफलकत्रयं गोचरीभूतं भविष्यति । एषु प्रथमे फलके लिखितमस्ति—

( कामकला )

नमो नादात्मने तुभ्यं नमः कामकलात्मने ॥ २७ ।

सूचना

स्वकीयं धर्म्ममुत्सृज्य परधर्म्माश्रयं हि यः ।
कर्त्तुमिच्छति दुर्म्मेधा निष्फलं तस्य चेष्टितम् ॥ २८ ॥
निष्प्रत्यूहं रथा यान्ति सम्यक् प्रहतवर्त्मना ।
ततस्तद् वर्त्म शस्तं हि न हातव्यं कदाचन ॥ २९ ॥
तन्मया शास्त्रमालोच्य विचार्य्य च पुनः पुनः ।
ब्रह्मवेदप्रसादेन प्रोक्ताः साधनभूमिकाः ॥ ३० ॥
न पाण्डित्याभिमानेन न चापि ख्यातिलिप्सया ।
भाविता भूमिकास्त्वेता दृढ़ाभ्यासचिकीर्षया ॥ ३१ ॥
मुमुक्षोरवबोधाय भक्तानामनुभूतये ।
लोकानामुपकाराय विदुषां प्रीतये तथा ॥
साधूनां ब्रह्मभूयाय परितोषाय कस्यचित् ।
युज्यन्ते यदि युज्येरन् विकल्पोऽसौ सतां मतः ॥ ३२ ॥
यथा न भूमिकाभ्रान्ति र्वैचित्र्याल्लोकवृत्तितः ।
वेदानां हृदयं दृष्ट्वा कुड्ये ता लिखिता मया ॥ ३३ ॥
इतश्च प्रीयतां देवी कालिका श्रीसनातनी ।
देशतः कालतो वापि गुणतो या विमुक्तिदा ॥ ३४ ॥

६३

नादात्मने नमस्तुभ्यं नमो विन्दुकलात्मने ॥ ३५ ॥

द्वितीयप्रस्तरफलके लिखितमस्ति—

परामर्शः ।

भृष्टे बीजे प्ररूढ़ः स्यान्न सूक्ष्मोऽपि यथाङ्कुरः ।
कर्म्मबीजे तथा भृष्टे जायते न भवाङ्कुरः ॥ ३६ ॥
वैराग्यादिक्रमेणैव कर्म्मबीजक्षयान्नरः ।
अधिगच्छति निर्व्वाणं यथा वह्नि र्निरिन्धनः ॥ ३७ ॥
यावज्जीवगुणाः सर्व्वे नोच्छिन्ना वासनादयः ।
तावन्न सुखसंप्राप्तिरिहैव च परत्र च ॥ ३८ ॥
इहार्थेषु चतुर्ष्वेव सुखशब्दः प्रयुज्यते ।
विषये वेदनाभावे विपाके भवमोचने ॥ ३९ ॥
सुखो वेशः सुखो देशो विषयेष्विति भण्यते ।
दुःखाभावे नरश्चैवं सुखितोऽस्मीति मन्यते ॥ ४० ॥
तत्तत्कर्म्मविपाकाच्च सुखमिष्टेन्द्रियार्थजम् ।
सर्व्वतस्तु विनिर्मोक्षाद् मोक्षे सुखमनुत्तमम् ॥ ४१ ॥
अतश्च परसौख्याय स्वहितेष्वपराङ्मुखैः ।
प्रयत्नः सर्व्वथा कार्य्यो यथार्थत्वविनिश्चये ॥ ४२ ॥
नाम्ना रूपेण यज् ज्ञातं ज्ञेयं तत्रान्यदेव हि ।
नामरूपे ततस्त्याज्ये व्यवहारप्रकल्पिते ॥ ४३ ॥
अस्ति भाति प्रियं चेति श्रुत्या ब्रह्मनिदर्शनम् ।
युक्तहेतुग्रहेणासि तदात्मत्वात् स्वरूपभाक् ॥ ४४ ॥

तृतीयप्रस्तरफलके लिखितमस्ति—

स्वानुभूतिः ।

'यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' ।
इति स्मृतं फलैकत्वमुभयो र्ज्ञानयोगयोः ॥ ४५ ॥
ज्ञानतो योगतश्चैव मेलनं साध्यते यदा ।
सम्भूय व्यवसायत्वाद् मुक्तिमार्गो न दुर्ल्लभः ॥ ४६ ॥
यो यत्रास्ति स तत्रास्ति यो यदास्ति तदास्ति सः ।
सर्व्वव्यापकताभावाज् जीवो जीव इति स्मृतः ॥ ४७ ॥
अन्यत्र गमनं तस्माद् मुक्तये न हि युज्यते ।
अज्ञानग्रन्थिभेदेन स्वाप्ययं मुक्तिमामनेत् ॥ ४८ ॥
उपाधीन्निखिलांस्त्यक्त्वा नेति नेतीतिवाक्यतः ।
ऐक्यं ज्ञेयं महावाक्यै र्जीवात्मपरमात्मनोः ॥ ४९ ॥
योगं योगेन संरुध्य ज्ञानं ज्ञानेन चाञ्जसा ।
साक्षिरूपतया तिष्ठन् मुच्यते सर्व्वबन्धनात् ॥ ५० ॥
भावाभावविनिर्म्मुक्तः सत्यज्ञानादियोगतः ।
निरस्ताखिलसंसारो नियमातीततां व्रजेत् ॥ ५१ ॥
निर्व्विकारो निराकारः शुद्धो बुद्धः स्थिरोऽद्वयः ।
सत्तास्वलक्षणोऽनन्तः सर्व्वत्रैवावभासते ॥ ५२ ॥

छन्नमार्गान् निःसृते वामपार्श्वस्थस्तम्भफलके लिखितं दृश्यते—

'स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमामनेत् ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥' ५३ ॥

दक्षिणपार्श्वस्थस्तम्भफलके लिखितं वर्त्तते—

सर्व्वकार्य्यं परित्यज्य सावधानेन चेतसा ।
स्वाराज्यमभिसन्धेयं महावाक्यादिभावनात् ॥ ५४ ॥

तदनन्तरमन्तश्चत्वरे भवनस्य दण्डायमानेन नाट्यमन्दिराद् बहिः कुड्यपार्श्वयोः समकोणीभूतस्तम्भद्वयं दृष्टं भविष्यति । तयोरेकतो लिखितमस्ति—

ज्ञानभूमिकाः ।

योगेनासेविते ज्ञाने निर्ब्बाधे परमार्थता ।
ज्ञानं योगविहीनं तु न क्षमं मोक्षसाधने ॥ ५५ ॥

जिज्ञासा ब्रह्मविविदिषा ।

उपेक्षा नामरूपे वै कर्त्तव्यं ब्रह्मवेदनम् ।
समीहा सुदृढा येति जिज्ञासालक्षणं हि तत् ॥ ५६ ॥

श्रवणं सिद्धान्ताधिगमः ।

वेदान्तानामनेकत्वाद् बाहुल्यात् संशयस्य च ।
सिद्धान्तग्रहणं नाम श्रवणं गुरुशास्त्रतः ॥ ५७ ॥

मननं चोपपत्तितः ।

द्रष्टरि दृश्यता नास्ति नास्ति दृश्ये च द्रष्टृता ।
श्रुत्वैवं सद्विचारो हि मननं तन्निगद्यते ॥ ५८ ॥

निदिध्यासनं वृत्तिसन्तानः ।

निरन्तरश्चित्प्रवाहः श्रुतार्थे गुरुशास्त्रतः ।
तन्निदिध्यासनं प्रोक्तं दर्शनाय स्वरूपतः ॥ ५९ ॥



Photo : Prabhat Halder

दर्शनागारस्य नाट्यमन्दिरम्

साक्षात्कारोऽविपर्य्ययः ।

ब्रह्मत्वानुभवो यत्र यत्र जीवत्वविस्मृतिः ।
दशाचतुष्टयध्वंसी साक्षात्कारः स एव हि ॥ ६० ॥

परिणतिरद्वैतसिद्धिः ।

'न तदस्ति न यत्राहं न तदस्ति न यन्मयि' ।
इति विज्ञाय सञ्जाता विगतावरणा मतिः ॥ ६१ ॥

परा काष्ठा ह्यनावृत्तिः ।

ईश्वरानुग्रहेणैव संसारो यस्य बाधितः ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥ ६२ ॥

'अन्तःशून्यो बहिःशून्यः
शून्यः कुम्भ इवाम्बरे ।
अन्तःपूर्णो बहिःपूर्णः
पूर्णः कुम्भ इवार्णवे ॥' ६३ ॥

पार्श्वतो लिखितमस्ति—

यदि ज्ञाने कृता बुद्धिः सप्तमीं गच्छ भूमिकाम् ।
मग्नश्चेद् याहि पातालमिति न्यायविदां नयः ॥ ६४ ॥
सर्व्वतः संयतो भूत्वा वेदान्तरसिको भवेत् ।
'वेदान्तश्रवणं कुर्व्वंस्तस्मिन् योगं समभ्यसेत्' ॥ ६५ ॥
विकल्प्यते क्रिया यस्मान्न तु वस्तु सतत्त्वतः ।
क्रियाऽद्वैतं ततस्त्यक्त्वा भावाऽद्वैतं विधीयताम् ॥ ६६ ॥

स्तम्भान्तरे लिखितमस्ति—

योगभूमिकाः ।

विद्यया सेविते योगे निर्द्दोषे परमार्थता ।
योगस्तु ज्ञानहीनश्चेन्न क्षमो मोक्षसाधने ॥ ६७ ॥

यमाः ।

अहिंसा ब्रह्मचर्य्यं च सत्यास्तेयापरिग्रहाः ।
यमास्ते चानवच्छिन्नाः सार्व्वभौमा महाव्रतम् ॥ ६८ ॥

नियमाः ।

नियमाः शौचसन्तोषस्वाध्यायाश्च तपोऽर्चना ।
यमादिबाधने तर्कं भावयेत् तान् विपक्षकान् ॥ ६९ ॥

आसनम् ।

आनन्त्यस्य समापत्त्या प्रयत्नोपरमेण च ।
संवृत्याः प्रतिषेधार्थं सुस्थिरं सुखमासनम् ॥ ७० ॥

प्राणायाम-प्रत्याहारौ ।

'रेचकः पूरकश्चैव कुम्भकः प्राणसंयमः' ।
इन्द्रिये वश्यता त्वेव प्रत्याहारो निगद्यते ॥ ७१ ॥

संयमः ।

धारणा देशबन्धः स्याद् ध्यानं चित्तैकतानता ।
समाधिश्चार्थनिर्भासस्त्रयमेकत्र संयमः ॥ ७२ ।
संयमात् कण्ठकूपादौ विविधाश्च विभूतयः ।
समाधावुपसर्गास्ता व्युत्थाने सिद्धयो मताः ॥ ७३ ।

योगिनो ब्रह्मनिष्ठस्य सिद्ध्यादिविषयेषु च ।
वैराग्यादपि कैवल्यं दोषबीजपरिक्षये ॥ ७४ ॥

अन्तःशून्यो बहिःशून्यः
शून्यः कुम्भ इवाम्बरे ।
अन्तःपूर्णो बहिःपूर्णः
पूर्णः कुम्भ इवार्णवे ॥ ७५ ॥

पार्श्वतो लिखितमस्ति—

यदि योगे भवेद् बुद्धिरष्टमीं गच्छ भूमिकाम् ।
मग्नश्चेद् याहि पातालमिति न्यायविदां नयः ॥ ७६ ॥
'आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥' ७७ ॥
प्रत्यग्बोधः समाधिस्थे प्रतिभातो यदा भवेत् ।
एकीभूतः परेणासौ ब्रह्म संपद्यते तदा ॥ ७८ ॥

कुड्यान्तरालस्य शिरसि लिखितमस्ति—

'ॐ नमः शिवाय' ।

'सत्समृद्धं स्वतःसिद्धं शुद्धं बुद्धमनीदृशम् ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन ॥' ७९ ॥
'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥' ८० ॥
सविशेषतया यस्तु सेवमान उपासनम् ।
अमन्दानन्दमापन्नो निर्विशेषं स गच्छति ॥ ८१ ॥

ततो नाट्यशालां प्रवेष्टुरेकपार्श्वतो लिखितमस्ति—

नत्वा गुरुं गणेशं च सवितारमधोक्षजम् ।
शम्भुं च कालिकां नत्वा प्रविशामि शिवालयम् ॥ ८१ ॥

पार्श्वान्तरे लिखितमस्ति—

अन्तर्बहिर्यदा भक्तो देवमिष्टं प्रपश्यति ।
दासोऽहमित्यनुध्यायन् सोऽहंभावं प्रयात्यसौ ॥ ८३ ॥

नाट्यशालायां प्रवेशमात्रमग्रतः कुड्येषु श्रीश्री७ योगेश्वरादिशिवलिङ्ग-पञ्चकस्य नामानि तत्सम्बन्धीयश्लोकाश्च दृश्यन्ते, यथा—

श्रीश्री७ योगेश्वरः ।

योगेश्वरस्य योगेऽस्मिन् निर्व्विकल्पे न वस्तुता ।
सामरस्यप्रसादेन गुणा विषमचेष्टिताः ॥ ८४ ॥

श्रीश्री७ आनन्देश्वरः ।

आनन्देश्वरमापन्नो न क्लिश्नाति कदाचन ।
आनन्दघूर्णितं सर्व्वं जगदानन्दतां व्रजेत् ॥ ८५ ॥

श्रीश्री७ कालीश्वरः ।

त्वन्ताऽहन्ता तथेदन्ता चेति पत्रत्रयान्विता ।
कालीश्वरस्य सर्व्वस्य तुष्टिदा विल्वपत्रिका ॥ ८६ ॥

श्रीश्री७ सर्व्वेश्वरः ।

सर्व्वाणीसहितः सर्व्वो वाचा स्तोतुं न शक्यते ।
तदेव गल्लवाद्येन तुष्टिः सर्व्वेश्वरे सदा ॥ ८७ ॥

श्रीश्री७ कल्याणेश्वरः ।

तन्त्रशास्त्रप्रकाशेन कल्याणं यत् त्वया कृतम् ।
कल्याणेश्वर तेनात्र सदा विजयसेतराम् ॥ ८८ ॥

कुड्यान्तरे लिखितमस्ति—

तन्त्रमर्य्यादा ।

'यो हि विश्वेश्वरो देवो विश्वं व्याप्य स्थितश्च यः ।
सैव विश्वेश्वरी देवी व्यापकत्वेन संस्थिता ॥' ८९ ॥

वेदमर्य्यादा ।

'त्वं वा अहमसि भगवो देवते,
अहं च त्वमसि भगवो देवते ॥' ९० ॥

उपास्तिः ।

'प्रज्ञानं ब्रह्म' 'अहं ब्रह्मास्मि'

'यच्छेद् वाङ्मनसी प्राज्ञस्तद्यच्छेज् ज्ञान आत्मनि ।
ज्ञानं नियच्छेद् महति तद् यच्छेच्छान्त आत्मनि ॥' ९१ ॥

'तत्त्वमसि' । 'अयमात्मा ब्रह्म' ।

आत्मभावः ।

( तत्र स्वानुभूतिः )

सत्त्वादिगुणबद्धोऽहं संसरामि चिरन्तनः ।
एष भ्रान्तिमयो भाव आत्मभावो निराकुलः ॥ ९२ ॥
ये विश्वतैजसप्राज्ञा जाग्रत्स्वप्नसुषुप्तिषु ।
तेऽवस्थाग्राहका भावा आत्मभावो निराकुलः ॥ ९३ ॥
वर्त्तमानमतीतं च भविष्यदपि वा पुनः ।
सर्व्वे कालगता भावा आत्मभावो निराकुलः ॥ ९४ ॥

भूर्भुवाद्याः स्मृता लोकाः पातालं सप्तधा तथा ।
एते स्थानगता भावा आत्मभावो निराकुलः ॥ ९५ ॥
असुराश्च सुराश्चैव पशुपक्षिनरादयः ।
जीवजातिमया भावा आत्मभावो निराकुलः ॥ ९६ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चापि चतुर्थकः ।
वर्णभेदग्रहा भावा आत्मभावो निराकुलः ॥ ९७ ॥
ब्रह्मचारी गृही वापि वानप्रस्थश्च भिक्षुकः ॥
विशिष्टाश्रमजा भावा आत्मभावो निराकुलः ॥ ९८ ॥
शैव-वैष्णव-सावित्र-शाक्त-गाणपतादयः ।
सम्प्रदायगता भावा आत्मभावो निराकुलः ॥ ९९ ॥
प्रकृति र्विकृति र्वापि या या शास्त्रे व्यवस्थिता ।
सर्व्वे ते तत्त्वगा भावा आत्मभावो निराकुलः ॥ १०० ॥
प्राणापानौ समानश्च व्यानोदानौ च पञ्च ते ।
प्राणभेदग्रहा भावा आत्मभावो निराकुलः ॥ १०१ ॥
कृकरो नागकूर्म्मौ च देवदत्तो धनञ्जयः ।
उपप्राणमया भावा आत्मभावो निराकुलः ॥ १०२ ॥
इड़ा च पिङ्गला वापि सुषुम्ना वापि या स्थिता ।
नाड़िभेदग्रहा भावा आत्मभावो निराकुलः ॥ १०३ ॥
विधिश्च प्रतिषेधश्च शास्त्रे यो यो व्यवस्थितः ।
कर्त्तृत्वभाविता भावा आत्मभावो निराकुलः ॥ १०४ ॥
सर्व्वे भावाः प्रलीयन्ते यस्मिन् भावे समागते ।
असौ वेदान्तगो भाव आत्मभावो निराकुलः ॥ १०५ ॥

# विद्यातत्त्वम् ।

## ( तत्र स्वानुभूतिः )

### अथो वेदाः ।

१ । ऋग्वेदः—परमानन्ददः स्वात्मा तं त्वा वयं हवामहे ।
इत्याहुतो न चेदात्मा ऋग्वेदेन किमर्जितम् ॥ १०६ ॥

२ । यजुर्व्वेदः—लोहिता वा सिता कृष्णा प्रजाहेतुरजा शुभा ।
ब्रह्मत्वेन न चेल्लब्धा यजुषा किं प्रयोजनम् ॥ १०७ ॥

३ । सामवेदः—तत्त्वमस्यादिवाक्येन प्रेमगद्गदया गिरा ।
यदि न ब्रह्म संगीतं साम्ना वा किं प्रयोजनम् ॥ १०८ ॥

४ । अथर्व्ववेदः—आथर्व्वणी महाविद्या दृष्टादृष्टविधायिनी ।
तया स्वात्मा न चेत् प्रीतस्ततो वा किं प्रयोजनम् ॥ १०९ ॥

### अथो वेदाङ्गानि ।

५ । शिक्षा—शब्दब्रह्मणि निष्णातः शिक्षया शिक्षितो हि सन् ।
एवं शिक्षा न चेत् प्राप्ता शिक्षया किं प्रयोजनम् ॥ ११० ॥

६ । कल्पः—कल्पसूत्रगणैः पुंसां ये ये यज्ञाः प्रकल्पिताः ।
ब्रह्मप्राप्तिस्ततश्चेन्नो कल्पसूत्रैः किमर्जितम् ॥ १११ ॥

७ । व्याकरणम्—येनेदं व्याकृतं सर्व्वं स वैयाकरणः परः ।
इत्येवं यो न जानाति तस्य व्याकरणेन किम् ॥ ११२ ॥

८ । निरुक्तम्—निरुक्तं ब्रह्मविज्ञानं परमं ब्रह्मविद्गणैः ।
इत्येवं यो न जानाति निरुक्तं तस्य निष्फलम् ॥ ११३ ॥

९ । छन्दः—छादयन्ति ह वा एनं छन्दांसि पापकर्म्मणः ।
इत्येवं यदि न ज्ञातं छन्दसा किं प्रयोजनम् ॥ ११४ ॥

१० । ज्योतिषम्—ज्योतिषामपि तज्ज्योतिरयमात्मा सनातनः ।
इत्येवं हि न चेद् वेद ज्योतिर्व्वेदेन किं कृतम् ॥ ११५ ॥

अथो वेदोपाङ्गानि ।

११ । मीमांसा—भोगप्रदाः क्रियाः सर्व्वा इति मीमांसितं यदि ।
जिज्ञास्यं तर्हि ब्रह्मैव सर्व्वभोगनिवृत्तये ॥ ११६ ॥

१२ । न्यायविस्तरः—सविशेषपदार्थानां यदि वैशेषिकं मतम् ।
निर्व्विशेषं परं ब्रह्म तदा वैशेषिकस्य किम् ॥ ११७ ॥
संप्राप्त परमे तत्त्वे विश्रान्तिस्त्वचला भवेत् ।
स न्यायः श्रुतिभिर्व्यक्तः शिष्टं न न्यायलक्षणम् ॥ ११८ ॥

१३ । धर्म्मशास्त्रम्—ब्रह्मवेदप्रसादो हि स्मृतिशास्त्रविशारदैः ।
यदि न प्राप्यते तर्हि स्मृतिशास्त्रैः किमर्जितम् ॥ ११९ ॥

तन्त्रम्—यः शिवः सा स्वयं शक्तिरिति चेन्न निरूपितम् ।
बहुधा तन्त्रपाठेऽपि तन्त्रशास्त्रं निरर्थकम् ॥ १२० ॥

रामायणम्—शान्तिसीता यदा नीता निहत्य मोहरावणम् ।
स्वात्मरूपेण रामेण ततो रामायणं शुभम् ॥ १२१ ॥

महाभारतम्—यतो हि सर्व्वशास्त्रेषु मोक्षधर्म्मः परो मतः ।
तन्महाभारतं सर्व्वं मोक्षधर्म्मप्रधानकम् ॥ १२२ ॥

भागवतम्—कामनागोपिकाभीष्टो ब्रह्मचर्य्यं न मुञ्चति ।
यद्यन्तरात्मगोपालस्तदा भागवतं शुभम् ॥ १२३ ॥

सांख्यम्—पुरुषस्य परीक्षार्थं तत्त्वानां संग्रहः शुभः ।
यदि वै कल्पितः सांख्ये सांख्यं केन निराकृतम् ॥ १२४ ॥

पातञ्जलम्—कृतकार्य्या गुणाः सर्व्वे लयार्थं परमात्मनि ।
नोत्सहते यदि स्थातुं योगस्तर्हि शुभावहः ॥ १२५ ॥

१४। पुराणम्—न घना प्रीतिरुत्पन्ना परमे पूरुषे यदि।
अष्टादशविभेदेन पुराणेन किमर्जितम् ॥ १२६ ॥

अथोपवेदाः।

१५। आयुर्व्वेदः—पीत्वा ज्ञानमयं सोमममृतत्वं न वा यदि।
मरणं च पुनः प्राप्तमायुर्व्वेदो निरर्थकः ॥ १२७ ॥
१६। धनुर्व्वेदः—धनुषा प्रणवेनैव जीवात्मना शरेण च।
'लक्ष्यं ब्रह्म न चेद् विद्धं' धनुर्व्वेदो निरर्थकः ॥१२८॥
१७। गन्धर्व्ववेदः—मधुरैः स्वरसंघातै र्गान्धर्वैरपि सुन्दरैः।
न चेद् गीतं परं ब्रह्म गान्धर्व्वेण कृतं किमु ॥१२९॥
१८। अर्थशास्त्रम्—अनर्थाः सकला ह्यर्थाः परार्था मोक्षसाधनाः।
इत्येवं हि न चेल्लक्ष्यमर्थशास्त्रं निरर्थकम् ॥ १३० ॥

दुःखत्रयविघाताय सत्यज्ञानादिदीप्तये।
तत्त्वतो यः शिवं वेत्ति स वेत्ति शिवपूजनम्।
तस्मात् तत्त्वं परिज्ञाय चिन्त्यतां शिवपूजनम् ॥ १३१ ॥
परानन्दप्रसङ्गाय नित्यैकरसताप्तये ॥

## शिवपूजा।

(तत्र स्वानुभूतिः)

सर्व्वेष्टानिष्टभावानामिष्टत्वेनैव चिन्तनम्।
स्वरसेन भवेद् यत्तु तदेव शिवपूजनम् ॥ १३२ ॥
जन्मैव परमा पूजा कर्त्तव्यं येन साध्यते।
मरणं च परा पूजा ब्रह्मणि येन लीयते ॥ १३३ ।

दीर्घायुः परमा पूजा भोगादि येन हीयते।
स्वल्पायुश्च परा पूजा येन कर्म्म न चीयते ॥ १३४ ॥
नैरुज्यं परमा पूजा नैरुज्यादिष्टसिद्धितः।
रोगश्च परमा पूजा प्रायश्चित्तस्वरूपतः ॥ १३५ ॥
सुखमेव परा पूजा सुखं ब्रह्मनिदर्शनम्।
दुःखं चापि परा पूजा दुःखं वैराग्यसाधनम् ॥ १३६ ॥
धनमेव परा पूजा धनाद्धर्म्मस्ततः सुखम्।
निर्धनत्वं परा पूजा निर्धनैः प्राप्यते परम् ॥ १३७ ॥
लाभ एव परा पूजा तुष्टिपुष्टिप्रदायिनी।
हानिश्च परमा पूजा निर्म्माल्यत्यागरूपिणी ॥ १३८ ॥
स्तुतिरेव परा पूजा स्तुतिश्चित्तप्रसादिनी।
निन्दा चापि परा पूजा याऽसन्मार्गविरोधिनी ॥ १३९ ॥
मान एव परा पूजा मानात् प्रीतिसमाश्रयः।
अपमानं परा पूजा यतश्चिति मनोलयः ॥ १४० ॥
धैर्य्यमेव परा पूजा धीरो ब्रह्म समश्नुते।
अधैर्य्यं च परा पूजा ततः कार्य्यं प्रवर्त्तते ॥ १४१ ॥
सत्सङ्गः परमा पूजा सत्सङ्गाद् वर्त्म लभ्यते।
असत्सङ्गः परा पूजा यत्र मोहः परीक्ष्यते ॥ १४२ ॥
भोजनं परमा पूजा जाठराहुतिरूपतः।
अभोजनं परा पूजा ह्युपवासः स्मृते मतः ॥ १४३ ॥
तृष्णैव परमा पूजा भवानी तृट्स्वरूपिणी।
अतृष्णा च परा पूजा योगसम्पद्विधायिनी ॥ १४४ ॥
कर्म्मयोगः परा पूजा नैष्कर्म्म्यं यः प्रयच्छति।
नैष्कर्म्यं च परा पूजा येन स्वात्मा प्रसीदति ॥ १४५ ॥

भक्तियोगः परा पूजा प्रियो भक्तो हरे र्यतः ।
ज्ञानयोगः परा पूजा ज्ञानाद् मोक्षः श्रुते र्मतः ॥ १४६ ॥

## तत्त्वमसि ।

( तत्र स्वानुभूतिः )

तत्पदं ब्रह्म निर्वक्ति त्वंपदं जीवमेव च ।
सन्धिं चासीति विज्ञाय सन्धानं साधने कुरु ॥ १४७ ॥
स्थितो ब्रह्मात्मना जीवो ब्रह्म जीवात्मना स्थितम् ।
एवं सन्धानमालम्ब्य तत्त्वमोरैक्यमानय ॥ १४८ ॥
मा भवाज्ञो भव ज्ञस्त्वं त्यक्त्वा रागादिबन्धनम् ।
तिष्ठतस्ते स्वभावे हि नास्ति संसारभावना ॥ १४९ ॥
अनात्मन्यात्मतारोपात् किं भ्रान्त इव लक्ष्यसे ।
त्वमविद्याविनिर्म्मुक्तो ब्रह्मैवासि न दोषभाक् ॥ १५० ॥
या स्मृता चञ्चला स्पन्द-शक्ति स्ते चित्तसंस्थिता ।
साऽविद्या गुणसंमूढ़ा जगदाडम्बरात्मिका ॥ १५१ ।
भोगानां वासनां त्यक्त्वा त्यक्त्वा च भेदवासनाम् ।
तिष्ठ त्वं परमेऽद्वैते ततोऽविद्याक्षयो भवेत् ॥ १५२ ॥
त्वमेव परमं तत्त्वं छान्दोग्यश्रुतिशासनात् ।
असंवेद्यं स्वसंवेद्यमात्मानं मन्यसे कथम् ॥ १५३ ॥
विशुद्धोऽसि विमुक्तोऽसि न ते गुणादिबन्धनम् ।
नाहं ब्रह्म परं तत्त्वमिति वक्तुं न लज्जसे ॥ १५४ ॥

अयमात्मा ब्रह्म ।

( तत्र स्वानुभूतिः )

आत्मेति जीव एव स्याद् ब्रह्मे ति परमं मतम् ।
सन्धिं चायमिति ज्ञात्वा सन्धानं साधने कुरु ॥ १५५ ॥
भासमानमिदं सर्व्वं ब्रह्मसत्ताप्रतिष्ठितम् ।
एवं सन्धानमालम्ब्य सत्सम्पन्नो भवानघ ॥ १५६ ॥
आमनन्ति यतो वेदा आत्मानं ध्रुवमव्ययम् ।
तस्मादात्मतया कृत्स्नं जगदित्यवधारय ॥ १५७ ॥
नात्मा पञ्चात्मको देहो नाध्यासो न मनः क्वचित् ।
अयमात्मा परं ब्रह्म सर्व्वव्यापी स्वभावतः ॥ १५८ ॥
आत्मा ब्रह्मे ति विज्ञानात् कल्पकोटिशतार्ज्जितम् ।
विलीनं कर्म्मसन्तानं प्रबोधात् स्वाप्नदृष्टवत् ॥ १५९ ॥
आवियत् स्थूलपर्य्यन्तं यत् किञ्चित् प्रतिभाति मे ।
मायिकं तत् परं ब्रह्म माया मायाविनोऽपृथक् ॥ १६० ॥
अतः पौरुषमालम्ब्य चित्तं चाक्रम्य चेतसा ।
महावाक्यप्रसादेन स्वाराज्यपदभाग् भव ॥ १६१ ॥
स्वस्वरूपं स्वयं यश्च भुङ्क्ते बुद्धिविवर्जितः ।
भिद्यते स परान्नैव जगत् तत्रैव लीयते ॥ १६२ ।

प्रज्ञानं ब्रह्म ।

( तत्र स्वानुभूतिः )

प्रज्ञानं सर्व्वविज्ञानं ब्रह्मे ति ज्ञानविग्रहम् ।
सन्धिमैक्यं तयो र्ज्ञात्वा सन्धानं साधने कुरु ॥ १६३ ॥

प्रज्ञानतत्त्वविज्ञानादज्ञानस्य परिक्षयः ।
एवं सन्धानमालम्ब्य सच्चिदानन्दतां व्रज ॥ १६४ ।
क्षीणेऽज्ञाने जगल्लीनं रागादीनामसम्भवात् ।
जगल्लये शरीरं च न पुनः संप्रवर्त्तते ॥ १६५ ॥
चराचरमिदं सर्व्वं यत् किञ्चित् प्रतिभाति मे ।
प्रज्ञानं केवलं ब्रह्म श्रुतिरेव वदत्यसौ ॥ १६६ ॥
औपाधिकं जगत् सर्व्वं प्रज्ञानं ब्रह्म तु ध्रुवम् ।
एषा वै संस्मृति र्नान्या जगन्नाशाय विद्यते ॥ १६७ ॥
यच्च ज्ञानं जीवस्योक्तं जाग्रत्स्वप्नसुषुप्तिषु ।
प्रज्ञानं तत् स्वतो ज्ञेयमितो नास्ति मतान्तरम् ॥ १६८ ॥
प्रज्ञानं विश्रुतं ज्योतिरखण्डं स्थिरमव्ययम् ।
पञ्चात्मकमहाभूतविज्ञातृत्वेन भासते ॥ १६९ ।

'यदस्ति यद् भाति तदात्मरूपं
नान्यत् ततो भाति न चान्यदस्ति ।
स्वभावसंवित् प्रतिभाति केवला
ग्राह्यं ग्रहीतेति मृषा विकल्पः ॥' १७० ॥

अहं ब्रह्मास्मि ।

( तत्र स्वानुभूतिः )

अहन्ता जीवतां वक्ति ब्रह्मत्वं परमं पदम् ।
सन्धिं चास्मीति विज्ञाय सन्धानं साधने कुरु ॥ १७१ ॥
ब्रह्मैव केवलं सर्व्वं भेदाभेदतिरोहितम् ।
एवं सन्धानमाश्रित्य स्वानुभूतौ प्रयत्यताम् ॥ १७२ ॥

यो वै सर्व्वात्मकोऽनन्तोऽपरोक्षः स्वप्रकाशकः ।
कर्म्मबन्धः स एवाहमस्मीति वचनाद् मतः ॥ १७३ ॥
अतोऽहमद्वयो नित्यः केवलो ज्ञानविग्रहः ।
सदसद्वा न मे तत्त्वं तत्त्वं ब्रह्म निरञ्जनम् ॥ १७४ ॥
अहं चेत् सर्व्वतः सर्व्वं व्योमातीतं निराकुलम् ।
कुतस्तत्त्वान्तरं तर्हि प्रत्यक्षं वा तिरोहितम् ॥ १७५ ॥
आत्मानं चेद् विजानीयात् सर्व्वत्रैकं निरन्तरम् ।
अहं ज्ञाता परं ज्ञेयमखण्डं खण्ड्यते कथम् ॥ १७६ ॥
नाहं जातो न मृतो वा न मे देहः कदाचन ।
अहं ब्रह्मेति विख्यातमस्मीत्यैक्यविमर्शतः ॥ १७७ ।
अद्वते बोधिते तत्त्वे भोग्यवस्तु न विद्यते ।
भुज्यते स्वात्मनो रूपं नास्ति भोग्यं पृथक् ततः ॥ १७८ ॥

संविदि ब्रह्मत्वानुभूतिः ।

( सर्व्वव्यवहारसिद्धेस्तदधीनत्वात् )

छायाच्छाया यतो न स्याद् मायाऽविद्या कथं भवेत् ।
तत्त्वमेकमिदं सर्व्वं प्रत्यग्भूतमनीदृशम् ॥ १७९ ॥
भावसिद्धोऽप्ययं लोको व्यवहारक्षमोऽपि सन् ।
असद्रूपो यथा स्वप्न उत्तरक्षणबाधितः ॥ १८० ॥
न जलं हि जलाभासो न जीवो जीवविग्रहः ।
आत्मनो जैवभावस्तु प्रत्यगात्मेति गीयते ॥ १८१ ॥
अस्तितालक्षणा सत्ता सत्ता ब्रह्मैव नापरा ।
नास्ति सत्तां विना किञ्चिद् नास्ति मायाऽपि वस्तुतः ॥ १८२ ॥

नास्ति चित्तं न चाविद्या नाध्यासो न मनः क्वचित् ।
ब्रह्मैकं केवलं तत्त्वं व्योमवत् प्रविजृम्भते ॥ १८३ ॥
स्वशरीरे स्वयंज्योतिः स्वरूपं स्वप्रकाशकम् ।
दोषहीनाः प्रपश्यन्ति नेतरे मायया ऽऽवृताः ॥ १८४ ॥
योगिनां विदुषां वापि माया स्वात्मनि कल्पिता ।
सद्रूपेव सदा भाति तत्त्वज्ञानेन बाधिताः ॥ १८५ ॥
'एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ।'
तस्माद् माया न सद्रूपा यतो भेदः प्रतीयते ॥ १८६ ॥

सोऽहम् ।

( तत्र स्वानुभूतिः )

अकारोकाररूपः सन् मकारो यः सनातनः ।
मातृकामूर्त्तिको यश्च सोऽहमस्मि न संशयः ॥ १८७ ॥
मनआदिविहीनो यः प्राणादिरहितोऽपि च ।
नाधाराधेयता यत्र सोऽहमस्मि न संशयः ॥ १८८ ।
षड् विकारानतीतो यो न च षट्कोशवानपि ।
नारिषड्वर्गवान् यश्च सोऽहमस्मि न संशयः ॥ १८९ ॥
मातृमानत्वहीनश्च मेयतारहितश्च यः ।
प्रमारूपो य एवात्मा सोऽहमस्मि न संशयः ॥ १९० ॥
ध्यातृध्यानतया हीनो हीनो ध्येयतया च यः ।
प्रत्यग्बोधस्वरूपो यः सोऽहमस्मि न संशयः ॥ १९१ ॥
देशकालविमुक्तश्च गुणादिरहितश्च यः ।
न प्रपञ्चस्वरूपो यः सोऽहमस्मि न संशयः ॥ १९२ ॥

नानाभावविहीनो यो नैकत्वाभावभाक् पुनः ।
यः प्रबुद्धः प्रसन्नश्च सोऽहमस्मि स्वभावतः ॥ १६४ ॥

पूजासारः ।

( तत्र स्वानुभूतिः )

सर्व्वतो विद्यमानस्य कथमावाहनं मतम् ।
स्वागतं वा कथं तस्य सर्व्वाधारस्य चासनम् ॥ १६५ ॥
अपादस्य कथं पाद्यमर्घ्यं प्रेममयस्य च ।
अमुखस्य कथं कल्प्यं विहिताचमनीयकम् ॥ १६६ ॥
मधुपर्कः कथं वापि नित्यमेकरसस्य च ।
निर्म्मलस्य कथं स्नानं साङ्गोपाङ्गसमन्वितम् ॥ १६७ ॥
मायाचित्रपटाच्छन्ने वासयो र्योग्यता कुतः ।
यज्ञसूत्रं निरालम्बे रम्ये चाभरणं तथा ॥ १६८ ॥
अमूर्त्तस्य विलेपार्थं गन्धादेः कल्पना न हि ।
कथं तृप्यति पुष्पाणां नित्यतृप्तिमयो विभुः ॥ १६९ ॥
अगन्धस्यैव धूपेन कथमुद्वासनं मतम् ।
सर्व्वावभासको देवो दीपेन भास्यते कथम् ॥ २०० ॥
विश्वोदरस्य नैवेद्यं ताम्बूलं वा जलं कुतः ।
शब्दब्रह्मणि वाद्यं च कुतः सर्व्वात्मने नतिः ॥ २०१ ॥
वाचामगोचरस्यैव कुतः स्तोत्रं विधीयते ।
स्वयंप्रकाशमानस्य कथं नीराजनं विभोः ॥ २०२ ॥
एवं नाम परा पूजा भावाभावविचारतः ।
एकबुद्धया सदा कार्य्या ब्रह्मणो ब्रह्मवित्तमैः ॥ २०३ ॥
अज्ञानादथवा ज्ञानाद् वैकल्यात् साधनस्य च ।
यन्न्यूनं व्यतिरिक्तं वा कृपया तत् क्षमस्व मे ॥ २०४ ॥

# अथ शिवाशीर्व्वादः ।

अथ मैत्र्यादिसद्वासनया रागादिदुर्व्वासनक्षयात्, उपक्रमोपसंहारादि-षड्लिङ्गै र्निगमागमवेदानामद्वैतब्रह्मणि तात्पर्य्यावधारणात्, हिरण्यगर्भादि-स्थावरान्तेषु शरीरेषु यदेकचैतन्यमस्ति तदेवाहमस्मीति दृढ़ज्ञानाच्च सजातीय-विजातीयस्वगतभेदरहितसच्चिदानन्दापरोक्षानुभवसिद्धि र्भूयात् ॥ २०५ ॥

ॐ तत्सत् ।

अथेदानीं प्रकाशकृता स्वकीयपद्यकदम्बैरात्मपरिचयः प्रदीयते—

राजर्षि र्मे गुणिगणवरः पण्डितो जन्मदाता
माता पुण्या सरिदिव सदा भक्तिदा स्नेहतोया ।
ज्येष्ठो भ्राता हलधरसमः स्वर्गतो ज्ञानकर्म्मी
विज्ञानी यः सहृदयजनो मध्यमः सोऽग्रजो मे ॥ १ ॥

लक्ष्मीरूपा प्रथमभगिनी साऽग्रजा मातृकल्पा
धर्म्मे ज्ञानेऽविचलितमति र्याऽनुजा सा द्वितीया ।
साऽऽशावल्ली परमसुभगा प्रीतिदा या तृतीया
या सर्व्वासु प्रकृतिसरला शोभना सा कनिष्ठा ॥ २ ॥

भार्य्या माला वनकुसुमजा शोभते या गले मे
शोभा विष्णो र्भृशमनुकृता यां मया चावलम्ब्य ।
रूपातीतः प्रथमतनयो मातृरूपः स एव
श्रीमाञ्जातस्तमनु मम वै नाम पुत्रो दिलीपः ॥ ३ ॥

स्नेहासिक्ता बहुगुणगणा सार्थकं नाम यस्या
ज्येष्ठा चासीत् कुलवरवधूः सा हि मे भ्रातृजाया ।
ऐश्वर्य्याणां प्रथम एव य स्तस्य नामानुरूपा
या मे पुण्या सुविमलमति र्मध्यमा सा वरेण्या ॥ ४ ॥

---

# सनत्सुजातग्रन्थविषये सन्न्यासिनां भगवद्भक्तानां पण्डितानां च मतामतव्यञ्जकपत्राणि ।

( १ )

अद्वैतसिद्धेष्टिप्पणकारः शांकरग्रन्थावलीप्रकाशकः श्रीराजेन्द्रनाथघोष-महोदयो भैद्याश्रमे चिद्घनानन्दपुरीति नाम्ना प्रसिद्धः सन् संस्कृतभाषया 'ब्रह्मसूत्रनिर्णय'-नामकवेदान्तग्रन्थं प्रणिनाय । तेनैव सनत्सुजातं पठित्वा १९३२ खृष्टाब्दस्य २८ मार्च दिवसे ग्रन्थकृते पत्रमिदं प्रेरितम्—

मूलं वैद्यकवृत्तान्तस्य ५०९ पृष्ठे द्रष्टव्यम् । मूलानुवादोऽधः प्रदीयते—

प्रियवर गुरुपदमहोदय !

सनत्सुजातं मया पठितम् । तत्पाठहेतुकं हर्षोत्फुल्लं मे मनोभावं व्यक्तीकर्त्तुं मया न शक्यते । मन्ये—भवदीयं ग्रन्थं प्राप्य भाषा नो धन्या भवतीति ।

भवदीयः श्रीराजेन्द्रनाथघोषः ।

सन्न्यासग्रहणादनन्तरं १९४४-खृष्टाब्दस्य २ मार्च दिवसे 'व्याकरण-दर्शनेतिहासं' प्राप्य पुनरपि ग्रन्थकृते काशीतः स पत्रमपरं प्रेरितवान्—

मूलपत्रं वैद्यकवृत्तान्तस्य ५०९ पृष्ठे द्रष्टव्यम् । तस्य तात्पर्य्यानुवादः—

'विद्वज्जनवन्दनीयभगवत्प्रियमाननीयपण्डितप्रवरश्रीगुरुपदहालदारमहोदय-समीपे सश्रद्धनिवेदनम्—

भवत्प्रेरितः प्रीत्युपहारो मया प्राप्तः । दृश्यते—भवता समुद्रमन्थनं कृतमिति । भवत्येव कार्य्यमिदं सम्भवति । यस्मिन् समाजे भवादृशो महाप्राणः पुरुष आविर्भवति, तस्य समाजस्याभ्युदयः केन निवार्य्यते ।

चिद्घनानन्दपुरी' ।

( २ )

देवघरस्थित-रामकृष्णमिशन्विद्यापीठस्य सम्पादकस्त्यक्तविश्वविद्यालयोपाधिकः श्रीमद्गम्भीरानन्दस्वामिमहोदयः सनत्सुजातं पठित्वा १९३२ खृष्टाब्दस्य १६ आगष्टदिवसे ग्रन्थकृते पत्रमेकं प्रेरयामास—

मूलपत्रं वैद्यकवृत्तान्तस्य ५१० पृष्ठे द्रष्टव्यम्। तस्यानुवादः—

महोदय !

* * * * * सनत्सुजातीयं परमप्रावीण्येन रचितम्। मूलस्य रहस्योद्घाटने भवतो ग्रन्थो नितरामुत्तमः प्रतिभातीति।

भवदीयः
गम्भीरानन्दः
सम्पादकः।

( ३ )

श्रीभारतधर्म्ममहामण्डलसम्प्रदायो ग्रन्थकृते पत्रमेकं विद्यामानपत्रं च प्रेरयामास—

मूलं वैद्यकवृत्तान्तस्य ५११ पृष्ठे द्रष्टव्यम्। तस्यानुवादः—

श्रीभारतधर्म्ममहामण्डलः।
जगद्गञ्जः, वाराणसी।
३०।८।१९३२

महोदय !

भवत्प्रेरितं 'सनत्सुजातीय'नामकबृहत्संकलनग्रन्थं दृष्ट्वा श्रीभारतधर्म्ममहामण्डलस्य प्रधानव्यवस्थापकः स्वामिमहोदय आनन्दस्य परां

कोटिं सम्प्राप्तः। भवता विशेषतः परिश्रमः कृत इत्यत्र नास्ति सन्देहः। भवदिच्छानुसारेण ग्रन्थोऽयं महामण्डलग्रन्थागारे सुरक्षित आस्ते।

गुणपूजास्वरूपेण महामण्डलस्य मानदानविभागीयपञ्जिकायां भवदभिधानस्य समुल्लेखः कृतः। कालेन तस्माद् विभागाज् जातीयविद्यामानपत्रप्रेषणेन भवद्गुणस्य पूजा भविष्यति।

निवेदकः श्रीकृष्णवामनमुखोपाध्यायः।

'विद्यामानपत्रम्

श्रीगुरुपदहालदार

कालीघाट, कलकत्ता।

'ज्ञानस्य जननी विद्या। * * * * तत्र ये केचित् श्रीसरस्वतीदेव्याः कृपास्पदीभूताः संस्कृतज्ञा विद्वांसो विद्योन्नतौ रता स्ते सर्व्वेऽप्यस्याः स्वजातीयविराड्धर्म्मसभायाः प्रेमभाजनानीति भवतः संस्कृतविद्याया योग्यतया प्रसन्नेयं स्वजातीयधर्म्ममहासभा सद्विद्यायाः सम्मानवृद्ध्यर्थं भवन्तं 'वेदान्तभूषण' विद्योपाधिरूपालङ्कारेणालंकृत्य परमं प्रमोदमश्नुते।

| | |
|---|---|
| श्रीकाशीधाम्नि | अनारेबल् सर् महाराजाधिराज |
| ५ तिथौ शुक्लपक्षे माघमासे १९९४ वर्षे | मिथिलाधिपति-के. सि. आई. इ, |
| बालकृष्णमिश्र B. A., LL. B. | एल्. एल्. डि, डि-लिट् इत्युपाधिकः |
| काव्यतीर्थः मन्त्री। | प्रधानसभापतिः श्रीभारतधर्म्ममहामण्डलस्य' |

( ४ )

गदाधराश्रमस्थ-श्रीयुक्तस्वामिकमलेश्वरानन्दमहाराजः सनत्सुजातं पठित्वा १९३२ खृष्टाब्दस्य २ सेप्टेम्बरदिवसे ग्रन्थकृते पत्रमिदं प्रेरयामास।

[ ५२१ ]

श्रीश्रीदुर्गा शरणम्

गदाधर-आश्रमः ।

भवानीपुरम् ।

अशेषशास्त्रनिष्णातपरमश्रद्धास्पदश्रीयुक्त- २।६।१६३२

गुरुपदशर्म्महालदारमहोदयेषु—

सविनयनिवेदनम्—

महात्मन्, भवत्प्रेरितं सनत्सुजातीयं शाङ्करभाष्योपेतं सटीकं सानुवादञ्च प्राप्य मोदस्य परं पारं गतोऽहम्। अनुवादे टीकायाञ्च भवतामशेषनैपुण्यं वैदुष्यं चावलोक्य मन्येऽहं—भारती स्वयमेव भवन्तमाश्रित्य स्वात्मानं प्रकाशितवतीति। भवत्पादानामेतादृशी महती प्रचेष्टा निखिलदेहभृतां परमनिःश्रेयसाय भवतीति मे निश्चयः। ईदृशानामध्यात्मशास्त्राणां प्रकाशनेनाऽध्यात्मविद्या पुनरुज्जीविता भवेदिति।

भवद्गुणमुग्धस्य श्रीकमलेश्वरानन्दस्य।

( ५ )

सनत्सुजातं पठित्वा १३३६ वङ्गाब्दस्य १६-भाद्रदिवसे श्मशानविहारिणा श्रीकालिकानन्दकुलावधूतेन कवितामयी पत्रिकैक प्रेषिता। मूलपत्रं वैद्यकवृत्तान्तस्य ५१३-१४ पृष्ठयो र्द्रष्टव्यम्। तस्य तात्पर्य्यानुवादः प्रदीयते—

श्रीश्रीगुरवे नमः।

विद्यते वारिदे वज्रमङ्कः कुमुदबान्धवे।
दुःसहा भास्करे ज्वाला निर्द्दोषत्वं क्व दृश्यते॥
सर्व्वसौख्यावहात् किंतु गुरुपदान्निरापदः।
ज्ञानामृतस्य या धाराः क्षरन्ति ता निरन्तरम्॥

पात्रार्हताविचारेण शास्त्रादेशानुसारतः ।
दातव्यं यन्महामूल्यं ददाति प्रार्थिने सुधीः ॥
त्वया सनत्सुजातीयं स्थूलकायमपार्थिवम् ।
महानिधिसमं शास्त्रमाध्यात्मिकं प्रचार्य्यते ॥
पात्रापात्राऽविचारेण प्रदाय तदकातरम् ।
पुण्येन महता लब्धा भाग्यवन् कीर्त्तिरत्त्वया ॥
वैदुष्यं कालिकाद्याभिस्त्वया प्रदर्शितं महत् ।
वैभवसौधमूर्धस्थस्त्यागेन जनकोपमः ॥
मुमुक्षोरान्तरानन्दप्रदा मूल्येन दुर्लभा ।
कालिकाया अहो नाम्ना टीका साऽभिहिता त्वया ॥
भक्तिपुष्पाञ्जलिं दत्त्वा भवता ज्ञानगन्धिना ।
श्रेष्ठोपचारतः पूजा कुलदेव्याः कृतोत्तमा ॥
[ अतिक्रम्य प्रभावं हि युगस्य दुरतिक्रमम् । ]
त्वया सेवाभृतां नाम धर्म्मश्च प्रोज्ज्वलीकृते ॥
सफलानि च कर्म्माणि जीवितं सफलं च ते ।
लप्स्यते परमां शान्तिं देवताकृपया भवान् ॥
गृहाण प्रेमसम्भाषं विद्वत्साधकपुङ्गव ।
त्वमेव कालिकादेव्या वरपुत्रः सनिश्चयम् ॥ इति

कालिकानन्दस्य ।

( ६ )

परमहंसरोड् स्थितश्रीरामकृष्णमण्डपस्य विद्वद्भक्तवृन्दसकाशात् सनत्-सुजातविषयकं पत्रमिदं १३३६ वङ्गाब्दस्य १६ आश्विनदिवसे ग्रन्थकृता प्राप्तम् ।

मूलपत्रं वैद्यकवृत्तान्तस्य ५१४-१६ पृष्ठेषु द्रष्टव्यम्। तस्य तात्पर्य्यानुवादः—

श्रीयुक्तगुरुपदहालदारमहाशयसमीपेषु—

महात्मन्—

भगवत्सम्पादितः सनत्सुजातीयमध्यात्मशास्त्रमित्यभिधेयो ग्रन्थः श्रीरामकृष्णमण्डपस्य सभ्यभक्तवृन्देन सादरं स्वीकृतः। अतिविपुलस्य ग्रन्थस्यास्य यावानंशोऽस्माभि र्दृष्ट स्ततो मन्यते यदध्यात्मज्ञानपिपासोः सुधीवृन्दस्य मनोरञ्जनाय किमपि श्रमकार्पण्यं भवता नाश्रितम्। किमधिकमत्र वाच्यम्, भवता सर्व्वथात्र साफल्यमधिगतमेव। कालिका-नाम्नी टीका भवतः कीर्त्तिस्तम्भ इव भाति। ग्रन्थादौ भवता प्रतिज्ञातं यद्—'एतादृशं पदार्थविप्लवं दृष्ट्वा फल्गुप्रकाशमिव मूलस्वरूपं विधाय सम्प्रतितनपुस्तकेषु स्थितान् पाठांश्च विशदीकृत्य गुणोपसंहारन्यायेन श्रोतॄणां सुखावबोधनाय सनत्सुजातीयं कथामृतं व्याख्यायते' इति। एषा खलु न केवलं प्रतिज्ञामात्रं परं तु भवता सा प्रतिज्ञा प्रारम्भतोऽवसान-पर्य्यन्तं स्थैर्य्यं पूर्णत्वं च प्रापिता। तत्त्वनिरूपणवेलायां परिपूर्णत्वं निरुपाधिकत्वमवाङ्मनसगोचरत्वादि च विचार्य्य श्रीमत्या कालिकया नवीनलिपिसौन्दर्य्यविकाशपूर्व्वकं शुद्धाद्वैतवादस्य या संशुद्धी रचिता सा खलु नितरां चित्तामोदजनयित्री परमसुपभोग्या च भवति।

वैधावैधहिंसामधिकृत्य श्रुतिस्मृतितन्त्रादिशास्त्राणां नानास्थलेषु बहवः प्रसङ्गाः सन्तीति सत्यम्, परं तु ते खलु स्वल्पत्वादस्पष्टत्वाच्च सिद्धान्तनिरूपणे मन्दधियां पुरुषाणां नानुकूल्यं विदधति। अतो हीदृश आवश्यको विषयः स्तूपीकृतेन तमसा समावृतो वर्त्तते। वाचस्पतिमिश्रपादैः सांख्य-कारिकाव्याख्यावसरे भगवतः पञ्चशिखस्य वचनादीन्युद्धृत्य प्रागुक्ततमो-ऽपसारणे कथञ्चित् कृतार्थता लब्धेति सत्यम्, परं तु सनत्सुजातीयग्रन्थस्य

द्वितीयाध्यायस्थितद्वाविंशश्लोके 'प्राणिपीड़नम्—दम' इति शब्दव्याख्यावसरे भवतैतद्विषयकाज्ञानतमोध्वंसाय यो विपुल आयास आस्थितः, स हि परमार्थत एव सार्थकत्वमधिगतः। श्रुतिस्मृत्यादिनानास्थानेभ्यो भूरिशः प्रमाणानि संगृह्य ततश्च पूर्व्वोत्तरपक्षौ स्थिरीकृत्य युक्तिसोपानावल्या येन नैपुण्यातिशयेन भवान् सिद्धान्तशिखरमारूढ़स्तद्धि नितरां मनोज्ञं कृतित्वस्य च भवतः सूचकं भवति। टीकाया एतदंशविशेषस्य प्राञ्जलवङ्गानुवादो प्रतिगृहं प्रचारितो भवितुमर्हति।

द्वितीयाध्यायस्य द्वाचत्वारिंशश्लोकोपरि शंकराचार्य्यकृतभाष्यस्य '......वेद्यं प्रपञ्चं वेद'इत्येतत्पार्श्वतो भवदुक्तम्—'एवंविधा वेदविदो... न विदुः' इति पठित्वैतदेवावगम्यते यच्छब्दानां सुष्ठुप्रयोगेन भाषायाः प्राञ्जलताविधाने भवान् सिद्धहस्त एवेति।

तृतीयाध्यायस्य तृतीयश्लोकव्याख्यायां गुरुतत्त्वमधिकृत्य भवता नानागुरुगम्भीरविषया अवतारिताः। द्वादशविधगुरुविषये भूयोऽपि विशदव्याख्यां श्रोतुमभिलषामो वयम्। आशास्यते यत् परवर्त्तिनि संस्करणे भवतैतन्न विस्मर्य्येतेति।

अस्मिन् ग्रन्थप्रणयने भवता यः परिश्रमो यश्च धनव्ययः स्वीकृतौ तौ सार्थकत्वं भजेते। भवान् स्वयमेव शास्त्रज्ञः पुत्राश्च भवतः कृतिनः, महामायाप्रसादेन भवान् परिपालितः संवर्द्धितश्च। एवं स्थिते भवतः सकाशाद् वयं भूरिदानमाशंसामहे। * * * *

अकिञ्चनभक्तवृन्दतः।

( ७ )

प्राचीनमायापुरत आर्य्यर्षिकुलश्रीसाध्वाश्रमात् सन्नयासी श्रीमद्ब्रह्मर्षिकृष्णस्वामिमहोदयः सनत्सुजातं पठित्वा १३४० वङ्गाब्दस्य ४ अग्रहायणदिवसे ग्रन्थकाराय पत्रमेवं प्रेषयामास।

मूलपत्रं वैद्यकवृत्तान्तस्य ५१७-१८ पृष्ठयो र्द्रष्टव्यम् । तस्यानुवादः—

'महात्मन् !

भवदीयकालिकया शांकरभाष्यं सविशेषं विशदीकृतम् । विद्यमाने च कालिकाभासे संस्कृतभाषानभिज्ञानां साधकानां बोधसौकर्य्यं भवत्येव । अस्य ग्रन्थस्य टीकायां भवता यो निरपेक्षविचारः कृतः, सत्योद्घाटने च यद् यत्नपरत्वं प्रकाशितं तद्दर्शनेन धन्यवादप्रदानमन्तरेण केनापि जोषमवस्थातुं न शक्यते ।

यद्यपि भवतः सिद्धान्तेषु शास्त्रप्रमाणं न लङ्घितं तथापि सिद्धान्तास्ते बहुत्र स्वयुक्तिपरिपुष्टत्वाद् दर्शनमात्रेणाभिनवतत्त्वत्वेन प्रतीयन्ते । तदनन्तरमीषत्प्रणिधानेनानुभूयते यदमोघा दृष्टि र्भवतो विभिन्नधारया धर्म्मस्य विभिन्नमार्गाणामन्तर्निहितं तत्त्वं सम्यगुपलब्धवती, तदेव हि लोकहिताय भवता प्रकाशितमिति । हृदयभावव्यक्तीकरणाय भवान् केवलं प्राचीनव्याख्यापद्धतौ नाबद्ध एव, परं त्वाधुनिकजडविज्ञानेतिहासभूगोलखगोलादिशास्त्राणि विलोड्य नानाप्रमाणदृष्टान्तादयो भवतोपन्यस्ता यथा नव्यशिक्षितानामपि विषयबोधसौकर्य्यं भवेत् तेषां चित्तं च तत्र एव समधिकमाकृष्टं भवेदिति ।

भवत ष्टीकाटिप्पणे न केवलं ग्रन्थपाठाभ्यासजनितज्ञानमूलं भवतः परं तु सिद्धपुरुषाणां कृपाविशेषो भवतो साधनालब्धं ज्ञानं च तिष्ठत स्तयोः पश्चादित्यनुमीयते । नोचेदेवं विवदमानानां मतसमूहानामेतादृशं सौष्ठवमयं सामञ्जस्यविधानं तत्र तत्र निर्भीकमतप्रकाशश्च कदापि न सम्भवत एव ।

भवदीयपत्रे मह्यं विनयनम्रता यथेष्टं दर्शिता । अहं सन्नयासी भवान् गृहीति भवता मे प्रचुरसंवर्द्धना कृतेति मन्यते । इति

विनीतो ब्रह्मर्षिकृष्णः ।

( ८ )

वृन्दावनस्थितकात्यायनपीठतः स्वामी नारायणतीर्थः १३४० वङ्गाब्दस्य २७ अग्रहायणदिवसे सनत्सुजातमधिकृत्य ग्रन्थकृते पत्रमिदं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५१८ पृष्ठे द्रष्टव्यम्। तस्यानुवादः—

कात्यायनीपीठः, वृन्दावनम्।

१३४०। २७ अग्रहायणदिवसे।

श्रद्धास्पदेषु—

भवता मह्यमेकः सनत्सुजातग्रन्थ उपहृतः। तत्पाठेनाहमानन्दमनुभवामीति।

आशीर्व्वादकः

स्वामी नारायणतीर्थः।

---

## सनत्सुजातविषये विदुषां पत्नाणि।

( ६ )

भवानीपुरस्थभागवतचतुष्पाठीपरमाचार्य्यो महामहोपाध्यायमानलाञ्छनः श्रीदुर्गाचरणसांख्यवेदान्ततीर्थमहोदयः सनत्सुजातीयं पठित्वा १३३६ वङ्गाब्दस्य २ भाद्रदिवसे ग्रन्थकृते पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५१६ पृष्ठे द्रष्टव्यम्। तस्यानुवादः—

'श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः ( महामहोपाध्यायः )

सद्विद्यापारावारपारीणश्रीयुक्तगुरुपदहालदार-विद्याविनोद-महोदयसमीपे—

महात्मन्,

भवत्प्रेरितं कालिकाटीकासहकृतं शांकरभाष्योपेतं सनत्सुजातीयमध्यात्मशास्त्रमुपलभ्य नितरामानन्दितोऽहमस्मि। एतादृशसर्व्वाङ्गसुन्दर-

ग्रन्थप्रचारः कियता श्रमेण साध्यत इत्येतत् खलु विना भुक्तभोगान् केनाप्युपलब्धुं न शक्यते ।

अस्य ग्रन्थस्य व्याख्यानावसरे भवता यन्नैपुण्यं प्रदर्शितं, समुद्धृतप्रमाणानामाकरग्रन्थनामानि सन्निवेश्य ज्ञानपिपासूनां य उपकारः साधितस्ततश्च ग्रन्थकाराणां पण्डितानां च दुर्लभं जीवनचरितं संगृह्य तत्र यत् संयोजनं विहितं तदर्थं भवत आन्तरिकधन्यवादप्रदानं विना जोषमवस्थातुं मया न शक्यते ।

परमेश्वरेण भवान् विद्याबुद्धिशक्तिसत्प्रवृत्तिप्रभृतिभिः सद्गुणैः संयोजितः । अत आशास्यते यत् भवत्प्रयत्नेनैतादृशदुर्लभग्रन्थानां प्रचारो भवेदिति । किमधिकमिति ।

२१ए, गङ्गाप्रसादमुखार्जि रोड । शुभार्थिनः

भवानीपुर, कलिकाता । श्रीदुर्गाचरणसांख्यतीर्थस्य ।

२।५।१३३६

( १० )

महाभारतस्य वङ्गानुवादकृतः सुगृहीतनामधेयस्य प्रातःस्मरणीयकालीसिंहस्य प्राज्ञपुत्रो विजयचन्द्रसिंहमहोदयः १६३२ खृष्टाब्दस्य ८ आगष्टदिवसे ग्रन्थकृते पत्रमेकं प्रेषितवान् । मूलपत्रं वैद्यकवृत्तान्तस्य ४२० पृष्ठे द्रष्टव्यम् । तस्यानुवादः—

प्रणामपुरःसरनिवेदनमिदम्—

भवत्प्रणीतः 'सनत्सुजातीयमध्यात्मशास्त्रमि'त्यभिधानो योऽमूल्यो ग्रन्थो मह्यं सादरमुपहृत स्तमुपलभ्य नितरामहं कृतार्थ एव । सदैवाहं मन्ये यद् महाभारते सनत्सुजातपर्व्वाध्यायो महान् सारवान् विशिष्टश्चैकोऽंशो

भवतीति। भवता तस्य विस्तृतभाष्यव्याख्यादिसम्पादनेन ज्ञानपिपासोः पुंसो य उपकारः साधित स्तस्य फलं वर्णनविषयातीतमेव। * * * इति—

प्रणतस्य श्रीविजयचन्द्रसिंहस्य।

( ११ )

त्यक्त-महामहोपाध्याय-मानलाञ्छनः प्रवीणाध्यापकः पण्डिप्रवरः पद्मनाथदेवशर्म्ममहोदयः सनत्सुजातीयमधीत्य १३३६ वङ्गाब्दस्य ७ भाद्र-दिवसे काशीस्थितादगस्त्यकुण्डाद् ग्रन्थकृते पत्रमेकं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५२१ पृष्ठे द्रष्टव्यम्। तस्यानुवादः—

विनीतनमस्कारनिवेदनम्—

सनत्सुजातीयनामकं विपुलं ग्रन्थमुपायनस्वरूपेण प्राप्य कृतार्थोऽहमस्मि। भवान् सादरनमस्कृतिमगण्यधन्यवादांश्च मे स्वीकरोतु। अनेन ग्रन्थप्रकाशनेन भवतो महानध्यवसायः पाण्डित्यञ्चागाधं प्रदर्शिते। नानाऽवान्तरविषयाणामवतारणया ग्रन्थस्योपादेयता वर्द्धिता। किंच, विनैव मूल्येन ग्रन्थस्यास्य प्रचारव्यवस्थया भवता यथेष्टं दानशौण्डता दर्शिता। जगदम्बा कुशलं सर्व्वाङ्गीणं भवतो विदधातु। इति

विनयावनतस्य श्रीपद्मनाथदेवशर्म्मणः।

( १२ )

काशीस्थितमानससरोवरात् पण्डितप्रवरो महामहोपाध्यायः श्रीयुक्तोऽन्नदाचरणतर्कचूड़ामणिशर्म्ममहोदयः सनत्सुजातीयमधीत्य १३३६ वङ्गाब्दस्य ८ भाद्रदिवसे ग्रन्थकृते पत्रमेकं प्रेषितवान्। तदनुवादः—

'✓काशीधाम'।

८० नं० मानससरोवर।

८ भाद्र, १३३६ साल।

मूलपत्रं वैद्यकवृत्तान्तस्य ५२१-२२ पृष्ठयो र्द्रष्टव्यम् । तस्यानुवादः—

श्रद्धास्पदमहोदय,

भवत्प्रेरितसनत्सुजातीयमध्यात्मशास्त्रं प्राप्यानुगृहीतोऽस्मि । तत्-पाठेन पुनः समधिकं परितृप्तो भवामि । टीकातदनुवादादयः सर्व्वं एव तृप्तिदायकाः । एतत्सुवृहद्ग्रन्थरत्नप्रकाशेन भवता सनातनधर्म्मविश्वासिनां परं हितं साधितम् । भवदभिप्रायः सर्व्वथा सफलतां गतः । * * *

भवदीयः श्रीअन्नदाचरणशर्म्मा ।

( १३ )

काशीवासावसरे भारतीयपण्डिताग्रगण्यः सर्व्वजनवरेण्यः परित्यक्त-'महामहोपाध्यायो'पाधिकः सकलदर्शनाचार्य्यो भट्टपल्लीवास्तव्यः पञ्चानन-तर्करत्नमहोदयः सनत्सुजातीयग्रन्थं प्राप्य १३३६ वङ्गाब्दस्य १० भाद्र-दिवसे ग्रन्थकृते 'सरस्वती'त्युपाधिसमन्वितं पत्रमेकमधोलिखितं प्रेरयामास ।

तस्यानुवादः—

ॅस्वस्ति श्रीपञ्चाननदेवशर्म्मणः

परमशुभाशीर्व्वादपूर्व्वकविज्ञापनमेतत्—

भ्रातः ! कतिपयदिवसेभ्यः पूर्व्वं श्रीमत्प्रेरितमुपहारं भाष्यादिसमन्वित-सनत्सुजातीयनामकमुपदेशप्रधानमहाग्रन्थं प्राप्याहं प्रमुदित स्तदंशपाठेन सुतृप्तश्च भवामि । भ्रातः, ईदृशं पाण्डित्यं ते न मया ज्ञातमितः पूर्व्वम् । संस्कृते वैदुष्यं विचारे सामर्थ्यं बुद्धौ वैशद्यं च ते सन्तीत्येतावदेव मे ज्ञानगोचरमासीत् । अधुना तु "अस्य तु किमपि रहस्यं केचन विज्ञातु-मीशते सुधियः" इत्यत्र 'केचन'शब्दमध्ये भवानपि सुगणनीय एवेति कालिकाकालिकाभासादिपरिचयात् सम्यगवगतोऽस्मि । भ्रातः ! 'पुत्र-देकात् पराजयमि'ति शास्त्रनिरूपणमस्ति । अत्र पुत्रशब्दः पौत्रदौहित्राणा-

६७

मुपलक्षक एव। अतः श्रीमतः पराजयमिच्छन्नहमानन्दमनुभवामि। भ्रातु र्लब्धस्यानन्दस्यैतस्य विना किञ्चित् प्रतिदानं स्खलनं ममाशंक्यते। अत उपाधिपत्रसहितामधोलिखितां प्रशस्तिं श्रीमत्करपल्लवे समर्पयामि—

आर्य्यानार्य्यनिबन्धसंहितगतिज्ञानामृतोद्भासितः
पुण्यस्तीर्थपदक्रमोदयरुचिः स्निग्धप्रशान्ताकृतिः।
अस्मद्दत्त'सरस्वती'त्युपपदः सारस्वतप्रीतिकृ-
द्धालदारान्वयचन्द्रमा गुरुपदः शर्म्मा चिरं जीवतात्॥

* * भ्रातः, अपठित्वा किञ्चिदपि नाहं प्राप्तिस्वीकारमात्रेण तृप्तिमधिगच्छामीति कथञ्चिद् विलम्बेन पत्रमिदं प्रेषितम्। सदारापत्यश्चिरजीवी भव। * * * * इति १३३६ (वङ्गाब्दस्य) १० भाद्रदिवसे।

ततः पुनरपि तत्रभवता लिखितम्—

"श्रीमंस्त्वदीयतनयाः शशिसूर्य्यवह्नि-
साम्यं समेत्य भवदीयपदाङ्कपूताः।
जीवन्तु दीर्घमिह दुर्ग्रहदोषराशि-
ध्वान्तापनोदनपटुप्रतिभामयूखाः॥

तर्करत्नोपाधिक-श्रीपञ्चाननदेवशर्म्मणः।"

( १४ )

कलिकाताविश्वविद्यालयस्य भूतपूर्व्वो महाध्यक्षो (भाइस् चान्सेलर) माननीयः 'स्यर्, K. T., C. I. E., M. A., L.L. D.'-इत्याद्युपाधिभूषितो देवप्रसादसर्व्वाधिकारिसूरिरत्नविद्यारत्नाकरमहोदय स्तदीयमित्रस्य, ग्रन्थकारस्यापि सुपरिचितस्य रायबाहादुरकालीकृष्णमुखोपाध्यायमहोदयस्य सकाशात् सनत्सुजातीयग्रन्थमानीय पठितवान्। पाठावसरे ग्रन्थस्थं

स्फोटायनस्य मुनेः स्फोटविवरणमधिकृत्य तन्मनसि नानासन्देहाः समुदीयुः। ततः सन्देहनिरासार्थं कालीकृष्णेन सह देवप्रसादमहोदयो ग्रन्थकारभवनमाजगाम। ग्रन्थकारश्च तं स्फोटविषयमबुबुधत्। ततो नानाविधशास्त्रालापानन्तरं स तृप्तिसहकारेण प्रत्यगच्छत्। तदनन्तरं ग्रन्थकारेण तस्मै सनत्सुजातीये समुपहृते सति १६३१ खृष्टाब्दस्य २७ आगष्टदिवसे श्रीयुक्तसतीशचन्द्रशीलमहोदयद्वारा तेन निम्नलिखितं पत्रं प्रेषितम्। तस्यानुवादः—

महोदय !

भवता सादरमुपहृतं सनत्सुजातीयमित्याख्यं विपुलं ग्रन्थमासाद्य सविशेषं कृतज्ञो भवामि। उत्तरोत्तरमीदृशोऽन्यान्यग्रन्थप्रचारस्ते साकाङ्क्षमाशास्यते।

अस्माभिः सम्प्रत्येको 'भारतीयगवेषणागारः' प्रतिष्ठितः। एतादृशग्रन्थप्रचारोऽस्य लक्ष्येष्वन्यतमः। पाण्डित्यादिसमन्विते भवति नः सहाये भूते नितरामहं प्रीतो भवामि। प्रतिष्ठानसम्पादकेन एस्. सि. शीलमहोदयेन सह कृपया संलापः क्रियतां विषयेऽस्मिन्। इति

भवदीयः श्रीदेवप्रसादसर्व्वाधिकारी।

व्यतीते च कियतिचित् काले कालीकृष्णमहोदय आगत्य ग्रन्थकारमाह—यद् देवप्रसादसर्व्वाधिकारिणः सनत्सुजातग्रन्थः केनापि तदीयबन्धुना गृहीतत्वात् परहस्तं गतः। अतः स्वस्मै स एकखण्डमपरखण्डं तत्प्रतिष्ठितगीतासभार्थं च भवन्तं प्रार्थयते। इति। ग्रन्थकारेण कालीकृष्णमहोदयद्वारा तस्मै त्रय एव ग्रन्थाः प्रेषिताः, द्वौ वङ्गाक्षरेण मुद्रितावेको देवनागराक्षरेण मुद्रितश्चेति। इमान् ग्रन्थानुपलभ्य सर्व्वाधिकारिमहोदयो ग्रन्थकृते पुनः पत्रमेकं प्रेरयामास। तस्यानुवादः—

प्रीतिभाजनहालदारमहोदय !

मम बन्धोः सतीर्थ्यस्य च कालीकृष्णमुखोपाध्यायस्य सहृदयाधिकारिकत्वेन भवतः सुमहान्तौ द्वौ सनत्सुजातग्रन्थौ मया प्राप्तावेको मदर्थमन्यो गीतासभार्थं यत्राहं सभापति र्भवामीति। हिन्दीभाषासमन्वितोऽपर एकः खण्डश्च मयाधिगतः। ग्रन्थप्रदानार्थमान्तरं मे धन्यवादं गृहाणेति प्रार्थ्यते।

वशंवदो भवतः

कालीघट्टान्तर्गत ४७, हालदारपाड़ारोडस्थित- डि. सर्व्वाधिकारी।
गुरुपदहालदारमहोदयसमीपे।

( १५ )

श्रीशैलेन्द्रनाथदेवशर्म्ममुखोपाध्यायमहोदयः १३३६ वङ्गाब्दस्य १२ भाद्रदिवसे ग्रन्थकृते श्रद्धापत्रमेकं प्रेषितवान्। तच्च यथा—

सनत्सुजातीयाध्यात्मशास्त्रस्य कालिका-कालिकाभासादिकृदक्लिष्टकर्म्मि-धर्म्मप्राण-श्रीयुक्तगुरुपदहालदारशर्म्ममहोदयाय श्रद्धोपहारः—

उन्मार्गमार्गे त्वरमाणनाश
उद्भ्रान्तबुद्धौ ननु वङ्गदेशे।
अध्यात्मशास्त्रैः कृतसुष्ठुबोधो
धन्यो गुरु र्नाम मनीषिवर्य्यः॥

क्वासौ प्रोज्झितकैतवो मुहुरहो धर्म्मः शिवानां शिवः
क्वापि स्वार्थपराऽवरा हृतधियो वङ्गेषु सान्द्रा नराः।
चेष्टा यस्य दृढ़ा स्थिरा प्रणयने तत्त्वस्य टीका शुभा
धन्योऽसौ गुरुगौरवो गुरुपदो हालदारवंशोज्ज्वलः॥

श्रीशैलेन्द्रनाथदेवशर्म्ममुखोपाध्यायस्य। २२।५।३६।

( १६ )

श्रीरामपुररोडनिवासी पण्डितप्रवरः श्रीमदन्नदाप्रसादसुरमहोदयः सनत्सुजातग्रन्थमधीत्य १६३२ खृष्टाब्दस्य २६ आगष्टदिवसे पत्रमेकं प्रेरयामास। तस्यानुवादः—

'असंख्यप्रणामानन्तरं निवेदनम्—

सनत्सुजातग्रन्थं शिरसि धृत्वा कृतार्थो भवामि। सभाष्यमूलोल्लेख आस्ताम्, परन्तु कालिका कालिकाभास स्तदधिकं परिशिष्टं चाहो परमोपादेयानि प्राञ्जलान्युपदेशपूर्णान्यवसादविहीनानि च भवन्त्येव। शास्त्राणामतिनिगूढतत्त्वसमुच्चयो भवतो लेखनीमुखेन दिवालोकवत् समुद्भासित इव प्रतीयते। एकैकं व्याख्यानमेकैको रत्नप्रदीप इव खल्वेकैकदिशामन्धकारं नाशयति।

स्फोटस्य विवरणपाठादिच्छा समुदेति—यत् पूर्व्वमभ्यस्तं तत् सर्व्वं विस्मृत्य व्याख्याकृतः पदप्रान्ते समुपविश्य पुनरकाराकारादिपाठाभ्यासं कुर्यामिति। महात्मन्, 'शोणो धावति' 'सोऽयं देवदत्तः'-प्रभृतिजहदजहत्-स्वार्थलक्षणादे र्विविधघूर्णावर्त्तात् पाठकं किमपि नैपुण्येन समुद्धृत्य नाना-मतवादान् प्रति दृष्टिरक्षापूर्व्वकं महावाक्यानामर्थो भवता निर्णीयते।

येन खलु शास्त्रसमुद्रं मथित्वा समुद्धृतममृतं देशवासिभ्यः प्रदत्तं तस्यातिमानवस्य चरणे प्रणतोऽस्मीति।

१६३२ खृष्टाब्दस्य २६ आगष्टदिवसे आशीर्व्वादाकाङ्क्षिणः
डिहि श्रीरामपुरवर्त्मनः। श्रीमद् अन्नदाप्रसादसुरस्य।'

( १७ )

कलिकातास्थित-High Court-नामकप्रधानधर्म्माधिकरणस्य व्यवहार-जीवो 'ल'-कलेजनामकमहाविद्यालयव्यवहारशास्त्राध्यापकः M.A., B.L.-

इत्युपाधिभूषितः श्रीरमेशचन्द्रसेनमेहादयः सनत्सुजातमधिगम्य १६३२ खृष्टाब्दस्य३० आगष्टदिवसे पत्रमेकं ग्रन्थकृते प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५२८ पृष्ठे द्रष्टव्यम्। तस्यानुवादः—

परमप्रियवरगुरुपद,

पुरातनाध्यापकाय मह्यं सनत्सुजातीयं महाग्रन्थं सादरं समुपहृत्य भूरिशो धन्यवादार्हो भवान्। एतादृश-गम्भीर-धर्म्मविषयकदर्शनग्रन्थ-व्याख्याने भवतः समुद्योगं दृष्ट्वा नितरां प्रीतो भवामि।

दृश्यते हि ग्रन्थेऽस्मिन् नानादार्शनिकसमस्या मे समाहिता मम शिष्यरत्नेनेति।

एकान्तभवदीयः<br>
श्रीरमेशचन्द्र सेनः।<br>
व्यवहाराजीवः।

( १८ )

तत्त्वबोधिनीपत्रिकायां तत्सम्पादकश्रीक्षितीन्द्रनाथठाकुरमहोदयेन १३३६ वङ्गाब्दस्य भाद्रसंख्यायाः १५७ पृष्ठे सनत्सुजातग्रन्थः समालोचितः। मूलं वैद्यकवृत्तान्तस्य ५२८-५२६ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

सनत्सुजातीयमध्यात्मशास्त्रम्।

कालीघट्टनिवासिना श्रीयुक्तगुरुपदहालदारमहोदयेनैष ग्रन्थो महाभारतान्तर्गतं सुप्रसिद्धं सनत्सुजातपर्व्वाध्यायमवलम्ब्य प्रणीतः। स च साकल्येन ८१० पृष्ठात्मक एव। एतन्निःसन्देहं वक्तुं शक्यते यद् ग्रन्थोऽयं मोक्षमार्गानुसन्धित्सूनां सविशेषमुपकाराय भविष्यतीति। श्रूयते हि यदयं ग्रन्थो ग्रन्थकारेण विना मूल्यं वितरितुं प्रकाशित इति। अस्मिन्

विषये तस्य विपुलधनव्ययः सार्थको भवेत्। वङ्गभाषायामतुलनीया कीर्त्तिस्तेन संरक्षिता। ग्रन्थेऽस्मिन् महाभारतीयमूलश्लोकाः, शाङ्करभाष्यं, ग्रन्थकृतः कालिकानाम्नी टीका, वङ्गभाषया मूलानुवादः कालिकाभास-नामकविस्तृतव्याख्या च विलसन्ति। अस्य द्वितीयखण्डे सुवृहत् परिशिष्टमेकं संयोजितम्। तत्र पारिभाषिकशब्दानां व्याख्या प्रमाणसूची कतिपय-शास्त्रचिन्तकानां जीवनवृत्तान्ताः शास्त्रकाराणां स्थितिकालविषयक-मितिहासविषयकं च विवरणं दृश्यन्ते। एतद्दर्शनेनावगम्यते ग्रन्थकारेण पाण्डित्यस्य गवेषणायाश्च कियाननन्यसाधारणः परिचयः प्रदर्शित इति। किंच पाठकानां वोधसौकर्य्यविधानाय ग्रन्थकारीय-प्रयत्नातिशयस्य शैथिल्यं क्वचिदपि न दृश्यते। अनेन वृहदनुष्ठानेन ग्रन्थकारस्य धर्म्मनिष्ठा विशद-रूपेण प्रकाशं गता।

( १६ )

कलिकातान्तर्गत-पटुयाटोलावास्तव्यः साहित्यिकपण्डितः 'रायबाहादुर'-इत्युपाधिभूषितः श्रीगोविनलालवन्द्योपाध्यायकविरत्नमहोदयः सनत्सुजातं प्राप्य पत्रमेकं ग्रन्थकृते प्रेषितवान्। मूलं वैद्यकवृत्तान्तस्य ५३० पृष्ठे द्रष्टव्यम्। तस्यानुवादः—

परमप्रीतिभाजनेषु—

महात्मन्!

भवतः सनत्सुजातमध्यात्मशास्त्रमवाप्य तन्मया सानन्दं साग्रहं च शिरसि धार्य्यते।…अध्यात्मशास्त्रप्रकाशे भवत ईदृश आन्तर उत्साहो भगवत्कृपामूलमेव।

भवद्गुणमुग्धः
श्रीगोविन्लालवन्द्योपाध्यायः।

( २० )

'टेगोरपार्क'नामकस्थानात् आर्, एम्, ठाकुरमहोदयः सनत्सुजातं प्राप्य १९३२ खृष्टाब्दस्य १ सेप्टेम्बरदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५३० पृष्ठे द्रष्टव्यम्। तदनुवादः—

प्रिय हालदारमहोदय !

उपायनरूपेण ग्रन्थः प्रेरितः। अतो धन्यवादान् ज्ञापयामि। अयं खलु शास्त्रांशस्य वैदुष्यपूर्णव्याख्याविशेषः। अतोऽभिनन्दामि भवन्तम्।

भवदीय आर्, एम्, ठाकुरः।

पण्डितगुरुपदहालदारसमीपे।

( २१ )

मयमनसिंहजेलास्थितगौरीपुरात् सुप्रसिद्धः प्राज्ञो भूस्वामी श्रीयुक्त-व्रजेन्द्रकिशोररायचौधुरिमहोदयः सनत्सुजातीयमध्यात्मशास्त्रं पठित्वा १९३२ खृष्टाब्दस्य ३ सेप्टेम्बरदिवसे ग्रन्थकृते पत्रमेकं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५१३ पृष्ठे द्रष्टव्यम्। तदनुवादः—

सविनयं नमस्कृत्य निवेदनमेतत्—

भवत्प्रेरितं सनत्सुजातीयमध्यात्मशास्त्रमित्यभिधेयमपूर्व्वं ग्रन्थं प्राप्य निरतिशयमानन्दितो भवामि। स्वकृतटीकया वङ्गानुवादेन सर्व्वोपरि चाप्राणपातं परिश्रमेण ज्ञानसमुद्रमन्थनाहृतमहामूल्यरत्ननिचयै र्भवता तथा ग्रन्थोऽयं सुसज्जितः समृद्धश्च, येन कलिकलुषितेऽस्मिन् काले मनस्याशाया नवप्रेरणा समानीयते। सनातनधर्म्मावलम्बिमात्रस्य भवदीयग्रन्थपाठेन परमोपकारो भविष्यतीत्यत्र लेशतोऽपि सन्देहो नास्ति। इति

निवेदकस्य श्रीव्रजेन्द्रकिशोररायचौधुरिदेवशर्म्मणः।

( २२ )

कलिकातानिवासी विद्वद्वरेण्यो धनकुवेरः श्रीयुक्तनरेन्द्रनाथलाहा M. A., Ph. D., P. R. S.-महोदयः सनत्सुजातमध्यात्मशास्त्रं पठित्वा १३३६ वङ्गाब्दस्य १६ भाद्रदिवसे ग्रन्थकृते पत्रमेकं प्रेरितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५३२ पृष्ठे द्रष्टव्यम्। तदनुवादः—

मान्यवरश्रीयुक्तगुरुपदहालदारमहोदयसमीपेषु—

सविनयनिवेदनमेतत्—

भवतः कालिकाटीकासमन्वितं सनत्सुजातीयमधीत्यानन्दितो भवामि। शांकरभाष्येण सह भवतः सरलां संस्कृतटीकां वङ्गभाषायां व्याख्याञ्च संयुज्य भवतेदं प्रसिद्धमध्यात्मशास्त्रं प्राकृतजनोपयोगि कृतम्। सार्द्धाष्ट-शतपृष्ठव्यापिना परिशिष्टेन ग्रन्थस्योपादेयता समधिकां वृद्धिं गता। प्रत्येक-दार्शनिकग्रन्थ एवंविधे परिशिष्टे संयोजिते पारिभाषिकशब्दानां काठिन्यं दूरीभविष्यति, भारतीयाध्यात्मशास्त्राणि च बोध्यत्वं गमिष्यन्ति। अस्मिन् सर्व्वाङ्गसुन्दरे ग्रन्थे प्रतिपदं भवत ऐकान्तिकः प्रयत्नो विद्यावत्तायाः परिचयश्च स्फुटीभवतः। इति

भवदीयस्य

लाहोपाधिकस्य श्रीनरेन्द्रनाथस्य।

( २३ )

कलिकातानगर्य्यां २८।१, राजाराजवल्लभष्ट्रीट्स्थित-'वाग्वाजाररीडिं-लाइब्रेरी'-समाख्यस्य ग्रन्थागारस्य परिषत् तदीयाऽवैतनिकसम्पादक-श्रीकिरणचन्द्रदत्त-महोदयद्वारा १९३२ खृष्टाब्दस्य ४ सेप्टेम्बरदिवसे ग्रन्थकृते समालोचनात्मकं पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५३३ पृष्ठे द्रष्टव्यम्। तस्यानुवादः—

६८

श्रीयुक्तगुरुपदहालदारसमीपे सविनयनिवेदनमेतत्—

महात्मन् !

वैदान्तिकभावप्रधानं पाण्डित्यद्योतकं सनत्सुजातीयमध्यात्मशास्त्रमित्याख्यस्य सुप्राचीनग्रन्थस्य भवता मुद्रितस्यामूल्यं खण्डमेकम् उपायनस्वरूपेण प्राप्य बाग्‌बाजारपाठागारपरिषदः कृतेऽहं भवते ग्रन्थकृतेऽस्माकमान्तरं धन्यवादं ज्ञापयामि। अतिविरलः खल्वेतादृशो ग्रन्थः। प्रायोऽक्षुण्णमार्गं सेवमाना एतादृशगुरुभारग्रहणसमर्थाश्च कतिचिदेव विद्वांसोऽधुनातने काले प्रचरन्ति। भवत्प्रणीतेनैतादृशेन महामूल्येन वैदुष्यद्योतिना च ग्रन्थेन ध्रुवमस्माकम् औपनिषदसाहित्यमाढ्यतरं जातम्। इह जगति च भवतो ग्रन्थोऽयं खलु सर्व्वेषां ग्रन्थागाराणां परमेप्सितपदत्वं भजते। इति

भवदीयस्य श्रीकिरणचन्द्रदत्तस्य
अवैतनिकसम्पादकस्य।

( २४ )

कलिकातावास्तव्यः सुप्रसिद्धो व्यवहाराजीवः पण्डितप्रवरो हीरेन्द्रनाथ दत्त-M.A., B.L., P.R.S.-महोदयः सनत्सुजातमधिकृत्य १६३२ खृष्टाब्दस्य ५ सेप्टेम्बरदिवसे पत्रमेकं ग्रन्थकृते प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५३४ पृष्टे द्रष्टव्यम्। तस्यानुवादः—

श्रद्धास्पदश्रीयुक्तगुरुपदहालदारमहोदयसमीपेषु—

सविनयनिवेदनम्—

भवत्सम्पादितशाङ्करभाष्योपेतकालिकादिटीकासंवलितस्य सनत्सुजातीयशास्त्रस्योपहारो मया प्राप्तः। तदर्थं मे सविशेषकृतज्ञता निवेद्यते।

ग्रन्थसम्पादने भवता महानायासः स्वीकृतः परिशिष्टसंकलने च बहवो ज्ञातव्यविषया उपनिबद्धाः। अतो भवान् शास्त्रानुरक्तस्य पुरुषमात्रस्य कृतज्ञताभाजनं भविष्यति।

इत्यनुगतस्य हीरेन्द्रनाथदत्तस्य।

( २५ )

'स्कटिश्‌चार्च-कलेज'-नामकमहाविद्यालयस्याध्यापकः श्रीयुक्तसुधीरकुमारदासमहोदयः १९३२ खृष्टाब्दस्य ५ सेप्टेम्बरदिवसे पत्रमेकं प्रेरितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५३४-५ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

श्रद्धाभाजनेषु सविनयनिवेदनमेतत्—

श्रीयुक्तडाक्ताररामानुजचक्रवर्त्तिसमीपे भवत्प्रणीतं कालिकाकालिकाभासादिसमन्वितं सनत्सुजातीयमध्यात्मशास्त्रं दृष्ट्वा सविशेषं प्रीतो भवामि। ग्रन्थसम्पादने टीकादिप्रणयने च शास्त्रानुरागः पाण्डित्यं परिश्रमपरिचयश्च भवता विशेषेण दर्शितानि। एतदपि वक्तव्यं यत् परिशिष्टस्य प्रमाणसूच्यामपूर्व्वः संग्रहः कृत इति। एतत् सर्व्वं भवतः प्रबलाध्यवसायस्य निदर्शनम्। इति

विनयावनतस्य श्रीसुधीरकुमारदासस्य।

( २६ )

भवानीपुरवास्तव्यः पण्डिप्रवरः श्रीवसन्तकुमारचट्टोपाध्यायमहोदयः सनत्सुजातमधिकृत्य १९३२ खृष्टाब्दस्य ५ सेप्टेम्बरदिवसे ग्रन्थकृते पत्रमेकं प्रेरितवान। मूलपत्रं वैद्यकवृत्तान्तस्य ५३५-६ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

नमस्कारपूर्व्वकसविनयनिवेदनम्—

भवत्प्रकाशितं सनत्सुजातीयाध्यात्मशास्त्रं प्राप्य निरतिशयमानन्दितो भवामि। दृश्यन्ते हि नानामूल्यवत्तथ्यानि ग्रन्थे सन्निविष्टानि। * * * इति

गुणानुरक्तस्य
श्रीवसन्तकुमारचट्टोपाध्यायस्य।

( २७ )

ढाकान्तर्गत-'आर्म्मानिटोला'स्थितसारस्वतचतुष्पाठीत स्तस्या अध्यक्षः श्रीजीवनकृष्णशर्म्मा १३३६ वङ्गाब्दस्य २३ भाद्रदिवसे सनत्सुजातीयं प्राप्य ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५३६-७ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

महोदय !

सनत्सुजातीयग्रन्थं प्राप्य ग्रन्थकृतो गभीरपाण्डित्यपरिचयमुपलभ्य च पुलकितोऽहं संवृत्तः! विगते पौषे मासि पण्डितश्रीमदुपेन्द्रस्मृतितीर्थ-महोदयस्य गृहे ममावस्थानकाले तेन सार्द्धं भवदीयप्रासादस्य बहिर्भागे प्रस्तरेषु समुत्कीर्णां विविधात्मज्ञानोपयोगिनीं महामूल्यवाक्यावलीं पश्यतस्ताश्च भवता विरचितेति शृण्वतश्च मे भवन्तं प्रति यः श्रद्धातिशय उद्रिक्तः सोऽद्य भवदीयग्रन्थपाठेन सुदृढः सञ्जातः। सनत्सुजातीयेन यथा मादृशानां संसारतापदग्धानां जनानां चित्तेषु शान्तिधाराः प्रवाहिता भवन्ति तथा बहुतरावश्यकतथ्यपूर्णपरिशिष्टांशेन बाह्यविषयेष्वप्यसामान्यज्ञानमुत्पाद्यत इत्यत्र नास्ति कश्चित् सन्देहावकाशः। अतो धन्यवादार्हो भवान्। भवता जगतोऽलौकिकं कल्याणं साधितम्। घोरेऽस्मिन् कलिकालेऽपि नात्म-जिज्ञासूनामेकान्ततो लोपः सञ्जातः। भवतो ग्रन्थस्तादृशै र्नितरामादृतो भविष्यतीति। इति

निवेदकस्य
श्रीजीवनकृष्णशर्म्मणः।

( २८ )

हावड़ास्थितशिवपुरतः पण्डितः श्रीपुलिनविहारिहालदार M.A.-महोदयः १३३६ वङ्गाब्दस्य २६ भाद्रदिवसे पत्रमेकं प्रेरितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५३७-८ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

नमस्कारपूर्व्वकनिवेदनमिदम्—

भवत्प्रेरितः सनत्सुजातीयग्रन्थो मया प्राप्तः।......असाधारण-परिश्रमेण धनव्ययेन च ग्रन्थोऽयं सर्वेषामेवोपभोगक्षमः कृतः।......रत्नाकर-वत् परिशिष्टमत्र सुखदायकमेव। ग्रन्थेनानेन नवीना सरणिः प्रवर्तिता।

अस्माकं चतुष्पाठीस्थोऽध्यापकः श्रीरतिकान्तसांख्यतीर्थमहोदयो भवत्-प्रणीतग्रन्थं दृष्ट्वा नितरां प्रीतः सञ्जातः। तस्यैकमभिनन्दनपत्रमेतेन सह प्रेर्य्यते। इति वशंवदस्य

श्रीपुलिनविहारिहालदारस्य। २६।५।३६।

( २६ )

हावड़ान्तर्गतशिवपुरचतुष्पाठीतः।

...श्रीमद्गुरुपदहालदारमहोदयेषु— २५।५।१३३६

सप्रश्रयविज्ञप्तिरेषा—

* * * * *

शास्त्रे त्वदीये परधर्म्मबोधिनि
बुद्ध्वा धियं ते श्रुतिपारगामिनीम्।
आदौ परोक्षं मम तत्सुदर्शन-
मेतर्हि नामापरदृष्टिदर्शनम्॥ इति

आश्रवश्रीरतिकान्तसांख्यतीर्थस्य।

( ३० )

वरिशालस्थितव्रजमोहनमहाविद्यालयाध्यापकेन पण्डितप्रवरेण श्रीमद्-आशुतोषशास्त्रि M.A., Ph.D-महोदयेन १९३२ खृष्टाब्दस्य १४ सेप्टेम्बरदिवसे सनत्सुजातीयमासाद्य ग्रन्थकृते पत्रमेकं प्रेषितम्। मूलपत्रं वैद्यकवृत्तान्तस्य ५३९ पृष्टे द्रष्टव्यम्। तदनुवादः—

प्रियमहोदय !

सनत्सुजातीयमुपहृत्य भवति मे धन्यवादार्हो भवान्। शास्त्रप्रचारार्थं लोकधीवृद्ध्यर्थञ्च भवता यत् पाण्डित्यपूर्णं पुस्तकं विरचितं, तस्य कृते कापि प्रशंसा कृतज्ञता वा पर्याप्ता न स्यात्। इति

भवदीयस्य

श्रीमद्-आशुतोषशास्त्रिणः।

( ३१ )

१४ संख्यक-नयानचाँददत्तष्ट्रीटस्थितेन श्रीयुक्तडाक्तारमुक्तशनाथवसुमहोदयेन १९३२ खृष्टाब्दस्य १९ सेप्टेम्बरदिवसे पत्रमेकं लिखितम्। मूलपत्रं वैद्यकवृत्तान्तस्य ५३९-४० पृष्टयोर्द्रष्टव्यम्। तस्य तात्पर्य्यानुवादः—

वङ्गभाषायां सान्नयालमहोदयकृतग्रन्थः पूर्व्ववर्ती च फेलोसिप् लेकचारग्रन्थ इत्येतावपेक्ष्य सर्व्वाङ्गसुन्दर ईदृशो ग्रन्थो मया पठित इत्येतत् न स्मर्य्यते।

प्रणतः

श्रीमुक्तेशनाथवसुः।

( ३२ )

लाहोरवास्तव्यो यास्कीयनिरुक्तानुवादकः पाञ्जावविश्वविद्यालयस्य संस्कृताध्यापकः श्रीयुक्तलक्ष्मणसरूप M.A., D. Phil. (Oxon)-

महोदयः सनत्सुजातमधीत्य १६३२ खृष्टाब्दस्य २१ सेप्टेम्बरदिवसे ग्रन्थकाराय पत्रमेकं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५४०-१ पृष्ठयो र्द्रष्टव्यम्। तस्यानुवादः—

प्रियमहोदय, सनत्सुजातीयेन सह भवतः सानुग्रहं पत्रं प्राप्य धन्यवादान् विज्ञापयामि। अतिहृद्यः खल्वयं ग्रन्थः। आन्तरमभिनन्दनं मे गृह्णातु भवान्। अमूल्यमिदमुपायनं प्राप्य भवति कृतज्ञतापाशेन बद्धोऽहं भवामि। इति

भवदीयस्य श्रीलक्ष्मणस्वरूपस्य।

( ३३ )

कलिकातास्थ-'संस्कृतकलेज'इत्याख्यमहाविद्यालयस्य प्रधानाध्यापकः एम्.ए. डि.लिट् ( रोम् ) पि. एइच्. डि. ( Cantab ) सि, आइ. इ- इत्युपाधिभूषितः पण्डितप्रवरः सुरेन्द्रनाथदासगुप्तमहोदयः सनत्सुजातं पठित्वा १६३२ खृष्टाब्दस्य २१ सेप्टेम्बरदिवसे प्रागुक्तविद्यालयस्य महाध्यक्ष-( Principal ) रूपेण पत्रमिदं प्रेरयामास। तस्यानुवादः—

Office of the Sanskrit College, Calcutta,
the 21st, September, 1934.

प्रिय हालदारमहोदय !

सम्प्रत्येव भवत्प्रेरितः सुरम्य उपहारः प्राप्तो मया। परं तु तत्प्राप्तिस्वीकारे विलम्बार्थं क्षन्तव्योऽयं जनः। एवंविधे ग्रन्थ दृक्पातोऽपि नूनं कञ्चित् कालमपेक्षते। अहो, कियांस्त्रासजनकः परिश्रमो ग्रन्थस्यास्य प्रणयने स्वीकृतो भवता। न केवलमेतद् वैदुष्य-सूचकं बहुविस्तीर्णं पुस्तकं मूलोपयोगिविषयानतिक्रम्य तिष्ठति, परं तु भविष्यद्गवेषिणां विचारणायां साधारण्येन सहायीभूतं भवितुमर्हति।

प्रणिधानेन सह ग्रन्थमिमं पठित्वा ततो ज्ञानलाभाय चाहमाशंसे। द्रष्टुमेकदा भवन्तमिच्छामि। शुभाशंसनं मे गृह्णातु भवान्। इति

भवदीयस्य

एस्. एन्. दासगुप्तस्य।

( ३४ )

कलिकातास्थप्रधानधर्म्माधिकरणस्य विचारपतिः पण्डितप्रवरः श्रीद्वारकानाथचक्रवर्त्तिमहोदयः सनत्सुजातमधीत्य ग्रन्थकृते १६३२ खृष्टाब्दस्य २३ सेप्टेम्बरदिवसे पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५४२-४३ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

परमकल्याणभाजन!

तव श्रद्धावदानं सनत्सुजातीयमध्यात्मशास्त्रं प्राप्नुवतः सुखसागरमवगाहते मे मनः। योगवाशिष्टरामायणपाठादनन्तरं त्वत्कृतधर्म्मग्रन्थपाठेन सविशेषमुपकृतोऽहं भवामि। उपादेयं ग्रन्थमिमं सर्व्वैः सुलभं विधाय हिन्दुधर्म्मशास्त्रपाठकानां परमोपकारो विहितस्त्वया।

कृतिनस्ते पुत्रा स्तवास्मिन् समुद्योगे सहाया अभूवन्निति मे मनसि चाधिकतरः सन्तोषः सञ्जायते। यूयं सन्मार्गचारिणो दीर्घजीविनश्च भूयास्त। इति

आशीर्व्वादकस्य श्रीद्वारकानाथशर्म्मणः।

( ३५ )

वाराणसी-संस्कृतमहाविद्यालयस्य (Banaras Sanskrit College) भूतपूर्व्वः प्रधानाध्यापकः ( Principal ) एलाहाबादविश्वविद्यालयस्य महाध्यक्षः ( Vice-Chancellor ) एम्.ए., डि.लिट्-इत्युपाधिको

महामहोपाध्यायश्रीगङ्गानाथझामहोदयः 'एलाहाबाद'विश्वविद्यालयसभामन्दिरात् ( Allahabad Senate House ) १९३२ खृष्टाब्दस्य २५ सेप्टेम्बरदिवसे ग्रन्थकृते पत्रमधोलिखितं प्रेषितवान्। तदनुवादः—

University of Allahabad.
Senate House.
Allahabad, Sep. 24th, 1932.

प्रियमहोदय !

सनत्सुजातीयग्रन्थस्य खण्डद्वयं प्राप्य धन्यवादान् ज्ञापयामि। वेदान्तविषयेऽमूल्यमिदमवदानम्। अस्य पाठो नूनं लोकानामुपकाराय भविष्यति। ग्रन्थस्थिता वङ्गभाषामय्यो व्याख्या हि दीपवत् सविशेषं भासन्ते, ताः खलु भवत एकान्ततो वैदान्तिकत्वं प्रमापयन्ति। यथेप्सितं भवता तथा खण्डमेकं विश्वविद्यालयस्य ग्रन्थागारे प्रदत्तमपरञ्च मदर्थं रक्षितम्। इति निवेदनम्

भवदीयस्य
'झा'-इत्युपाधिकस्य श्रीगङ्गानाथस्य।

( ३६ )

कलिकातास्थितष्टेट्स्म्यान-( Statesman )- पत्रिकायाः प्रवीणो ग्रन्थसमालोचकः ( reviewer ) पण्डितवरः श्रीसुरेशचन्द्रसरकारमहोदयः १९३२ खृष्टाब्दस्य २९ सेप्टेम्बरदिवसे पत्रमेकं ग्रन्थकृते प्रेरयामास। तदनुवादो यथा—

Bhowanipur, 29 Sept, 1932.

बहुमानास्पदश्रीगुरुपदहालदारसमीपे—

सविनयनिवेदनम्,

दुरूहपदानां व्याख्याने मौनं समाचरन्तः सुगमेषु पुन र्विवदूकत्वं प्रकटयन्तः प्रायशो भवन्ति व्याख्यातार इत्येवं पदार्थविप्लवं दृष्ट्वा सम्यगेव भाषितं 'पोप्'-नामधेयेन पाश्चात्त्यकविवर्य्येण—

'व्याख्यायते बुधै र्व्यक्तं पदं त्यक्त्वा तु दुर्गमम्।
अभितो भास्करं तुच्छः प्रदीपो धार्य्यते यथा॥' इति।

अधिकारेऽस्मिन्नपूर्व्वं खल्वहं मन्ये चेष्टितं भवतः, यतः कूटविषयाणां समाधानं सुकौशलेन विहितं भवता।

सर्व्वेभ्य आकरेभ्यः संगृहीततथ्यं जीवनवृत्तान्वीयं हृद्यं ते निरूपणमत्र परमावश्यकत्वेन प्रतीयते मे। तच्च भविष्यद्गवेषिणां सहायकं नूनं भविष्यति।

अमूल्यस्ते दर्शनगतानां पारिभाषिकशब्दानां संग्रहः। राजनैतिकी धर्म्मविषयिणी साहित्यसम्बन्धिन्यैतिहासिकी च समालोचना भवतः प्राकृत-जनानां चित्तं समाकर्षेत्, तथा शास्त्राणामाकरनिर्द्देशैश्चरितार्था भवितुमर्हति विदुषां समालोचनपरा प्रवृत्तिः। * * * *

इति श्रद्धावनतस्य
श्रीसुरेशचन्द्रसरकारस्य।

( ३७ )

लाहोरस्थितकालीमन्दिरतः श्रीश्रीकालिकादेव्याः सेवाभृता पण्डित-प्रवरेण श्रीयुक्तकालीप्रसन्नभट्टाचार्य्यमहोदयेन १६३२ खृष्टाब्दस्य ४ अक्टोवरदिवसे सनत्सुजातीयं प्राप्य ग्रन्थकाराय पत्रमेकं प्रेषितम्। मूलपत्रं वैद्यकवृत्तान्तस्य ५४५ पृष्ठे द्रष्टव्यम्। तदनुवादः—

लवपुरान्तर्गतहीरामण्डिस्थितकालीमन्दिरतः।
४।१०।३२

सज्जनप्रतिपालक गुणिगणाग्रगण्य विद्योत्साहिन् स्वधर्म्मनिरत विज्ञवर !

भवत्प्रेरितं पुस्तकं प्राप्य परममानन्दितोऽनुगृहीतश्च भवामि। भवतः संग्रहः शास्त्रानुशीलनञ्च विद्वज्जनानां प्रशंसार्हे भवतः। ग्रन्थश्च भवतः शिरसा धारयिष्यते विपश्चिद्भिरित्यत्र नास्ति कश्चित् सन्देहावसरः। इति निवेदनं

भवदीयस्य श्रीकालीप्रसन्नभट्टाचार्य्यस्य।

( ३८ )

एलाहाबादस्थितप्रधानधर्म्माधिकरणस्य व्यवहाराजीवः M.A., B.L. इत्युपाधिभूषितः श्रीहरेन्द्रकृष्णमुखोपाध्यायमहोदयः सनत्सुजातीयमधीत्य १६३२ खृष्टाब्दस्य ८ अक्टोवरदिवसे पत्रमेकं ग्रन्थकृते प्रेषितवान्। मूलं वैद्यकवृत्तान्तस्य ५४६ पृष्ठे द्रष्टव्यम्। तदनुवादः—

सहोदरकल्प प्रियगुरुपद !

अन्तर्गतसनत्सुजातीया बाष्पयानप्रेरिता पोटलिका यथाकालं मया प्राप्ता। एतावत्पर्य्यन्तं ग्रन्थस्तेऽंशतः पठितः। एतदनुपमग्रन्थप्रणयनेऽपूर्व्वा खलु तेऽनुसन्धानपरा प्रचेष्टा। ग्रन्थस्ते यद् वैदुष्यं प्रकटीकरोति तद्धि नितरां प्रशंसनार्हं भवति। * * इति निवेदनं

शुभानुध्यायिनः
श्रीहरेन्द्रकृष्णमुखोपाध्यायस्य।

( ३६ )

कालीघट्टवास्तव्यः प्रातःस्मरणीयराजेन्द्रनाथहालदारमहोदयस्य जामाता '२४-परगणा'-समाख्यवङ्गदेशविभागस्य विचारकः श्रीयुक्तहरिपदवन्द्योपाध्यायमहोदयः सनत्सुजातीयमधीत्य १३३६ वङ्गाब्दस्य २८ आश्विनदिवसे

ग्रन्थकाराय पत्रमिदं प्रेषितवान्। मूलं वैद्यकवृत्तान्तस्य ५४६-४८ पृष्ठेषु द्रष्टव्यम्। तदनुवादः—

परमस्नेहभाजनेषु—

त्वत्प्रेरितसनत्सुजातीयनामकपुस्तकं धन्यवादेन सह गृहीतं मया। * * अस्य सपरिशिष्टविषयान् स्थूलतोऽधीत्य वाचा प्रशंसितुं न प्रभवामि। पुस्तकमिदं यावत् पठितं तावतैव कियानुपकारो मे सञ्जात इति वक्तुं न शक्यते। सुललितसरलभाषया त्वया समालोचितो महाभारतस्यांश-विशेषोऽयम्। व्याख्यानं रम्यताया ईदृशीं कोटिमारोढुं प्रभवेदिति मे कदाचिदपि मे धारणारूढं नासीत्। अहो कियतैव वैशद्येन मूलश्लोकानां रहस्योद्घाटनं कालिकाभासे त्वया व्यधीयत! ग्रन्थस्य परिशिष्टांशगतनीरससमालोचनं क्वचित् प्राकृतजनानां हृदयं समाक्रष्टुं न प्रभवतीति सत्यम्, किंतु तव पुस्तकस्य तदंशविशेषो नानातथ्यसमन्वितत्वादमूल्यत्वेन मे प्रतिभाति। अस्मिन्नंशे बोद्धुं ज्ञातुमधिगन्तुं चानेके विषया वर्त्तन्ते। विषयास्ते त्वेतावत्या प्रसन्नतया समालोचिता यत् त्वयि नो बहुमानमधुना तुङ्गादपि कतमत् तुङ्गतरं शिखरं समारोहति तदिह वर्णयितुं न खलु शक्यते।

एवंविधं पुस्तकं प्रायशः पाठकानामादौ सरसत्वेन न प्रतीयते, परं तु मधुरया व्याख्यया भावानामपूर्व्वविश्लेषणैश्च पुस्तकं त्वयैवं सरलीकृतं यत् पाठेन तस्य पाठकानामाग्रहो नूनमुत्तरोत्तरं वर्द्धते।

कालीघट्टस्य गौरवं त्वमस्माकं च गर्व्वास्पदम्। अस्य पुस्तकस्य प्रणयने त्वया यः सपरिश्रमः प्रयत्नः प्रदर्शितस्तेन न केवलमस्माकमपि तु समाजस्य परमादरभाग् भवसि। तव च श्रीमतः पुत्रत्रयस्य च ते यशश्चायुश्च वर्द्धिषीयास्ताम्। सुखं शान्तिः स्वास्थ्यञ्च ते चिरमव्याहतानि स्थेयासुः। इति निवेदनम्—

गुणमुग्धस्य श्रीहरिपदवन्द्योपाध्यायस्य।

( ४० )

कलिकातासन्निकृष्ट-'उत्तरपाड़ा'-समाख्यग्रामस्य सुप्रसिद्धो भूस्वामी श्रीमद्-उपेन्द्रनारायणमुखोपाध्याय एम्.ए, वि.एल्.,-महोदयः सनत्-सुजातीयमधीत्य १३३९ वङ्गाब्दस्य २८ कार्त्तिकदिवसे ग्रन्थकृते पत्रमेकं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५४८ पृष्ठे द्रष्टव्यम्। तदनुवादः— कल्याणभाजन।

अन्तरान्तरा सनत्सुजातीयं ते पठ्यते मया। अस्य ज्ञानगाम्भीर्य्येण गवेषणानैपुण्येन च नितरां चमत्कृतोऽहं संवृत्तः। विपुलवैभवरक्षणा-वेक्षणे सततं व्यापृतोऽपि यदेवंविधधर्म्मग्रन्थप्रणयने प्रयत्नोत्साहधनव्ययेषु न क्वचिदपि शिथिलादरस्त्वमित्येष विषयः खलु श्लाघनीय आदर्शनीयश्च भवति जनानाम्। इति

आशीर्व्वादकस्य श्रीउपेन्द्रनारायणमुखोपाध्यायस्य।

( ४१ )

श्रीहट्टवास्तव्यः सुप्रसिद्धनैयायिकः श्रीदयालकृष्णतर्कतीर्थमहोदयः सनत्-सुजातमधीत्य १३३९ वङ्गाब्दस्य १२ माघदिवसे ग्रन्थकाराय पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५४९ पृष्ठे द्रष्टव्यम्। तदनुवादः— 'श्रद्धास्पदश्रीयुक्तगुरुपदहालदारमहोदयवेदवेदान्तादिविविधविद्याविशारदेषु— महात्मन्,

भवत्प्रणीतसनत्सुजातीयाध्यात्मशास्त्रं प्राप्य नितरामुपकृत आनन्दित-श्चास्मि। कालिकानाम्नी टीका सुतरामुपादेया प्रतिभाति। अस्यां टीकायां मादृशजनानां शिक्षणीयविषया विविधाः सन्ति। कालिकाभासनामक-वङ्गानुवादे सर्व्वेषां विषयाणां परिस्फुटत्वात् सनत्सुजातग्रन्थः प्राकृतजने-ष्वपि सविशेषमुपयोगी संवृत्तः।

परिशिष्टांशे शब्दार्थादिविवरणप्रसङ्गे च या समालोचना विहिता तद्दर्शनेन चमत्कृतोऽहमस्मि । एवंविधो ग्रन्थ इतः पूर्व्वमस्माकं गोचरीभूतो नासीत् । मन्ये—एवंविधो ग्रन्थो न विद्यत इति ।

महात्मन्, महार्घ्यरत्नराजीनां समावेशपूर्व्वकं विपुलधनव्ययेन मुद्रितमिमं ग्रन्थं विनैव मूल्येन वितीर्य्य भवता य उपकार आस्तिकानां साधित स्तथाऽस्मिन् दुःसमये य आदर्शः प्रदर्शित स्तौ खलु तुलनारहितावेव ।

विनयावनतः श्रीदयालकृष्णतर्कतीर्थः ।

श्रीहट्टः ।

( ४२ )

हावड़ास्थितकालीप्रसादवन्द्योपाध्यायलेननामकमार्गतः श्रीकृष्णकिङ्कर-देमहोदयः १३३६ वङ्गाब्दस्य २० माघदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास । मूलपत्रं वैद्यकवृत्तान्तस्य ५५० पृष्ठे द्रष्टव्यम् । तदनुवादः—

महोदय !

भवत्प्रणीतसनत्सुजातग्रन्थस्य कियन्तंचनांशं पठित्वा समधिगम्यते यदीदृशो विद्यानुरागो विश्वविद्यालयादाधुनिकोच्चशिक्षितेषु जनेषु नूनं सुदुर्लभ एवेति । महाभारतस्यांशविशेषमधिकृत्यार्षोपदेशं च हृदयङ्गमं कृत्वा कठोरपरिश्रमाध्यवसायाभ्यां पुस्तकमिदं रचयित्वा व्ययबाहुल्येन तच्च मुद्रापयित्वा विना मूल्यं धर्म्मप्रचारार्थं यथा भवान् वितरति तद्धि नैव दृश्यते भवादृशेषु धनाढ्येषु वैभवभोगिषु जनेषु । एतेन भवतां कुलदेवी-कैवल्यदायिनी-कालिकामातु र्भवति करुणाप्राचुर्य्यं भवतां च प्राक्तनसाधना च प्रकटीभूयेते । गीतायां भगवता चोक्तम्—

'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
अथवा योगिनामेव कुले भवति धीमताम् ॥' इति ।

भवतः पारिश्रमिकत्वेन श्रद्धाञ्जलिमर्पयितुं नाहमा मृत्यो र्विस्मरामि। इति श्रीचरणे निवेदनमेतत्

'दे'-इत्युपाधिकस्य श्रीकृष्णकिङ्करस्य।

( ४३ )

स्वर्गतलालमोहनचक्रवर्त्ति-M. A., P.R.S.-महोदयस्य प्राज्ञपुत्रः कालीघट्टवास्तव्यः श्रीसुशीलचन्द्रहालदारमहोदयस्य पैतृष्वस्रीयः साधक-प्रवरः श्रीमद्-उमापदचक्रवर्त्तिमहोदयः १३३९ वङ्गाब्दस्य कस्मिंश्चित् समये ग्रन्थकाराय निम्नलिखितं पत्रं प्रेरयामास।

'निवेदनम्, भो महाशय—

प्राप्तं सनत्सुजातीयमध्यात्मशास्त्रमुत्तमम्।
तत्त्वज्ञानाकरो लोके संसारव्याधिभेषजम्॥
कालिकाख्या टीका रम्या सञ्जाता सुमनोहरा।
विद्वत्त्वप्रतिभाख्यातिकर्पूरामोदमोदिता॥
यच्चावबोधसौकर्य्यात् कालिकाभासो निर्म्मितः।
तेनार्थः सरलं भाति मुकुरे प्रतिबिम्बवत्॥
आलोच्यानन्तशास्त्राणि यत्प्रामाणानि भूरिशः।
न्यस्तानि पुस्तिकामध्ये प्रशंसार्हाणि सर्व्वथा॥
पुस्तकं निर्भ्रमं कर्त्तुं प्रयत्नातिशयः कृतः।
तथापि दृश्यते तत्र स्थाने स्थाने भ्रमोद्भवः॥
तत्र वक्तव्यमेवं नः कस्य वा न भवेदयम्।
कलङ्को दृश्यते चन्द्रे मुनीनां च मतिभ्रमः॥
आलोचना परिशिष्टे या कृता ह्यैतिहासिकी।
अनुसन्धित्सुना सा हि सर्व्वा वै नानुमोदिता॥

तथापि मुक्तकण्ठन्तु ब्रूम इदं सुनिश्चितम् ।
पुस्तकं सुन्दरं जातं सत्यं सत्यं न संशयः ॥
धन्यं शास्त्रानुसन्धानं पाण्डित्यं सुमहदहो ।
चरतः प्रविवेकेन विषयारण्यभूमिषु ॥
अथवा विस्मयो ह्यत्र न कर्त्तव्यः कदाचन ।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥

इति विनीतस्य श्रीउमापदचक्रवर्त्तिनः ।

( ४४ )

कलिकातास्थ-प्रधानधर्म्माधिकरणस्य विचारको मान्यवरो डाक्तार-श्रीद्वारकानाथमित्रमहोदयः सनत्सुजातमधिकृत्य पत्रमेकं ग्रन्थकाराय १९३३ खृष्टाब्दस्य २१ मेदिवसे प्रेरयामास । मूलपत्रं वैद्यकवृत्तान्तस्य ५५२-५३ पृष्ठयो र्द्रष्टव्यम् । तदनुवादः—

कालीघट्टस्थश्रीगुरुपदहालदारमहोदयसमीपे—

प्रियवर गुरुपदमहोदय—

मदर्थं प्रेरितं सनत्सुजातीयरूपं सानुग्रहमुपायनं प्राप्य धन्यवादान् भवते भूरिशो ज्ञाप्यते मया । व्यवहारव्यापारीयकर्त्तव्येषु भारतीय-दर्शनतत्त्वसमन्वितं प्रियजनवियोगजनितशोकातुरे हृदये शान्तिमावहन्तं भवतो ग्रन्थमहमधीयानो भवामि ।

एतद्ग्रन्थपाठात् पूर्व्वं न ज्ञातं मया यद् भवत्येवंविधविविधज्ञानैः समलंकृतो भवानिति । अष्टशताधिकपत्रसमन्वितपुस्तकपाठसमुद्भूतधर्म्म-नीतिविषयकोपदेशार्थं कालीघट्टश्रीकालिकादेव्याः श्रद्धेयतमसेवाभृतामन्वय-जातो भवानेव शरणमिति समालोकेन कस्य हृदये हर्षो न समुत्पद्यते ।

संस्कृतसाहित्येऽतिनिपुणो भवानिति प्रत्ययो मे दृढ़ं संजायते। भवतस्त्रयोऽपि पुत्राः सुशिक्षिताः, हृदयेषु तेषां च द्रढ़यितुमास्तिक्यबुद्धिं शास्त्रेषु ग्रन्थस्यास्य प्रणयने कृतोद्यमो भवानिति च मे समधिक आनन्दविषयः। प्रयत्नोऽयं भवतः सफलो संवृत्त इति चिन्ता मे सौख्यमावहति। इति भवदीयस्य

श्रीद्वारकानाथमित्रस्य।

( ४५ )

औत्कलवैतरणिनामकमासिकपत्रिकायाः सम्पादकः श्रीविद्याधरसिंदेव B.A.,B.L.,M.R.A.S.-महोदयेन १९३३ खृष्टाब्दस्य मार्च-एप्रिल-मासयोः पत्रिकायाः १९८ पृष्ठे निम्नलिखितवृत्तान्तः प्रकाशितः। मूलं वैद्यकवृत्तान्तस्य ५५३ पृष्ठे द्रष्टव्यम्। तस्य तात्पर्य्यानुवादः—

वैतरणिः सप्तमखण्डः १९३३ खृष्टाब्दस्य मार्च-एप्रिलमासयोः।

सनत्सुजातीयमध्यात्मशास्त्रमतिविपुलमेकं पुस्तकं खण्डद्वयात्मकं कालिकाग्रन्थमालान्तर्भूतम्। नैतद् विक्रेयं परं तु योग्यपात्रेभ्यः समर्पणायैव प्रणीतम्। अनेन सूच्यते यद् ग्रन्थप्रणयनेन ग्रन्थकारस्य धनार्जनं नाभिप्रेतम्। शाङ्करभाष्योपेतोऽयं ग्रन्थः श्रीगुरुपदहालदारशर्म्मणा प्रणीतः। पञ्चशताधिकसहस्रपृष्ठात्मकोऽयं ग्रन्थो ज्ञानमार्गिणां हिताय प्रकल्पते कालात्ययेऽप्ययमयातयामः स्थास्यति।

( ४६ )

कटकस्थित-'र्‍याभेन्शा-कलेज'नामकमहाविद्यालयस्य भूतपूर्व्वः प्रवीणोऽध्यापकः सर्व्वजनवरेण्यो ब्राह्मणसमाजस्य शीर्षस्थानीयः श्रीगोपालचन्द्रगङ्गोपाध्याय M.A.-महोदयः सनत्सुजातमधीत्य १३४० वङ्गाब्दस्य १ श्रावणदिवसे ग्रन्थकाराय पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५५४ पृष्ठे द्रष्टव्यम्। तदनुवादो यथा—

भक्तिभाजनेषु—

भवदीयसनत्सुजातीयमधीत्य कियद्वा ज्ञानमानन्दश्च मया न लब्धे ! अतः कृतज्ञताज्ञापनमेव पत्रिकाया अस्या अभिप्रायः। विपुलोऽयं ग्रन्थो न केवलं वर्त्तमानसमाजे हितसाधको भवेत् परं परवर्त्तिनि काले वङ्गीयानैष गौरवान्वितान् विधास्यति।

वाग्देव्याः प्रसादेन भवाञ् ज्ञानानामाकर एव। अतश्चैतद् ग्रन्थप्रणयने भवतः सामर्थ्यं युज्यते। एकदा कथाप्रसङ्गेन भवता कथितं यदहं खल्वेकोऽर्णवपोतो येन कदापि समुद्रो न दृष्ट इति। व्यवहारशास्त्र-पारगोऽपि व्यवहारोपजीविकार्थं धर्म्माधिकरणं भवता नाश्रितमित्यभिप्रेत्य भवानुक्तिमिमां प्रायुङ्क्त। इदानीमवगम्यते यदर्णवपोतोऽयमाजीवनं भवता तत्त्वज्ञानभाराक्रान्तः कृत इति। अनेन खल्वर्णवपोतेन भवसमुद्र-मनायासेन तरितुं भवान् समर्थो भविष्यति। इति

भवद्गुणमुग्धस्य श्रीगोपालचन्द्रगङ्गोपाध्यायस्य।

( ४७ )

'वङ्गीयकायस्थसमाज'नामकपत्रिकायाः सम्पादकः श्रीमदुपेन्द्रचन्द्र-शेठमहादयः सनत्सुजातमधिकृत्य १६३३ खृष्टाब्दस्य ७ आगष्टदिवसे ग्रन्थकाराय पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५५५ पृष्ठे द्रष्टव्यम्। तदनुवादः—

श्रीगुरुपदहालदारमहोदयेषु—

प्रिय महात्मन् !

टीकाटिप्पनादिसमन्वितः सनत्सुजातनामको विपुलो ग्रन्थो मे दृष्टिपथं प्राप्तः। सुप्रसिद्धकविराजश्रीहाराणचन्द्रचक्रवर्त्तिना पाठार्थमेष ग्रन्थो मह्यं प्रदत्तः। अमूल्योऽयं ग्रन्थ इत्यहं मन्ये। इति

भवदीयः श्रीउपेन्द्रचन्द्रशेठः।

( ४८ )

सनत्सुजातमधिकृत्य १९३३ खृष्टाब्दस्य १० आगष्टदिवसे महामहोपाध्यायश्रीदुर्गाचरणसांख्यतीर्थमहोदयाय ढाकास्थसारस्वतसमाजेन यत्पत्रं प्रेषितं तत् पूर्वं ४८०-८१ पृष्ठयो र्द्रष्टव्यम् ।

( ४९ )

ढाकानगरस्थित-'रौहाटोल'नामकविद्यालयाध्यक्षः श्रीमधुसूदनव्याकरणतीर्थविद्याभूषणमहोदयः १३४० वङ्गाब्दस्य १४ भाद्रदिवसे ग्रन्थकाराय निम्नलिखितं प्रशस्तिपत्रं प्रेरयामास ।

श्रीयुक्तगुरुपदहालदारमहोदयसमीपेषु—

महात्मन् !

संप्राप्य पुस्तकं धीमन् सम्पूर्णं मानसेप्सितम् ।
इष्टकामप्रसिद्ध्यर्थं कामये जगदम्बिकाम् ॥

······तदीयभाषाविज्ञानद्वारेणातीव प्रीतवानहम् । अतो भगवन्निकषा सततं सपरिजनकुशलं ते विज्ञापयामीति—

निवेदनं श्रीमधुसूदनव्याकरणतीर्थविद्याभूषणस्य ।

( ५० )

वर्द्धमानस्थित-विजयचतुष्पाठीतः परमाचार्य्यः सुप्रवीणः पण्डितप्रवरो महामहोपाध्यायः श्रीवीरेश्वरतर्कतीर्थमहोदयः सनत्सुजातमधीत्य १३४० वङ्गाब्दस्य २० आश्विनदिवसे ग्रन्थकाराय निम्नलिखितपत्रं प्रेरयामास ।

'महामहोपाध्यायवीरेश्वरतर्कतीर्थस्य प्रधानाध्यापकस्य माननीयश्रीयुक्तगुरुपदहालदारमहोदयाय सविनयनमस्कारपूर्व्वकं प्रतिनिवेदनमेतत्—

तत्त्वं दार्शनिकं सनत्सुजकृतं वाङ्मनसागोचरं
गूढार्थान्धतमःसमावृतिवशाद् दुर्बोधभावान्वितम् ।
नानाशास्त्रविचारविज्ञ ! भवता व्याख्यांशुभि र्भासितं
मन्ये त्वद्गतं परोक्षमपि तत् स्वाभाति, धन्यो भवान् ॥ इति ।'

( ५१ )

अशेषशास्त्रनिष्णातमतेः श्रीगुरुपदहालदारस्य सविधे सानन्दविज्ञापनम्—
पावनासारस्वतटोलतः ।

महात्मन्—

सनत्सुजातीयसमाह्वयं भवत्-
सकाशतः प्राप्य मनोज्ञभाष्ययुक् ।
अध्यात्मशास्त्रं नवकालिकाख्यया
साभासयाऽलंकृतमात्मटीकया ॥
यत् कालिकायाः परिशिष्टमन्ततो-
ऽप्यत्यन्तविद्वत्त्वविकाशकं हि तत् ।
समग्रमालोकयतोऽद्य मञ्जुलं
मनो ममामोदभरं वहत्यलम् ॥ इति

सारस्वतविद्यालयाध्यापक—
श्रीदुर्गाप्रसन्नविद्याभूषण-भट्टाचार्य्यस्य
पावनातः ।

पावना-सारस्वतटोल
१३४०।२७शे आश्विन ।
जिला पावना ।

( ५२ )

१३४० वङ्गाब्दस्य १९ अग्रहायणदिवसे भट्टपल्लीस्थितविद्वन्मण्डली

'दर्शनसागरे'त्युपाधिना ग्रन्थकारं समलंचकार, तर्करत्नमहोदयप्रदत्त-सरस्वतीत्युपाधिञ्च तत्र सभायां समर्थयामास। मानपत्रे लिखितमस्ति—

"भट्टपल्लीपण्डितसमाजप्रदत्तं मानपत्रम्—

श्यामाश्रीचरणाब्जचारणचिरप्रेमा च तीर्थाश्रयः
शास्त्रार्थोत्तमरत्नधारणपरस्तत्त्वेन्दुदत्तेत्त्वणः।
हालदारोपपदो द्विजो गुरुपदः सद्भट्टपल्लीबुधै-
र्दत्तं दर्शनसागरेति शुभदोपाधिं भजन् जीवतात्॥

श्रीकमलकृष्णस्मृतितीर्थदेवशर्म्म-
न्यायतीर्थोपाधिकश्रीश्रीजीवदेवशर्म्म-
तर्कतीर्थोपाधिकश्रीमन्मथनाथदेवशर्म्म-
श्रीजगद्दुर्ल्लभस्मृतितीर्थदेवशर्म्म-
श्रीदुर्गाचरणकाव्यतीर्थदेवशर्म्म-
श्रीअमरनाथस्मृतिरत्नदेवशर्म्म-
श्रीसुजीवकाव्यतीर्थदेवशर्म्म-
श्रीरामरूपविद्यारत्नदेवशर्म्म-
श्रीदाशरथिदेवशर्म्म-
श्रीनारायणचन्द्रस्मृतितीर्थदेवशर्म्मभिः।"

( ५३ )

१३४० बङ्गाब्दस्य १६ अग्रहायणदिवसे प्रथितनामा पण्डितप्रवरो महामहोपाध्यायकमलकृष्णस्मृतितीर्थमहोदयो ग्रन्थकारायाधोलिखितं संवर्द्धना-सूचकं स्वतन्त्रं पत्रमेकं प्रददौ।

'कालीघाटवास्तव्यहालदारवंशभूषण-श्रीयुक्तगुरुपदहालदारमहोदयानां ससंवर्द्धनमुपाधिपत्रदानम्—

मारीचान्वयकौस्तुभो गुरुपदानुध्यानकृद्भूसुरः
श्रीमाञ्छास्त्रचयानुशीलनमहावर्चोभिराबृंहितः ।
आचारे विनये श्रिया गुरुपदो मार्गानुसारी सतां
विद्वान् दर्शनसागरेत्यभिधया सम्पूज्यते सादरम् ॥

वङ्गाब्दाः १३४०।१६शे अग्रहायण—महामहोपाध्याय-श्रीकमलकृष्ण-स्मृतितीर्थदेवशर्म्मप्रदत्तम् ।'

( ५४ )

तस्मिन्नेव समये भट्टपल्लीस्थः सुप्रसिद्धः पण्डितप्रवरः श्रीमन्मथनाथ-तर्कतीर्थमहोदयोऽपि स्वतन्त्रमधोलिखितमभिनन्दनपत्रं प्रादात्—

'माननीयश्रीलश्रीयुक्तगुरुपदहालदारमहोदयस्य शुभागमनमुपलभ्याभि-नन्दनपत्रमिदम्—

अध्यात्मशास्त्रपरिशीलनलब्धसंविद् !
विद्वत्समाजपरिमण्डन ! भूमिदेव !
त्वामद्य धर्म्मनिरतं सुधियं समेत्य
सम्भूष्यसे "गुरुपद" ! प्रियमण्डनेन ॥

* * * *

सद्धर्म्मकौस्तुभमणि र्विनयप्रभाक्-
त्मानोन्नताद्रिरसतामसि कालकूटः ।
विद्यासुधा त्वमिति "दर्शनसागरो"प-
नाम्ना विमण्डिततनु र्जय जीव शश्वत् ॥

श्रीमन्मथनाथतर्कतीर्थशर्म्मणः । भट्टपल्लीतः ।'

( ५५ )

औपन्यासिकप्रवरः श्रीयुक्तशरच्चन्द्रचट्टोपाध्यायमहोदयः सनत्सुजातं प्राप्य १३४० वङ्गाब्दस्य १६ अग्रहायणदिवसे पत्रमेकं ग्रन्थकाराय प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६० पृष्ठे द्रष्टव्यम्। तदनुवादः—

नमस्कारान्ते निवेदनम्—

भवतो निष्ठायाः पाण्डित्यस्य च परिचायकस्वरूपं सनत्सुजातं प्राप्य परमानन्दो लभ्यते मया। भवतो वर्त्तमानजीवनस्यालोको भविष्यज्जीवनमधिकतरमालोकितं कुर्य्यादित्याशास्यते। भगवतः सकाशे प्रार्थ्यते यद् भवतो धर्म्ममयं जीवनं सुदीर्घं भूयादिति।

वशंवद-श्रीशरच्चन्द्रचट्टोपाध्यायस्य।

( ५६ )

१३४० वङ्गाब्दस्य २२ अग्रहायणदिवसे दैनिकवसुमतीपत्रिकायां ग्रन्थकारस्य भट्टपल्लीत उपाधिलाभमधिकृत्य वार्तैका प्रकाशिता। मूलं वैद्यकवृत्तान्तस्य ५६० पृष्ठे द्रष्टव्यम्। तदनुवादः—

'पण्डितस्य सम्माननार्थं दर्शनसागरोपाधिदानम्।'

भट्टपल्ल्याम्, ७ डिसेम्बरदिवसे।

कालीघट्टवास्तव्य-श्रीगुरुपदहालदारस्याध्यात्मिकोन्नतिविषयमधिकृत्य पुस्तकविशेषप्रणयनाद् भट्टपल्लीस्थपण्डितवर्गो विगते ६ डिसेम्बरदिवसीयापराह्णे ५ घटिकासमये संस्कृतविद्यालये मिलित्वा तस्मै ग्रन्थकाराय 'दर्शनसागर'इत्युपाधिं प्रददौ।'

( ५७-५८ )

१९३३ खृष्टाब्दस्य ६ डिसेम्बरदिवसे 'अमृतबाजार'-'फरोयार्ड'-पत्रिकयोश्चाधोवर्णिता वार्ता प्रकाशिता। मूलवृत्तान्तौ वैद्यकवृत्तान्तस्य ५६१ पृष्ठे द्रष्टव्यौ। तदनुवादः—

## 'पण्डित-सभाजनम्'

कालीघट्टवास्तव्यश्रीयुक्तगुरुपदहालदारमहोदयं सभाजयितुं तत्प्रणीत-संस्कृतटीकासमन्वितं वङ्गभाषायामनूदितमैतिहासिकटिप्पण्युक्तञ्चाध्यात्मिकं सनत्सुजातीयमहाग्रन्थं प्रशंसितुं भट्टपल्लीस्था प्रथितयशा विद्वन्मण्डली १६३३ खृष्टाब्दस्य ६ डिसेम्बरदिवसे पञ्चघटिकायामपराह्णे स्थानीय-संस्कृतमहाविद्यालयसभागृहे सम्मिलिताऽभूत्। न खलु विक्रयार्थं परं समाजे पण्डितानामाध्यात्मिकभावधाराप्रचारार्थं विरचितं पुस्तकमिदम्। पण्डिताग्रगण्यपञ्चाननतर्करत्नमहोदयेन सभापतेरासनेऽलंकृते विद्वन्मण्डली तस्मै ( हालदारमहोदयाय ) दर्शनसागरेत्युपाधिं प्रादात्। तर्करत्नमहोदयस्तु काशीतः परुत् सरस्वतीत्युपपदेन समलंचकार हालदारमहोदयम्। सभाया-मस्यामसौ सरस्वतीत्युपाधिः समर्थितः। पण्डितानां सम्भावनायाः प्रत्युत्तर-त्वेन हालदारमहोदयो नातिदीर्घमभिभाषणमेकं प्रददौ।

महामहोपाध्यायकमलकृष्णस्मृतितीर्थ-विद्यालयाध्यक्षश्रीश्रीजीवन्यायतीर्थ (एम्.ए) - श्रीमन्मथनाथतर्कतीर्थादयः पण्डितप्रवरास्तत्र समुपस्थिता आसन्।

( ५६ )

पावनास्थित'गुणाइगाछा'ग्रामतः पण्डितः श्रीरमाकान्तभट्टाचार्य्यमहोदयः १६३३ खृष्टाब्दस्य १२ डिसेम्बरदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६२ पृष्ठे द्रष्टव्यम्। तदनुवादः—

परमश्रद्धास्पदेषु—

अमृतवाजारपत्रिकायां भवतो भट्टपल्लीसमाजप्रदत्तोपाधिवृत्तान्तं पठित्वा निरतिशयमानन्दितोऽस्मि। भवद्व्याख्यातं सनत्सुजातम् एक उपादेयो ग्रन्थः। अवसरकाले स मे चित्तविनोदनस्य मोहावसानस्य च कारणं भवति। प्रार्थ्यते परमेश्वरो भवते दीर्घजीवनमानन्दं च देयादिति।

इति मङ्गलाकाङ्क्षिणः श्रीरमाकान्तभट्टाचार्य्यस्य।

( ६० )

१३४० वङ्गाब्दस्य १ चैत्रदिवसे महामहोपाध्यायश्रीयुक्तफणिभूषण-तर्कवागीशमहोदयो भट्टपल्लीस्थपण्डितसमाजप्रदत्तं 'सरस्वती-दर्शनसागरे'-त्युपाधिद्वयं समर्थयमानो ग्रन्थकाराय निम्नलिखितश्लोकात्मकपत्रं प्रेरयामास।

कालीघट्टविशुद्धपीठनिलय श्रीमन् महाकालिका-
सेवाभृत्कुलभास्वते गुरुपदेत्याभृते श्रीमते।
दत्तं सद्भिरुपाधियुग्मकमिदं यद् भट्टपल्लीस्थला-
देतद् योग्यसभाजनेन महतीं प्रीतिं प्रपद्यामहे॥

महामहोपाध्यायः श्रीफणिभूषणतर्कवागीशः। १।१२।१३४०।

( ६१ )

कलिकाता-'कर्पोरेशन्'-सम्प्रदायस्य भूतपूर्व्वः 'मेयर'पदभाक् सुप्रसिद्ध-व्यवहाराजीवः श्रीमत्सनत्कुमाररायचौधुरि M.A. B.L.-महोदयः सनत्सुजातीयमध्यात्मशास्त्रमधीत्य १३४१ वङ्गाब्दस्य ८ ज्यैष्ठदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६३ पृष्ठे द्रष्टव्यम्। तदनुवादः—

पूज्यपादेषु—

भवत्प्रणीतसनत्सुजातीयग्रन्थं प्राप्याहमनुगृहीतोऽस्मि। अस्मिन् पुस्तके पाण्डित्यस्य गवेषणायाश्च यः परिचयः प्रतिपङ्क्ति विलसति स खलु वङ्गदेशस्य श्लाघाया विषयः एव।

निवेदकः श्रीसनत्कुमाररायचौधुरी।

( ६२ )

ढाकास्थित'हल्दिया'ग्रामात् सुप्रसिद्धः पण्डितप्रवरः श्रीसीतानाथ-तर्कवागीशमहोदयः सनत्सुजातं प्राप्य १३४३ वङ्गाब्दस्य २१ भाद्रदिवसे

ग्रन्थकाराय पत्रमेकं गद्यपद्यात्मकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६३-६४ पृष्ठयो द्रंष्टव्यम्। तदनुवादः—

सम्मानास्पद-श्रीयुक्तगुरुपदहालदार......

सविनयनिवेदनम्—

महात्मन्, भवत्प्रदत्तं सनत्सुजातीयग्रन्थमधिगम्य तस्य कियांश्चनांशो मया पठितः। समग्रग्रन्थपाठो दीर्घकालसापेक्ष एव। परं त्वहमानन्दातिशयात् तावत्कालमपेक्षितुं नालं भवामि।

मया बुध्यते यद् भवान् कस्मिंश्चित् स्तुतिवादे परितोषं न भजते तथापि मनस आवेशसहनेऽसमर्थो भूत्वा सरलान्तःकरणेन भवते कथंचिद् मानसभावमधो निवेदयामि। धृष्टता मे क्षन्तव्या। इति

श्रीसीतानाथतर्कवागीशस्य।

महोदय—

तत्त्वज्ञानविधूतमोहनिवहः श्रीकालिकासेवकः
शास्त्राम्भोधिसुमन्थनातिनिपुणः प्रज्ञासुधास्वादकः।
वेदान्तप्रतिपाद्यपूर्णपरमब्रह्मैकचिन्तापरो
नित्यं सञ्जयतु प्रसन्नहृदयो धीमान् दयावान् भवान्॥

गुरुपदगतचित्तः कालिकावीजवित्तो
गुरुपदनतिधर्म्मा पूतनिष्कामकर्म्मा।
गुरुपदशरणश्च श्रीभवान् सत्यनिष्ठो
गुरुपद! जयशीलः शान्तसान्तोऽस्तु शश्वत्॥

धन्या मान्या वरेण्या गुरुपद! सुयता लेखनीवर्णसूता
धन्यं धन्यं विशुद्धं हृदयमु भवतो भाव्यभावानुभाव्यम्।
पाण्डित्यं चापि धैर्य्यं निरुपममधुना दृश्यते कुत्रचिन्नो
चित्रं तेभ्यो नमो ये भवति गुणगणाः संस्थिता योगजाताः॥

भारते भारती भाति कोमले चित्तपुष्करे ।
साधका भावुका भक्ताः स्वादयन्ति पदामृतम् ॥
नमोऽस्तु ते सत्त्वजसूक्ष्मबुद्धये
नमोऽस्तु ते संयमचित्तशुद्धये ।
नमोऽस्तु ते पुण्यपवित्रमूर्त्तये
नमोऽस्तु ते निर्म्मलकर्म्मकीर्त्तये ॥
ज्ञानरत्नाकरायास्मै पूर्णाय भवते स ते ।
किं मया तदुपानेयमुपायनमनिन्दितम् ॥
ज्वालितः कालिकादीपो येन वेदान्तदीप्तये ।
कालिकाप्रीतये तस्मै वाङ्मालां श्रद्धयाऽर्पिता ॥
ज्ञानाय मुग्धस्य विहाय निद्रां तोषं च तल्पे निशि यो निषण्णः ।
चिन्तारतः साधु लिलेख तत्त्वं पुत्रैश्च कच्चित् कुशली भवान् सः ॥

श्रीसीतानाथतर्कवागीशस्य ।

२२।५।४३

( ६३ )

१८३७ खृष्टाब्दस्य २६ जुलाइदिवसे प्रकाशिते, आर. पि. चट्टोपाध्याय-सम्पादिते, के. आर. खोस्लासंकलिते च Silver Jubilee Souvenir (रजतजयन्तीस्मारके)-ग्रन्थविशेषे लिखितमस्ति । मूलं वैद्यसवृत्तान्ते ५६५-६७ पृष्ठेषु द्रष्टव्यम् । तदनुवादो यथा—

"स्वर्गतकेनारामहालदारस्यात्मजो बि.एल-सरस्वती-दर्शनसागरोप-नामको रजतजयन्तीपदकप्राप्तः श्रीश्रीकालिकादेव्याः प्रधानसेवाभृच्च श्रीगुरुपदहालदारमहोदयः कलिकातान्तर्गतकालीघट्टजनपदे १८७६ खृष्टाब्दे समजनि । स हालदारमहोदय आलिपुराख्यदेशविभागस्य भूतपूर्वो-

ऽवैतनिकधर्म्माध्यक्ष आसीत्। विश्वविद्यालयात् ससम्मानमधिगतविद्यस्य 'वलाइचाँद एम्.ए, अजितकुमार एम्-एस्-सि. वि-एल, भारतीविकाश एम्-ए.वि.एल्—इति तस्य पुत्रत्रयस्य ज्ञानवृद्ध्यर्थं स हि संस्कृतभाषायां वङ्गभाषायाञ्च लिखितं पञ्चशताधिकसहस्रपृष्ठव्यापिनं सनत्सुजातीयं महाग्रन्थं व्यरचयत्। देवनागरलिप्यां वङ्गलिप्याञ्च संस्करणद्वयसमन्वितो दशसहस्रमुद्रात्मकेन ग्रन्थकृतो निजव्ययेन मुद्रितो ग्रन्थोऽयं सनत्सुजातीय-वेदान्तमतवादस्य प्रचारार्थं सर्व्वभारतीयेषु प्रथितयशःसु पण्डितेषु चतुष्पाठी-महाविद्यालयसर्व्वजनीनपाठागारेषु च सर्व्वत्र विना मूल्यं वितीर्णोऽभूत्। ग्रन्थेऽस्मिन् प्रकाशं गते वङ्गीयैस्तथा वाराणसीस्थितैश्च पण्डिताग्रगण्यैः सरस्वती-दर्शनसागरवेदान्तभूषणादीनि विविधानि विद्यामानपदानि ग्रन्थकृते ससम्मानं प्रदत्तानि। भारतवर्षे ब्रिटिशशासनावसरे न कोऽप्येतादृशः पाण्डित्यपूर्णो ग्रन्थः प्रकाशं गत इति पण्डितानां केचिन्मन्यन्ते।

भट्टपल्लीविद्वन्मण्डलीसनिर्ब्बन्धानुरोधाद्धालदारमहोदयेन भारतभूमौ प्रचरतां पञ्चदशभ्योऽप्यधिकानां संस्कृतव्याकरणानां तदीयसम्प्रदायानाञ्च सप्तशतपृष्ठव्यापी तुलनामूलक इतिहासग्रन्थो व्यरचि। ग्रन्थोऽयमधुना प्रकाशनयोग्यतां संप्राप्तः। विश्रुतानां पण्डितानां केषाञ्चिन्मते ग्रन्थोऽयं विश्वकोषवत् खल्वपूर्व्वैका सृष्टिः। स च प्राचीनेभ्यः साम्प्रतिकेभ्य-श्चैवंजातीयग्रन्थेभ्योऽतिरिच्यते। वङ्गप्रदेशपालकत्वेन लर्ड कारमाइक्याल-महोदयः—आर्ल् अव् रोनाल्डशेमहोदयश्च ( यो ह्यधुना मार्कुयिस् अव् जेट्ल्याण्ड इति नाम्ना प्रसिद्धः) इत्येतयो र्महामान्ययोः कालीघट्टस्थितमन्दिर-परिदर्शनावसरे ताभ्यां महनीयाभ्यां हिन्दुदेवतारहस्यं स विशदीकृतवान्। प्राच्यप्रतीच्यदर्शनेषु तस्यागाधपाण्डित्येन समाकृष्टो लर्ड रोनाल्डसेमहोदयो-ऽवोचत्—"प्राचीप्रतीच्योः सायुज्येनावस्थानं दृश्यते हालदारमहोदये" इति।

काञ्चीमठाधीशजगद्गुरुशङ्कराचार्य्यैस्तथा माननीयपण्डितमदनमोहन-मालव्यमहोदयश्च कालीघट्टे हालदारमहोदयेन सह संलापेन हिन्दुदर्शन-तत्त्वेषु तस्य ज्ञानगाम्भीर्य्यं व्याख्यावैशद्यञ्च समालोक्य नितरां सपरितोष-मवादिष्टां यद् भारतस्य तीर्थान्तरे न कदापि दृष्टोऽनेन सदृशः कोऽपि जन इति। तस्य शास्त्रीयज्ञानगाम्भीर्य्यहेतोः स्वर्गतस्य महामान्यराजाधिराजस्य सम्राट्पञ्चमजर्ज्जमहोदयस्य रजतजयन्तीमहोत्सवसमये दक्षिणकलिकाता-पण्डितैः परिचालितानां कालीघट्टनाख्यमन्दिरेऽनुष्ठितपूजाहोमकर्म्मणां परिदर्शकत्वेन नियोजितोऽभूदयं हालदारमहोदयः।"

( ६४ )

कलिकातास्थित-प्रेसिडेन्सीकलेजनामकमहाविद्यालयस्य कलिकाताविश्व-विद्यालयस्य च भूतपूर्व्वोऽध्यापकः श्रीजयगोपालवन्द्योपाध्याय M.A.-महोदयः सनत्सुजातमधिकृत्य ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६७-८ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

सुहृद्वरेषु—

भवतोपहृतसनत्सुजातीयस्य साधुव्यवहारः क्रियते। तस्य प्रथमोऽध्यायः समापितः। भवदीयग्रन्थसमीपे शिष्यत्वं स्वीकृतमेव।

शुभार्थी श्रीजयगोपालवन्द्योपाध्यायः।

( ६५ )

'वाग्नान्'ग्रामतो विद्वद्वरः श्रीरसिकमोहनशर्म्मा १३४० वङ्गाब्दस्य २ चैत्रदिवसे सनत्सुजातविषयकं पत्रमेकं ग्रन्थकृते प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६८ पृष्ठे द्रष्टव्यम्। तदनुवादः—

नमस्कारपूर्व्वकनिवेदनम्—

भवत्प्रेषितं सनत्सुजातीयं भक्तिसहकारेण शिरसि धार्य्यते। विपुलोऽयं ग्रन्थः शिक्षितसमाजे नियतमशेषकल्याणं साधयिष्यत्येव। अहं

तावदष्टाशीतिवर्षीयः। ईदृश्यामवस्थायामपि भवतो विशेषपाण्डित्यपूर्णं धर्म्मज्ञानसंवलितं ज्ञानगर्भं ग्रन्थं पठितुं प्रवृत्तोऽहम्। इति

विनीतश्रीरसिकमोहनशर्म्मणः।

( ६६ )

कटकस्थित 'रामेन्शकलेज' नामकविद्यालयस्य भूतपूर्व्वः प्रधानाध्यापकः श्रीगोपालचन्द्रगङ्गोपाध्यायमहोदयो व्याकरणदर्शनेतिहासं प्राप्य तदधिकृत्य सनत्सुजातमधिकृत्य च पत्रमेकं १६४४ खृष्टाब्दस्य २३ मार्चदिवसे ग्रन्थकाराय प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६८-६६ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

श्रद्धास्पदेषु—

पूर्व्वेद्यु र्भवतो व्याकरणदर्शनेतिहासो मया प्राप्तः। * * *

सनत्सुजातीयस्य पाठानन्तरमिदमेव मनसि मे समुदितं भवति यद् एतादृशी टीका शताब्द्यामस्यामभूतपूर्व्वैवेति। पुस्तकमिदं मत्सान्निध्ये सततमेव स्थाप्यते। ततश्च कियदेव ज्ञानं कियांश्चानन्दो न प्राप्येते मया। एतद्ग्रन्थद्वयप्रणयनेन देशस्य नो गौरवं भवान्। दीर्घजीवनं लब्ध्वा भवान् साहित्यं सेवताम्। यथासौकर्यं गत्वा भवन्तं द्रष्टुमिच्छामि। इति निवेदनं

भवतो गुणमुग्धस्य श्रीगोपालचन्द्रगङ्गोपाध्यायस्य।

( ६७ )

महामहोपाध्यायो डाक्तार-गणनाथसेन M.A.-महोदयो व्याकरणदर्शनेतिहासप्राप्त्यवसरे सनत्सुजातमधिकृत्य १६४४ खृष्टाब्दस्य १६ एप्रेल-दिवसे पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६६-७० पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

सविनयनिवेदनम्—

भवत्प्रणीतव्याकरणदर्शनेतिहासं प्राप्य नितरां प्रीतोऽस्मि। प्रागेव भवत्प्रणीतसनत्सुजातीयग्रन्थमुपहारस्वरूपेण प्राप्य कृतार्थ आसम्। अनुपम-मसामान्यं च पाण्डित्यं गवेषणाशक्तिः सिद्धान्तविवेकश्च भवतः पण्डितेषु हर्षं विस्मयं चोत्पादयन्ति।

भवता सह मे साक्षात्परिचयाभावेऽपि भवान् नीरवकर्म्मी पण्डित-शिरोमणिश्चेति वार्त्तां प्रायशः सुहृद्भ्योऽहमाचक्षे। भवांश्चिरजीवी भूत्वा ज्ञानमित्थं वितीर्य्यादिति भगवत्सकाशे प्रार्थ्यते मया। इति

भवदीयश्रीगणनाथशर्म्मणः।

( ६८ )

शान्तिनिकेतनात् पण्डिताग्रगण्यो महामहोपाध्यायश्रीविधुशेखरशास्त्रि-महोदयः १३५१ वङ्गाब्दस्य ११ वैशाखदिवसे व्याकरणदर्शनेतिहासप्राप्त्य-वसरे व्याकरणदर्शनेतिहास-सनत्सुजातग्रन्थावधिकृत्य ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५७०-७१ पृष्ठयो द्रष्टव्यम्। तदनुवादः—

श्रद्धास्पदेषु—

भवता प्रणीतं प्रेरितं च व्याकरणदर्शनेतिहासं यथाकालं प्राप्यानु-गृहीतो भवामि। कियतश्चित् कालात् पूर्व्वं सनत्सुजातीयस्य विपुलां व्याख्यामालोचनां चाधीत्य भवदीयगभीरपाण्डित्यस्य भूयोदर्शितायाश्चानन्यसाधारणपरिचयं समधिगम्य नितरामानन्दित आसम्। पुनरपि भवदीयव्याकरणदर्शनेतिहासमवाप्य नानाविधकार्य्यव्याप्टतोऽप्यन्तराऽन्तरा तस्य यावदंशः पठितस्तावतैव पूर्व्ववदानन्दमनुभवामि। अतो भवन्तं प्रति श्रद्धा मे बहुगुणैव वृद्धिं प्राप्ता। नूतनेऽस्मिन् ग्रन्थे ( व्याकरणदर्शनेतिहासे )

येषां विषयविशेषाणामवतारणा समालोचना च भवता कृते, ते खलु सुगमे न भवतः। स्वल्पा एव जना एवं कर्त्तुं समर्था भवन्ति। भवदीयग्रन्थे तत्त्वान्येवंविधानि वर्त्तन्ते यानि भविष्यति खलु आकरत्वेन ग्रहीष्यन्ते।

भवदीयश्रीविधुशेखरभट्टाचार्य्यः।

( ६९ )

कलिकातास्थ प्रेसिडेन्सिकलेजनामकमहाविद्यालयस्य कलिकाताविश्वविद्यालयस्य च भूतपूर्व्वोऽध्यापकः श्रीजयगोपालवन्द्योपाध्यायमहोदयः सनत्सुजातीयमधिकृत्य १३५१ वङ्गाब्दस्य १३ वैशाखदिवसे पुनरपि ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५७१ पृष्ठे द्रष्टव्यम्। तदनुवादः—

परमस्नेहास्पदेषु—

एतावता कालेन सनत्सुजातीयग्रन्थस्तृप्तिसहकारेण मया यथार्थतोऽधीतस्तस्य समाप्तिं च नीतः। अतो य आनन्दो लब्धस्तमेव ज्ञापयितुं पत्रमेतदभिप्रेतम्। तस्मादानन्दानुभवाद् भवते शुभाशीर्ज्ञापनमपि समुद्दिश्यते मया। इति

भवदीयगुणमुग्धश्चिरशुभार्थी च
श्रीजयगोपालवन्द्योपाध्यायः।

( ७० )

मूलायोड़संस्कृतविद्यालयस्य स्मृतिव्याकरणयोरध्यापकः पण्डितप्रवरः श्रीवीरेशनाथविद्यासागरमहोदयः सनत्सुजातमधीत्य १३५१ वङ्गाब्दस्य ७ आश्विनदिवसे ग्रन्थकाराय पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५७२ पृष्ठे द्रष्टव्यम्। तदनुवादः—

परमशुभाशीर्विज्ञापनमिदम्—

भवदीयपत्रेण सह 'सनत्सुजातीयाध्यात्मशास्त्र'-नामकग्रन्थं प्राप्य मया परमानन्द उपलब्धः। गुण-ज्ञान-धन-धर्म्माचरणै र्लब्धप्रतिष्ठस्य भवादृशजनस्य मादृशं निःस्वं ब्राह्मणपण्डितं प्रति विनयसौजन्यमयीमीदृशीं भाषामद्यत्वे दृष्ट्वा विस्मितो धन्यश्च भवामि। अथवा भवादृशधर्म्मपरायण-सुपण्डितानामीदृशो व्यवहारो विचित्रत्वेन न प्रतिभाति। उक्तं च— 'भवन्ति नम्रास्तरवः फलोद्गमैरि'ति।

शुभानुध्यायिनः
श्रीवीरेशनाथशर्म्मणः।

( ७१ )

श्रीयुक्तडाक्तारकालिदासनाग-M.A., D.Lit. (Paris)-महोदयः सनत्सुजातं प्राप्य १६४४ खृष्टाब्दस्य १० अक्टोबरदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५७२ पृष्ठे द्रष्टव्यम्। तदनुवादः—

भक्तिभाजनेषु—

सनत्सुजातीयमधिगतम्। ग्रन्थोऽयं न केवलं सुरक्षितो वर्त्तते गृहे मम, परंतु स यथावकाशमधीयते मया। भवतः पाण्डित्यमगाधमाध्यात्मिकीं प्रेरणां च दृष्ट्वा विमुग्धा भवामि। यः कश्चन भवतः सनत्सुजातीयमधीयीत स खलु दुःखवेदनयोरन्धकारं दूरीकृत्य समाश्वासमालोकानन्दस्थानं च लभेतेति विश्वस्यते मया। यादृशं रत्नजातं भवता शास्त्रतः समुद्धृतं तत्साहाय्येन बहव एव जनाः शोकान्धकारमुत्तीर्य्य ज्योतिर्म्मयलोकस्याभासं लभेरन् यः खलूपनिषदि समाम्नायते तमसः परस्तादिति।

विनीतस्य श्रीकालिदासनागस्य।

७२

( ७२ )

दिनाजपुरस्थधर्म्मसभातः श्रीमद्अमरचन्द्रस्मृतिसांख्यतीर्थमहोदयः सनत्सुजातीयग्रन्थं प्राप्य १३५१ वङ्गाब्दस्य २६ अग्रहायणदिवसे ग्रन्थकृते निम्नलिखितं पत्रं प्रेरयामास—

'परमसम्मानास्पद-श्रीयुक्तगुरुपदहालदारविप्रवरमहाशयाय सविनयनमस्कार-निवेदनम्—

* * * *

द्विजसत्तम तावकीं कृतिं भवताऽध्यात्मविचारणोज्ज्वला।
हृदयं हि दधाति साग्रहं मयि विन्यस्यत इत्युदीरयत्॥

* * * *

इति विनयावनत-
श्रीअमरचन्द्रदेवशर्म्मणः
स्मृतिसांख्यतीर्थोपनामकस्य।

( ७३ )

प्रख्यातमहामहोपाध्यायोपाधिकः काशीराजपण्डितः श्रीशङ्करतर्करत्नन्यायकेशरिमहोदयः सनत्सुजातमधिकृत्य १९४४ खृष्टाब्दस्य २४ डिसेम्बरदिवसे शुभाशीःसूचकं कवितात्मकं निम्नलिखितं पत्रं ग्रन्थकाराय प्रेषयामास—

'निरन्तरशुभार्थिनः श्रीश्रीशङ्करदेवशर्म्मणः शुभाशीःपूर्व्वकं समावेदनम्—

देव्याः श्रीकालिकायाश्चरणसरसिजं सेवसे भक्तिवित्तैः
पुत्रैः पौत्रै युतं त्वां त्रिभुवनजननी रक्षति क्रोड़देशे।
सर्व्वाः शक्ती निंधाय त्वयि बुध, सुतवात्सल्यमाविश्चकार
येनासि त्वं विद्यावसुषु, गुरुपदालंकृतः संज्ञयापि॥

पूर्व्वं व्याकरणेतिहासविषयग्रन्थः कृतो धीमता
न्यस्तं तत्र मतं पुराणविदुषां प्राचीप्रतीचीजुषाम् ।
रम्यां शास्त्रविचारयुक्तिपटलीं दृष्ट्वा परं निश्चितं
कण्ठस्था तव सा विभाति सकलज्ञानप्रदा शारदा ॥

स्वनिपुणलिपिशोभि प्ररिताध्यात्मशास्त्र-
मपरमनुदिनं स्वै र्वन्धुवर्गैरधीत्य ।
जनितविबुधतोषां वीक्ष्य ते शास्त्रचर्चां
विनयिवर मुदाऽहं धन्यवादान् ददामि ॥

प्रार्थ्यं नित्यं मम तु भगवद्विश्वभर्त्तुः समीपे
लब्ध्वा चायुः शतपरिमितं पुत्रपौत्रैः समेतः ।
मन्दाक्रान्तामतिकृशतनुं भारतीं देवतानां
पुष्टां यत्नै र्विदधतु भवान् कीर्त्तिमञ्छक्तिशालिन् ॥

( ७४ )

पावनादर्शनविद्यालयस्याध्यापकः श्रीतारानाथसप्ततीर्थमहोदयः सनत्सुजातमधिगम्य १३५१ वङ्गाब्दस्य २६ पौषदिवसे निम्नलिखितं पत्रं प्रेरयामास—

पावना, २६।९।५१ ।

साशीर्व्वादनिवेदनम्—

भवत्प्रणीतसनत्सुजातीयमध्यात्मशास्त्रं प्राप्तस्य मे नरीनृत्यते मानससरोजमानन्देन वायुना । प्रार्थ्यते च भवत्कुशलम् । पठ्यते च पुस्तकमिदम् । भवत्पाण्डित्यं कालिकाकालिकाभासाख्यटीकाद्वये भूरिशः प्रदर्शितम् । इति

श्रीतारानाथदेवशर्म्मणः सप्ततीर्थस्य
दर्शनविद्यालयाध्यापकस्य ।

( ७५ )

काशीराजसभापण्डितः श्रीश्यामाकान्ततर्कपञ्चाननमहोदयः १३५१ वङ्गाब्दस्य २६ पौषदिवसे ग्रन्थकाराय श्लोकात्मकं निम्नलिखितं पत्रं प्रेरयामास ।

'पूते तीर्थवरे वरेण्यसुकुले जातोऽभिजातोऽसि भो
विद्यासु व्यसनी धनी च विनयी प्राज्ञः सतामग्रणीः ।
आर्य्याचारपरम्परासु रुचिमान् विद्वत्सु चूड़ामणि-
स्तीर्थानां सरणि र्विनायकजन-प्रख्यातचिन्तामणिः ॥

धीमन् व्याकरणेतिहासविषये तन्त्रे स्वतन्त्रः सुधी
र्मीमांसाद्वयसांख्ययोगनिगमे शास्त्रेऽप्यभिज्ञो भवान् ।
दक्षो मोक्षकथाविचारचतुरः सत्पुत्रपौत्रै र्वृतः
सामानाधिकरण्यमस्ति भवति प्रेम्णेव वाणीश्रियोः ॥

श्रीमद्व्याकरणेतिहासविषयं यत् पुस्तकं प्रेषितं
युक्तं यच्च 'सनत्सुजातमपरं श्रीकालिकाव्याख्यया' ।
अस्माभिः सखिभिः समं तदुभयं दृष्टं समालोचितं
धन्यां हृद्यतमां विचारसरणिं श्लाघामहे सर्व्वथा ॥'

( ७६ )

मूलायोड़संस्कृतविद्यालयस्य स्मृतिव्याकरणयोः प्रवीणोऽध्यापकः श्रीवीरेशनाथविद्यासागरमहोदयः सनत्सुजातमधिकृत्य १३५२ वङ्गाब्दस्य १० कार्त्तिकदिवसे पुनरपि ग्रन्थकाराय पत्रमेकं प्रेरयामास । मूलपत्रं वैद्यकवृत्तान्तस्य ५७५-७६ पृष्ठयो र्द्रष्टव्यम् । तदनुवादः—

आशीःपुरःसरसमावेदनमेतत्—

……विगते वर्षे भवत्प्रदत्तं सनत्सुजातीयाध्यात्मशास्त्रं नामकग्रन्थं प्राप्य सन्तोषप्रदा शान्ति र्मया सविशेषमेव लब्धा। अवसरकाले पुस्तकमेतद् मह्यं विशिष्टमानन्दं ददाति। अनेन पुस्तकेन दर्शनशास्त्रे भवतो गभीरपाण्डित्यस्य परिचयो मया प्राप्तः। वर्त्तमानकालिकानां बहूनां सुपण्डितानामपि विविधशिक्षणीयविषयास्तत्र सविशेषमालोचिता दृश्यन्ते।

सम्प्रत्येव 'पूर्णिमा'पत्रिकायां भवदीय'दशभुजा दुर्गा'नामकप्रबन्धस्य द्विस्त्रिः पाठादपि तृप्तिं नाधिगच्छामि।……

सततशुभानुध्यायिनो मूलायोड़संस्कृतविद्यालय-
शब्दस्मृत्यध्यापकस्य श्रीवीरेशनाथदेवशर्म्मणः।

१०।७।५२

( ७७ )

नोयाखालीतो देवपाड़ाग्रामवास्तव्यः पण्डितप्रवरः श्रीशशिमोहनतर्कशास्त्रिमहोदयः सनत्सुजातीयं प्राप्य ग्रन्थकाराय निम्नलिखितं पत्रं प्रेरयामास।

वहुमानास्पदश्रीयुक्तगुरुपदहालदारमहोदयमहिमार्णवेषु—

*　　*　　*　　*

तेनैव दत्तं न्वनुकम्पयैव सनत्कुमारीयमिदं विधाय।
अध्यात्मशास्त्रं ननु मादृशेभ्योऽप्यध्यात्मबोधाय जनेभ्य इत्थम्॥
अवाप्य तद्ग्रन्थमधीत्य किञ्चिदयं सुखेनैव जनः कृतार्थः।
जाने न सम्यक् पठिते मयाऽपि आनन्दमाप्नोमि कमप्यपूर्व्वम्॥

विनयावनतः
नोयाखालीनगर्य्यन्तर्गतदेवपाड़ाग्रामवास्तव्यः
तर्कशास्त्र्युपनामकश्रीशशिमोहनशर्म्मा।

( ७८ )

ग्रन्थकारस्य सनत्सुजातीयं व्याकरणदर्शनेतिहासं च पठित्वा मन्दिर-कुड्य तल्लिखितश्लोकराशिं च दृष्ट्वा वैयक्तिकरूपेण शास्त्रालापं च कृत्वा ससन्तोषं कालीघट्टीयसाङ्गवेदविद्यालयस्य परमाचार्य्यः श्रीमद्‌उपेन्द्रचन्द्र स्मृतितीर्थमहोदयो ग्रन्थकाराय प्रशस्तिपत्रमिदं प्रेरयामास ।

'**गु**-रौ वा देवे वा क्षितिसुरवरे वाऽचलमती
**रु**-षाक्रान्तोऽप्यास्ते ध्रुव इव सदा योऽविकृतगीः ।
**प**-रं क्रूरं मूर्खं क्वचिदपि न या निन्दति भवान्
**द**-रिद्राणां बन्धुः स जयतितरां श्री'गुरुपदः' ॥

**हा**-स्यं सदास्ये हृदि शास्त्रचिन्ता
**ल**-सन्ति संसारितयाऽपि यस्य ।
**दा**-न्तश्च शान्तः स च सारदृष्टी
**र**-से 'रसो वा' इति 'हालदारः' ॥

**स**-रस्वतीपारमभीहमानो
**र**-तोऽनिशं दर्शनदर्शने त्वम् ।
**स्व**-तः परस्माद्व्यसनित्वतश्च
**ती**-र्थत्वमेतेति 'सरस्वती'त्थम् ॥

नामाक्षरै ग्रंथितसद्‌गुणरत्नहारी
पित्रा कृतैरनुगुणैरसि सौम्यमूर्त्तिः ।
दाता धनी सुसुतवान् प्रथितो यशस्वी
कालीपदाश्रयणतः सुफलं किलैतत् ॥

सरस्वतीत्वं प्रतिपद्य यत्ना-
ल्लक्ष्मीं चलां स्थैर्य्यवतीं विधाता ।

पदे गुरुत्वं प्रतिपादयन् भो
नाम्नोऽर्थवत्त्वं सुदृढ़ं चकार ॥
नेयं प्रशस्तिरतिशीलतया न किञ्चिद्
वक्ताऽस्मि किन्तु भवतो गुणमुग्ध एषः ।
तांस्तान् गुणाननुवदन् मुखरीकृतोऽहं
श्लोकानमूनरचयं तदिहाभ्युपैतु ॥
विवर्द्धन्तां धर्म्मा द्विजवरशुभाशीर्व्वचनतो
रमाविष्णू पूर्णं गृहमिह विधत्तां धनजनैः ।
परं ज्ञानं देवो दिशतु नकुलेशस्तव पुनः
परानन्दं काली कलयतु सदानन्दनमयी ॥

ता० ३०शे श्रावणे
१३५० साल

कृतिरियं गुणमुग्धस्य
श्रीउपेन्द्रचन्द्रशर्म्मस्मृतितीर्थस्य ।

---

# व्याकरणदर्शनेतिहासग्रन्थविषये पण्डितानां मतामतव्यञ्जकपत्राणि ।

( ७९ )

कलिकातास्थ'संस्कृतकलेज'नामकमहाविद्यालयस्य ततश्च 'गौहाटि-कटन्-कलेज'नामकविद्यालयस्य प्रवीणः प्राचीनो लोकमान्योऽध्यापकः श्रीवनमालि-वेदान्ततीर्थ M.A.,-महोदयो व्याकरणदर्शनेतिहासं प्राप्य १३५० वङ्गाब्दस्य १ चैत्रदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास । मूलपत्रं वैद्यकवृत्तान्तस्य ५७६ पृष्ठे द्रष्टव्यम् । तदनुवादो यथा—

माननीयेषु सप्रीतिनमस्कारनिवेदनम्—

व्याकरणदर्शनेतिहासनामकं भवतो महाग्रन्थमासाद्य निरतिशयमानन्द-मनुभवामि । अस्य ग्रन्थस्यांशविशेषा मया पठिताः । पाठानन्तरमेतदेव मनसि मे समुदेति यत् भवतो गुरुरिति नामधेयं सार्थकत्वं भजते । व्याकरणविषयेषु पर्य्यालोचकानां भवानेव शरणं भविष्यति । अस्य ग्रन्थस्य संस्कृतभाषायामिङ्गभाषायाञ्चानुवादो भवितुमर्हति ।.........भवता सह परिचयेन धन्या वयं भवामः, कालीघट्टश्च भवन्तं प्राप्य धन्यो भवति । इति

भवदीयस्य श्रीवनमालिदेवशर्म्मणः ।

( ८० )

काशीस्थितदेवनाथपुरस्य सुप्रसिद्धः पण्डितो महामहोपाध्यायश्रीयुक्त-शशिभूषणस्मृतितीर्थमहोदयो व्याकरणदर्शनेतिहासमधीत्य १३५० वङ्गाब्दस्य ५ चैत्रदिवसे ग्रन्थकाराय 'शास्त्ररत्नाकर'इत्युपाधिं प्रदाय पत्रमेकं प्रेषितवान् । मूलपत्रं वैद्यकवृत्तान्तस्य ५८० पृष्ठे द्रष्टव्यम् । तदनुवादः—

महोदय !

* * * भवदीयपुस्तकपाठं समारभ्य मया चेदृशमानन्दाधिक्य-मनुभूतं यदसमाप्य तत्पाठं भवते प्रातिसंवादं प्रेषयितुं नालमभूवम्। पुस्तकेऽस्मिन् भवता प्रदर्शितमनन्यसाधारणपाण्डित्यपरिचयं समालोक्य विमुग्धोऽहं जातः। पत्रणैतेन सह 'शास्त्ररत्नाकर' इत्युपाधि र्भवते सश्रद्धं सानन्दञ्च मया प्रदीयते। इति निवेदनं

श्रीशशिभूषणस्मृतितीर्थस्य।

( ८१ )

'वीरभूम'न्तर्गतस्य दुव्राजपुरस्य विचारको विशिष्टसंस्कृतभाषाभिज्ञश्च पण्डितप्रवरः श्रीशैलेन्द्रनाथसेनगुप्त M.A., B.L.,-महोदयो व्याकरण-दर्शनेतिहासमधिकृत्य १६४४ खृष्टाब्दस्य २१ मार्चदिवसे पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५८० पृष्ठे द्रष्टव्यम्। तदनुवादः—

अशेषसम्मानपुरःसरनिवेदनम्—

महोदय !

हेतमपुरमहाविद्यालयात् पाठाय मे पूर्व्वेद्युः प्रेषितो भवतो महाग्रन्थः समासादितो मया। एतादृशस्य ग्रन्थस्य नूनमुपयोगाधिक्यं वर्त्तेत इत्युल्लेखनमपि बाहुल्यमात्रमेव प्रतीयते। वङ्गेषु शब्ददर्शनं व्याकरणं विज्ञानसम्मतसरण्यां समालोच्यत इति न मया ज्ञातमितः पूर्व्वम्।

* * * भवतो ग्रन्थपाठेन यमानन्दमनुभवामि तस्य परिमाणं भाषया वर्णयितुं न मया प्रभूयते। अपि च भवतो विद्यवत्ताया अपरिमेयपरिधेः प्रशंसावचनेन नास्ति किञ्चित् प्रयोजनमित्यहं मन्ये। इति

वशंवदस्य श्रीशैलेन्द्रनाथसेनगुप्तस्य।

( ८२ )

कटकस्थ 'र्याभेन्शकलेज' नामकमहाविद्यालयस्य भूतपूर्व्वः प्रवीणोऽध्यापकः श्रीयुक्तगोपालचन्द्रगङ्गोपाध्याय M.A.-महोदयो 'व्याकरणदर्शनेतिहासं' प्राप्य तदधिकृत्य प्राक्प्रणीतं सनत्सुजातं चाधिकृत्य १९४४ खृष्टाब्दस्य २३ मार्चदिवसे पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५८१ पृष्ठे द्रष्टव्यम्। तदनुवादः—

श्रद्धास्पदेषु—

पूर्व्वेद्यु भवतो व्याकरणदर्शनेतिहासः प्राप्तो मया। * * * एवंविधो ग्रन्थः संसारेऽस्मिन् भाषान्तरेषु विद्यते वा न वेति संदिह्यते मया। विश्वविद्यालयनामनि पुस्तकस्यास्य चोत्सर्गीकरणेन मातृऋणस्य कियांचनांशो परिशोधितः। एतेन हि योग्यपुत्रस्य कर्त्तव्यं भवता सम्पादितम्। * *

इति भवतो गुणमुग्धस्य

श्रीगोपालचन्द्रगङ्गोपाध्यायस्य।

( ८३ )

वर्द्धमानवास्तव्यः पण्डितप्रवरो महामहोपाध्यायश्रीवीरेश्वरतर्कतीर्थमहोदयो व्याकरणदर्शनेतिहासं प्राप्य १९४४ खृष्टाब्दस्य २७ मार्चदिवसे विजयचतुष्पाठीतः पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५८२ पृष्ठे द्रष्टव्यम्। तदनुवादः—

माननीयश्रीगुरुपदहालदार बि.एल. सरस्वती......समीपे

विहितसम्मानपूर्व्वकसनमस्कारनिवेदनमेतत्—

महोदय! भवत्प्रणीतव्याकरणदर्शनेतिहासकस्य पुस्तकस्य प्रथमं खण्डं प्राप्य तत्र च प्राक्कथनस्य कियन्तञ्चनांशमात्रमधीत्य व्याकरणविषये भवतो-

ऽनुपमं ज्ञानगाम्भीर्य्यमहिमानमुपलभमानोऽहं विस्मितोऽस्मि। अतो भवान् अशेषधन्यवादार्हो भवति। दीर्घजीवनं लब्ध्वा भवानस्य पुस्तकस्य द्वितीयं खण्डं प्रकाशयन् सर्व्वेषामानन्दवर्द्धनं करोत्विति भगवच्चरणे सततं प्रार्थ्यते मया। इति

भवदीयस्य महामहोपाध्यायस्य
श्रीवीरेश्वरतर्कतीर्थस्य।

( ८४ )

कलिकातानगर्य्यां सुपण्डितो लब्धप्रतिष्ठो महाभारतादिप्रकाशको महामहोपाध्यायः श्रीहरिदाससिद्धान्तवागीशमहोदयो व्याकरणदर्शनेतिहासं प्राप्य १९४४ खृष्टाब्दस्य २८ मार्च दिवसे ग्रन्थकृते पत्रमिदं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५८३ पृष्ठे द्रष्टव्यम्। तदनुवादः—

मान्यवरेषु नमस्कारनिवेदनमिदं—

···विगते रविवासरे······अत्र प्रत्यावर्त्त्य भवत्प्रेरितं पुस्तकं प्राप्य परममानन्दितोऽस्मि। भवान् भूयोदर्शी सुपण्डितः खलु। एतादृश-ग्रन्थसंकलनं भवत्येव सर्व्वथा सम्भाव्यते। इति

महामहोपाध्यायस्य श्रीहरिदाससिद्धान्तवागीशस्य।

( ८५ )

नेपालान्तर्गतकाटमुण्डस्थित-'काइजार-महल'-नामकराजभवनाद् 'Y-Kaiser'-इत्यभिहितराणावाहादुरमहोदयो व्याकरणदर्शनेतिहासं प्राप्य १९४४ खृष्टाब्दस्य २८ मार्च दिवसे ग्रन्थकाराय पत्रमिदं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५८३ पृष्ठे द्रष्टव्यम्। तदनुवादः—

श्रीयुक्तगुरुपदहालदारमहोदयेषु—

मम ग्रन्थागारस्य स्पृहणीयमण्डनीभूतं भवतः कीर्त्तिस्तम्भस्वरूपं 'व्याकरणदर्शनेतिहास'नामकं पुस्तकं मह्यं प्रेषयन् आन्तरधन्यवादान् मे कृपया गृह्णातु। सफलं भवतो वैदुष्यं सार्थकश्च भवतः प्रयत्न इत्यतः प्रेरयामि भवते सौहार्द्दहृद्यमभिनन्दनं मे।

उत्तरखण्डप्रकाशवार्त्तां यथाकालं प्राप्तुं प्रतीक्ष्यते मया। इति निवेदनं

भवदीयस्य 'ओयाइ काइजारस्य'।

( ८६ )

वाराणसीहिन्दुविश्वविद्यालयस्य कलिकाताविश्वविद्यालयस्य च प्रवीणाध्यापकः सर्व्वजनवरेण्यः श्रीजयगोपालवन्द्योपाध्याय एम्.ए.- महोदयो व्याकरणदर्शनेतिहासं पठित्वा १६४४ खृष्टाब्दस्य २६ मार्चदिवसे ग्रन्थकाराय पत्रमिदं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५८४ पृष्ठे द्रष्टव्यम्। तदनुवादः—

कल्याणभाजन!

व्याकरणेतिहासस्याभिनिविष्टः पाठः सुखयति मां नितराम्। कियतः वैदुष्यस्योत्साहस्य सहिष्णुतायाः कर्म्मकौशलस्याध्यवसायादेश्चाधिकारिणि पुरुष एवंविधागाधसमुद्रमन्थनप्रवृत्तिः प्रयत्नश्चोत्पद्येते इत्युपलब्धुं समर्थोऽहम्। * * * इति

शुभानुध्यायिनः

श्रीजयगोपालवन्द्योपाध्यायस्य।

( ८७ )

काशीस्थितपण्डितानामग्रगण्यो वाराणसीहिन्दुविश्वविद्यालय-संस्कृत-विभागस्य प्रवीणाध्यापकः प्रत्याख्यातमहामहोपाध्यायोपाधिको राजपण्डितः

श्रीयुक्त-श्रीशंकरतर्करत्नन्यायकेशरिमहोदयो व्याकरणदर्शनेतिहासं प्राप्य १९४४ खृष्टाब्दस्य ३१ मार्च दिवसे ग्रन्थकृते पत्रमेकं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५८४-८५ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

महोदय !

भवतो व्याकरणदर्शनेतिहासनामकग्रन्थोऽधिगतो मया। गभीर-गवेषणया भवता ग्रन्थेऽस्मिन् ये हि सविचारा विषयनिचयाः प्रकाशितास्तै र्व्याकरणदर्शनस्येव शास्त्रान्तराणामपि समालोचयितॄणामभावविशेषा नूनं दूरीभविष्यन्ति। इति निवेदनं

भवदीयस्य

श्रीश्रीशंकरतर्करत्नस्य।

( ८८ )

पुनश्च तेन १९४४ खृष्टाब्दस्य १९ अक्टोवरदिवसे कृत्स्नं व्याकरण-दर्शनेतिहासं श्रुत्वा पठित्वाऽपरं पत्रं प्रेषितम्। मूलपत्रं वैद्यकवृत्तान्तस्य ५८५ पृष्ठे द्रष्टव्यम्। तदनुवादः—

सप्रीतिसम्मानसम्भाषणपूर्व्वकं विज्ञापयति—

माननीयमहोदय !

कतिपयमासेभ्यः पूर्व्वं भवता यद् 'व्याकरणदर्शनेतिहास'नामकं पुस्तकं प्रेरितं तन्मया प्रणिधानेन श्रुतम्। ईदृशं सुचिन्तितं सुगवेषितं सुसमालोचितञ्च व्याकरणविषयकं पुस्तकमितः पूर्व्वमस्माकं दृष्टिगोचरं नाभूत्। भवदीयपुस्तकस्य पाठेन श्रवणेन च वयं विपुलमानन्दमनुभवामः। अनेन पुस्तकेन शिक्षार्थिनां व्याकरणतत्त्वबुभुत्सूनामध्यापकानाञ्च यथेष्टं ज्ञानार्जनं भविष्यति। इति

भवदीय श्रीशंकरतर्करत्नदेवशर्म्मा।

( ८६ )

पुनरपि स श्रीशंकरतर्करत्नमहोदयः १६४४ खृष्टाब्दस्य २४ डिसेम्बर-दिवसे व्याकरणदर्शनेतिहास-सनत्सुजातीयाध्यात्मशास्त्रे इत्युभयग्रन्थपाठ-मूलकसन्तोषहेतोः शुभाशीःसूचकं श्लोकमयमधोलिखितं तृतीयपत्रं प्रेरयामास—

"निरन्तरशुभार्थिनः श्रीश्रीशङ्करदेवशर्म्मणः परमशुभाशीःपूर्व्वकं समावेदनम् ।

देव्याः श्रीकालिकायाश्चरणसरसिजं सेवसे भक्तिचित्तैः
पुत्रैः पौत्रै र्युतं त्वां त्रिभुवनजननी रक्षति क्रोड़देशे ।
सर्व्वाः शक्ती र्निधाय त्वयि बुध ! सुतवात्सल्यमाविश्चकार
येनासि त्वं न विद्यावसुषु, गुरुपदालंकृतः संज्ञयापि ॥
पूर्व्वं व्याकरणेतिहासविषयग्रन्थः कृतो धीमता
न्यस्तं तत्र मतं पुराणविदुषां प्राचीप्रतीचीजुषाम् ।
रम्यां शास्त्रविचारयुक्तिपटलीं दृष्ट्वा परं निश्चितं
कण्ठस्था तव सा विभाति सकलज्ञानप्रदा शारदा ॥
स्वनिपुणलिपिशोभिप्रेरिताध्यात्मशास्त्र-
मपरमनुदिनं स्वै र्बन्धुवर्गैरधीत्य ।
जनितविबुधतोषां वीक्ष्यते शास्त्रचर्चां
विनयवर मुदाऽहं धन्यवादान् ददामि ॥
प्रार्थ्यं नित्यं मम तु भगवद्विश्वभर्त्तुः समीपे
लब्ध्वा चायुः शतपरिमितं पुत्रपौत्रैः समेतः ।
मन्दाक्रान्तामतिकृशतनुं भारतीं देवतानां
पुष्टां यत्नै रचयतु भवान् कीर्त्तिमाञ्छक्तिशाली ॥" इति ।

( ६० )

'जलपाइगुड़ि'स्थपाटग्रामात् पण्डितप्रवरः श्रीविधुभूषणशर्म्ममहोदयो व्याकरणदर्शनेतिहासमधीत्य १३५० वङ्गाब्दस्य १७ चैत्रदिवसे श्लोकमयीं पत्रिकामधोलिखितां प्रेरयामास—

"विद्याम्भोधिगतातिबोधपटलीरत्नावलीशेखर !
लोकातीतयशःसुधाधवलिताशामण्डल ! श्रीवह ! ।
सम्मानास्पद ! धन्यवादसहितं विज्ञाप्यते साम्प्रतं
नानातत्त्वनिकेतनं सुविशदं प्राप्तं भवत्पुस्तकम् ॥

पद्मा सद्मनि केशवस्य, गहने रत्नं च रत्नाकरे
वाणी ब्रह्मपुरे, शिवा शिवगृहे सन्तिष्ठते नित्यशः ।
एतत् सर्व्वमहो ! ध्रुवं गुणगणाकृष्टं भवन्मन्दिरे
स्थित्वा वर्द्धयतु क्षितौ कुशलिनः कीर्त्तिं शुभां ते सदा ॥

मीनस्थे भास्करे सिन्धचन्द्रमे गुरुवासरे ।
लिख्यते पत्रिकेयं श्रीविधुभूषणशर्म्मणा ॥

( ६१ )

ढाकान्तर्गतजयदेवपुरस्थित'चन्दनाटोल'-नामकचतुष्पाठीतोऽध्यापकः श्रीयुक्तरेवतीकुमारस्मृतितीर्थमहोदयो व्याकरणदर्शनेतिहासमधिकृत्य १३५० वङ्गाब्दस्य ३० चैत्रदिवसे पत्रमेकं प्रेषितवान् । मूलपत्रं वैद्यकवृत्तान्ते ५८७ पृष्ठे द्रष्टव्यम् । तदनुवादः—

सविनयनमस्कारनिवेदनम्—

भवत्प्रेरितो व्याकरणदर्शनेतिहासः प्रीत्या श्रद्धया च मया पठितः । एवंविधः सूक्ष्मविस्तृतसमालोचनापूर्णः कोऽपि ग्रन्थोऽद्यावधि प्रकाशं गत

इत्यहं न जाने। ग्रन्थोऽयं भवतो गभीरं चिन्ताशीलत्वं भूयोदर्शनञ्च सविशेषं संसूचयति। शास्त्रान्तराणां प्रयोजनं यथा प्रमाणितं तथाऽनेन व्याकरणस्योपयोगिता भवता प्रमाणीकृता। शास्त्ररक्षाविषये भवतोऽशेषप्रयत्नः सातिशयं प्रशंसार्हः खलु। * * * इति

भवदीयस्य श्रीरेवतीकुमारस्मृतितीर्थस्य।

( ६२ )

भट्टपल्लीस्थसंस्कृतविद्यालयस्याध्यक्षः कलिकाताविश्वविद्यालयस्याध्यापकः पण्डितप्रवरः श्रीश्रीजीवन्यायतीर्थमहोदयो व्याकरणदर्शनेतिहासं प्राप्य १३५१ वङ्गाब्दस्य १ वैशाखदिवसे ग्रन्थकाराय प्रशस्तिपत्रमिदं प्रेरयामास—

## प्रशस्तिपत्रम्।

रत्नं ग्रन्थमयं सयत्नलिखितं ज्ञानाम्भसो मन्थना-
ल्लब्धं दर्शनसागराद् गुरुपदाह्वानादपूर्व्वोदयम्।
तच्च व्याकरणोच्चदर्शनगतेः प्राच्येतिहासं नवा-
लोकं व्यञ्जयदञ्जसा विजयते सर्व्वञ्जनं रञ्जयत्॥

सरस्वती स्त्रीति मृदुस्वभावान्
न पूर्णवैदुष्यविकाशशीला।
उपाधिलीलाम्भवतो भजन्ती
स्फारीभवत्यद्भुतपौरुषश्रीः॥

श्रीमन् गुरुपददर्शनसागर भवदभिधानमहो सार्थम्।
गुरुपदमधिकृत्य धिया दर्शनरसैः सुमनः सुखं पूजसि॥
अथवा पदगुरुरिति ते विपरीतनामतैव समीचीना।
पदनिचयप्रतिपादकशास्त्ररहस्यं विवृण्वतो विशदम्॥

अमृतमिव निपीय तृप्तिमाप्तो
बुधवर ! शाब्दिकदर्शनेतिहासम् ।
अहमथ भवतोऽर्थये भवानीं
सुतदयिताभ्युदयायुषां शुभानि ॥

भट्टपल्लीतः सौरवैशाखस्य प्रथमदिवसीयम् वङ्गाब्दाः १३५१ । — भट्टपल्लीसंस्कृतविद्यालयाध्यक्ष-कलिकाता-विश्वविद्यालयाध्यापक-श्रीश्रीजीवदेवशर्म्मणा प्रदत्तम् ।

( ६३ )

१३५१ वङ्गाब्दस्य ४ वैशाखदिवसे पावनाटोलनामकचतुष्पाठीतः सप्ततीर्थोपाधिकः श्रीयुक्ततारानाथदेवशर्म्ममहोदयो ग्रन्थकाराय शास्त्ररत्ने-त्युपाधिं प्रददानः पत्रमेकं प्रेषितवान्। तदनुवादः—

"स्वस्ति श्रीतारानाथसप्ततीर्थस्य साशीर्व्वादविज्ञतिरियम्—

महात्मन्—

भवत्प्रणीतो व्याकरणदर्शनेतिहासनामको यो महाग्रन्थः पावना-चतुष्पाठीमुद्दिश्य भवता प्रेषितस्तस्य प्रथमं खण्ड पठित्वा ततश्च भवतो-ऽनन्यसाधारणान् प्रतिभाविद्यावत्तादिगुणान् उपलभ्य प्रसन्नचित्तेन मया चतुष्पाठ्या अध्यापकरूपेण भवते शास्त्ररत्न इत्युपाधिः प्रदीयते—

श्रीयुक्तगुरुपदहालदारमहोदयाय उपाधिदानपत्रम्

उपाधिः शास्त्ररत्नेति दीयते तुभ्यमादरात् ।
त्वयि विद्याप्रवीणत्वादुपाध्यर्थसमन्वयात् ॥
कायेन मनसा वाचा याच्यते विभुसन्निधौ ।
शतायुः स्वास्थ्यमासाद्य ज्ञानचर्चां सदा कुरु ॥

पावनादर्शनटोलाध्यापकश्रीतारानाथदेवशर्म्मणा ।"

( ६४ )

दाक्षिणात्यान्तर्गतकोकनदस्थितपीठापुरराजमहाविद्यालयाध्यक्षः संस्कृताध्यापक इ. भि. वीरराघवाचार्य्य एम्.ए.-महोदयो व्याकरणेतिहासं प्राप्य १६४४ खृष्टाब्दस्य २१ एप्रिलदिवसे ग्रन्थकृते पत्रमेकं प्रेषितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५६० पृष्ठे द्रष्टव्यम्।

श्रीगुरुपदहालदारसमीपे—

श्रद्धेयपण्डितमहोदय !

वङ्गभाषायां लिखितो भवत्कीर्त्तिस्मारको व्याकरणदर्शनेतिहासनामको ग्रन्थो नूनं भवतो महावैदुष्यस्य जयस्तम्भत्वेन प्रतीयते। तस्य च प्राप्तिस्वीकारोऽशेषधन्यवादैः सह कामं मया क्रियते तथापि तत्प्रेरणविलम्बाय भवतः सहस्रशः क्षमां प्रार्थये। इति निवेदनं

भवदीयस्य— इ.भि. वीरराघवाचार्य्यस्य।

( ६५ )

'मूलायोड़संस्कृतकलेज'नामकमहाविद्यालयाध्यक्षः पण्डिताग्रगण्यः श्रीमन्मथनाथपञ्चतीर्थमहोदयो व्याकरणदर्शनेतिहासं पठित्वा १३५१ वङ्गाब्दस्य १० वैशाखदिवसे ग्रन्थकाराय पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६० पृष्ठे द्रष्टव्यम्। तदनुवादः—

माननीयश्रीयुक्तगुरुपदहालदार······सरस्वती······समीपेषु।

सबहुमानसम्भाषणमेतत्—

माननीयवेदान्तभूषणमहोदय ! भवदीयव्याकरणदर्शनेतिहासो मया प्राप्तः। पुस्तकमिदं यथायथमधीत्य सविशेषमानन्दितो भवामि। ऋते व्याकरणज्ञानादृते वा तत्संक्रान्तेतिहासज्ञानात् सुरभारत्याः सेवा निष्फला भवतीत्येतद्विषयमधिकृत्य प्राचीनः श्लोक एको वर्त्तते, यथा—

"योऽनधीत्य शब्दशास्त्रमन्यच्छास्त्रं समीहते ज्ञातुम् ।
सोऽहेः पदानि गणयति निशि तमसि जले चिरं प्रयातस्य ॥" इति ।

सम्भाव्यते यत् पूर्व्याचार्य्यैरियमेव शैली रचिता । न केवलं पूर्व्वाचार्य्यैरपि तु परवर्त्तिभ्यां सुप्रसिद्धनव्यनैयायिकजगदीशतर्कालंकार-महामहोपाध्याय-गदाधरभट्टाचार्य्याभ्यामस्याः शैल्याः सामञ्जस्यरक्षणार्थं शब्दशक्ति-प्रकाशिका-व्युत्पत्तिवादौ प्रणेषाताम् । तथाप्येतद् वाच्यं यत् प्राचीन-भारत एतादृगितिहासप्रणयनप्रणाली नानुसृतेति पण्डितेषु कथंचिद् न्यूनता सुयोगाभावश्चास्ताम् । अधुना तु भवत ऐकान्तिकप्रचेष्टया पाण्डित्यप्रभया च रचितेन सुयुक्तिपूर्णसारगर्भव्याकरणदर्शनेतिहासपुस्तकेन तत्तदभावस्तिरोधीयते । सर्व्वमङ्गलमयजगदीश्वरं प्रार्थये यद् अन्यान्यशास्त्राणामप्येतादृश-सुयुक्तिपूर्णेतिहासप्रणयनेनास्माकं सर्व्वाङ्गीणशास्त्रालोचनां समुज्ज्वलां करोतु भवान् । प्राप्ते च सौकर्य्ये भवादृशः शास्त्रपारदर्शिनो महानुभवस्य साक्षा-द्दर्शनमिच्छामि । इति

भवदीयस्य श्रीमन्मथनाथपञ्चतीर्थस्य
मूलायोड़संस्कृतविद्यालयाध्यक्षस्य ।

( ९६ )

१९४४ खृष्टाब्दस्य २३ एप्रेलदिवसे हावड़ाजेलान्तर्गतवेलुड़मठस्थित-रामकृष्णमिशन्नामकमहाविद्यालयस्याध्यक्षः (Principal) कोविदाग्रगण्य-स्त्यक्तविविधविश्वविद्यालयोपाधिकः श्रीतेजसानन्दस्वामिमहोदयो व्याकरण-दर्शनेतिहासं पठित्वा ग्रन्थकाराय पत्रमेकं प्रेरयामास । मूलपत्रं वैद्यक-वृत्तान्तस्य ५९२ पृष्ठे द्रष्टव्यम् । तदनुवादः—

प्रियमहोदय !

वेलुड़स्थितरामकृष्णमिशन्विद्यामन्दिरे भवता प्रषितो व्याकरणदर्शनेति-हासः समधिगत इत्यान्तरधन्यवादेन सह ज्ञाप्यते मया ।

एवंविधेषु निबन्धेषु भवत्यभूतपूर्व्वः समुद्योगो ग्रन्थोऽयम्। संस्कृत-व्याकरणसाहित्यचर्चायां तथा गवेषणाविषयेषु च ग्रन्थोऽसौ परमोपयोगाय भवितुमर्हति। ग्रन्थेऽस्मिन्नतिनैपुण्येनाचरितेषु विषयेषु भवतः प्रगाढ़ं पाण्डित्यं व्याकरणविषयकदुरवगाहतत्त्वेषु भवतोऽतिसूक्ष्मा दृष्टिश्च सूच्येते। विद्यामन्दिरस्य शिष्या अध्यापकाश्च ग्रन्थमिमं सादरं साभिनिवेशञ्च पठिष्यन्ति। एतदमूल्योपायनं प्रदत्तमिति पुनश्च भवति धन्यवादार्हो भवान्।

वशंवदो भवतः स्वामितेजसानन्दः

रामकृष्णमिशन्-विद्यामन्दिराध्यक्षः।

( ६७ )

'वैदिक वाङ्मयका इतिहास'प्रभृतिप्रणेता लाहोरस्थितदयानन्दमहाविद्यालयस्याध्यापको गवेषिगणनायको भगवद्दत्तमहोदयो व्याकरणदर्शनेतिहासमधिकृत्य १९४४ खृष्टाब्दस्य २४ एप्रेलदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५९३ पृष्ठे द्रष्टव्यम्।

प्रियगुरुपदहालदारमहोदय !

नमस्ते। पूर्व्वं प्राय एकमासादमूल्यो भवदीयव्याकरणदर्शनेतिहासः प्राप्तो मया। नाहं वङ्गभाषायां निष्णात स्तथापि दिवसचतुष्टयं ग्रन्थोऽयं यथाशक्ति मया पठितः। * * * उपयोगिसंवादबहुलोऽयं ग्रन्थ इत्यनुभुयते मया। अत्र बहवः संवादा अभिनवाः सन्ति। भवता च कठोरपरिश्रमः कृतः। * * *

भवदीयः

भगवद्दत्तः

( ६८ )

कलिकाताविश्वविद्यालयस्याध्यापकः शब्दशास्त्रवित् प्रथितनामा परमपण्डितः डाक्तार्-वटकृष्णघोष M.A., D. Phil. ( Munich ), D.

Lit. ( Paris )-महोदयो व्याकरणदर्शनेतिहासं पठित्वा ग्रन्थकाराय १९४४ खृष्टाब्दस्य २८ एप्रेलदिवसे तथा २ जुनदिवसे द्वे पत्रे प्रेरयामास। मूलपत्रद्वयं वैद्यकवृत्तान्तस्य ५६३-४ पृष्ठयो द्रष्टव्यम्। तदनुवादः—

श्रीगुरुपदहालदारमहोदयसमीपेषु—

भवत्प्रेरितव्याकरणदर्शनेतिहासस्य कियांश्चनांशः पठितः। परं तु तावत्त एवांशतो बहवो नूतनविषयाः शिक्ष्यन्ते मया। विस्मयजनकं खलु भवतः सर्व्वतोमुखं पाण्डित्यम्। * * *

विनीतः वटकृष्णघोषः।

पुनश्च तेन लिखितम्—

सविनयनिवेदनम्—

अष्टाध्यायीमधिकृत्य प्रधानमतवादा मे भवता समर्थिता इति हेतो र्य आनन्दो मया लब्धस्तं खलु भाषया व्यक्तीकर्त्तुं न प्रभवामि। मन्ये—बहुकालार्जिता मे साधना सम्प्रति सिद्धिसोपानमारुह्याग्रेसरी भवतीति। व्याकरणविषये भवतो निर्द्देशः सर्व्वै र्ग्रहणीयः स्यादिति सनिश्चयं वक्तुं शक्यते। * * * इति

विनीतस्य श्रीवटकृष्णघोषस्य।

२।६।४४

( ६६ )

मिथिलायाः परजुयारि-पछवारीटोलनामकविद्यालयस्याध्यापको राजकीय-सुवर्णकेयूरपुरस्कृतः श्रीदिनेशझाशास्त्रिव्याकरणसाहित्याचार्य्यमहोदयो व्याकरणदर्शनेतिहासं प्राप्य १९४४ खृष्टाब्दस्य ४ मे-दिवसे ग्रन्थकाराय पत्रमिदं प्रेरयामास—

* * * *

श्रीमद्व्याकरणेतिहासमतुलं ग्रन्थं विलोक्याधुना
तत्र प्रोद्धृतनामशास्त्रबहुलग्रन्थानुसन्धिं च ते ।
मुग्धः स्वातिविदग्धतामुपहसन्नाश्चर्य्यमालम्बय-
न्नुच्चै र्धन्यतमन्न वक्ति भुवि कः प्राज्ञो भवन्तं मुदा ॥५॥

श्रीदिनेशझाशास्त्री व्याकरणसाहित्याचार्य्यः
राजकीयसुवर्णकेयूरपुरस्कृतः ।

( १०६ )

मुङ्गेरस्थित-'डि. जे. कलेज'नामकमहाविद्यालयस्याध्यापकः पण्डित-प्रवरः श्रीसुरेशचन्द्रमैत्रेयमहोदयो व्याकरणदर्शनेतिहासमधिकृत्य १३५१ वङ्गाब्दस्य २५ वैशाखदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६५-६ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

मान्यवर···श्रीयुक्तगुरुपदहालदारमहोदय···

सविनयनमस्कारपूर्व्वकनिवेदनम्—

महात्मन्, भवत्कृपया ज्ञानगौरवस्य निदर्शनस्वरूपो व्याकरणदर्शनेतिहासः समधिगतः। विद्यालयार्थं यः स्वतन्त्रः खण्डः प्रेरितः स विद्यालय-ग्रन्थागारे रक्षित एव। उभयखण्डार्थं भवते धन्यवादं कृतज्ञतां च ज्ञापयाम्यहम्। दैनन्दिनसंसारकर्म्मणि व्यापृतेनापि भवता यदेतादृशं विपुल-पुस्तकं रचितं तत् खलु भवदीयां प्रतिभां निष्ठाञ्च सूचयति। अस्य ग्रन्थस्य प्रथमखण्डे विषयाणामियदाधिक्यं सन्निवेशितं यद् ग्रन्थोऽसौ स्याद्व्याकरण-विषयको विश्वकोषो महाकोषो वेत्यभिधाने न विद्यते किञ्चिद् वचन-वाहुल्यम्। * * * इति

विदुषामाश्रवस्य
श्रीसुरेशचन्द्रमैत्रेयस्य।

( १०१ )

काशीस्थितः सुपण्डितः प्रवीणः श्रीताराचरणसाहित्याचार्य्यमहोदयो व्याकरणदर्शनेतिहासमधीत्य १३५१ वङ्गाब्दस्य २६ वैशाखदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५९६ पृष्ठे द्रष्टव्यम्।

सनमस्कारनिवेदनम्—

श्रद्धया प्रेरितो भवतो व्याकरणदर्शनेतिहासो मया समधिगतः। ग्रन्थमिमं रचयित्वा भवता संस्कृतसाहित्यस्यैका महती न्यूनता दूरीकृता। वर्त्तमानशताब्द्याममूल्यरत्नविशेषोऽयं ग्रन्थः। संस्कृतसाहित्यं वङ्गभाषा च भवति चिरकृतज्ञत्वं भजेताम्। इति

भवदीयस्य श्रीताराचरणसाहित्याचार्य्यस्य।

( १०२ )

कलिकातावास्तव्यः कुवेरप्रतिमः पण्डितप्रकाण्डः डाक्तारश्रीसत्यचरणलाहा M.A., Ph.D.-महोदयः १९४४ खृष्टाब्दस्य १३मे-दिवसे व्याकरणदर्शनेतिहासमधिकृत्य ग्रन्थकाराय पत्रमेकं प्रेरितवान्। मूलपत्रं वैद्यकवृत्तान्तस्य ५९७ पृष्ठे द्रष्टव्यम्। तदनुवादः—

प्रिय हालदारमहोदय,

पाण्डित्यपूर्णस्य व्याकरणदर्शनेतिहासस्य प्रथमं खण्डमुपायनत्वेन प्रेरयन्तं भवन्तं धन्यवादं ज्ञापयामि। नितान्तदुष्प्रवेशे विषये श्रमसाध्यपर्य्याप्तगवेषणायाः फलविशेषोऽयं ग्रन्थ इत्यत्र मे नास्ति सन्देहावकाशः।

भवदीयस्य लाहोपाधिकस्य

श्रीसत्यचरणस्य

( १०३ )

दिनाजपुरस्थधर्म्मसभाया अध्यापकः श्रीमद्-अमरचन्द्रस्मृतिसांख्यतीर्थ-महोदयो व्याकरणदर्शनेतिहासं प्राप्य १३५१ वङ्गाब्दस्य ५ ज्यैष्ठदिवसे प्रशस्तिपत्रमेकं प्रेरयामास। तद् यथा—

श्रीयुक्तगुरुपदहालदारमहोदयसमीपेषु—

कतिपयदिनमगात् प्राप्तेः, व्याकरणदर्शनेतिहासप्रथम-
खण्डस्यातिललितस्य विज्ञापयाम्यधुना हृष्टः।

अज्ञाततत्त्वस्य वितर्कवस्तुनः, स्तुतिः कृतीनां न भवेत् सुसङ्गता।
अपेक्ष्यते पूर्व्वमतः परीक्षणं, परीक्ष्य निन्दामथ वन्दनां चरेत्॥
इतीह ते पुस्तकमस्तु गौरवं, गरीयसां गर्व्वसमाकुलात्मनाम्।
मन्येऽधुना धन्यवचस्त्वदाश्रितं, मृषात्वदुष्टं न भवेत् समीक्ष्य तत्॥
पाण्डित्यपूर्णं तव दत्तपुस्तकं, प्रीतिं परां प्राप्य लभे शुभप्रदम्।
जगज्जनानां जयमेहि भूसूर, स्वकीयकीर्त्येति वदामि भूसुरः॥

दिनाजपुरधर्म्मसभाचतुष्पाठ्यध्यापक-
श्रीअमरचन्द्रदेवशर्म्मा स्मृतिसांख्यतीर्थोपनामकः।

( १०४ )

वर्द्धमानान्तर्गतपाटुलीग्रामस्य 'पाटुलीचतुष्पाठीतः कोविदाध्यापकः श्रीश्यामापदकाव्यव्याकरणस्मृतितीर्थमहोदयो व्याकरणदर्शनेतिहासं समीक्ष्य परीक्ष्य च १३५३ वङ्गाब्दस्य ११ ज्यैष्ठदिवसे ग्रन्थकृते पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ५६८ पृष्ठे द्रष्टव्यम्। तदनुवादः—

महामहिमार्णव······

* * * कतिपयदिवसान् भवदीयव्याकरणदर्शनेतिहासमधीत्य परमा प्रीतिरुपलभ्यते मया। भवानेको यथार्थतो वैयाकरण एव।

शब्दशास्त्रे निपुणै र्व्युत्पन्नैश्च बहुभि र्वैयाकरणैः सह मे संलापा अभूवन्, परं तु व्याकरणे व्युत्पत्तिरेतादृशी नूनं सुदुर्लभा । इति निवेदनं

श्रीश्यामापदशर्म्मणः ।

( काव्यव्याकरणस्मृतितीर्थोपनामकस्य )

( १०५ )

१९४४ खृष्टाब्दस्य १० जुनदिवसे व्याकरणदर्शनेतिहासं प्राप्य वाराणसीस्थितश्रीभारतधर्म्ममहामण्डलेनाधोलिखितं पत्रमेकं ग्रन्थकृते प्रेषितम् । मूलपत्रं वैद्यकवृत्तान्तस्य ५९९ पृष्ठे द्रष्टव्यम् । तदनुवादः—

वाराणसीस्थितश्रीभारधर्म्ममहामण्डलतः श्रीयुक्तगुरुपदहालदार बि.-एल्-सवस्वती-वेदान्तभूषण-दर्शनसागर-महोदयेषु—

श्रद्धेय वेदान्तभूषणमहोदय !

भवदीयव्याकरणदर्शनेतिहासस्य प्रथमं खण्डं प्राप्य परमानन्दोऽस्माभि र्लभ्यते । अगाधपाण्डित्यसूचकं यशःस्तम्भरूपं भवतो विपुलग्रन्थनिर्म्माणं परमसन्तोषेण संगृह्य मण्डलपरिषदा समादिष्टोऽहमान्तरं धन्यवादं भवते ज्ञापयामि । अस्माकं ग्रन्थागारस्थितसुदुर्लभग्रन्थसंग्रहेषु पुस्तकं ते बहुमूल्य-संयोजनं भविष्यति । इति निवेदनम्

भवदीयस्य

ए. सि. शर्म्मणः

१०।६।१९४४ कार्य्यविहकस्य ।

( १०६ )

कलिकातास्थदर्शनविद्यालयस्याध्यक्षः पण्डितप्रवरः श्रीमद्-ईश्वरचन्द्र-शास्त्रिपञ्चतीर्थदर्शनाचार्य्यमहोदयो व्याकरणदर्शनेतिहासमधीत्य १९४४

७५

खृष्टाब्दस्य २२ जुनदिवसे ग्रन्थकाराय पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६०० पृष्ठे द्रष्टव्यम्। तदनुवादः—

विद्वत्प्रवर श्रीमन्महोदय !

भवदीयव्याकरणदर्शनेतिहासनामकं सुमहत् पुस्तकमासाद्य सविशेषं परितोषमधिगतोऽहम्। प्राचीनसमयाद् भारतवर्षे वैदिकलौकिकशब्द-शास्त्राणां पठनं पाठनञ्च प्रचरन्ती आसाते। व्याकरणवारिधौ निहित-दर्शनेतिहासरत्ने सत्यपि तद्रत्नवारिधिमग्नत्वे तु प्रगाढ़पाण्डित्यप्रतिभामनी-षादण्डेन समालोड्य ततो दर्शनेतिहासरत्नानि बृहद्ग्रन्थानुविद्धानि विधाय प्रभूतधनव्ययेन विद्वत्सम्प्रदायसन्निधौ तानि समुपन्यसितुं सामर्थ्यं भवतैव प्रदर्शितम्।

शैशवे व्याकरणमधीतं मया ततश्च यथाकालं तदध्यापना च कृता। किं त्वेवंविधासु दर्शनेतिहासतत्त्वावलीषु कदापि न लग्नं मनो मे। सम्प्रति भवतोऽगाधवैदुष्यकठोरपरिश्रमप्रभूतधनव्ययद्वारा लिखितवितीर्णेन पुस्तके-नाशेषज्ञानसहितो हर्षो नितरामनुभूयते मया। इति निवेदनं

शुभार्थिनः

श्रीमद्-ईश्वरचन्द्रशास्त्रिपञ्चतीर्थदर्शनाचार्य्यस्य।

( १०७ )

१३५१ वङ्गाब्दस्य ११ आषाढ़दिवसे व्याकरणदर्शनमधिकृत्य कलिकातास्थितायामानन्दबाजार-पत्रिकायामधोलिखितो वृत्तान्तः प्रकाशितः। मूलं वैद्यकवृत्तान्तस्य ६०१ पृष्ठे द्रष्टव्यम्। तदनुवादः—

'व्याकरणदर्शनेतिहासस्य प्रथमः खण्डः श्रीगुरुपदहालदारप्रणीतः। भारतीयव्याकरणेन सह वैदेशिकव्याकरणानां मौलिकमेकं पार्थक्यं वर्त्तते। वैदेशिकव्याकरणं भाषाशिक्षाया उपायमात्रत्वेन परिगण्यते। भारतीय-

( १६५ )

व्याकरणं तु स्वत एव शिक्षणीयो विषयस्तथा दर्शनस्वरूपेणापि समादृतम्। केवलं व्याकरणचर्चया जीवितमतिवाहयन्तः पाण्डिता विद्याज्ञानयोश्चरमशिखरं गता इत्येतद् भारते दृष्टचरमेव। व्याकरणगतामिमां मूलस्वरूपालोचनामधिकृत्य वर्त्तमानोऽयं ग्रन्थो रचितः। अस्मात्तकालादद्यप्रभृति रचितव्याकरणानां तथा तेषां मूलगतदार्शनिकतत्त्वानामैतिहासिकविवरणं ग्रन्थेऽस्मिन् वर्त्तते। * * * *

( १०८ )

श्रीहट्टस्थित'वृन्दावनकलेज'नामकमहाविद्यालयस्याध्यक्षः डि. एन्. चौधुरि M. A. B.L.-महोदयः १६४४ खृष्टाब्दस्य २६ जुनदिवसे व्याकरणदर्शनेतिहासमधिकृत्य ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६०२ पृष्ठे द्रष्टव्यम्। तदनुवादः—

वृन्दावनकलेज, हविगञ्ज

२६।६।४४

'श्रीयुक्तगुरुपदहालदार बी.एल.-महोदयसमीपेषु

प्रियमहोदय—

अस्मै महाविद्यालयाय भवत्प्रेरितव्याकरणदर्शनेतिहासस्य प्रथमं खण्डमुपायनत्वेन प्राप्य कृतज्ञोऽहं भवते धन्यवादान् सविनयं ज्ञापयामि। अस्माकं महाविद्यालयस्य संस्कृतविभागस्थपण्डितवर्गो नितरामाद्रियते भवतः पुस्तकम्। यतोऽपूर्व्वा खल्वेव कृतिरियं भवति। प्रथमत एतदेव वक्तव्यं यद् वङ्गभाषया रचितत्वात् पुस्तकमिदं मातृभाषायां मातृभूमौ च भवतः श्रद्धातिशयं सूचयति। द्वितीयतो वचसामसामान्यप्रौढ़त्वेन, बोधसौकर्य्येण, विचारवैशद्यन, योग्यस्थलेषु रसनिवेदनेन च जटिलो दुरवगाहो विपुलश्च भारतीयज्ञानसिन्धु र्भवता साफल्येनातिक्रान्त एव।

सूचीगतपल्लवग्राहिवैदुष्यवति कालेऽस्मिन् भारतीयदार्शनिकभावधाराणां प्रबन्धकाः सारवन्त ईदृग्ग्रन्था कदाचिदेवास्माकं दृष्टिपथमायान्ति।

श्रेष्ठस्यास्य ग्रन्थस्य समाप्तिसाधनाय दीर्घं जीवितं वितरतु भगवान् भवते। इति

भवदीय-डि. एन्. चौधुरी
श्रीहट्टस्थितहविगञ्जीयवृन्दावनकलेजनामक-
महाविद्यालयस्याध्यक्षः।

( १०९ )

गौहाटिस्थित'कटन्कलेज'नामक-महाविद्यालयस्याध्यापकः श्रीयतीन्द्रमोहनभट्टाचार्य्यमहोदयः १९४४ खृष्टाब्दस्य ३ जुलाइदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य १०९ पृष्ठे द्रष्टव्यम्। तदनुवादः—

बहुमानास्पदेषु—

* * * व्याकरणदर्शनेतिहासमधीत्य विमोहितोऽस्मि। * * *

भवदीयपाण्डित्यमुग्धः
श्रीयतीन्द्रमोहनभट्टाचार्य्यः
गौहाटिस्थकटन्कलेजनामकमहाविद्यालयस्याध्यापकः।

( ११० )

काशीस्थितसुप्रसिद्धवैदान्तिकपण्डितः श्रीयुक्ततारामोहनवेदान्तशास्त्रिमहोदयो व्याकरणदर्शनेतिहासमधीत्य १९४४ खृष्टाब्दस्य ५ जुलाइदिवसे पत्रमेकं ग्रन्थकाराय प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६०४ पृष्ठे द्रष्टव्यम्। तदनुवादः—

महात्मन् !

भवदीयव्याकरणदर्शनेतिहासो यथाकालं मया प्राप्तः। एतादृग् विपुलसुचिन्तितग्रन्थपाठे दीर्घकाल आवश्यक एव। एतद्धि प्राप्तिवार्तादाने विलम्बकारणत्वेन ज्ञेयम्। * * *

ग्रन्थस्य प्राक्कथनं ततश्चोपोद्घातश्चेद् नाभविष्यताम्, तर्हि समालोच्यविषया हीनाङ्गा अभविष्यन्। अनन्यसाधारणी प्रतिभा तपस्यायाश्च प्रतिमूर्त्ति र्भवतो ग्रन्थे प्रतिफलिते वर्त्तेते। उद्देशनामक-प्रकरणस्य सिद्धान्ता अभिप्रेता मम। व्याकरणविषयकमितरमालोचना-जातं पण्डितजनोचितं वर्त्तते। एष ग्रन्थो ग्रन्थकारश्च ज्ञानिभिरादरणीयौ भवतः।

वशंवदः

श्रीतारामोहनदेवशर्म्मा।

( १११ )

१९४४ खृष्टाब्दस्य १० जुलाइदिवसे व्याकरणदर्शनेतिहासमधिकृत्य द्वारवङ्गस्थित'मिथिलाकलेज'नामकमहाविद्यालयस्याध्यापकः डाक्तार एस्. दत्त ( Dr. Sasadhar Dutt ) M.A,, D. Phil.-महोदयः पत्रमेकं ग्रन्थकाराय प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६०४-५ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

मिथिलाकलेज, द्वारवङ्ग।

१०।७।१९४४

माननीयेषु—

न हि साक्षात्परिज्ञातोऽहं भवता। द्वारवङ्गस्थितमिथिलामहा-विद्यालयस्य दर्शनाध्यापकोऽस्मि। भवदीयव्याकरणदर्शनेतिहासं कस्यचिन्मे

मित्रस्य सन्निधौ समालोक्य विस्मयं गतोऽस्मि खलु। यादृशौ पाण्डित्य-परिश्रमौ विपुले ग्रन्थेऽस्मिन् प्रदर्शितौ, तदर्थं हि महोदयाय श्रद्धानिवेदनं विना नावस्थातुं शक्यते मया। किमधिकम्, पुस्तकस्य द्वितीयखण्डस्य कृते समुद्ग्रीवा वयं तिष्ठामः। महोदयसविधे विद्यते मेऽभियोगः कश्चित्। पुस्तकमिदं न विक्रेयम्। अतो मादृशानां प्रवासिनां दर्शनाध्यापकानां ग्रन्थाधिगमविषये नास्ति काचिदप्याशंसा। परं तु तल्लाभार्थं प्रयोजनं लिप्सा च मे नाल्पीयसी विद्येते। यद्वा भवतु, क्रयमूल्येन लब्धुमस्ति चेत् कश्चित् सुयोगस्तदा तद्विक्रयस्थानं कृपया मह्यं ज्ञापयित्वा कृतार्थं मां करोतु भवान्।

अस्य द्वितीयं खण्डमचिरं प्रकाशं गमिष्यतीत्याशंसे। दर्शनपदे व्याकरणं संस्थाप्य भारतीयशब्दशास्त्रस्य गाम्भीर्य्यं व्यापकत्वञ्च यथोचित-सम्मानेन संयोजिते भवता। व्याकरणं कथं दर्शनपदं भजत इत्युपलप्स्यते पाश्चात्त्यदार्शनिकै र्महता कालेनैव। विषयेऽस्मिन् भवानेव पथः प्रदर्शक इत्यत्र नास्ति कश्चित् सन्देहः। सश्रद्धनमस्कारं मे गृह्णातु भवानिति निवेदनं—

विनीतस्य श्रीशशधरदत्तस्य।

[ ११२ ]

हुग्लिजेलास्थितचात्रादेशगुरुवाटीचतुष्पाठीतः श्रीयुक्तकालीप्रसन्न-विद्यापञ्चाननपण्डितमहोदयो व्याकरणदर्शनेतिहासं प्राप्य १३५१ वङ्गाब्दस्य १ श्रावणदिवसे ग्रन्थकृते निम्नलिखितं पत्रं प्रेरयामास।

'श्रीकालीप्रसन्नविद्यापञ्चाननः

चात्रादेशगुरुवाटीतः

पोः—श्रीरामपुरः, जेला हुग्ली।

श्रीयुक्तगुरुपदहालदारमहोदयप्रेरितव्याकरणदर्शनेतिहासनामकपुस्तकमासाद्यालोच्य च परमप्रीता वयम्। अस्मदज्ञातनामधेयग्रन्थेभ्यो यानि प्रमाणवचनान्याकलय्य पुस्तककलेवरः परिशोभितस्तैरतिशयितधैर्य्यसमन्विता-नुसन्धित्सामनुमाय साश्चर्य्यं विज्ञापयामः संस्कृतभाषानुशीलनपराणां सर्व्वेषामेव द्रष्टव्यमिदं पुस्तकमिति।

श्रीकालीप्रसाददेवशर्म्मा।

( ११३ )

१९४४ खृष्टाब्दस्य ३० जुलाइदिवसे कलिकातास्थायाम् अमृतवाजार-पत्रिकायां ग्रन्थसमालोचनास्तम्भे निम्नलिखितवृत्तान्तः प्रकाशितः। मूलं वैद्यकवृत्तान्तस्य ६०६-७ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

श्रीयुक्तगुरुपदहालदारप्रकाशितव्याकरणदर्शनेतिहासो वङ्गाक्षरै र्मुद्रितः। संस्कृतव्याकरणशास्त्रनिहितदार्शनिकतत्त्वानां तुलनामूलकं समालोचनपर-मितिहासग्रन्थात्मकं प्रायोऽष्टशताधिकपृष्ठव्यापि खण्डमेकमस्माकं पुरो विन्यस्यते विपश्चित्प्रवरेण ग्रन्थकारेण। नास्माभि र्ज्ञायते कोऽपीतरो ग्रन्थकारो येन समाचरितो विषयोऽयं हालदारमहोदयप्रदर्शितमार्गेण। आधुनिक-( प्रचलित )-भाषासु व्याकरणं यथा ( भाषाबोधसौकर्य्यरूप )-सिद्धिसाधकत्वेन गृह्यते, न तथा संस्कृतभाषायां, तस्य ( ब्रह्मज्ञानोत्पादकत्व-रूपेण ) स्वयंसिद्धत्वात्। कविवर-'ब्राउनिं'-महादयवर्णित-वैयाकरणं को हि नाभिवन्दिष्यते। संस्कृतव्याकरणचर्चायामुत्सर्गीकृतजीविता विद्वज्जना आसन् भारतेऽस्मिन् वर्षे। तत्त्वसंग्रहव्यापारेऽतिमात्रक्लेशबाहुल्यं स्वीकृत्य प्रकटीकृतम्—अनन्यसाधारणज्ञानगाम्भीर्य्यं बहुश्रुतेन ग्रन्थकारेण। पुस्तक-मिदं रचयित्वा प्रवर्द्धिता खलु शोभा ग्रन्थकृता वङ्गभाषासाहित्यस्य। संस्कृतव्याकरणाध्येतृभिरवश्यमध्येतव्योऽयं ग्रन्थः।

( ११४ )

१३५१ वङ्गाब्दस्य २ भाद्रदिवसे वरिसालस्थितपोरगोल-पिरोजपुर-ग्रामातः पण्डितप्रवरः श्रीयुक्तनीलमाधवशर्म्मा व्याकरणदर्शनेतिहासं प्राप्य ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६०७-७ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

श्रद्धास्पदेषु—

भवत्प्रेरितव्याकरणदर्शनेतिहासं प्राप्य चिरकृतज्ञो भवामि। आचरित-विषयाणामेतादृश उत्कृष्टोऽपरो ग्रन्थो वर्त्तते वा न वेति मया न ज्ञायते। विषयेष्वभिनिवेशस्य गवेषणाया गाम्भीर्य्यस्यानन्यसाधारणपाण्डित्यस्य च परिचया ग्रन्थेऽस्मिन् सर्व्वत्र परिस्फुटाः सन्ति। किमधिकम्, साध्योपलब्धि-सौकर्य्याय दर्शनसूत्रानुयायिनी विषयसूचीसङ्कलनव्यवस्थाऽपि ग्रन्थकारस्य दिगन्तप्रसारि ज्ञानं सूचयति। एतद् दृष्ट्वा सातिशयं परितुष्टो भवामि।

अविज्ञाते विषयविशेषस्येतिहासे तत्र जनानां श्रद्धा चोत्साहो ह्रस्वता-माप्नुतः। स्वाभिज्ञतया ब्रवीमि यत् पठद्दशायामेवंविधं ग्रन्थमितिहासं वा यद्यहमध्यगमिष्यं तर्हि सविशेषमुपकृतोऽभविष्यम्। दुर्गसिंहविषये यो मे सन्देह आसीत् स एतद्ग्रन्थपाठेन दूरीभूत एव। इति

भवदीय-स्मृतितीर्थोपाधिक-
श्रीनीलमाधवशर्म्मणः।

( ११५ )

मूलायोड़संस्कृतविद्यालये स्मृतिव्याकरणयोरध्यापकः पण्डितप्रवरः श्रीवीरेशनाथविद्यासागरमहोदयो व्याकरणदर्शनेतिहासमधीत्य १३५१ वङ्गाब्दस्य १ आश्विनदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६०८-९ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

( ६०१ )

कल्याणभाजन-सरस्वतीवरपुत्र-श्रीगुरुपदहालदारदर्शनसागरवेदान्त-भूषणाय सादरसमावेदनम्—

महोदय !

भवत्प्रणीतव्याकरदर्शनेतिहासमधीत्य परमां प्रीतिं समधिगतवान्। दीर्घपञ्चाशद्वर्षेभ्योऽधिकं कालं व्याकरणशास्त्राध्यापनायां नियुक्तोऽस्मि। कलिकातासंस्कृतमहाविद्यालये तदनन्तरं च मूलायोड़संस्कृतविद्यालये पाणिनि-सुपद्म-मुग्धबोधादिव्याकरणाध्येतारोऽध्यापिता मया। इदानीं सप्ततिवर्षा-नतिक्रान्तं मे वयः। ईदृश्यामभिज्ञतायां सत्यामपि भवतः पुस्तकाद् बहवो विषया मयाधिगता ये खलु पूर्वं मे ज्ञानारूढ़ा नासन्। अस्मिन् ग्रन्थ रत्नोपमं यत् तत्त्वजालं प्रकटितं तत् सर्व्वमितः पूर्व्वं ग्रन्थान्तरे कदापि न दृष्टं मया। अद्वितीयोऽयं ग्रन्थ इत्युक्तौ नात्युक्तिर्भवति। अस्य द्वितीय-खण्डं द्रष्टुं समुत्सुकोऽहं तिष्ठामि।......इति

शुभानुध्यायिनो विद्यासागरोपाह्वस्य
श्रीवीरेशनाथविद्यासागरस्य।

( ११६ )

डाक्तार-श्रीकालिदासनाग M.A., D.Lit. ( Paris )-महोदयः १९४४ खृष्टाब्दस्य १० अक्टोवरदिवसे व्याकरणदर्शनेतिहासमधिकृत्य ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६१० पृष्ठे द्रष्टव्यम्। तदनुवादः—

पूजनीयेषु—

अगाधपाण्डित्यस्य प्रतिमूर्त्तिरिव भवतो व्याकरणदर्शनेतिहासः। दुरवगाहं शब्दतत्त्वं विमलभाषया भवता यथोपन्यस्तं तथा नान्येन केनापि।

भवांश्चैकोऽत्र मनीषी पथिकृदेव। वङ्गभाषाया इतिहासे भवतो ग्रन्थ-प्रकाशः स्मर्त्तव्यमेकं संघटनमित्यहं मन्ये।

आशीर्व्वादाकाङ्क्षी श्रीकालिदासनागः।

१०।१०।१९४४

( ११७ )

'रयेल एसियेटिक् सोसाइटि अफ् वेङ्गल'नामकपरिषदः साधारण-सम्पादकः १९४४ खृष्टाब्दस्य १४ अक्टोबरदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६१०-११ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

प्रियहालदारमहोदय !

अस्यै परिषदे व्याकरणदर्शनेतिहासस्योपायनत्वेन समर्पणं भवतः कृपातिशयं सूचयति। अतः परिषद आन्तरधन्यवादान् ज्ञापयितुं तत्-सम्पादकरूपेण मया भवतः सम्मति र्याच्यते।

ग्रन्थेऽस्मिन् विज्ञानसम्मतभावेन विषयाणामाचरणात् प्रगाढ़ं समाकृष्टा वयम्। विद्यालयपण्डितसमाजादिष्वपरिहार्य्यत्वेन निर्द्देष्टव्यग्रन्थोऽयं भविष्यति।

व्याकरणसमालोचनाया भूयस्त्वाद् भवतो ग्रन्थो विश्वकोष इव प्रतीयते। तत्र विषयविशेषे विपश्चितां मतभेदः सम्भवति, परं तु भवतो निःस्वार्थपरिश्रम-पाण्डित्यहेतो र्भवते चिरं कृतज्ञतापाशेन संवद्धास्ते भविष्यन्ति।

भवदीयः श्रीकालिदासनागः

'रयेल्एसियेटिक्-सोसाइटि अफ् वेङ्गल'-नामकपरिषदः

साधारण-सम्पादकः।

( ११८ )

श्रीहट्टनिवासी सर्व्वजनवरेण्यः पण्डितप्रवरः श्रीहरसुन्दरसांख्यरत्न-महोदयो व्याकरणदर्शनेतिहासमधीत्य १६४४ खृष्टाब्दस्य ४ नभेम्वरदिवसे गद्यपद्यमयं पत्रमेकं ग्रन्थकाराय प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६११-१२ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

स्नेहास्पदगुरुपद !

अशीतिवर्षीयो वृद्धोऽहं श्रीहरसुन्दरशर्म्मा। यथा यथा ग्रन्थस्ते पठ्यते मया, तथा तथा त्वयि भवानितिसम्बोधने ममानन्दशैथिल्यं घटते। इतः परं त्वमितिपदेन संभाषणे तुभ्यमधिकतरं सुखं मे समुपजायत इव। त्वत्प्रणीतग्रन्थपाठेन विमुग्धो भवामि।

गुरुपद !

अतिशयगुरुकार्य्ये यादृशी शक्तिरिष्टा
त्वयि गुरुपदविप्रे भारतीसम्प्रदत्ता।
मम मतिरियमस्मिन् सर्व्वशुक्ला सहाया
न भवति कुशलोऽन्यस्त्वां विना चापरोऽत्र॥

ग्रन्थोऽसावितिहासनामकरणं यस्याभवत् सान्वयं
यानि व्याकरणानि सन्ति वसुधाक्षेत्रे ततः कीर्त्तनम्।
दृष्टं दर्शनसप्तमं किमु भवेत् षण्णामिदञ्चापरं
धन्यस्त्वं धरणीतले गुरुपदप्रीतिस्त्वयि श्रेयसी॥

धन्या ते जननी धरातलगता तातश्च धन्यस्तव
धन्यास्त्वत्कुलसम्भवाः सुमतयो यद्वंशजस्त्वं पुनः।
धन्याश्चात्र वयं त्वदीयरचना यन्नेत्रगा सर्व्वतो
धन्या वङ्गवसुन्धरा गुरुपदस्याभूज्जनि र्यत्र च॥

इति श्रीहट्टनिवासिनः सांख्यरत्नोपनाम-
श्रीहरसुन्दरदेवशर्म्मणः।

( ११९ )

ढाकाविश्वविद्यालयस्याध्यापको डाक्तार-श्रीसुशीलकुमार दे M.A., D.Lit. ( London ) P.R.S.-महोदयो व्याकरणदर्शनेतिहासं पठित्वा १९४४ खृष्टाब्दस्य २७ नभेम्बरदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६१३ पृष्ठे द्रष्टव्यम्। तदनुवादः—

श्रद्धास्पदेषु—

भवतोपहृतो व्याकरणदर्शनेतिहासो दीर्घकालं हस्तं गतो मे। सुलिखिते पुस्तकेऽस्मिन् न हि व्याकरणविषयकमात्रं परं तु शास्त्रान्तरेषु भवतो यद् गभीरं ज्ञानं यश्च बलवानभिनिवेशो व्यक्ततां गते, तद्धि न केवलं विशेषज्ञानामपि तु संस्कृतानुरक्तस्य जनस्यैवानन्दविषयो भवति। मन्ये—इंराजिभाषायां विरचिते पुस्तकेऽस्मिन्नधिकतरोऽस्य प्रचारो विपुलः समादरश्चाभविष्यताम्—इति। यद्यपि वर्त्तमानवङ्गेषु न वर्त्तते तस्य सम्भाव्यता काचिदपि, तथापि प्रशंसार्हः खलु मातृभाषायां भवतोऽनुरागः। वङ्गेभ्यो वहिः पाठकेषु संस्कृतभाषासाहित्यसमालोचनानिष्ठा यथा दृश्यते वङ्गेषु न तथेति बहुदर्शनादुच्यते मया। अतो दूयते मे मनः, किंतु भवत इवान्तरनिष्ठा विरलापि खेदं तमपनुदति मे। मम सश्रद्धाभिनन्दनं गृह्यतामिति निवेदनम्—

वशंवदस्य 'दे'-इत्युपाधिकस्य
श्रीसुशीलकुमारस्य।

( १२० )

वर्द्धमानान्तर्गतनर्त्तनग्रामतः श्रीमद्-अन्नदाकुमारसांख्यतीर्थमहोदयो व्याकरणदर्शनेतिहासमधिकृत्य १३५१ वङ्गाब्दस्य २१ पौषदिवसे ग्रन्थकृते

( ६०५ )

पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६१४ पृष्ठे द्रष्टव्यम्।
तदनुवादः—

सानुनयनिवेदनमेतत्—

महात्मन्, भवत्प्रणीतव्याकरणदर्शनेतिहासं प्राप्य सविशेषं प्रीत आप्यायितश्च भवामि। उक्तग्रन्थरत्नमसाधारणं सारगर्भं कामदुघं चेति मन्ये। किमधिकम्, एतद्ग्रन्थपाठेन प्रणेतु र्गंभीरं दुरवगाहं च बहुदर्शित्वं सविशेषमवगम्यन्ते। एतेन मनीषिणामसामान्य उपकारो भविष्यतीत्यत्र लेशतोऽपि सन्देहो न वर्त्तते। सम्पूर्णग्रन्थं पठित्वा प्राप्तिवार्ता-प्रेषणाभिप्रायेण पत्रस्योत्तरदाने विलम्बो बोध्यः।

विनीतः श्रीअन्नदाकुमारशर्म्मणः।

( १२१ )

काशीवास्तव्यः काशीराजसभापण्डितः सुप्रसिद्धः पण्डितप्रवरः श्रीश्यामाकान्ततर्कपञ्चाननमहोदयो व्याकरणदर्शनेतिहासं सनत्सुजातीयमध्यात्मशास्त्रं चाधीत्य १३५१ वङ्गाब्दस्य २६ पौषदिवसे गद्यमयं पत्रं पद्यमयीं प्रशस्तिं च ग्रन्थकाराय प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६१५ पृष्ठे द्रष्टव्यम्।
तदनुवादः—

ससम्मानसमावेदनमिदम्—

महात्मन्, भवत्प्रेरितव्याकरणदर्शनेतिहासो मया प्राप्तः। अस्मदीयबन्धुप्रवरसतीर्थ्यश्रीशङ्करतर्करत्नमहोदयस्य गृहे वयं पुस्तकमिदं सनत्सुजातं चाश्रौषुः। परिश्रमो भवदीयः सफलः सञ्जात। प्राच्यप्रतीच्यशास्त्रेषु सुपण्डित एव भवान्। भवदीयग्रन्थः सर्व्वैरेव प्रशस्यते। अस्माभिरपि मन्यते यत् केनचिद् ब्राह्मणपण्डितेनैतादृक्पुस्तकप्रणयनं न सम्भवतीति। ग्रन्थऽस्मिन्

यादृशी बहुदर्शिता पाण्डित्यं विचारनैपुण्यं च प्रदर्शितानि तान्येव सर्व्वथा प्रशंसायोग्यानि भवन्ति। वक्तव्यं मे वारान्तरे लेखितुं संमन्यते। इति

भवदीय-श्रीश्यामाकान्तदेवशर्म्मणः
काशीराजसभापण्डितस्य।

( १२२ )

वारान्तरे वक्तव्यं वच्मीति प्रतिश्रुतिं रचितुं सुप्रसिद्धः काशीराजसभापण्डितः श्रीश्यामाकान्ततर्कपञ्चानन-महोदयः पुनरपि ग्रन्थकाराय निम्नलिखितां प्रशस्तिं प्रेषयामास।

'पूते तीर्थवरे वरेण्यसुकुले जातोऽभिजातेऽसि भो
विद्यासु व्यसनी धनी च विनयी प्राज्ञः सतामग्रणीः।
आर्य्याचारपरम्परासु रुचिमान् विद्वत्सु चूड़ामणि-
स्तीर्थानां सरणिं विनायकजन-प्रख्यातचिन्तामणिः ॥१॥
धीमन् व्याकरणेतिहासविषये तन्त्रे स्वतन्त्रः सुधी-
र्मीमांसाद्वयसांख्ययोगनिगमे शास्त्रेऽप्यभिज्ञो भवान्।
दक्षो मोक्षकथाविचारचतुरः सत्पुत्रपौत्रै र्वृतः
सामानाधिकरण्यमस्ति भवति प्रेम्णेव वाणीश्रियोः ॥२॥
श्रीमन् व्याकरणेतिहासविषयं यत्पुस्तकं प्रेषितं
युक्तं यच्च सनत्सुजातमपरं श्रीकालिकाव्याख्यया।
अस्माभिः सखिभिः समं तदुभयं दृष्टं समालोचितं
धन्यां हृद्यतमां विचारसरणिं श्लाघामहे सर्व्वथा ॥३॥

काशीराजसभापण्डित-श्रीश्यामाकान्ततर्कपञ्चाननस्य।

( १२३ )

वगुड़ाजेलास्थित'मालतीनगरटोल'नामकविद्यामन्दिरात् पण्डितप्रवरः श्रीमद्-ईश्वरचन्द्रभट्टाचार्य्यस्मृतितीर्थमहोदयो व्याकरणदर्शनेतिहासमधिकृत्य

१३५१ वङ्गाब्दस्य ६ माघदिवसे ग्रन्थकाराय पत्रमेकं प्रेषयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६१६-१७ पृष्ठयो र्द्रष्टव्यम्। तदनुवादः—

माननीयेषु सविनयनमस्कारनिवेदनम्—

महात्मन्, भवदीयव्याकरणदर्शनेतिहासः समधिगतो मया। पुस्तकस्य कियांश्चनांश आग्रहसहकारेण मया पठितः। पुस्तकमिदं वङ्गभाषया लिखितमित्यत इंराजीभाषायामनभिज्ञप्राचीनपण्डितानामशेष उपकारः साधितः। कलापव्याकरणसम्बन्धीया विविधा अज्ञातविषया भवदीयव्याकरणदर्शनेतिहासपाठात् परिज्ञाता मया। * * * एतादृशं बृहत्पुस्तकं विनैव मूल्येन वितीर्य्य निःस्वब्राह्मणपण्डितेषु सविशेषमानुकूल्यं भवता प्रदर्शितम्। इति

भवदीय-श्रीमदीश्वरचन्द्रभट्टाचार्य्यस्मृतितीर्थस्य।

( १२४ )

चन्दननगरतः श्रीयुक्त-फटिकलालदासमहोदयः १९४५ खृष्टाब्दस्य ५ जानुयारीदिवसे ग्रन्थकाराय सनत्सुजातमधिकृत्य पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६१७ पृष्ठे द्रष्टव्यम्। मूलानुवादः—

पूज्यपादेषु—

महोदय! व्याकरणदर्शनेतिहासः प्राप्तो मया। अमूल्यं पुस्तकमिदमुपहारत्वेन प्राप्य भवति चिरकृतज्ञताम् अनुभवामि।

वङ्गभाषायां पुस्तकमिदं विरचय्य भवतैका महती न्यूनता पूरिता। अतो वङ्गभाषा भवद्भ्य ऋणबद्धा वर्त्तते। अपरं खण्डं प्राप्तुमुद्ग्रीवस्तिष्ठामि। पुस्तकमिदमीदृशरमणीयत्वेन मे प्रतिभाति यदपठित्वा खण्डमुत्तरं मनसि मे न शान्तिमधिगच्छामि। प्रणामो मे गृह्यताम्। इति निवेदनम्।

चिरकृतज्ञ-श्रीफटिकलालदासस्य।

( १२५ )

चन्दननगरपुस्तकागारस्य सम्पादकमहोदयो व्याकरणदर्शनेतिहासमधिकृत्य १६४५ खृष्टाब्दस्य ८ फेब्रुयारीदिवसे पत्रमेकं प्रेरितवान्। मूलपत्रं वैद्यकवृत्तान्ते ६१८ पृष्ठे द्रष्टव्यम्। तदनुवादः—

सविनयनिवेदनम्—

......मदीयपुस्तकागारस्य कतिपयैः संस्कृतज्ञैः सभ्यै र्भवत्प्रेरितव्याकरणदर्शनेतिहासनामकं पुस्तकं पठित्वा भवतो गभीरं ज्ञानं संस्कृतशास्त्रेष्वतुला व्युत्पत्तिरमर्त्त्यः परिश्रमश्च भूरिशः प्रशंसितानि। तेषां कृते भवते कृतज्ञतां ज्ञापयितुमनुरुद्धोऽहम्।

पुस्तकागारस्य सम्पादकत्वेनाहं भवतोऽमूल्यग्रन्थप्रदानाय प्रसङ्गेऽस्मिन् पुनः कृतज्ञतां ज्ञापयामि। इति

विनीतस्य चन्दननगरपुस्तकालयसम्पादकस्य।

( १२६ )

काशीस्थित'हिन्दु-इउनिभार्सिटि'नामकमहाविद्यालयस्य सहकर्म्मा (Fellow) पण्डितगवेषी श्रीयुक्तकरुणापतित्रिपाठी-M.A., B.T.-व्याकरणाचार्य्यसाहित्यशास्त्रिमहोदयो व्याकरणदर्शनेतिहासमधिकृत्य १६४५ खृष्टाब्दस्य १० फेब्रुयारीदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास! मूलपत्रं वैद्यकवृत्तान्तस्य ६१६ पृष्ठे द्रष्टव्यम्। तदनुवादः—

प्रियमहोदय!

आगन्तुकात् पत्रप्रापणमतीवविचित्रत्वेन प्रतिभातुं शक्यते—भवता सर्व्वथाऽपरिज्ञातोऽहम्, किन्तु न तथा मत्सकाशे भवान्। यतो व्याकरणदर्शनेतिहासनामकप्रशंसनीयग्रन्थद्वारा भवतो वैदुष्येण परिचयं लभमानोऽहं स्वात्मानं भाग्यवन्तमाकलयामि।

वाराणसीहिन्दुविश्वविद्यालयस्य संस्कृतविभागे मयूरभञ्जराजपरिषद्यत्वेन पाणिनिव्याकरणमधिकृत्य गवेषणां कुर्व्वाणोऽहमस्मि। प्रसङ्गे नानेनोक्त-ग्रन्थाद् व्याकरणशास्त्रे भवतः पाण्डित्येन परिचयो मे सञ्जातः। यथा यथा भवतो ग्रन्थः पठ्यते तथा तथा समाकृष्टो भवामि भवतो ज्ञानगाम्भीर्य्येण विषयेऽस्मिन्। एकत ऐतिहासिकान् विविधान् वृत्तान्तान्, तथा च सनातनवर्णाश्रमिणां दृष्ट्या तेषां समाचरितम्, अन्यतश्च भवत आधुनिक-यौक्तिकचिन्ताधारां समालोक्य वचनातीतं विमोहितत्वं प्राप्तोऽहम्। एवं-जातीयेषु ग्रन्थष्वतुलना खलु शोभना कृतिरियं भवतः।

संस्कृतव्याकरणमध्येतॄणामतिचिरं वर्त्तमानमभावं महान्तं ग्रन्थोऽयं नूनं दूरीकरिष्यतीति ध्रुवमहं मन्ये—

भवदीय-करुणापतित्रिपाठी।

( १२७ )

दाक्षिणात्यान्तर्गतपूर्व्वगोदावरीजेलाभुक्तराजमुन्द्रिनगरस्थितनवसाहित्य-परिषदः टि. शिवशङ्करशास्त्रिमहोदयः १६४५ खृष्टाब्दस्य १२ मार्चदिवसे, ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६२०-२१ पृष्ठयो द्रष्टव्यम्। तदनुवादः—

महोदय!

कोकनदस्थित-पि. आर. (पिठापुरराजकलेजेत्याख्यस्य)-महाविद्यालयस्य संस्कृताध्यापको मम सुहृद्वरो राघवाचार्य्यमहोदयो (यस्मै भवान् विगते वर्षे भवतो यशःस्तम्भस्वरूपं व्याकरणदर्शनेतिहासं प्रयत्) भवतो ग्रन्थस्य संक्षिप्तविवरणप्रदानाय मामन्वरौत्सीत्। पुस्तकपाठानन्तरमिदमेव मनसि मे समुदितमभूद् यत् "तलङ्ग"-इत्याख्यायामस्माकं मातृभाषायामस्य समग्रानु-वादेन भूयानुपकारो भविष्यतीति। विगतत्रिंशद्वर्षाणि यावद् वङ्गभाषा-

साहित्यम् अधीयानेन मया रमेशचन्द्रदत्त-हरप्रसादशास्त्रि-प्रभातकुमार-मुखोपाध्याय-रवीन्द्रनाथठाकुरप्रभृतीनां लोकविश्रुतानां लेखकानां वहवो ग्रन्था अनूदिताः ।

भवतः पाण्डित्यपूर्णे पुस्तके 'तैलङ्ग'भाषायामनूदितेऽस्माकं साहित्यं नूनं नितरां समृद्धं भविष्यति । अनुवादाय भवतोऽनुमत्या सह पुस्तकस्य खण्डमेकं मह्यं कृपया प्रेरयतु भवान् ।

आन्ध्रमहाजनपदेषु लोकेषु संस्कृतव्याकरणानां दर्शनेतिहासविषयिण्यो भवतो भावधाराः सुप्रचारिताः स्युरिति भवति मे प्रधानं प्रवृत्तिनिमित्तम् । इति निवेदनं

श्रद्धावनतस्य टि॰ शिवशंकरशास्त्रिणः ।

( १२८ )

पूर्वोक्तः टि. शिवशङ्करशास्त्रिमहोदयः १६४५ खृष्टाब्दस्य २७ मे-दिवसे ग्रन्थकाराय पुनश्च पत्रमेकं प्रेषयामास । मूलपत्रं वैद्यकवृत्तान्तस्य ६२३ पृष्ठे द्रष्टव्यम् । तदनुवादः—

महोदय !

भवदीयमहाग्रन्थं सानुग्रहापायनत्वेनासाद्य धन्यवादान् विज्ञापयामि । ग्रन्थञ्च प्राप्यैव तीर्थपर्य्यटने वहिर्गतोऽहं ह्य एव प्रत्यागतोऽस्मि ।

तैलङ्गाख्यायां मे मातृभाषायामनुवादविषयकम् आवेदनमधिकृत्य भवतः सिद्धान्तः कृपया मे विज्ञापयितव्यः । इति निवेदनं

श्रद्धावनतस्य टि. शिवशङ्करशास्त्रिणः ।

( १२६ )

प्रागुक्तन टि. शिवशङ्करशास्त्रिमहोदयेन पुनरपि ग्रन्थकाराय १६४५ खृष्टाब्दस्य २७ सेप्टेम्बरदिवसे पत्रमपरं प्रेरितम् । मूलपत्रं वैद्यकवृत्तान्तस्य ६२२ पृष्ठे द्रष्टव्यम् । तदनुवादः—

श्रद्धेय महोदय !

मासचतुष्टयं परिभ्रम्य प्रत्यागतोऽहं ३०मे-दिवसे लिखितं भवतः सानुग्रहं पत्रं पठित्वा नितरां सुखितः सञ्जातः।

तैलङ्गाख्यायां मे मातृभाषायां महाग्रन्थस्यानुवादविषये भवतो सप्रसादमनुमोदनं प्राप्य भवते कृतज्ञताविज्ञापनं मेऽनुमन्यताम्।

मूलस्य निर्भ्रममत्तुएणभावार्थं विशुद्धञ्चानुवादं कर्त्तुं प्रभवामीतिविषये निःशङ्कं भवताऽवस्थातुं शक्यते। इति निवेदनं

श्रद्धावनतस्य टि. शिवशङ्करशास्त्रिणः।

( १३० )

चट्टलान्तर्गतपरैकोड़ाग्रामतः पण्डितप्रवरः श्रीमद्-अन्नदाचरणशास्त्रिमहोदयो व्याकरणदर्शनेतिहासमधीत्य १९४७ खृष्टाब्दस्य २ जानुयारीदिवसे ग्रन्थकाराय मानपत्रसमन्वितां प्रशस्तिमेकां प्रेषयामास।

## मानपत्रम्

श्रीयुक्तगुरुपदहालदार बि. एल्. सरस्वती-महोदयस्य......करकमलेषु—

महात्मन्!

स्वनाम्नाऽतीव विख्यातः श्रीगुरुपदसंज्ञकः।
बहुज्ञानसमायोगाद् नामार्थः परिरक्षितः॥
दृष्टं गुरुपदं यस्माद् व्याकरणस्य दर्शने।
अतुलो हि कृतो ग्रन्थः श्रीव्याकरणदर्शनम्॥
तदितिहासपाठान्मे हृदयं नु चमत्कृतम्।
जघन्ये कलिकालेऽपि कुतस्तस्यात्र सम्भवः॥

गीतोक्तोऽयं महात्मा सल्लोँकानां हितकाम्यया ।
पूर्व्वकृतिवशाज्जातो लोकेष्वनुत्तमः कृतौ ॥
लोकानुकम्पिनं देवं ब्राह्मणधृतविग्रहम् ।
भूयो भूयो नमामि त्वां सर्व्वतोऽनन्तरूपिणम् ॥

भयदीयगुणमुग्धश्रीअन्नदाचरणशास्त्रिण-
श्चट्टलान्तर्गतपरैफोड़ाग्रामनिवासिनः ।
२।१।४७ इ० ।

( १३१ )

१६४८ खृष्टाब्दस्य सेप्टेम्बरमासि काशीस्थित-'सुप्रभात'नामक-मासिकपत्रे निम्नलिखितवृत्तान्तः प्रकाशितः ।

व्याकरणशास्त्रस्येतिहासः

कलिकातानगरीयकालीघट्टनिवासिभिः श्रीगुरुपदहालदार बि.-ए. बि.-एल-महोदयै र्विरचितोऽयं वङ्गभाषालिखितो महान् ग्रन्थो बृहदाकारे मुद्रितोऽष्टशतपृष्ठात्मको गवेषकाणां विदुषां व्याकरणशास्त्राध्येतॄणां कृते च नितरामुपयुक्तः । मर्म्मविद्भ्यो विना मूल्यं वितीर्य्यते लेखकमहोदयैः ।

अस्माभिः प्रार्थितोऽयं ग्रन्थस्तीर्थयात्रार्थं वाराणसीं समागतैः श्रीमद्भि र्हालदारमहानुभावैः स्वयमेव सुप्रभाताय समर्पितः । वयमपि हालदारमहोदयानां दर्शनेन विविधविचारविमर्शनेन च परमाप्यायिता आश्चर्य्यसमन्विताः सञ्जाताः । इमे हि सुप्रसिद्धधनिकब्राह्मणकुलोत्पन्ना आंग्लभाषामहाविद्वांसः केवलं शब्दब्रह्मानुशीलनधिया संस्कृतव्याकरण-शास्त्रेतिहासान्वेषणे प्रवृत्ताः ।

चिरकालिकाध्ययनेन गवेषणप्रवणैरेभिः केवलं पाणिनिपर्य्यन्तस्येति-हासस्य संकलनं बृहत्तरेषु चतुःशताधिकपृष्ठेषु लिखितम् । ततश्च सारस्वत-

मुग्धबोधान्तव्याकरणेतिहासो द्वितीये भागे समुल्लिखितः ; कागज-मुद्रणादीनामलाभेन महार्घ्यतया च न मुद्रापितः ।

प्रकाशितोऽयं ग्रन्थः सुचिक्कणपत्रेषु मनोहराक्षरै नयनाकर्षकरूपेण मुद्रितो विना मूल्यं वितीर्य्यते । यद्यप्यस्य मूल्यं दशमुद्रामितं भवितुमर्हति, तथापि परमधनिकै र्धार्म्मिकैश्च सहृदयै र्हालदारमहोदयैः स्वान्तःसुखाय सहस्रशो ग्रन्थानधीत्य प्राच्यपाश्चात्त्यविदुषां महता द्रव्यव्ययेन सम्पादितोऽयं ग्रन्थस्तद्विशेषविदुषां कृते समुपायनीक्रियत इति सर्व्वथा समभिनन्दनीया धन्यवादार्हाश्च ते ।

हालदारमहोदया वृद्धा अपि मधुरमूर्त्तयो मधुरालापाः परमशिष्टा भारतीयसंस्कृतिपक्षपातिनः सन्ति । दुर्लभा एवेदृशा विद्यारसिका धनिकाः साम्प्रतमिति वयं तेषां दीर्घजीवितं कामयामहे ।

न केवलमिमे व्याकरणशास्त्र एव कृतभूरिपरिश्रमाः, अपि तु वेदान्ते निष्णाता अध्यात्मतत्त्वविदोऽपि सन्ति । महाभारतान्तर्गतस्य सनत्सुजातीयाध्यात्मशास्त्रस्य शाङ्करभाष्योपेतस्यापि प्रकाशनं कृतम् । तत्र 'कालिका'नाम्नी विस्तृततरा संस्कृतटीकाऽपि लिखिता । तस्य हिन्दीभाषाऽनुवादोऽपि विद्यते । एतस्यां टीकायां शतशः पुराण-दर्शन-धर्म्मशास्त्रीयग्रन्थानां प्रमाणोद्धरणं दृष्ट्वा विविधशास्त्रावगाहन-कुतूहलित्वं समालोक्यते । वयमेतेषां ग्रन्थावलोकनाय संस्कृतप्रणयिनः साग्रहमनुरुन्धमहे ।

( १३२ )

प्राच्यप्रतीच्यविद्याम्भोधिपारदृश्वा कलिकाताविश्वविद्यालयस्याध्यापकः श्रीज्योतिषचन्द्रघटक एम्.ए ( ट्रिपल् ), एफ् आर. हिष्ट् एस् ज्योतिषसागरसाहित्यसरस्वतीमहोदयो दर्शनागारीयमन्दिरकुड्यस्थमोक्षप्रतिपादकश्लोकराशीन् दृष्ट्वा ग्रन्थकारस्य ग्रन्थौ च पठित्वा सन्तोषसहकारेण ललित-

कवितामयीं प्रशस्तिमेकां निजव्ययेन मुद्रापयित्वा ग्रन्थकृत उपायनत्वेन प्रददौ। तद् यथा—

'गुञ्जन्मञ्जुद्विरेफस्त्रिपुरहर-पद-द्वन्द्व-पङ्के रुहोत्थो
रुच्यै रौप्यै र्मयूखै र्दरविशदतनुः सर्व्वकान्तामुपैति।
पक्षैः श्यामै र्विगाह्याम्बरतलमतलं कालिकाक्षेत्रमुद्यन्
दक्षो दक्षाध्वरारे र्हरति शिवमयं वाचिकं देवदेवात्॥

* * * *

तीर्थश्रेष्ठं यदम्भः सुविमलमतुलं भुक्तिमुक्तिं प्रदत्ते
ज्योत्स्नाशुभ्रा सरित् सा गुरुपदतनुका त्रीणि देहानि धत्ते।
तिष्यप्रेष्यान् मनुष्यान् सुरवरभुजगांस्तर्त्तुकामा त्रिधामा
षड्वर्गं भारतीभि र्हलधरवदनैश्चाजितै र्हन्त्यजस्रम्॥
मासे राधे सुपुण्ये सबुधदिनकरे मेषराशिं प्रयाते
वेदांशस्य प्रमाणं हिमकरनिकरस्यामले पुण्यवारे।
कृष्णे पक्षे नवम्यामतिशुभहरिभे क्षेमयोगे शुभाख्ये
ज्योतिःशस्तिः शिवाह्वा महसि विरचिता साऽस्तु धर्म्मस्य वृद्धयै॥

( १३३ )

काशीवास्तव्यः प्रत्याख्यातमहामहोपाध्यायोपाधिकः पण्डिताग्रगण्यः श्रीशङ्करतर्करत्नन्यायकेशरिराजपण्डितमहोदयो ग्रन्थकारीय'श्रीश्रीदशभुजा-दुर्गा'नामकप्रबन्धं पठित्वा ग्रन्थकृते पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६२६ पृष्ठे द्रष्टव्यम्। तदनुवादः—

'सप्रीतिसम्मानसम्भाषणपूर्व्वकं विज्ञापयति—

महात्मन्, भवत्प्रेरित'पूर्णिमा'पत्रिकामधिगम्य सविशेषमहं प्रीतो भवामि। भवतः सुचिन्तितं वहुदर्शितापूर्णं 'श्रीश्रीदशभुजा दुर्गा'नामक-

प्रबन्धं साग्रहमधीत्यास्मदीयपण्डितसभायाः सभ्यवृन्दः परमामेव प्रीतिमलब्ध। भवतः पाण्डित्येन सह पण्डितमण्डली सुपरिचिता वर्त्तते। भवल्लेखनीप्रसूतप्रबन्धं प्राप्य सर्व्वे एव पण्डिताः साग्रहं तमधीयते। जगन्मातुः कृपया कुशलं भवत आशास्यते। कुशलिनश्चात्र वयम्।

भवदीयश्रीशङ्करतर्करत्नः।

( १३४ )

मूलायोड़संस्कृतविद्यालयस्य व्याकरणस्मृत्यादेरध्यापकः श्रीवीरेशनाथविद्यासागरमहोदयः पूर्णिमापत्रिकास्थं 'श्रीश्रीदशभुजादुर्गा'नामकप्रबन्धं पठित्वा १३५२ वङ्गाब्दस्य १० कार्त्तिकदिवसे ग्रन्थकाराय पत्रमेकं प्रेरयामास। मूलपत्रं वैद्यकवृत्तान्तस्य ६२६-२७ पृष्ठयो द्रष्टव्यम्। तदनुवादः।

आशीःपुरःसर-समावेदनमेतत्—

भवत्प्रदत्त'पूर्णिमा'पत्रिकां प्राप्य तमोमयं मे हृदयमालोकोद्भासितमेव। कर्म्मकाण्डेऽपि भवतस्तीक्ष्णदृष्टेः परिचयमवगम्य पुलकितोऽस्मि। भवदीय-'श्रीश्रीदशभुजादुर्गा'नामकप्रबन्धं द्विस्त्रिः पठित्वाऽपि तृप्तिर्नाधिगम्यते मया।

एतत्प्रबन्धस्थित-दुर्गाध्याने कृतित्वमद्भुतं प्रदर्शितं भवता। कालिकापुराणीयध्याने काचिदसङ्गति र्दृश्यते। सा च भवता सुष्ठ्वेव परिशोधितेति मन्यते।

सततशुभानुध्यायिनो मूलायोड़संस्कृतशब्दस्मृत्यध्यापक-
श्रीवीरेशनाथशर्म्मणः।

( १३५ )

पण्डितप्रवरो बि.ए., एल्.ए.एम्.एस्-इत्युपाधिभूषितो भिषग्रत्नः काव्यव्याकरणपुराणस्मृतिवेदवेदान्तोपनिषत्तीर्थोपाधिकः श्रीनृपेन्द्रनाथशास्त्रि-

महोदयः १३६१ वङ्गाब्दस्य २४ भाद्रदिवसे व्याकरणदर्शनेतिहासं सनत्सुजातीयञ्चाधीत्य ग्रन्थकृते पत्रमेकं प्रेषितवान्। वङ्गभाषायां लिखितस्य मूलपत्रस्यानुवादोऽधः प्रदीयते—

श्रीचरणे निवेदनम्—

भवतः प्रेष्ठाया दौहित्र्याः श्रीमत्याः पूरवीदेव्याः समधिगतं मया व्याकरणदर्शनेतिहासः सनत्सुजातीयञ्चेति भवता प्रेषितं ग्रन्थद्वयम्। इतः पूर्वं मया संस्कृतसाहित्यपरिषदि वङ्गसाहित्यपरिषदि च पुस्तकद्वयमधीतम्।

भवतः पुस्तकसमालोचनायां नास्ति मेऽधिकार इति मन्यते मया। मूर्खो बालकमात्रोऽहम्। भवतो ग्रन्थपठनानन्तरं समुदेति चिन्ताद्वयमात्रं मनसि मे—वङ्गवासिनां मस्तकं जन्मान्तरवादश्चेति। हिन्दूनां जन्मान्तरवादे वर्त्तते कियत् सत्यं तद्धि समधिगम्यतेऽधुना भवतो दर्शनेन। यद्वा मन्यतां भवान्, सुदृढः प्रत्ययो मे जायते यत् प्राचीनवैयाकरणेषु कोऽप्येकः शरीरं परिगृह्य सम्पादयति दुष्करं कार्य्यमिदम्। व्याकरणदर्शनेतिहासस्यावशिष्टं खण्डं मुद्रापयतु भवानिति प्रार्थ्यते मया। इति

विनीतस्य भवदीयस्य बालकमात्रस्याज्ञस्याष्टतीर्थोपाधिकस्य श्रीनृपेन्द्रनाथशास्त्रिणः।

---

## वैद्यकवृत्तान्तविषये समालोचनमूलकपत्राणामनुवादाः ।

( १३६ )

२४ नं० देवेन्द्रघोष रोड् ।
भवानीपुर, कलिकाता—२५
महानवमी, १९शे आश्विन, १३६१ ।

सविनयनमस्कारपूर्व्वक-निवेदनमेतत्—

महोदय ! भवत्प्रेषितं वैद्यकवृत्तान्तनामकं ग्रन्थं पठित्वा परमं प्रीतोऽस्मि । भवतो वैद्यकवृत्तान्तप्रकाश आयुर्व्वेदस्येतिहासविषये प्रथमा सृष्टिरेव । तत्र ये ये विषया आचरितास्ते ह्यायुर्व्वेदसेवकानामितः पूर्व्वमज्ञाता आसन्, तेषाञ्च संग्रहव्यापाराः परमकठिना इत्यत्र नास्ति कश्चित् सन्देहावकाशः । अभाव एष संपूरितो भवतयेवेत्यत आयुर्व्वेद-सेवकानां मम च भवति भवानशेषधन्यवादार्हः ।

भवत्प्रणीतवैद्यकवृत्तान्तग्रन्थस्य १९१ पृष्ठे भवतः सिद्धान्तः प्रमाणत्वेन प्रतिभाति, यतो न हि महामुनिना पतञ्जलिना चरकसंहिता रचिता, तेन हि केवलं तस्या व्याख्या कृता । तदुक्तम्—"सूत्राणि योगशास्त्रे च वार्त्तिकानि ततः कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुमिति ।" प्रमाणेनानेन पतञ्जलेश्चरकवार्त्तिककारत्वं सिद्धं भवति ।

* * * * * *

इति विनयावनतस्य—
आयुर्व्वेदशास्त्रि-श्रीरवीन्द्रनाथचक्रवर्त्तिनः ।

( १३७ )

( मूलपत्रम् )

श्रीम्

**प्रशस्तिः**

पुस्तकत्रितयं लब्ध्वा महार्घ्यं भुवि दुर्ल्लभम् ।
'वेदान्तवागीशो'पाधिः श्रद्धया दीयते मया ॥ १ ॥
पञ्चतीर्थोपाधिकेन स्वध्यापनरतेन हि ।
श्रीकालिका-किंकरेण श्रीयुतेश्वरशर्म्मणा ॥ २ ॥
'वेदान्तवागीश'श्चैकः 'सरस्वती' तथापरः ।
'दर्शनसागर'श्चान्यस्त्रिरत्नै र्भुवि मण्डितः ॥ ३ ॥
श्रीगुरुपदसंसक्तः शास्त्रे धर्म्मे गुरुत्ववान् ।
श्रीगुरुपदनाम्ना च विदां वेदान्तवागीशः ॥ ४ ॥
ग्रन्थभाष्यानुवादैश्च तथा पीठेषु साधनैः ।
ख्यातो 'वैद्यकवृत्तान्तै'रज्ञानव्याधिहारकैः ॥ ५ ॥
चित्रशिलारता पत्नी ह्यादर्शगृहिणी श्रिया ।
पुत्राश्च पण्डिताः सर्वे महाविद्याप्रसादतः ॥ ६ ॥
अशेषगुणसिन्धो स्ते रत्नं सञ्चतुमक्षमः ।
वारिबिन्दुप्रदायैव ह्यहं वच्मि विदां वर ! ॥ ७ ॥

श्रीशारदी शुक्ला विजया-दशमी । १३६१ संख्यकवङ्गाब्दे ।

शमिति
भवदाश्रितातिवृद्धविप्र-श्रीईश्वरचन्द्रशर्म्मणः ।
१, मार्कासलेन । दर्शनविद्यालय । कलिकाता-७।

( १३८ )

श्रीश्रीदुर्गाशरणम्

वङ्गीयब्राह्मणसभा।
४ए, डि, एल, राय रोड।
कलिकाता। २१।६।६१

सविनयनमस्कारनिवेदनम्—

विजयाकृत्यमभिवादनं विनयसम्भाषणञ्च मे गृह्णातु भवान्। भवत्-प्रेरितं वैद्यकवृत्तान्तस्य * * * * खण्डमेकं मया सम्प्राप्तम्। अत्रावसरे न हि त्रस्तोऽहं सञ्जातो ग्रन्थस्य विपुलायतनदर्शनेन। यतो भवत्प्रणीतस्य सनत्सुजातीयग्रन्थस्यैवंविधवृहदाकारं दृष्ट्वा प्रथमतो मनसि मे भीतिसञ्चारोऽभवत्, अनन्तरं तु ग्रन्थे विषयसन्निवेशस्य नैपुण्येन भावाभिव्यक्ते र्गाम्भीर्य्येण च समाकृष्टं समाहितञ्चाभून्मे चित्तम्। * * तत्र चेयत्येव सन्निविष्टविषयाधिक्येऽपि ग्रन्थकृतो भूयोदर्शनस्य तथाऽसामान्यज्ञानराशेः सन्निवेशो ग्रन्थस्य सुमहत्कलेवरमप्यल्पीकरोत्येव। सुचिन्ताप्रसूतविषयवस्तुसमावेशस्याकर्षणं पाठकानां समग्रग्रन्थपाठे कारणमिति मन्यते, नोचेद् धैर्य्यच्युति नूनमभविष्यत्। भवतो नवीनो ग्रन्थो न साम्प्रतं साकल्येन समधिगतो मया, तथाप्यत्र सन्निविष्टवृत्तान्तानवगच्छन्तं द्वितीयं कमपि जनं स्मर्त्तुं न समर्थोऽस्मि। "गुणगृह्या वचने विपश्चितः" इति न्यायेन गुणवतां गणनां कृत्वैकत आयुर्व्वेदशास्त्रोत्कर्षोऽपरतो यै र्हि स्वीयमनीषयाऽऽयुर्व्वेदशास्त्रस्य महिमा जगतीह लोकसमाजे च प्रत्यक्षगोचरः कृतस्तेषां कालावलुप्तनाम्नां पुनरुज्जीवनञ्च भवतैव सम्पादितम्। भवतः कीर्त्तिरेवं जगति शाश्वतिकं कालं विद्यताम्। कलिकलुषनाशिकालिकाजगज्जनन्याः प्रसादेन सुसम्पन्नमिदं भवतु—इत्यैकान्तिकी प्रार्थना मे। * * *

इति

विनीतस्य श्रीनरेन्द्रनाथसिद्धान्तशास्त्रिणः।

( १३९ )

श्रीगीष्पतिभट्टाचार्य्यः। ५।१वि नेपालभट्टाचार्य्य ष्ट्रीट्,
कलिकाता। २३ आश्विन, १३६१।

विजयाविहितसश्रद्धनमस्कारपूर्व्वकनिवेदनम्—

महाशय !

भवद्रचितं वैद्यकवृत्तान्तं प्राप्य नितरामनुगृहीतोऽस्मि। ग्रन्थेऽस्मिन् भवतो यद् अध्यवसायसहितं पाण्डित्यं प्रकाशितं तस्य प्रशंसनं निष्प्रयोजनं मत्वैतन्मात्रमेव वक्तुमिच्छामि यदत्र बहवोऽभिनवविषया ज्ञातुं चिन्तयितुञ्च मया संप्राप्ता इति। अतो गृह्णातु भवान् आन्तरं कृतज्ञत्वं ममेति

भवदीयस्य

विनीत-श्रीगीष्पतिभट्टाचार्य्यस्य।

( १४० )

श्रीदुर्गाचरणमित्र, एम्-ए. वि-एल् उकिल, हाइकोर्ट। शान्तिनिवास, ५२ विघा, मधुपुर।
१६।१०।५४

अशेषश्रद्धाभाजनेषु—

अधुना प्रवासस्थितेन मया भवत्प्रेरितं "वैद्यकवृत्तान्त"नामकं सुबृहत् पुस्तकं प्राप्य युगपदानन्दविषादावनुभूयेते। भवतेवासीमशास्त्रमन्थनकारिणा ब्रह्मविद्याविदुषा मां संस्मृत्य कलिकातास्थिते भवने मेऽस्य पुस्तकस्य प्रेरणमिति नूनमानन्दकारणम्; तथा वैद्यशास्त्रादिप्रणेतॄणां प्रागतिहासिक-युगादारभ्य बहुगवेषणामूलकमितिवृत्तमिदं न मे सम्यग् वोधगम्यमिति विषादकारणं मे। कियता परिश्रमेण कतिशास्त्रेतिहासादिपाठेनैते वृत्तान्ता भवता समुद्घाटिता इति कियतश्चनांशस्य पाठेन समधिगतं मया।

प्राकृतजनानां दुःसाध्यमेतत्, असाध्यमितिकथनेऽपि नास्ति काचिदत्युक्तिः। भवतो नीरोगत्वं दीर्घजीवितञ्च भगवच्चरणे प्रार्थये।

इति भवद्गुणमुग्धस्य श्रीदुर्गाचरणमित्रस्य।

* * * *

( १४१ )

डाक्तार-श्रीक्षितीशचन्द्रचट्टोपाध्यायसम्पादितमञ्जूषापत्रिकायां १९५४ खृष्टाब्दस्य अक्टोबरमासि प्रकाशितं वैद्यकवृत्तान्तस्य समालोचनम्—

वैद्यकवृत्तान्तः ( वङ्गभाषामयः )। श्रीगुरुपदहालदारसरस्वती-दर्शनसागर-वेदान्तभूषण-बी.एल्-विरचितः। 47, Haldarpara Road, Calcutta-26-इत्यतः श्रीमता भारतीविकाशहालदार-एम्.ए, बी.एल्—इत्यनेन प्रकाशितः। Demy 8 vo., 8+44+692.

कस्य वा न विदितः संस्कृतज्ञस्य सर्व्वतन्त्रस्वतन्त्रधिषणः श्रीगुरुपद-हालदारदर्शनसागरमहोदयः, केन वा नानुशीलितं वङ्गभाषाविदा विपश्चिता दर्शनसागरमहोदयस्य विश्वकोषकल्पं सनत्सुजातीयमध्यात्मशास्त्रं च व्याकरणदर्शनेतिहासश्च। ब्राह्मणोत्तमेनानेन महात्मना प्रभूतेन परिश्रमेण विपुलेन चार्थव्ययेन समुत्कृष्टेषु पत्रेष्वभिनवैः सीसकाक्षरैर्मुद्राप्य पुस्तकानि विनैव मूलं विनैव च प्रेषणव्ययमुपायनीक्रियन्ते प्रेक्षावद्भ्य इत्यहो निःस्पृहत्वं च वदान्यत्वं च महाभागस्य।

अत्र प्राचीनतमात् कालादारभ्य येनायुर्व्वेदशास्त्रे ग्रन्थो विरचितः, यस्य वा नामायुर्व्वेदग्रन्थकर्त्तृत्वेन क्वाप्युपलभ्यते तस्यैव विवरणं सन्निविष्टम्। आधुनिकानां केषाञ्चन ग्रन्थकृतां वंशोद्भवैरपि येषां ग्रन्थानां नामानि न श्रुतानि तेषामपि नामान्यत्र सन्निविष्टानीत्यहो अतिमानुषः प्रयत्नश्च परिश्रमश्च दर्शनसागरमहाभागस्य। अन्ते च ग्रन्थकृतोऽनुरूपेण पुत्रेण विद्वद्वर्य्येण

श्रीमता भारतीविकाशेन संक्षेपेण सन्निविष्टो ग्रन्थकृतो जीवनवृत्तान्तो दर्शनागारे समुत्कीर्णानां श्लोकानां वृत्तान्तः सनत्सुजातीयाध्यात्मशास्त्र-विषये व्याकरणदर्शनेतिहासविषये च विदुषामभिमतानि कस्य वा सचेतस-श्चेतो न रञ्जयेयुः! धन्या वयं धन्या च भारतभूमिरीदृशानां महाभागा-नामाविर्भावेण।

( १४२ )

श्रीमते रामानुजाय नमः।

श्रीबलरामधर्म्मसोपान। P. O. Khardah (24 Parganas)
श्रीश्रीलक्ष्मीनारायणजी-मन्दिर। २०।१०।५४
सम्पादकः श्रीयतीन्द्ररामानुजदासः।

परमश्रद्धास्पदेषु—

महोदय! भवत्प्रेरितं 'वैद्यकवृत्तान्त'नामकं पुस्तकं प्राप्य परम-मनुगृहीतोऽस्मि। यावदेव पठितं तावतैव परितृप्तिमनुभवामि। भवता पूर्व्वप्रणीतं सनत्सुजातीय-व्याकरणदर्शनेतिहासाख्यग्रन्थद्वयमिव वर्त्तमान-पुस्तकमपि समालोचितविषयवस्तुषु नूनमसामान्यरश्मिजालं विकिरति। भवानिव प्रवृत्तिसम्पन्नः प्रतिभाशाली च पुरुषो निरतिशयं दुर्ल्लभः खलु। भवतां गेहं "शुचीनां श्रीमतां" गृहमेव। दीर्घायुः सन् भवान् लोकहितकर-कार्य्येषु व्रती भवतु—इत्येव मे प्रार्थना।

* * * *

इति भवदीयगुणमुग्धस्य
श्रीयतीन्द्ररामानुजदासस्य
( डाः श्रीइन्दुभूषणवसु, एम्-डि )।

( १४३ )

P. K. Gode, M. A., D.Litt. (Paris), Curator.

Bhandarkar Oriental Research Institute.
Poona-4 ( India ).
27. 10. 54.

प्रियसुहृद्वर !

वैद्यशास्त्रोपरि सुबृहद् वैदुष्यपूर्णञ्च भवतः पुस्तकं सकार्तज्ञ्यं प्राप्तं मया साम्प्रतम् । भवतो महामूल्ये पुस्तके समालोचितविषयेषु निरतिशयं जातानुरागो भवामि, यतो भारतीयचिकित्साशास्त्राणां तदितिहासस्य चाध्ययने समासक्तोऽहमपि । विषयेष्वेषु परः-शताः प्रबन्धाः प्रकाशिता मया ! * * *

इति
भवदीय-श्री पि, के, गोड़े ।

( १४४ )

( मूलपत्रम् )

Atreya Ayurveda Sala.
Tennur Road, Tiruchirapalli.
Proprietor—V. B. Nataraja Sastri, Ayurvedacharyya, Vaidyavisarada, Vaidyavachaspati.
27. 10. 54

ब्रह्मश्रीगुरुपदहालदारसरस्वतीमहाशयानां पवित्रे चरणनलिनसन्निधौ साष्टाङ्गप्रणिपातपूर्व्वं निवेदयति विनीतो नटराजशास्त्री—

तत्रभवद्भिः परमकरुणया मह्यं प्रेषितो वैद्यकवृत्तान्तग्रन्थोऽद्य प्राप्तो मया। आपाततोऽवलोकितश्चान्तम्।

* * * * *

अस्मिन् वैद्यकवृत्तान्तग्रन्थेऽन्ते "क"-परिशिष्टे वर्णितं दर्शनागारमहिमानं पठित्वा ममायुषः काले तद्दर्शनभाग्यं मम सम्भवेदिति व्याकुलं मे हृदयम्।

भवतां सनत्सुजातीयमध्यात्मशास्त्रं व्याकरणदर्शनेतिहासञ्चाधिकृत्य माननीयविदुषां प्रशंसापत्राणि पठतो मम भवदीयाः सर्व्वाः कृतीः सद्यो द्रष्टुं समुत्कण्ठा मामुदीरयति वदान्यविद्वद्वरेण्यांस्तत्रभवतः प्रार्थयितुं— दयया मह्यमन्येषाञ्च भवद्ग्रन्थानां दानेनाहं समनुग्राह्य इति।

भवदीयवङ्गभाषायाः संस्कृतबाहुल्यात् सनत्सुजातीयव्याकरणदर्शनेतिहासग्रन्थयोश्च प्रतिपाद्ययोः कृतस्तोकश्रमस्य मम तावुभावपि ग्रन्थौ वङ्गभाषामयावपि मे सुबोधावेव स्यातामिति प्रत्येमि। पुनः प्रणामाः सन्तु।

विद्वदनुग्रहार्थी नटराजशास्त्री।

( १४५ )

H. R. Krishnan, I.C.S. Government of India.
Joint Secretary. Ministry of Law.

New Delhi, 28th Oct. 1954.

प्रियहालदारमहोदय !

* * * अतित्वरितपठनमपि सन्दर्शयति गभीरगवेषणामूलकत्वं भवतो वैद्यकवृत्तान्तस्य। यथावसरं पुस्तकमिदं सम्यगधीत्य मतं मे ज्ञापयिष्यामि। * * * *

इति भवदीयस्य श्रीयुत एइच्. आर. कृष्णनस्य।

( १४६ )

भट्टपल्लीतः
११।१२।५४

सादरसबहुमानसमावेदनमिदम्—

प्रिय दर्शनसागरमहोदय ! पूजनीयविद्यावागीशमहोदयद्वारा प्रेरितो भवत स्तृतीयो महाग्रन्थो "वैद्यकवृत्तान्तः" हस्तं मे समागतः। यदा यस्मिन्नेव विषये भवता पाणि र्निधीयते, स ह्यपूर्व्वालोकैः सदैव समुद्भासितो भवति। वस्तुतस्तु वैद्यशास्त्रविषये भवतो गभीरज्ञानस्य यः परिचयोऽत्रास्माभिः सम्प्राप्तः, स नूनमननुभूतपूर्व्व एव। भवान् दीर्घायुः सन् स्वदेशस्य ज्ञानवैभवविवृद्धैय दानसत्रं विदधातु। देशवासिनः पुनस्तत् साञ्जलि संसेव्य परितृप्ता भवतु।

*        *        *        *        *

इति
भवदीय-श्रीश्रीजीवदेवशर्म्मणः,
कलिकाताविश्वविद्यालयस्याध्यापकस्य।

( १४७ )

कविराज अम्बिकाचरणचक्रवर्त्ती
काव्यतीर्थ, आयुर्व्वेदाचार्य्य।

147, Dasaswamedh.
Banaras,
23. 11. 54

अशेषसम्मानास्पद-श्रीयुक्तगुरुपदहालदारमहाशयसमीपेषु—

सविनयनमस्कारपूर्व्वकनिवेदनम्—

भवतो 'वैद्यकवृत्तान्त'-नामकं पुस्तकं प्राप्य परममनुगृहीतोऽहम्। पठनेन च ततोऽधिकां परितृप्तिमधिगच्छामि। अनन्यसाधारणेनाध्यवसायेन विपुलपरिश्रमेण च रचितमिदं सुवृहत् पुस्तकम्। अतो भवान् आयुर्व्वेदानुरागिणो व्यक्तिमात्रस्य धन्यवादार्हो भवितुमर्हति।

भवतः पुस्तकमिदमायुर्व्वेदस्य निधित्वेन नूनं गण्यं भविष्यति। अत्र सुप्राचीनकालादारभ्य वर्त्तमानकालपर्य्यन्तमायुर्व्वेदीयग्रन्थरचयितॄणामितिहासाः सन्निवेशिताः। पूर्व्वाचार्य्याणामवदानादिसंवलितस्यैवंविधस्य कस्यचिद् ग्रन्थस्यात्यन्ताभावो मादृशैरज्ञजनै र्नितरामन्वभूयत। भवतः प्रयत्नतोऽभावः स बहुलांशेन निराकृतः सञ्जातः। अतो भवते ममान्तराभिनन्दनमज्ञापयित्वा स्थातुं न मया शक्यते।

सनत्सुजातीय-व्याकरणदर्शनेतिहासनामकग्रन्थद्वयं विरचय्य भवान् विद्वद्गोष्ठीषु विपुलं समादरं प्राप्त इति भवतः पुस्तकपाठेनावगम्य महानन्दमनुभवामि। सर्व्वशक्तिमान् विश्वेश्वर एवंविधजनहितकरकार्य्येषु भवतः सहायो भवतु, भवते च निरापद्दीर्घजीवनं प्रददातु—इत्येव भगवच्चरणे प्रार्थना मे। भवतोऽनुग्रहस्य कृते तथाऽऽयुर्व्वेदस्य समुन्नतिं प्रचारं च विधातुं भवतः क्लेशस्वीकारस्य च कृते पुन र्धन्यवादं प्रददामि।

इति विनीतनिवेदकस्य

श्रीमद्-अम्बिकाचरणचक्रवर्त्तिनः।

( १४८ )

Law Minister, India.

५नं, कुइन भिक्टोरिया रोड।

निउ दिल्ली।

४।१२।५४

श्रद्धास्पदेषु सविनयनिवेदनम्—

भवत्प्रेरितं "वैद्यकवृत्तान्त"ग्रन्थं प्राप्य सातिशयं प्रीतोऽस्मि। स्वीकरोतु भवान् धन्यवादं मे।

आसीत् खल्वेवंविधग्रन्थानां सातिशयं प्रचारोपयोगित्वमिति कथनमेव बाहुल्यमात्रम्। भारतीयचिकित्साशास्त्रे मनीषिभि र्यैं र्गवेषणया स्वेषां नामानि चिरस्मरणीयानि सम्पादितानि तेषां नामादीनि ग्रन्थेऽस्मिन्नेकत्र लिपिबद्धानि। भवतः संग्रहः शास्त्रानुशीलनञ्च विद्वज्जनगोष्ठीषु सबहुमानं शीर्षस्थानमलंकरिष्यति—इत्यत्र नास्ति कोऽपि संशयः। इति

भवदीय-श्रीचारुचन्द्रविश्वासस्य
(केन्द्रीयव्यवहारमहामन्त्रिणः)

( १४६ )

१९५४ खृष्टाब्दीयडिसेम्बरमासस्य चतुर्थवासरे "देश"-पत्रिकायां वैद्यकवृत्तान्तस्य समालोचनैका प्रकाशिता। तस्या अनुवादोऽधस्तात् प्रदीयते।

वैद्यकवृत्तान्तः—श्रीगुरुपदहालदारेण प्रणीतः। ४७ नं हालदारपाड़ा रोड, कालीघाट, कलिकाता—इत्यतः श्रीभारतीविकाशहालदार, एम्.ए, बि.एल्—इत्यनेन प्रकाशितः।

ऋषिमुनीनां कालादारभ्य अष्टादशशताब्द्याः प्रान्तभागपर्य्यन्तं समुद्भूतानां भारतीयचिकित्साविज्ञानस्य साधकानां गवेषकाणाञ्च नामानि तेषां ग्रन्थादीनाञ्च संक्षिप्तविवरणानि पुस्तकेऽस्मिन् प्रदत्तानि। पुस्तकमिदं ग्रन्थकृतः प्रगाढ़पाण्डित्यस्य तीव्रानुसन्धित्सायाश्च परिचायकम्। आयुर्व्वेदसाधनया सह सांख्यदर्शनस्य तन्त्रशास्त्रस्य च घनिष्ठः सम्बन्धो विद्यते। अत आयुर्व्वेदाचार्य्याणामवदानसम्पर्कीयसमालोचनाप्रसङ्गेन सांख्यतन्त्रयोस्तत्त्वानामपि क्वचित् क्वचिद् ग्रन्थकृता विश्लेषणात्मकव्याख्या संयोजिता। सुश्रुतीयशारीरस्थानमधिकृत्य समालोचना प्रसङ्गेऽस्मिन् समुल्लेख्या। सुश्रुतसूत्रोपरि व्याख्यानमिदं ग्रन्थकृता संस्कृतभाषायां

विरचितम्। पुस्तकस्य चोपसंहारभागे प्रकाशकेन ग्रन्थकारीयवृत्तान्तः प्रदत्तः, तथा च ग्रन्थकृद्विरचितमहाभारतीयोद्योगपर्व्वान्तर्गतसनत्सुजातीयाध्यायभाष्यं व्याकरणदर्शनेतिहासञ्चाधिकृत्य मनीषिणां प्रशस्तिमूलकपत्रादीनि संयोजितानि। अपि च तत्र पशुवलिसमर्थने ग्रन्थकारस्य शास्त्रीयविचारो दुर्गातत्त्वप्रसङ्गीयसमालोचना च समुल्लेखनीयौ। पुस्तकमिदं हिन्दुचिकित्साविज्ञानसम्बन्धीयसमालोचनां गवेषणां च सम्प्रसारयितुं विना मूल्यं प्रदीयते। वैद्यकशास्त्रानुसन्धित्सूनां शास्त्रनिष्ठानां च विदुषां मध्ये पुस्तकमिदं नूनं समादृतं भविष्यति।

( १५० )

सर्व्वशास्त्रतत्त्वज्ञश्रीगुरुपदहालदार महोदयसमीपेषु—

पूर्व्ववङ्गसारस्वतसमाज।
आरमाणिटोला, ढाका।
१८।१।६१

सविनयनिवेदनम्—

श्रद्धास्पदमहोदय! * * * भवत्प्रेरितो वैद्यकवृत्तान्तोऽंशतः पठितो मया। निष्ठासहितनानाशास्त्रपर्य्यालोचनेन अस्माकमपरिज्ञातविविधविषयानत्र निबद्धय भवता प्राकृतजनानां चिरानुभूतोऽभावो दूरीकृत इति कृतज्ञतया सुधीभि र्नित्यं स्मरिष्यते।

भवत्प्रणीत'व्याकरणदर्शनेतिहास'-नामकग्रन्थपाठेनापि भवतोऽसामान्यपाण्डित्यस्य परिचयो विदितः पूर्व्वमेवास्माभिः। सनत्सुजातीयाध्यात्मशास्त्रनामकग्रन्थस्थितकालिकाभासाख्यटीकापाठेन न केवलमनन्यसाधारणं वैदुष्यं भवतः प्रकटितम्, अपि च साधनक्षेत्रे कियती समुन्नतिः समधिगता भवता, सा हि तत्र परिस्फुटं जाता। प्रयतमानेनापि भवता संगोपयितुं सा न शक्या। गृह्णातु भवान् मे सश्रद्धनमस्कारम्।

भवादृशजनस्याविर्भावो वर्त्तमाने जगति सम्भवतीत्येतद् भवल्लिखित-ग्रन्थप्रचारं विना लोकानामविश्वास्यमभविष्यत्। जगज्जनन्याः प्रियपुत्रत्वाद् भवांश्चिरं शान्तिमधिगमिष्यति। किमाधिक्येनेति—

भवदीय-श्रीवलरामस्मृतितीर्थस्य
सम्पादकस्य।

( १५१ )

श्रीहारीतकृष्णदेव एम्-ए. १८इ अग्रहायण, १३६१
८।१, राजा नवकिषण ष्ट्रीट्, कलिकाता-५।

( मूलपत्रम् )

* * * *

भवत्प्रणीतशास्त्राणां दृष्टं मे वैद्यकं खलु।
यदाश्रित्य मयापूर्वं लिखितं पत्रमेव हि॥
आदर्शं दर्शनस्यैकमपश्यं भवतामहम्।
श्रीचन्द्रसरकारस्य ग्रन्थागारे सुरक्षितम्॥

* * * *

स्मृतिचिह्नस्य रक्षायै सततं यतते जनः।
तया गुरुकृतां कृत्यं साधयन्ति च साधवः॥
ग्रन्थद्वयस्य दानं मे भवद्भिः कल्पितं स्वयम्।
तेन मे नन्दितं चित्तं धन्यं मन्ये हि मामितः॥
कायस्थोऽहं तथाप्यत्र भूसुरान्न प्रतिग्रहः।
विद्यादानं गृहीत्वैव युक्तं कर्म्म कृतं भवेत्॥

कालिकाचरणप्रान्ते स्थितं गुरुपदं प्रति ।
निवेदयति हारीतः कृष्णदेवपदाश्रितः ॥

( १५२ )

आशुतोषमहाविद्यालयः ।
एकषष्ट्युत्तरत्रयोदशशततम-
वङ्गाब्दीयस्य सौराग्रहायणस्य
चतुर्विंशो दिवसः ।

( मूलपत्रम् )

महाशय !

भवत्प्रणीतं वैद्यकवृत्तान्तं पठित्वा सुतरामाप्यायितोऽस्मि । अधीताशेषशास्त्रस्य वेदवेदान्ताद्यनेकविद्याविशारदस्याभिरूपवर्य्यस्य भवतो ग्रन्थत्रय्या अन्यतमोऽयं प्रकरणग्रन्थो विविधतथ्यबहुलोऽनेकविधविभागशबलितस्यायुर्व्वेदशास्त्रस्य तत्र तत्र विषयेषु जिज्ञासूनामैतिहासिकानाञ्च प्रकृतानुसन्धाने नूनं परमसहायको भविता । प्रतिपादयति ह्ययं शब्दविद्यायामध्यात्मशास्त्रे च लब्धप्रावीण्यस्य भवत आयुर्व्वेदशास्त्रेऽप्यैतिहासिकविश्लेषणनिपुणामनन्यसामान्यां शेमुषीं श्रमशीलतां विद्यावत्ताञ्च । विलसदिह दर्शनागारोल्लिखितदार्शनिकतत्त्वभास्वरश्लोकनिवहेन समं सारगर्भनिबन्धद्वयं जनयिष्यत्यसंशयं तोषमनल्पं मनीषिणाम् । मन्ये भगवद्विभूतिं दैवप्रेरणाञ्चान्तरेण कदापि न सम्भवत्येतादृशी सुमहती रचना । उपपदरहितस्य कुलोपाधिसहितस्य पितृदत्तनाम्न एव लेखनमत्र सुष्ठु प्रकटयति मणिकाञ्चनयोगमिवातिदुर्ल्लभं विद्वत्त्वविनयसामानाधिकरण्यं भवादृशे परमविदुषि—इति भूतार्थकथनमेतन्न स्तवनम् । इति

श्रीशिवदासवन्द्योपाध्यायस्य ( देवशर्म्मणः )
आशुतोषमहाविद्यालयस्य प्रधानसंस्कृताध्यापकस्य ।

( १५३ )

कविराज-श्रीरमाप्रसादमुखोपाध्याय
( डि. एइच्. एस्. सि ), ए. एम्. डि
आयुर्व्वेदाचार्य्य, कविरत्न ।

विद्यारत्न-मन्दिर ।
३ नं दर्जिपाड़ा बाइलेन,
( वीडन् रो ) कलिकाता ।
३०शे अग्रहायण, १३६१ ।

माननीयपण्डितप्रवर-श्रीयुक्त-गुरुपदहालदारमहोदयसमीपेषु—

महाशय ! मम बन्धुवरेण एम्-ए, डिलिट्-इत्युपाधिमता माननीयाध्यापक-श्रीयुक्तक्षितीशचन्दचट्टोपाध्यायेन प्रदत्तं भवतो वैद्यकवृत्तान्तं प्रीत्युपहारत्वेन प्राप्य परमं प्रीतोऽस्मि ।

एष विपुलकलेवरो ग्रन्थः प्रकटयति भवतो गाम्भीर्य्यं ज्ञानस्य, प्रगाढ़त्वमनुसन्धित्सायाः, प्राचुर्य्यं परिश्रमस्य, कुशाग्रीयत्वं बुद्धेः, प्रीतिं जन्मभूमौ, भक्तिं ब्राह्मणपण्डितेषु, शौण्डत्वञ्च दानकर्म्मणि । एकत्र युगपच्च लक्ष्मीसरस्वतीकार्त्तिकगणेशानां प्रियपात्रत्वादस्माकं सर्व्वेषां भवति च गर्व्वास्पदं खलु भवान् ।

* * * *

गुरुपदमहाडिम्वमुत्ताप भक्तिसम्भवैः ।
श्रद्धापत्त्रपुटच्छाये सन्तापयति यो जनः ॥
तस्य शावकरूपेष्टं काले संजायते स्फुटम् ।
सर्व्वाभीष्टप्रदातृत्वात् सारं गुरुपदं स्मृतम् ॥

इति भवद्गुणमुग्धस्य
कविराज-श्रीरमाप्रसादमुखोपाध्यायस्य ।

( १५४ )

सारस्वतसमाज।
आरमाणिटोला, ढाका।
११।६।६१

अशेषमानास्पदश्रीयुक्तगुरुपदहालदारसरस्वतीदर्शनसागरमहोदयेषु—

सविनयं निवेदयति—

भो विद्यातपस्विन्! साहजिकी भवतः प्रेक्षा भवति मन्दरायमाणा शास्त्राम्बुधिमन्थने। न केवलं तया प्रज्ञानामृतसनाथो जातो भवान्, अपि तु तद्रत्नाकरादगणितामूल्यरत्नानामाहरणे ग्रन्थने वितरणे च भवता सामर्थ्यञ्चार्जितम्। तदस्माकं धन्यवादार्हो भवति खलु भवान्।

सारस्वतसमाजे पूर्व्वप्रेरित'व्याकरणदर्शनेतिहास'-नामकविपुलकायग्रन्थ-पाठेन भवतः प्रगाढ़पाण्डित्यमवगम्य प्रहृष्टा जाता वयम्।

"धर्म्मार्थकाममोक्षाणामुपदेशसमन्वितम्।
पुरावृत्तकथायुक्तमितिहासं प्रचक्षते॥"

इति लक्षणस्य भवति च प्रकृतं लक्ष्यं भवतः पुस्तकम्। तत्र च दर्शन-कुक्षौ व्याकरणं निक्षिप्य अभिनवतथ्याविष्कारे कृतकार्य्यता समधिगता भवता। भवति प्रयोक्तव्यमिदमपि—

अगाधे विमले शुद्धे शास्त्रज्ञानार्णवे शुभे।
निमज्जति नरो यस्तु जननं तस्य सार्थकम्॥

माता सपुत्रा जनकश्च पुत्री
कुलं पवित्रं जनिभूः सुधन्या।
त्वयातिविज्ञेन धरा सुपुण्या
याचे शुभं ते द्विजजः समस्तम्॥ इति।

अपि च पश्चात्प्रेषितो "वैद्यकवृत्तान्तः" समालोचनाय मत्सकाशे समुपस्थापितो वर्त्तते। तत्पठनावसरे भवतो भूयोदर्शनेन गवेषणासामर्थ्येन च समाकृष्टः सन् भवतेऽभिनन्दनं ज्ञापयितुमिच्छामि।

*     *     *     *

इति भवदीयश्रीजीवनकृष्णतर्कतीर्थः।

( १५५ )

( मूलपत्रम् )

परमश्रद्धेयाशेषशास्त्रदर्शि—

श्रीयुक्तगुरुपदहालदारसरस्वतीदर्शनसागर-महोदयाय—

## "अभिनन्दनम्"

कालीघट्टेऽघटनघटने सिद्धपीठे भवद्भि
र्भक्त्या शुद्धै स्त्रिविधभजनै र्भज्यते भावगम्या।
नित्या शक्ति र्हृदि भगवती सच्चिदानन्दरूपा
श्रीश्रीकाली गुरुपदमिता सेवया सेवकेष्टा ॥ १ ॥

तस्मान्मिथ्यामतितिमिरहा तत्त्वबोधांशुजालै
ष्टीकाव्याख्याप्रमुखवचनै र्वैद्यतत्त्वप्रकाशा।
विद्या लब्धा कृतिकुलवर ! प्राक्तनीवातिहृद्या
युक्तञ्चैतद् भवति महति संश्रिते सर्व्वदायाः ॥ २ ॥

शास्त्रं सनत्सुजातीयं विशद्य सङ्कलय्य च।
व्याकरोतिहासञ्च वैद्यकवृत्तकं भवान् ॥ ३ ॥

महतीं ख्यातिमासाद्य गुणिगणाग्रयतां गतः।
विज्ञाने विविधे रत्नाकर इव विराजते ॥ ४ ॥

दीर्घं जीव्यात् स्वजनसहितो दुःखशोकै र्विहीनो
नित्यं भूयात् सुखचययुतो लोककल्याणहेतुः ।
कीर्त्ति र्ब्बह्वी रुचिररुचिरा शास्त्रचर्चाप्रसूता
देशे देशे प्रसरतु च ते कौमुदी वा समन्तात् ॥ ५ ॥ इति

१३६१ वङ्गाब्दीय-
सौरपौषस्यैकादशदिवसे ।
ढाकानगरीतः ।

श्रीजीवनकृष्णतर्कतीर्थस्य
पूर्व्ववङ्गसारस्वतसमाजसभापतेः।

( १५६ )

वैदिक-आयुर्विज्ञान-मन्दिर
अध्यक्ष कविराज श्रीहरिगोपालचट्टोपाध्याय, एम्-ए (Calcutta),
एम्.डि (Homœo), आयुर्व्वेदवाचस्पति, विद्यारत्न,
ज्योतिषार्णव, ज्योतिर्भूषण, तन्त्राचार्य्य (Lassa).

३३नं विद्यासागर ष्ट्रीट् ।
पोष्ट आमहार्ष्ट, कलिकाता-६
२४शे पौष, १३६१ ।

श्रीभारतीविकाशहालदार एम्.ए, बि.एल्-
महोदयसमीपेषु—

सविनयनिवेदनम्—

युगपल्लक्ष्मीसरस्वत्यो र्वरपुत्रेण भवतः पितृदेवेन पण्डितप्रवरेण श्रीगुरुपदहालदारमहोदयेन लिखितं व्याकरणदर्शनेतिहासवैद्यकवृत्तान्त-नामक-सुबृहद्ग्रन्थद्वयं भवत्प्रदत्तप्रीत्युपहारत्वेन प्राप्य परमं परितोषमधिगच्छामि ।

सप्तभि र्दिवसैः सर्व्वकर्म्माणि परित्यज्य ग्रन्थद्वयमाद्योपान्तं पठित्वा

पूजनीयलेखकमहोदयस्यानन्यसामान्यं संग्रहमपरिसीमं धैर्य्यमभिनवधाराश्रित-चिन्ताशक्तेः प्रेरणाञ्च समुपलभ्य विस्मयेनाभिभूतः सञ्जातोऽहम्।

केवलं महामुनिः पतञ्जलिरेवंविधकर्म्मणि व्रती भूत्वा समग्रभारतवर्षस्य प्रणामार्हत्वं जगाम। तदुक्तम्—

"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥" इति।

* * * *

इति वशंवदस्य श्रीहरिगोपालचट्टोपाध्यायस्य।

( १५७ )

परमपूज्यपाद-पण्डितप्रवर-
* * * धर्म्माचार्य्य-
कालीघट्टतीर्थगुरुश्रीमद्गुरुपदहालदार-
समीपेषु निवेदनम्—

९।१, कुमारटुलि ष्ट्रीट।
पोः हाटखोला। कलिकाता-५।
७इ माघ, १३६१।

पूजनीयाचार्य्यदेव! भवतः पुत्रेभ्यो वैद्यकवृत्तान्तनामक-सुबृहद्-ग्रन्थोपहारं प्राप्यात्मानं कृतार्थमाकलयामि। समग्रवैद्यसम्प्रदायं प्रति यो महानुपकारः कृतः स वाक्यै वर्णयितुं न शक्यः। * * *

इति विनीतनिवेदकस्य
कविकेशरि-कविराज-श्रीज्योतिप्रसन्नसेनशर्म्मणः।

( १५८ )

Chairman,
Bihar Public Service
Commission.

Patna.
January 21, 1955.

सविनयं निवेदयति—

महोदय! वैद्यकवृत्तान्तस्य खण्डमेकं प्रहित्य मह्यं यत् सौजन्यं प्रदर्शितं तदर्थं कृतज्ञतां ज्ञापयितुमिच्छामि। ग्रन्थोऽयं स्तम्भः परिश्रमस्य

निधिश्च तथ्यानां खलु। गवेषणासहायक एष भवितेति विचिन्त्य सुखायते मे मनः।

इति

भवदीयो "झा-इत्युपाधिकः श्रीयुदमरनाथः।

( १५६ )

१६५५-खृष्टाब्दीयजानुयारीमासस्य त्रिंशत्तमवासरे "आनन्दबाजार"-पत्रिकायां वैद्यकवृत्तान्तस्य समालोचनैका प्रकाशिता। तस्या अनुवादो-ऽधस्तात् प्रदीयते।

वैद्यकवृत्तान्तः। श्रीगुरुपदहालदारप्रणीतः। ४७ नं हालदारपाड़ा रोड, कालीघाट, कलिकाता—इत्यतः श्रीभारतीविकाशहालदार एम्.ए, बि.एल्—इत्यनेन प्रकाशितः।

प्राचीनभारतस्य साम्यसंस्कृत्यो र्ज्ञानविज्ञानयोः शिल्पदर्शनयो र्यथार्थ-मितिहाससंकलनं नितरां दुरूहमेव। शतक-परिमापेन तत्स्मरणातीत-कालस्य हीयत्ताकरणं सम्भवति वा न वेति सन्दिह्यते। भारतीयसूरिभि र्मानवानां ज्ञानभाण्डारे येऽजस्ररत्नसमूहाः सञ्चिताः, कालस्य दुरतिक्रम्य-प्रभावेण लोपं नाशं वा गतेष्वपि तेषु येऽंशा अवशिष्यन्ते ते खलु विश्व-स्येतिहासेऽतुलत्वेन विराजन्ते। तेषामवशिष्टरत्नानां मध्यमुकुटमणिरेवायुर्व्वेदः। अनादिकालादारभ्य ह्युपवेदत्वेन पूजितो भवत्येष आयुर्व्वेदः। वस्तुतस्तु भारतीयप्रज्ञाप्रतिभयोरत्युज्ज्वलमवदानमेष खलु। परं तु भारतभूमौ ह्यद्यतने काले शास्त्रमिदमवज्ञातमवहेलितञ्च वर्त्तते। आलोच्यग्रन्थेऽस्मिन् वैद्यकवृत्तान्ते श्रद्धेयग्रन्थकारेणायुर्व्वेदस्य विस्मृताध्यायस्य पुनरुद्धारं विधातुं वैद्यकग्रन्थानां वैद्याचार्य्याणाञ्च यत् संक्षिप्तविवरणं सुष्ठु प्रदत्तं तद्धि ग्रन्थकृतः प्रगाढ़पाण्डित्यस्य गभीरगवेषणायाश्च परिचायकमेव। न हि चिकित्सको ग्रन्थकारः, परं तु वैद्यकवृत्तान्तप्रणयने वेदादिविभिन्न-

शास्त्रेभ्यस्तथ्यसंकलनपूर्व्वकं ग्रन्थकृताऽनन्यसाधारणज्ञानस्य निःस्वार्थायुर्व्वेद-निष्ठाया असामान्याध्यवसायस्य च यः परिचयः प्रदत्तः स यथार्थतो विस्मयकर एव । विद्वद्गोष्ठीषु पुस्तकमिदं योग्यसमादरं लप्स्यत इत्याशंस-महे । आयुर्व्वेदशास्त्रस्य ( Hindu Medical Science ) गवेषणा हि ग्रन्थकृतः प्रधानं लक्ष्यं, तदेवोररीकृत्य विरचितो ग्रन्थोऽयम् । स्वव्ययेन मुद्राप्यायुर्व्वेदप्रचाराय सुधीभ्यो विना मूल्यं प्रदीयते ग्रन्थोऽयम् । ग्रन्थकृत एष साधुः संकल्पः सार्थको भवतु ।

( १६० )

श्यामादास-विद्या-शास्त्र-पीठ-परिषद् ।
294-3-1, Upper Circular Road, Calcutta.

४-११-६१

सवहुमाननिवेदनम्—

श्रदेयमहोदय ! भवत्प्रेरितवैद्यकवृत्तान्तनामकं ग्रन्थं कृतज्ञतापूर्व्वकं गृह्णामि । भवतोऽनन्यसाधारणपरिश्रम उद्योगश्चायुर्व्वेदप्रचारविषये सविशेषं कल्याणकरौ नूनम् । पीठपरिषदश्छात्रा अध्यापकाश्च भवद्ग्रन्थद्वारा प्रभूतमुपकृता भविष्यन्तीत्यहं मन्ये ।

इति विनीत-निवेदकस्य
श्रीविजयकालीभट्टाचार्य्यस्य
श्यामादासवैद्यशास्त्रपीठपरिषदाऽध्यक्षस्य ।

( १६१ )

१३६१ वङ्गाब्दस्य षड्विंशतितमे-दिवसे 'आर्य्य'-पत्रिकायां वैद्यक-वृत्तान्तस्य समालोचनाया अनुवादः प्रदीयते ।

"आयुर्व्वेदविषये श्रीगुरुपदहालदारेण गवेषणामूलकं पुस्तकमेकं रचितम् । तस्य सनत्सुजातीय-व्याकरणदर्शनेतिहासेतिग्रन्थद्वयं कौस्तुभ-मणिरेव मनीषायाः ।"

( १६२ )

Dr. M.C. Chakladar L.A.M.S
Bhisagratna, Vidyabhusan. Dacca Vedic Ausadhalaya.
Electric Corporation Road.
Berhampur ( Ganjam ).
13.3.55

परमपूजनीय-

श्रीयुक्तगुरुपदहालदारमहाशय-श्रीश्रीचरणेषु

सविनयं निवेदयति—

प्रार्थिने मे वैद्यकवृत्तान्तः कृपया प्रेषितो भवता। पुस्तकं प्राप्य कियत् सुखमनुभूतं तन्मया वचनानामविषयत्वात् केवलं भवते प्रणामशतै र्व्यक्तीकर्त्तुं शक्यते। वैद्यकवृत्तान्ते प्रागैतिहासिकयुगादारभ्य वर्त्तमान-कालपर्य्यन्तं मुनीनामायुर्व्वेदाचार्य्याणाञ्चैतिहासिकवृत्तान्ताः सविस्तर-मखण्डनीययुक्तिप्रमाणै र्यथा भवता वर्णिता इतः पूर्व्वं न तथा कुत्रचिद् ग्रन्थे दृष्टा मया। यावदेव पुस्तकमिदं पठ्यते तावदेव समुदेति मनसि मे यदसीमशक्तिशालिनामायुर्व्वेदस्य पूर्व्वाचार्य्याणामृषीणामन्यतमः खलु भवानेव। रामायणमहाभारतवद् भवतो वैद्यकवृत्तान्तोऽपि वैद्यकानां नित्यपाठ्यधर्म्मग्रन्थत्वेन पूजितो भविष्यति। भवांश्च तेषां चिरस्मरणीयो भविता।

निःसहायवैद्यकानां परमसुहृदं शास्त्रसदाचारसंरक्षकं वर्त्तमानयुगस्य श्रेष्ठमनीषिणां दातारं भवन्तं भूयो भूयो नमस्करोमि।

इति प्रणतः

श्रीमणीन्द्रचन्द्रदेवशर्म्मा ( चाक्लादारः )

( १६३ )

शिवकालीचतुष्पाठी।
वक्सीबाजार, मेदिनीपुर।

गुणिगणाग्रगण्य······श्रद्धास्पद- ······ १३।३।५५
श्रीयुक्तगुरुपदहालदारमहोदयसमीपेषु—

* * * सविनयनिवेदनम्—

महात्मन्! * * * वैद्यकवृत्तान्ते समाचरिताः समग्रविषया आमूलं परिदृष्टा मया। * * * श्रीश्रीजगद्गुरु-१००८ शंकराचार्य्यमहात्मनः शुभागमनमुपलक्ष्य लिखितं शास्त्रीयपशुबलिसमर्थनं भवतो दशभुजाप्रबन्धञ्च पठित्वा विविधमज्ञानतमो मे विनष्टं जातम्। * * * * मादृशे क्षुद्रबुद्धौ जने पुस्तकमिदं नृपतिसप्तकस्य महामूल्य-माणिक्यधनमिव ज्ञानरत्नमेवेति मन्ये। * * *। इति

विनीतस्य श्रीयुद् अमूल्यरतनदेवशर्म्मणः
काव्यव्याकरणतीर्थस्य सांख्यवेदान्तरत्नस्यायुर्व्वेदशास्त्रिणः।

( १६४ )

कविराज-श्रीकालिदासचट्टोपाध्याय-वैद्यशास्त्री। Sri Baidyanath-Ayurveda-Bhavan.
370, Upper Chitpur Road,
Calcutta-6. 18-3-55.

सविनयं निवेदयति—

मान्यवरमहोदय! भवत्प्रेरितं वैद्यकवृत्तान्तं प्राप्य सविशेषमानन्दितोऽस्मि। पुस्तकमिदं भारतीयचिकित्सापद्धतिविषये गवेषकाणाम् आयुर्व्वेदस्य

च भविष्यदितिहासलेखकानां प्रमाणग्रन्थत्वेन समुपयोगि भविता। आयुर्व्वेदस्य रक्षायै ग्रन्थमिदं प्रणीय भवान् समग्रायुर्व्वेदसेवकानां धन्यवादार्हत्वमधिगच्छति नूनम् ।

भवदीयः श्रीकालिदासचट्टोपाध्यायः।

( १६५ )

H. S. K. College.
Dibrugarh, Assam.
21. 3. 55

( मूलपत्रम् )

कालीघट्टवास्तव्यहालदारवंशभूषण-श्रीयुतगुरुपदहालदारमहोदयेभ्यः
सश्रद्धनिवेदनम्—

धीमन्! वैद्यकवृत्तकं क्षुरधिया निवद्धतत्त्वं पठन्
साश्चर्य्यं कुतुकात् स्मरंश्च निखिलां भैषज्यनिष्णाततताम् ।
दाक्षिण्यं विमृशंश्च विज्ञ नितरां धन्योऽस्मि सौभाग्यवान्
धन्या भारतभूश्च कोविदसभा यत्र त्वया भूषिता ॥ १ ॥
पूर्व्वं व्याकरणेतिहासविषये ग्रन्थं लिखित्वाऽद्भुतं
प्राप्ता कीर्त्तिरतीव चन्द्रधवला पौरस्त्यपाश्चात्त्ययोः ।
कर्णाकर्णिकया श्रुतं न पठितं कौतूहलं जृम्भते
ग्रन्थप्रेषणकर्म्मणा द्विजमणे ! वाञ्छा सुनिष्पाद्यताम् ॥ २ ॥

इति वेदशास्त्रीत्युपपदधारिणो डिब्रुगड़-
महाविद्यालयसंस्कृताध्यापकस्य विश्वासोपनामक-
श्रीयुताशुतोषदेवशर्म्मणः ।

( १६६ )

Kaviraj Siddheswar Sen, Daltonganj.
L.A.M.S., M.A.S.F. 24. 3. 55.
Vaidyasiromani, Bhishagratna.

सविनयनिवेदनम्—

माननीय महाशय ! भवदुपहृतं वैद्यकवृत्तान्ताख्यग्रन्थं प्राप्य परमानन्दित उपकृतश्च भवामि। ग्रन्थेऽस्मिन् भवतः सुचिन्तितगवेषणाः प्रगाढ़पाण्डित्यञ्च परिलक्ष्य मुग्धोऽस्मि।

भगवच्चरणे भवतो दीर्घायुः कामये। इति

भवदीयस्य श्रीसिद्धेश्वरसेनस्य।

( १६७ )

Principal. Y, D. College,
Lakhimpur—Kheri. U.P.
March 8, 1955.

सविनयनिवेदनम्—

प्रियमहोदय !

वैद्यकवृत्तान्तमुपायनत्वेन प्राप्य त्वयि कृतज्ञत्वं नितरामनुभवामि। पुस्तकस्य प्रतिपत्रं भवतो गभीरपाण्डित्यस्य परिश्रमसाध्यगवेषणायाश्च सुस्पष्टलक्षणैः समन्वितं खलु। * * *

इति भवदीयस्य

श्रीजयदेवसिंहस्य ( अध्यक्षस्य )

( १६८ )

श्रीसनत्कुमाररायचौधुरी, एम्.ए,बि.एल्-
एड्भोकेट ।

9, Williams Lane.
Calcutta—9.
१ला चैत्र, १३६१।

पूजनीय-श्रीयुक्तगुरुपदहालदारदर्शनसागर-
श्रीचरणेषु—

सविनयनिवेदनम्—

* * * * *। प्राकृतजनेषु वैद्यकवृत्तान्तस्य चित्तापहारित्वेऽसत्यप्यनुसन्धित्सूनां विशेषतो भारतीयकृष्टिसभ्यताविषयक-ज्ञानलिप्सूनां पुस्तकमिदं बहुमूल्यत्वेन समादरणीयं भविता। विगलितेऽपि वयसि भग्नस्वास्थ्येन भवता यत् स्वल्पपरिज्ञातविषयेऽस्मिन् मनः सन्निविष्टं तद्धि मातृभूमौ भवतो गभीरश्रद्धाया आन्तरानुरागस्य लक्षणं प्रकटयति। * *

इति निवेदकस्य
श्रीसनत्कुमाररायचतुर्धुरीणस्य।

( १६९ )

१३६१ वङ्गाब्दीयसौरफाल्गुने 'आयुर्व्वेदपत्रिका'यां प्रकाशिता वैद्यक-वृत्तान्तस्य समालोचना।

वैद्यकवृत्तान्तः। श्रीगुरुपदहालदारप्रणीतः। श्रीभारतीविकाशहालदार-एम्.ए, बि.एल्—इत्यनेन ४७नं हालदारपाड़ा रोड, कालीघाट, कलिकाता -२६—इत्यतः प्रकाशितः।

आयुर्व्वेदे प्रामाणिकेतिहासस्यात्यन्ताभावो विद्यते। विपुलमेनमायुर्व्वेद-शास्त्रमधिकृत्य कियन्तो ग्रन्था रचितास्तद्वर्णयितुं कः शक्नोति। अभावमिमं

दूरीकर्त्तुमायुर्व्वेदग्रन्थकर्त्तॄणां संक्षिप्तविवरणानि ग्रन्थेऽस्मिन् ग्रन्थकृता सन्निविष्टानि। अतो हि ग्रन्थोऽयमायुर्व्वेदग्रन्थादीनां संक्षिप्तविवरण-समन्वितनामकोष इत्यभिधानं युक्तमेव प्रतिभाति। आयुर्व्वेदग्रन्थकाराणां सतत्त्वपरिचयप्रदानं दुष्करं खलु। बहुत्र ह्यनुमानत आविर्भावकाला निर्णेया भवन्ति। अतः प्राचीनग्रन्थकृतां संग्रहकाराणाञ्चाविर्भावकालविषये वैमत्यं स्वाभाविकमेव। न हि चिकित्सकः श्रीहालदारमहोदयः, परं त्वायुर्व्वेदग्रन्थकारपरिचयसंग्रहव्यापारे तस्य सनिष्ठः प्रयासो नूनं विस्मय-मुत्पादयत्यस्माकम्। अस्य ग्रन्थस्य पठनं हि ग्रन्थकृतो वैदुष्यगाम्भीर्य्यं प्रकटयति। आयुर्व्वेदाचार्य्याणां बहवो ग्रन्था नाममात्रेऽधुना पर्य्य-वसिताः। टीकाकृतां समुद्धृतवचनेभ्यो बहुलग्रन्थकाराणां केवलं नामा-न्युपलभ्यन्ते। 'वैद्यकवृत्तान्त'त स्तत्तद्ग्रन्थकाराणां परिचयान् प्राप्य धन्या भवामः खलु वयम्।

ग्रन्थकृतः कनिष्ठः पुत्र आलोच्यमानस्य ग्रन्थस्य प्रकाशकः। प्रकाशक-प्रदत्ततत्पितृदेवपरिचयादवगम्यते यच्छ्रीयुक्तहालदारमहोदयः कालीघट्ट-महापीठप्रतिष्ठातृवंशधर इति। ग्रन्थकारः १८७६ खृष्टाब्दस्य १८ जुलाइ वासरेऽजायत। बि.एल्-परीक्षायां समुत्तीर्णोऽप्ययं व्यवहारजीवित्वं नागृह्णात्। संस्कृतशास्त्रेषु सविशेषव्युत्पन्नेनानेन बहवो ग्रन्था विरचिताः। तेषु महाभारतान्तर्गतसनत्सुजातीयपर्व्वणः कालिकानाम्नी टीका व्याकरण-दर्शनेतिहासश्चेति ग्रन्थद्वयं पण्डितगोष्ठीष्वतिमात्रं समादरं प्राप्तम्। कोविदा हालदारमहोदयं सरस्वतीदर्शनसागरवेदान्तभूषणप्रभृतिविविधो-पाधिभि र्भूषितवन्तः।

वैद्यकवृत्तान्तप्रकाशनेन ग्रन्थकृताऽऽयुर्व्वेदस्य चिरमनुभूतोऽभाव एको दूरीकृतः। अतो हि तस्मै वयमसंख्यधन्यवादान् ज्ञापयामः। श्रीयुक्त-हालदारमहोदयेन वृद्धत्रयीनामकं चरक-सुश्रुत-वाग्भटानां विस्तृतमितिवृत्त-

मेकं संस्कृतभाषायां मुद्राप्यत इति ज्ञात्वा हर्षातिशयमनुभूयतेऽस्माभिः। ग्रन्थकारो निरामयः सुदीर्घायुः सन्नायुर्व्वेदस्य सम्पदं वर्धयेदित्यस्माभिर्भगवच्चरणे प्रार्थ्यते। ५५० पृष्ठसमन्वितः सुबृहद्ग्रन्थोऽयं ग्रन्थकारेणायुर्व्वेदसेवकेभ्यो विना मूल्यं प्रदीयते। वर्त्तमानसमयेऽदृष्टपूर्व्वः खलु दृष्टान्तोऽयम्।

( १७० )

कविराज श्रीअनन्तकृष्ण-आयुर्व्वेदशास्त्री, एम्, ए, बि — अष्टयायुर्निकेतन। १७१, पञ्चाननतला रोड। हावड़ा। २८।१२।१३६१।

श्रीचरणे निवेदनम्—

भवत्प्रेरितं वैद्यकवृत्तान्तं यथाकालं प्राप्तम्। अपठित्वैव ग्रन्थं प्राप्त्युदन्तं प्रेरयितुं नाकाङ्क्षति मनो मे। एतद्धि विलम्बकारणम्।

देशेऽस्माकं वर्त्तमानशिक्षापद्धतिं परिलक्षयतो नूनं दूयते भवतो हृदयं महत्। युगधर्म्मं निराकर्त्तुं गृहीतलेखनीको भवानित्यानन्दवार्त्ता खलु। प्राच्यपाश्चात्त्यमनीषिणां सुचिन्तितमतानां प्रतिपत्रं समुद्धृतत्वात् पुस्तकस्य गौरवमधिकतरं समृद्धं जातम्। भवतो बहुश्रुतत्वं चिन्ताशीलत्वञ्च प्रकटयति पुस्तकमिदम्। कालोपयोगित्वञ्चास्य विस्पष्टम्। साध्यवसायः परिश्रमो भवतोऽवनमयति सप्रश्रयं मस्तकं मे। * * जगज्जनन्या जराहीनं दीर्घायु र्भवतः प्रार्थये। इति

आशीर्व्वादाकाङ्क्षिणः
श्रीमदनन्तकृष्णदेवशर्म्मणः।

Phatik Lal Das B.A., C.A.P., Chandernagore.
Late Director, Kanailal Bidyamandir. 13-4-55
( College Dupleix )

श्रद्धास्पदश्रीगुरुपदहालदारमहाशयेभ्यो निवेदयति —

महोदय ! * * * व्याकरणदर्शनेतिहासपाठानन्तरं भवतोऽसामान्यवैदुष्यं परिलक्षयतो मे यो विस्मयोऽभूत् स हि वैद्यकवृत्तान्तपाठेन प्रबलतरः संजायते। भवतो गवेषणासामर्थ्यं लोकोत्तरं खलु। वैद्यशास्त्रे मे सम्यग्ज्ञानाभावात् पुस्तकस्थितविषयवस्तुषु मतामतप्रकाशने सामर्थ्याभावेऽपि मे विविधविषयेषु गवेषणाया अद्भुतानुसन्धित्सायाश्च परिचयमुपलभ्य विस्मितो हतवाक् च सन् भवच्चरणे शिरो मेऽवनमयामि।

भारतवर्षे वैद्यकशास्त्रविषय इयन्तो ग्रन्था विलसन्ति स्म तद्धि नेतः पूर्वं कदापि कल्पितं मया। ग्रन्थकर्त्तॄणां कालनिर्णायकपुरुषविशेषाणाञ्च या परिगणना भवता प्रदत्ता सा ह्यस्माकं गवेषणाकर्म्मणि सहायिका भविष्यति। परिगणनायामस्यां भवतः श्रमस्य पाण्डित्यस्य च गाम्भीर्य्यं नूनं विस्मयकरम्। जार्म्माणदेशीयपण्डितानां यादृशी ख्यातिः श्रूयते, देशे नोऽद्य भवति सा सममेव प्रयोज्या। इति

श्रीफटिकलाल दासः।

( १७२ )

श्रीश्रीदुर्गा विजयते ।

"भट्टाचार्य्यभवन"
माकड़दह, हावड़ा ।
७इ वैशाख, १३६२

माननीय श्रीगुरुपदहालदारमहोदयसमीपेषु

सश्रद्धनिवेदनम्—

महाभाग ! भवत्प्रेरितो वैद्यकवृत्तान्तः * * * प्राप्तो मया। कतिपयदिवसैः पुस्तकमिदमाद्योपान्तं पठितम् । ग्रन्थागारे पुस्तकमिदं येषां दृष्टिविषयोऽभूत्, ते हि सर्व्वे पुस्तकमधिगन्तुमैषिषुः । भवता यानि संगृहीतदुर्लभविवरणानि प्रकाशितानि, तानि न केवलं दुष्प्राप्यपुरातन-हस्तलिखितपुस्तकेभ्यो गृहीतानि परं त्वार्षदृष्टिसाहचर्य्येणाज्ञानतमसावृत-युगानामितिवृत्तानि च समाहृतानि । जनप्रवादादयोऽधुना अप्रचलिता जायन्ते, तानपि सयत्नं संगृह्य तेषां संरक्षणव्यवस्था विहिता । भवतोऽन्तर्लोकमधितिष्ठति देवी भारतीत्युपलभ्य सश्रद्धं भवन्तं प्रणमामि । इति

निवेदकस्य श्रीश्रीधरचन्द्रदेवशर्म्मणः
काव्यपाणिनिस्मृतितीर्थोपाधिकस्य ।

( १७३ )

बेलतला पार्क ।
पोः वेलुरघाट ।
८।१।६२

परमभक्तिभाजनेषु

सविनयनिवेदनम्—

* * * * वैद्यकवृत्तान्तस्य त्वरितपठनेनाप्येतदेव मया समधिगम्यते यच्छ्रीश्रीजगज्जनन्याः प्रसादतः कुशाग्रीयबुद्धया प्राचीनशास्त्र-मन्थनपूर्व्वकं यद् भवता संगृहीतं तस्य तात्पर्य्यमतिविस्मयकरमेवेति ।

इदानीन्तनकाले न भवत्ययुक्तं भवतो समाख्यानं द्वितीयवेदव्यासेति-मानपदेन। * * * इति

प्रणतस्य कविराज-श्रीव्रजराजमहन्तस्य
( आयुर्व्वेदशास्त्रिणः )।

( १७४ )

ॐ

माननीयश्रीलश्रीयुक्तगुरुपदहालदारमहोदयेषु—

भोः कालिकासेवाभृत्कुलोज्ज्वल, भूदेवगौरव, महात्मन्! भवतः स्नेहादुपहृतं वैद्यकवृत्तान्तनामधेयं ग्रन्थं संप्राप्य चाधीत्य च परमानन्दमश्नुवे, तत्र च शास्त्रीयवलिसमर्थनं 'श्रीश्रीदशभुजादुर्गा' इति प्रवन्धद्वयमपि परमं रमणीयम्। 'व्याकरणदर्शनेतिहासो' 'वैद्यकवृत्तान्त'श्चेति भवद्भिरचितं ग्रन्थद्वयं समवलोक्य हृदि मे पौराणिकी वार्त्ता काचिज्जागर्त्ति।

पुरा किल कृतयुगे देवासुराः सर्व्वे मिलित्वा मन्दरशैलं मन्थनदण्डं परिकल्प्य वासुकिं मन्थनरज्जुत्वेन संगृह्य समुद्रं ममन्थुः। तथैवाधुना भवता ह्येकेन ज्ञानदण्डं समाश्रित्य कर्म्मरज्जुसहायेन शास्त्राम्बुधि र्मथितः। किं वहुना तदमूल्यरत्नमया ग्रन्थाश्च मूल्यं विनैव विद्वत्सु वितीर्यन्ते। भवत्येव हि शोभते कर्म्मेदम्। किं वाधिकं ब्रूयाम्, प्रार्थये तु केवलम्—

निवसतु तव गेहे चञ्चला पङ्कजाक्षी
विहरतु तव कण्ठे भारती मन्दहासा।
भ्रमतु च तव कीर्त्तिः कुन्दपुष्पेन्दुशुभ्रा
विचरतु तव चित्तं कालिकापादपद्मे॥

इति निवेदनं

१३६२ वङ्गाब्दीय-सौरज्यैष्ठस्य नवम-वासरे।

भवदीयस्य कालीघट्टस्थित-श्रीश्रीकालिकादेवायतन-पुरोहितस्य चिरं कल्याणनिरतस्य ज्योतिर्विनोदोपाधिकस्य श्रीदेवीपददेवशर्म्मणः।

( १७५ )

कलिकातासंस्कृतमहाविद्यालयस्य भूतपूर्व्वोऽध्यापको विद्वद्वर्य्यः बहुशास्त्राभ्यासरतः श्रीतारानाथन्यायतर्कतीर्थमहोदयो वैद्यकवृत्तान्तमधीत्य १६५५ खृष्टाब्दस्य २३ जुनदिवसे ग्रन्थकृते पत्रमेकं प्रेषितवान्। तदनुवादः—

अशेषसम्मानास्पदेषु

सश्रद्धनमस्कारपूर्व्वकविज्ञापनम्—

भवत्प्रणीतं वैद्यकवृत्तान्तमधीत्य सातिशयमानन्दितोऽस्मि। ऐतिहासिकदृष्ट्या कतिषुचिद् विषयेषु समालोचनाद्वारा यादृशसमाधानं समुपनीतो भवान् तद्धि सत्यमतिहृद्यत्वेन प्रतिभाति। वयसि विनिर्गतेऽपि यद् भवत एतादृशः परिश्रमः शास्त्रनिष्ठा तत्त्वानुसन्धित्सा च समालोक्यन्ते तद्धि श्रीश्रीजगज्जनन्या सुपुत्रे भवति वात्सल्यफलमेव। किमधिकम् * * * *। इति

भवदीयगुणमुग्धस्य

श्रीतारानाथन्यायतर्कतीर्थदेवशर्म्मणः।

पोः खड़दह, ग्राम—रहड़ा, नलिनीकलोनी, २४ परगणा।

( १७६ )

श्रीश्रीदुर्गा शरणम्।

विदितमेवास्ति विद्वद्वरेण्यानां विद्यारण्यविचारिणां यत् कालीघट्टनिवासी अशेषशास्त्रतत्त्वज्ञः प्रत्नरहस्यविद् वेदविदामग्रणीः श्रीयुक्तगुरुपदहालदारशर्म्मा महोदयो वेदान्तवेद्यानुभूतिमाप्तो ब्रह्मैव सम्पन्न इति। 'ब्रह्मविद् ब्रह्मैव भवति', 'तत्त्वमसि श्वेतकेतो'—इत्यादिमहावाक्यानां यथार्थानुभवसाक्षिकत्वात्। ते खलु महात्मानो न केवलं स्वात्मोत्कर्षाय योगमास्थाय प्रयतन्ते, मैत्रीकरुणामुदितोपेक्षारूपैश्चित्तप्रसादकैर्लब्धचित्तोत्-

कर्षाः सन्तः करतलामलकवद् अखिलतत्त्वं प्रत्यक्षीकृत्य जगत्कल्याणाया-ऽपि दृढ़व्रता व्याकरणादिशास्त्रतत्त्वं स्वानुभूतिफलं प्रकाश्य मूढ़ानाम-ज्ञानान्धकारनिरासं तत्त्वबुभुत्सूनाञ्च मोदं विदधति। इतः पूर्व्वमेवा-स्माभिस्तैः प्रकाशितसनत्सुजातीयपर्व्वव्याख्यानं सम्यगधिगतम्। मोक्षशास्त्रे महानुभवस्यास्यैतादृशी व्युत्पत्तिरार्षविज्ञानं मोक्षपथसञ्चारञ्च विना कथमपि न सम्भवेदित्युदियाय चेतसि नस्तन्नभवति निश्चयः। ततश्च व्याकरणजन्मरहस्यं नाम ग्रन्थविशेषोऽस्माकं व्याकरणेषु व्युत्पत्तिविशेष-माधित। सम्प्रति च प्रकाशितो वैद्यकवृत्तान्तनामा ह्य कोऽपूर्व्वो ग्रन्थो-ऽस्माभिः प्राप्तः—'यं लब्ध्वा नाधिकं लाभं वयं मन्यामहे ततः'। अत्र च प्रत्नतत्त्वानुसन्धित्सुभि बुधैराकरोऽभिनवो लब्धः। येन प्राक्तनाना-मिदानीन्तनानाञ्च प्रख्यातगुणनाम्नामैतिह्यमाविष्कृतमास्ते। तेन महानुप-कारो बुधसमाजस्य समजनि सङ्क्षेपतो नवं चक्षुरुदमेषि—इत्यत्र नास्ति विप्रतिपत्तिलेशोऽपि। भगवच्चरणकमलेषु सर्व्वदाऽस्य महाज्ञानिनो महा-योगिनो भक्तप्रवरस्य पुरुषायुषं स्थिरां शान्तिञ्च प्रार्थयामहे। इत्यल-मनल्पजल्पितेन।

निवेदकः श्रीनृत्यगोपालतर्कस्मृतिपुराण-
काव्यव्याकरणतीर्थः।

१३६२ वङ्गाब्दीय-सौराषाढ़स्य
द्वाविंशदिवसः।

( १७६ )

"रायसाहेब"-इत्युपाधिकः श्रीकालिदासवन्द्योपाध्यायो 'व्याकरण-दर्शनेतिहास-वैद्यकवृत्तान्त'-समाख्यग्रन्थद्वयं प्राप्य १९५५ खृष्टाब्दस्य ८ जुलाइदिवसे पत्रमिदं ग्रन्थकृते प्रेरितवान्। तदनुवादो यथा—

From :—Rai Saheb Kalidas Banerjee.
Retd. Additional Deputy Commissioner,
now special Magistrate.

Tikekar Road.
Dhantole, Nagpur.
8.7.55.

श्रद्धेयहालदारमहोदय !

भवता सादरं प्रेरितस्य "व्याकरणदर्शनेतिहास-वैद्यकवृत्तान्त"-नामक-ग्रन्थद्वयस्य प्राप्तिस्वीकारः सानन्दं मया क्रियते। यद्यपि नाहं संस्कृतज्ञः पण्डित स्तथापि मम पदाधिकारबलेन सर्व्वलोकविश्रुतान् इंलण्डस्थित-"अक्सफोर्ड"-विश्वविद्यालयाध्यापकानां डाक्तारवारोज्प्रभृतीनां कतिपयानां विशिष्टपण्डितानां सन्दर्शने सौभाग्यं मेऽभूत्। तेषां ज्ञानगाम्भीर्य्यम् अतिमानवप्रतिभात्वेन प्रत्यभासत मे। व्याकरण-वैयाकरणादिविषये-ष्वीदृशविस्तीर्णविवरणादात्मकज्ञानस्यातिमानुषे सम्भवान्मन्येऽहं यत् कयाचिद्दैवकृपया नूनं समुद्भासिता भवतः प्रज्ञेति। * * *

इति भवदीयस्य

श्रीकालिदासवन्द्योपाध्यायस्य।

---

श्रीश्रीकाली

# शास्त्रीयपशुबलिसमर्थनम् ।

श्रीश्रीजगद्गुर्व्वष्टोत्तरसहस्र-श्रीशङ्कराचार्य्यपादानामभिवादनोपलक्ष्येण वङ्गीयब्राह्मणसभायां त्यक्तमहामहोपाध्यायोपाधिकस्य श्रीपञ्चाननतर्करत्न-सकलदर्शनाचार्य्यमहोदयस्य सभापतित्वे कालीघट्टवास्तव्येन श्रीगुरुपद-हालदारसरस्वतीदर्शनसागरेण प्रदत्तमभिभाषणम् ।

६ आश्विन १३४२ ।

ब्राह्मणसभा ।

१०४ नं सारकुलार रोड् । कलिकाता ।

ॐ भू र्भुवः स्वरिति तत्सवितु र्वरेण्यं
भर्गो निसर्गविमलं परमस्य विष्णोः ।
देवस्य धीमहि धियोऽधिगतं वयं यो
यत्नान्न ईहितमतीश्च प्रचोदयाद् ॐ ॥
श्रीमत्सुरासुराराध्यचरणाम्बुरुहद्वयाम् ।
चराचरजगद्धात्रीं कालिकां तां नमाम्यहम् ॥

श्रीकाञ्चीकामकोटिमठाधीश-श्रीमच्चन्द्रशेखरसरस्वतीमहात्मनश्चरणार-विन्दे भक्त्युपहारं मे समर्पयितुं सौभाग्यं पुनरद्य संप्राप्तं मया । एषोऽष्टो-त्तरसहस्रसंख्यक-श्रीशंकरचार्य्यत्वेनाभिहितो भवति, यतो शालग्रामशिलायां विष्णोराविर्भाववदेतस्मिन् भगवतः शंकराचार्य्यस्याविर्भावो विद्यते । ऐतिह्यवित्पण्डिता आहुः—'अमुकसमये शंकराचार्य्यस्तिरोदध' इति । अस्माभिस्तु समालोक्यते तस्य भगवतः शंकराचार्य्यस्य काञ्चीमठाधिपति-परम्परात्वेन शाश्वतीः समा वर्त्तमानत्वम् । शृङ्गेरिप्रभृतिभि र्मठैरुज्जीवितेष्वा-

चार्य्यशिष्येष्वपि काञ्चीमठाधिपतयः साक्षाच्छंकराचार्य्यमुज्जीवयन्त आसते ।

भगवाञ्छंकराचार्य्यो जगद्गुरुरित्यस्माभिरभिधीयते । पूर्व्वं मनसि मया विचिन्तितं यदयं शंकराचार्य्यो जगद्गुरुरिति किं सत्यमुत वा स्तुतिवादमात्रमिति । अथैकदा दृष्टिपथं मे समायातं यत् सुदूरपाश्चात्य-देशभागे डाक्तारपाउल्डयसेननामकेन केनचिज्जार्म्माणदार्शनिकविद्वज्जने-नोद्घुष्यते—"कथं हि शंकराचार्य्यो भारतीयरत्नत्वेनाभिहितो भवति, सार्व्वलौकिकं रत्नं हि स इति वक्तुमुचितमिति । यः कोऽप्यसृक्पिशित-विशिष्टो जीवो मनुष्याकृत्या पृथिव्यामस्यामुत्पन्न उत्पत्स्यते वा, स जीवश्चेद् विद्योत्कर्षमधिगच्छेत्, तदा शंकराचार्य्यस्तस्यैव हि वैभव-त्वेन ग्रहीतुं नूनं शक्यते । विभिन्नदेशीयानां कविवराणां पद्यानि यदा पठ्यन्ते तदा ह्युपलभ्यते मया यत् तेषु पद्यविशेषेषु विकीर्य्यन्ते परमं ज्योतिराचार्य्यपादैरिति । इति हेतोः समधिगतं मया परस्मिन् काले यच्छंकराचार्य्यो हि जगद्गुरुरिति सत्यम्, यत एते वैदेशिका मनीषिण* स्तस्य शिष्यस्थानीयत्वं भजन्त इति ।

---

* जार्म्मानप्रदेशीयो विश्वकवि-Goethe-महोदय आह—

'Let me tell you what is man's supreme vocation,
There was no world it is my creation,
It was I who raised the sun from out the sea,
The moon began its changeful course with me.'

इति ।

आमेरिकाप्रदेशीयकविवरः आर्, डब्लु, एमारसन (R. W, Emerson )-महोदयो वेदान्तविज्ञानसुनिश्चितार्थ आह—

'They reckon ill who leave me out,
When me they fly I am the wings,

जायते नः शास्त्रं लुप्तप्रायमित्यधुना कथ्यते जनैः। अस्माकं मते तु मतवाद आचार्य्यस्य चेष्टते ग्रसितुं जगत्। न ह्यतिरञ्जितं वचनमेतद् यतो निखिलदेशानां दार्शनिकपण्डिताः सुतुङ्गभूमिकामारुह्य शंकराचार्य्यपादानां मतवादेन दीक्षिता भवन्तो दृश्यन्ते। नन्वत्र वक्तव्यमवश्यमेव यद् वेदानां हृद्गताशयमाश्रित्य प्राचीना ऋषयः साधनरहस्यत्वेन यद् गुह्यममन्यन्त तद्धि न आचार्य्यपादै र्मादृशानां प्राकृतजनानां पुरः केवलमुद्घाटितमेव।

अत्र कैश्चिन वक्तुं शक्यते यदाचार्य्यस्य मतवादश्चेद् जगतः सकलसम्प्रदायान् ग्रसितुं स्पर्द्धते तदा द्वैत-द्वैताद्वैत-विशिष्टाद्वैताऽचिन्त्यभेदाभेदवादा भारते प्रचरन्तः कथं दृश्यन्ते, वर्त्तमानजगद्गुरुरपि कथं वा न यतते

---

I am the doubter and the doubt,
And I the hymns the Brahmin sings.

I am the owner of the sphere,
Of the seven stars and the solar year,
Of Caesar's hand and Plato's brain
Of Lord Christ's heart and Shakespeare's strain.'

इति।

Emily Brontë-नामककविवरो ब्रह्मभावभावितः सन्नाह—
'Though earth and man were gone,
And suns and universes ceased to be,
And Thou wert left alone,
Every existence would exist in thee.' इति।

कश्चिद् भारतीयः कविराह—

'बान्धवाः सकला लोकाः स्वदेशो भुवनत्रयम्' इति।

स्वसम्प्रदायेऽन्तर्भावयितुमेतान् विभिन्नमतवादिनः। अस्य प्रतिवचनत्वेन ब्रूमः—न हि कदापि विधातुमिच्छति प्रकृते विपर्य्ययमीदृशा महापुरुषा इति। ऐश्वर्य्यवन्तो ये जनास्ते कदापि स्वेच्छया नाचरन्ति प्रातिकूल्यं भगवदिच्छायाः। अधिकारिविशेषेभ्यो बहुधोपदिष्टं शास्त्रेष्विति ज्ञात्वैव तैरुक्तम्—

"स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढ़म्।
परस्परं विरुध्यन्ते तैरयं न विरुध्यते॥
अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते।
तेषामुभयथा द्वैतं तेनायं न विरुध्यते॥" इति।

साम्प्रदायिकविप्लवविध्वस्ते समये बलिनिवारकाभियानत्रस्तेषु वङ्गेषु जगद्गुरुभिः पदार्पणं कृतम्। अतो बलिविषयकस्य प्रश्नस्यावसरेऽस्मिन्नुत्थापनमप्रासङ्गित्वेन न ग्राह्यम्। सुप्राचीने काले धर्म्मान्मूर्त्तिमत्यामहिंसायां सांख्याचार्य्यः पञ्चशिख आविर्बभूव। तेन हि प्रथमं 'मा हिंस्यात् सर्व्वा भूतानी'ति श्रुत्या सह 'वायव्यं श्वेतमालभेत' 'अग्नीषोमीयं पशु*मालभेत' इत्यादिश्रुतीनामुत्सर्गापवादत्वमनङ्गीकृत्य तेषां विषयभेदं प्रकल्प्य यज्ञियपश्वालम्भनमीषत्पापजनकत्वेनोद्घोषितम्। स तु गार्हस्थ्याश्रमिणां यज्ञियपश्वालम्भननिवारणं कदापि नोपदिदेश। वाचस्पतिमिश्रकृततत्त्वकौमुद्यां मतवादोऽयं सम्यक् प्रपञ्चितः। मीमांसकास्तु पञ्चशिखमतमनादृत्य वदन्ति—'मा हिंस्यात् सर्व्वा भूतानी'त्येक उत्सर्गः, 'वायव्यं श्वेतमालभेते'ति तस्यापवादविशेषः। उत्सर्गापवादयोरपवादो बलीयानिति न्यायेन श्रुतिनिर्द्देशाद् यत् पश्वालम्भनमनुष्ठीयते तत्र किमपि पापं न कदापि प्रसज्येतेति।

* पशुं छागम्। अनादेशे पशुश्छाग इत्युक्तेः (विथितत्त्वम्)।

अधुना सूनानिकायेषु ( in slaughter houses ) जीवहननस्य पक्षपातावलम्बिना केनचिन्नवीनसम्प्रदायेन देवमुद्दिश्य पशुबलिं निवारयितुं निर्बन्धातिशयः प्रकटीक्रियते। सम्प्रत्यनेन सम्प्रदायेन हिन्दुस्थानाच्छ्रीरामचन्दशर्म्मनामको 'मित्रस्याहं चक्षुषा सर्व्वाणि भूतानि समीक्षे'—इतिमन्त्रेण दीक्षितः कश्चिद् युवकपण्डितोऽत्रानीतः। कालीघट्टे यावत् पशुबलि र्नात्यन्ताय प्रतिषिध्यते तावदहमाप्राणपातं प्रायोपवेशनं समाचरिष्यामि—इति प्रतिज्ञातं तेन पण्डितयुवकेन।

'मित्रस्याहं चक्षुषा सर्व्वाणि भूतानि समीक्षे'—इति मन्त्रो यजुर्व्वेदे कस्मिन् प्रकरणे समाम्नातः, कुत्र वास्य विनियोगादयो भवन्तीति विषये नितान्तं जोषमास्तेऽसौ सम्प्रदायः। हयमेधयागे पश्वालम्भनादेः परं 'ॐ द्यौः शान्तिरन्तरिक्षं शान्तिः'—इत्यादिशान्तिमन्त्रे पठिते यजमानो भावयति—"दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्व्वाणि भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा सर्व्वाणि भूतानि समीक्षे"—इति।

ननु, पशुशतानि हत्वा यजमानेन कथं विभाव्यते यत् सर्व्व एव तं मित्रस्य चक्षुषेव पश्यन्तु, सोऽपि सर्व्वान् मित्रस्य चक्षुषेव पश्येदिति। न हि विधत्ते पशुप्राणविमोचनं यजमानः। समामनति चात्र भगवती श्रुतिरपि—'हिरण्यशरीर ऊर्द्ध्वं स्वर्गलोकमेती'ति। तद्धि यजमानो मन्त्रं पठत्युपकर्णं पशोः—'न वा उ एतन् म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिरि'ति। दृष्ट्वै तच्छ्रौतोद्घोषणं पूर्व्वमीमांसायामुक्तम्—"ननु, कथं पशुप्राणवियोजनरूपं तन्मरणोद्देश्यकमरणानुकूलव्यापारत्वे हिंसालक्षणे सत्यप्यहिंसा स्यात्? न च तद्रक्षणरूपत्वादहिंसा। व्रणदाहच्छेदयो र्दाहच्छेदरूपत्वेऽपि व्रणिरक्षणवत् पशुप्राणविमोचनरूपस्य संज्ञपनस्य हिंसात्वेऽपि तद्रक्षणत्वोपपत्तेरि"ति। पशुविषयेऽप्येवं हि बोध्यम्। तथा हि भगवान् मनुरपि स्मरति—"तस्माद् यज्ञे वधोऽवधः"

इति। संज्ञपनकाले पशुनादौ कष्टमनुभूयत इति सत्यं, ततः परं तु तेन सुखमनुपमं प्राप्य सर्व्ववेदना विस्मर्य्यते। मन्ये—एवंविधशास्त्राशय-प्रभावितेन वङ्गीयकविवरेण रवीन्द्रनाथेनोक्तम्—

स्तनादपसृतो भूत्वा चाक्रन्द्यते भिया शिशुः।
आश्वस्यते पुनः प्राप्य मुहूर्त्तेन स्तनान्तरम् ॥ इति।

यज्ञियपशुरयं न हि साधारणपशुत्वेन विविच्यते। शास्त्रेणायं विराट् पुरुष इति निर्द्दिष्टः। अतः पुरुषसूक्ते समाम्नातम्—"सप्तास्यासन् परिधयस्त्रिःसप्त समिधः कृताः। देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥" इति। न केवलं यज्ञे परं तु दुर्गोत्सवेऽपि यजमानः पशुं शिवरूपत्वेन कल्पयन् वदति—

"रक्षार्थं बन्धनस्थोऽसि मुक्तये मोचितो मया।
देव्याः प्रीतिं समुत्पाद्य स्वर्गं गच्छ पशूत्तम ॥" इति।

अस्यायमाशयः—तस्मिन् पशौ प्रीता सती देवी निरतिशयं सुखं तस्मै प्रदास्यतीति। अहो चित्तचमत्कारि भावैश्वर्य्यं मन्त्रस्य। न हि केवलं तद्विद्यते मन्त्रवर्गेऽपि तु वङ्गीयकविवरेणास्तिक्यबुद्धिना चैकदा भाषितम्—

स्तनात् स्तनान्तरं यो हि मातृपाणिः स कर्षतीति।

हिन्दुस्थानस्य नवीनोऽयं सम्प्रदायो वलिनिमित्तं स्तम्भकाष्ठं नापसारयन् कार्य्यान्तरेषु व्यापृतो न भविष्यतीति श्रूयते। हिन्दुधर्म्मावलम्बिनामाननेषु न कदापि शोभते वचनमिदम्। किमेते तदा जैना उत वा जैनभावापन्ना हिन्दुधर्म्मावलम्बिनः। यद्वा भवतु, सर्व्वथा नैव ज्ञातमेतेषां यन्नायं साधारणस्तम्भविशेष इति। रक्षितुमिमं रक्षक-श्रेष्ठत्रयं सदैव विनियुक्तं वर्त्तते। अतो हि स्तम्भोऽयं देव्या दृष्टिगोचरे स्थाने प्रोथितोऽस्ति। देव्याश्च सम्मुखस्थद्वारोद्घाटनात् पूर्व्वं वलिकर्म्म न समारभ्यते। एतत्स्तम्भधारणपूर्व्वकं यजमानश्चोच्चारयति—

"स्तम्भ त्वं शिवरूपोऽसि ब्रह्मणा निर्म्मितः पुरा।
देव्या दृष्टिप्रदानेन सदा त्वमचलो भव ॥
स्तम्भमूले वसेद् ब्रह्मा स्तम्भाग्रे च महेश्वरः।
स्तम्भमध्ये स्वयं विष्णुस्तस्मात् त्वमचलो भव ॥" इति।

अत एवासाध्यसाधनव्यापारे कथमेतावान् प्रयत्नोऽस्याभिनवसंप्रदायस्य। किं ते स्तम्भलग्नस्य पशोः कातराक्रोशेन विचलिताः सन्तो हिन्दुधर्म्मे निर्घातं प्रदातुं समुद्युञ्जते? यद्येतदेव भवति, तर्हि भवति तेभ्यो दृढ़मेतन्नः प्रतिवचनं यन्न हि विधुरत्वेनाक्रोशति पशुरयमिति। तस्य दुःखमयजीवित-शर्व्वरीं प्रभातकल्पां विलोक्य कवे र्भाषायां तेन हि संगीयते—

साम्प्रतत्वं हि यावत् किं तावज्जीवितमुच्यते।
अक्ष्णो र्निमेषवद्धि तत् क्षणत्वमेव केवलम् ॥
मृतभारो ह्यतीतस्य पृष्ठे तस्यावतिष्ठते।
कुत्रापि च कदापि च तस्यावधि र्न विद्यते ॥
यावद्वर्षं हि जीवामस्तावद्वर्षं मृता वयम्।
पलं पलं तु ह्यस्माकं भवति मरणं ध्रुवम् ॥
जीवन्मृता वयं सर्व्वे वसामो मृत्युसद्मनि।
मरणं कस्य नामेति नास्माभि र्ज्ञायते पुनः ॥ इति।

सनातनधर्म्मावलम्बिनां धर्म्मकर्म्माणि वेदवाससा चिरमाच्छादितानि वर्त्तन्ते। पुरा याभिरुन्मार्गगामिनीभि र्हिन्दुसन्ततिभिरेतद्वेदरूपवासः परित्यक्तं ता हि दिगम्बरजैनत्वेन प्रसिद्धा अभूवन्। तस्मिन् समये श्वेताम्बरजैना नोद्बभूवुः। तथा च विष्णुपुराणे—

"ततो मैत्रेय! तन्मार्गवर्त्तिनो येऽभवञ् जनाः।
नग्नास्ते तै र्यत स्त्यक्तं त्रयीसंवरणं वृथा ॥" इति।

नग्नाः (क्षपणका दिगम्बरा वा)। त्रयीसंवरणस्य वेदरूपवासस इत्यर्थः।

अत एव जैनानां वेदविद्वेषित्वं न हि विचित्रम्। इतिहासादवगम्यते यद् इदानीन्तनकालात् त्रिसहस्रवर्षेभ्यः जैना हिन्दुधर्म्मं समूलघातं हन्तुं वेदादिशास्त्राणि निन्दन्त आसते स्म। तेषु राज्याधिकारे स्थितेषु हिन्दुधर्म्मो महत् प्रपीड़नं सेहे। जैनधर्म्मावलम्बिनः शाक्यक्षत्रपस्य राज्यसमये मीमांसक आदित्यदेवो (शबरस्वामी) यागप्रचारकर्म्मणि यतमानत्वाद् दण्डार्हो भूत्वा शबरसम्प्रदायं शरणं प्रपेदे। परस्मिन् काले तस्य पुत्रेण विक्रमादित्येन शाक्यक्षत्रपे विताड़िते सति स (शबरस्वामी) मीमांसाभाष्यकारशबरस्वामित्वेन प्रसिद्धिं लेभे। उद्द्योतकरभारद्वाज-कुमारिलभट्ट-भगवच्छङ्कराचार्य्यादिभि जैनदर्शनस्य मिथ्यात्वे प्रतिपादिते ते (जैनाः) क्षीयमाणद्युतित्वं गताः। कालप्रभावात्त्वधुना हिन्दुस्थाने बहूनां जैनानां हिन्दुभावापन्नत्वाद् अनेकेषां हिन्दूनां पुन जैनभावप्रभावितत्वाच्च ते सर्व्वे परस्परं वैवाहिकादिसूत्रैः समावद्धाः सन्ति। एते वेद-विद्वेषिणो भूत्वा सनातनधर्म्माङ्गच्छेदे यतमाना वर्त्तन्ते। श्रूयते च—वेदादिशास्त्रमुल्लङ्घ्य पिहितायां बलिप्रथायां प्रागुक्तै जैनै हिन्दुदेवदेव्यो ग्रहणीया भविष्यन्ति, जैनैश्चैवं समाचरिते हिन्दुभ्रुवा बलिनिवारणे यतिष्यन्त इत्येवंसन्धिसूत्रेणावद्धा इमे जना इति। अतो ह्यधुनैषां स्वस्वोद्देश्यं येन कार्य्यं पर्य्यवसितं स्यात् तेन हि डाक्तार-आंक्लेसरिया-प्रभृतिनेतॄणां शरणं प्रपन्नास्ते।

भारते वैष्णवसम्प्रदाय आवहमानकालमवतिष्ठते। तैस्तु वेदोक्तानां तन्त्रोक्तानां वाऽनुष्ठानादीनामङ्गच्छेदे न कदापि निर्बन्धः प्रदर्शितः। एषामहिंसाव्रतं योगिनामिव सार्व्वभौमम्। अतोऽर्थक्रीतनिर्धनानामसृजा मत्कुणानां गन्धकीटानां वा तृप्तिसाधनेन पुण्यमेते नार्जयन्ति। एष वैष्णवसम्प्रदायो देवोद्दिष्टपशुबलौ न विप्रतिपद्यन्ते। श्रीमद्भागवते हि स्मर्य्यते—"तथा पशोरालभनं न हिंसे"ति। प्रतिपक्षैरुच्यते चेद्—अमुना

वाक्यांशेन देवमुद्दिश्य पशुत्यागोऽभिप्रेतो न पुनः पशुहननमिति, तदा पशुहननमधिकृत्य भागवतस्य मतामतं विचारयितव्यं भाष्यटीकादि-सहायेनास्य व्याख्या च कर्त्तव्या।

एकदा श्रीवृन्दावने महर्षय आङ्गिरसयज्ञमीजिरे। भगवान् यशोदा-नन्दनः श्रीकृष्णो लीलया तेषां यज्ञियान्नग्रहणाय गोपबालकानाह— "भ्रातरः! ऋषीणां समीपं गत्वा यूयमन्नं याचध्वमि"ति। गोपबालकाश्चिन्तयामासु र्यन्महर्षयश्चेदन्नदाने द्वैधीभावं गच्छेयुस्तदास्माभि र्वक्तव्यम्— सौत्रामणीयागं विना यज्ञान्तरेषु दीक्षितानां पशुबलिकर्म्मणि समातेऽन्नदानं न दोषमावहतीति। एवं स्थिरीकृत्य त ऋषिसमीपं गत्वा प्रोचुः—

"दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः।
अन्यत्र दीक्षितस्यापि नान्नमश्नन् हि दुष्यति॥" इति।

पशुसंस्था पशुबलिः। अस्य व्याख्यावसरे परमवैष्णवाचार्य्यः सर्व्वज्ञः श्रीधरस्वामी प्राह—"पशुसंस्थाया अग्नीषोमीयपश्वालम्भनादि"ति। पशु-शब्देन नूनमत्र छाग एव लक्षितः। तथा हि शास्त्रनिर्द्देशः—"अनादेशे पशुश्छागः" इति (तिथितत्त्वधृतवचनम्)। तात्पर्य्यमस्य छागशब्द-व्युत्पत्त्यैव स्फुटीभवति। छायते देवालये छिद्यत इति छोधातो र्गन्प्रत्ययेन च्छागशब्दो निष्पन्नो भवति ("छापूखड़िभ्यः कित्—उण् १।१२३)। बलिकर्म्मणि न हि च्छागस्यानुकल्पोऽजो भवति, अजबलेः शास्त्रविगर्हित-त्वात्। शृङ्गयुक्तश्छागस्तद्रहितोऽज इति च्छागाजयो र्भेदः। मतमेतद् वेदभाष्यकारसायणाचार्य्यस्यानुमोदितम्। यद्वा भवतु, स्पष्टमेतदधुना यद् भगवान् वसुदेवतनयो गोपबालकाश्च पशुबलौ दोषं न ददृशुः।

महर्षिः कृष्णद्वैपायनो नारायणकल्पत्वेन गृह्यतेऽस्माभिः। उक्तिश्च वर्त्तते—'शङ्करः शङ्करः साक्षाद् व्यासो नारायणः स्वयमि'ति। स कृष्णद्वैपायनः प्रागुक्तपञ्चशिखादिसांख्याचार्य्याणां मतेनोच्यते चेद् यद्

यज्ञियपशुहननमीषत्पापजनकमिति तर्हि ब्रूमः—तन्न, यतो यज्ञियपशुहननेषु भगवती श्रुतिरेव प्रमाणमिति। अस्य सूत्रस्य शारीरकभाष्ये भगवत्पादाः शंकराचार्य्याश्चाहुः—"अयं धर्म्मोऽयमधर्म्म इति शास्त्रमेव विज्ञाने कारणमतीन्द्रियत्वात् तयोरनियतदेशकालनिमित्तत्वाच्च। यस्मिन् देशे काले निमित्ते च यो धर्म्मोऽनुष्ठीयते स एव देशकालनिमित्तान्तरेष्वधर्म्मो भवति। तेन न शास्त्रादृते धर्म्माधर्म्मविषयं विज्ञानं कस्यचिदस्ति। शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म्म इत्यवधारितम्। स कथमशुद्ध इति शक्यते वक्तुम्? 'न हिंस्यात् सर्व्वा भूतानि'—इति शास्त्रमेव भूतविषयायां हिंसायामधर्म्म इत्यवगमयति। बाढ़म्। उत्सर्गस्तु सः, अयं चापवादः—'अग्नीषोमीयं पशुमालभेते'ति। युक्तमेवोक्तमाचार्य्यपादैः। यच्छास्त्रं पञ्चसूनाजनितपापनिवृत्त्यर्थं सोत्कण्ठं व्यवस्थापयति महायज्ञपञ्चकं तेन हि पुन र्देवतामुद्दिश्य पशूपयाचितकं व्यवस्थितम्। अत एव कथमस्मात् पापमाशङ्क्यते?

एकादशखृष्टशताब्दीयो वैष्णवचूड़ामणि र्विशिष्टाद्वैतवादी श्रीरामानुजाचार्य्यः प्रागुक्तसूत्रव्याख्यावसरे तस्य श्रीभाष्ये प्राह—"सर्व्ववर्णानां स्वधर्म्मानुष्ठाने परमपरिमितं सुखमि'ति (२।२२।२)। अस्यायमर्थः। "सर्व्ववर्णानाम्..."इत्यादिनाऽऽपस्तम्बीयप्रमाणवचनेन रागमूलकयागादिकर्म्माङ्गभूतपश्वालम्भनेन नास्ति कश्चिदपि हिंसालेशः, आलम्भनेन रक्ष्यते पशुरेवेति श्रुतिनिर्द्देशात्। व्यावहारिके स्थलेऽपि चिकित्सायां रोगिणे दुःखप्रदानस्य हेतुभूतेऽपि वैद्ये सर्व्वे तं रोगिणस्त्रायकमेव मन्यन्ते ततश्च सर्व्वेषां स पूजितो भवति। परं तु दुःखप्रदातृत्वान्नहि चिकित्सकः कदाप्यभियोगार्हो भवति।

"निमात्"-सम्प्रदायप्रवर्त्तक एकादशखृष्टशताब्दीयो द्वैताद्वैतवादी निम्बादित्याचार्य्यो वृन्दावनस्थितध्रुवपर्व्वते सिद्धिं लेभे। जयदेवश्चैतन्य-

देवश्चास्यैव भावेन प्रभावितावभूताम् । निम्बर्काचार्य्योऽस्य नामान्तरम् । स हि वेदान्तसूत्रोपरि "वेदान्तपारिजातसौरभ"-नामकं भाष्यमेकं रचयामास । प्रागुक्तसूत्रव्याख्यावसरे निम्बार्काचार्य्य आह—"ज्योतिष्टोमादेरशुद्धत्वं नास्ति विधिशास्त्रात्"—इति ।

१३-१४-खृष्टशताब्द्योरभ्यन्तरे दक्षिणापथान्तःपातिवेलिनामकग्रामे मध्वगेहभट्टाद् वेदवत्यां समजनि द्वैतवादी मध्वाचार्य्यः । अयं मध्वाचार्य्यो वेदान्तोपरि पूर्णप्रज्ञदर्शनाख्यं भाष्यमेकं प्राणैषीत् । भाष्येऽस्मिन्नुक्तसूत्रव्याख्यायां तेन लिखितम्—"हिंसारूपत्वात् पापस्यापि सम्भवाद् दुःखं च भवत्विति चेन्न शब्दविहितत्वात् । हिंसा त्ववैदिकी या तयाऽनर्थो ध्रुवं भवेत् । वेदोक्तया हिंसया तु नैवाऽनर्थः कथञ्चनेति वाराहे" इति ।

मध्वाचार्य्यात् परं षोड़शखृष्टशताब्द्यां शुद्धाद्वैतवादी वल्लभाचार्य्य आविर्बभूव । वल्लभाचार्य्यः श्रीश्री॰गौराङ्गमहाप्रभोः समकालिक आसीत् । प्रसिद्धिश्च वर्त्तते यद् वृन्दावनेऽनयोः परस्परं दर्शनं बभूवेति । श्रीश्री॰बालकृष्ण एव वल्लभाचार्य्यस्योपास्यदेवताऽऽसीत् । वल्लभाचार्य्येण वृन्दावने श्रीनाथस्य मन्दिरमेकं प्रतिष्ठापितम् । वेदान्तोपरि चाणुभाष्यनामकं भाष्यमेकमनेन विरचितम् । अत्र चैतत् सूत्रोपरि लिखितमस्ति—"संस्कारेणैव शुद्धिरि"ति ।

१५-१६ खृष्टशताब्द्योरचिन्त्यभेदाभेदवादी श्रीश्री॰गौराङ्गमहाप्रभु र्विष्णोरवतारत्वेन गृह्यते । तस्य स्वयं लिखिते ग्रन्थेऽविद्यमानेऽपि बलदेवविद्याभूषणकृतगोविन्दभाष्ये तस्य मतवादाः सन्निवेशिताः सन्ति । उक्तसूत्रोपरि गोविन्दभाष्यकारेणोक्तम्—"धर्म्मत्वाधर्म्मत्वयो र्वेदैकगम्यत्वाद् वेदेनैव हिंसानुग्रहात्मकस्येष्ट्यादे र्धर्म्मत्वावधारणाद् नाशुद्धं तदिति । न च मा हिंस्यादिति निषेधात् पापं हिंसेति वाच्यम् । उत्सर्गो हि सः"—इति ।

अयमाशयः—यज्ञीयहननं विशेषनियमतोऽनुष्ठीयत इति। अतोऽस्य भाष्यस्य टीकाकार आह—'मा हिंस्यादि'ति श्रौतवाक्याद् यज्ञेतरपशुहिंसा निषिध्यते। अग्नीषोमीयादियज्ञे तु हिंसैव विहिता भवतीति।

शास्त्रोक्तहिंसाविषये विशिष्टानामेतेषामाचार्य्याणां मतामतं विलोक्य वैष्णवसम्प्रदायो न कदापि पश्वालम्भनं नानुमेनिरे। वैष्णवाः स्वयं निरामिषाशिनोऽपि वेदविहितकर्म्मसु पशुबलिं विदधते यतो वैदिककर्म्मणां नानुकल्पो विद्यते, विद्यते तु तान्त्रिककर्म्मणाम्। तान्त्रिकानुष्ठानेषु यद्यपि तेषां कैश्चिद् इक्षुकूष्माण्डादयो बलिरूपेणोत्सर्गीक्रियन्ते तथापि शाक्तानां पशुबलौ विघ्नं विधातुं यतमानास्ते कदापि न दृश्यन्ते। न हि तन्त्र-विरोधिनो वैष्णवाः। तथा हि स्मर्य्यते श्रीमद्भागवतस्यैकादशस्कन्धान्तर्गत एकादशाध्याये—

"यात्राबलिविधानं च सर्व्ववार्षिकपर्व्वसु।
वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम्॥" इति।

अपि च तत्स्कन्धस्य सप्तविंशतितमेऽध्याये पुनरुक्तम्—

"वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः।
त्रयाणामीप्सितेनैव विधिना मां समर्च्चयेत्॥" इति।

या केवलवेदोक्तमन्त्रैरनुष्ठीयते सा पूजा वैदिकी, या केवलतन्त्रोक्तैः सा तान्त्रिकी, या चोभयविधमन्त्रैः सा मिश्रपूजेत्यभिधीयते। वङ्गेषु बौद्ध-पालेभ्यः परं वल्लालसेनस्य राज्यकालात् प्रभृति वैष्णवसम्प्रदाये मिश्रपूजैव नितरां प्रचरन्ती वर्त्तते। वराहपुराणे भगवता वराहेणाप्युक्तम्—

"एतज् ज्ञात्वा तु विद्वद्भिः पूजनीयो जनार्द्दनः।
वेदोक्तविधिना भद्रे आगमोक्तेन वा बुधैः॥" इति।

स्कान्देऽपि समर्थितं मतमेतत्।

वैष्णवेषु वैदिकतान्त्रिकबलिविरोधाभावस्य विद्यतेऽन्यत् कारणमेकम्। विष्णुपुराणीये तृतीयांशस्थितेऽष्टादशाध्याये यत् स्मृतं तात्पर्य्यतस्तत् प्रदीयते —'असुराणां स्वधर्म्मनिरतत्वान्न हि देवास्तान् विजेतुं शेकुः। अतस्ते भगवद्विष्णुसमीपं गत्वाऽऽत्मनिर्व्वेदं निवेदयामासुः। तच्छ्रुत्वा भगवान् नारायणस्तत्प्रतीकारार्थं स्वतेजसः समुद्भूतं मायामोहनामकं पुरुषमेकमसुरेभ्यः प्रेरयामास। मायामोहश्च वेदादिविहितकर्म्मभ्योऽसुरान् परिभ्रंशयितुमाह—

"स्वर्गार्थं यदि वाञ्छा वो निर्व्वाणार्थमथासुराः।
तदलं पशुघातादिदुष्टधर्म्मैं र्निबोधत॥
विज्ञानमयमेवैतदशेषमवगच्छथ।
बुध्यध्वं मे वचः सम्यग् बुधैरेवमुदीरितम्॥
जगदेतदनाधारं भ्रान्तिज्ञानार्थतत्परम्।
रागादिदुष्टमत्यर्थं भ्राम्यते भवसङ्कटे॥" इति।

उद्दीपकगुप्तचर इव ( like an agent provocateur ) मायामोहोऽसुरान् प्रोत्साहयामास। असुराश्चाभिनवधर्म्ममिमं प्रचारयितुं वेदादिशास्त्राणि निन्दन्तः परस्परमेवं कथयामासुः—

"नैतद् युक्तिसहं वाक्यं हिंसा धर्म्माय नेष्यते।
हवींष्यनलदग्धानि फलायेत्यर्भकोदितम्॥
यज्ञैरनेकै र्देवत्वमवाप्येन्द्रेण भुज्यते।
सस्यादि च समित्काष्ठं तद्वरं पत्रभुक् पशुः॥
निहतस्य पशो र्यज्ञे स्वर्गप्राप्ति र्यदीष्यते।
स्वपिता यजमानेन किन्नु तस्मान्न हन्यते॥
तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः।
दद्याच्छ्राद्धं श्रद्धयान्नं न वहेयुः प्रवासिनः॥" इति।

असुराणामेवं वाक्यालापमाकर्ण्य मायामोहः कृतार्थः सन् विष्णुसमीपं प्रत्याजगाम। असुरैः शास्त्रोक्तयागादिकर्म्मसु परित्यक्तेषु यद् यज्ञघटे तद्विषयिणी पौराणिकी वार्त्ता वैष्णवे वर्णिता दृश्यते—

"ततो देवासुरं युद्धं पुनरेवाभवद् द्विज।
हताश्च तेऽसुरा देवैः सन्मार्गपरिपन्थिनः॥
स्वधर्म्मकवचस्तेषामभूद् यः प्रथमं द्विज।
तेन रक्षाऽभवत् पूर्व्वं नेशु र्नष्टे च तत्र ते॥
ततो मैत्रेय! तन्मार्गवर्त्तिनो येऽभवञ् जनाः।
नग्नास्ते तै र्यत स्त्यक्तं त्रयीसंवरणं वृथा॥" इति।

वेदवत् तन्त्रमपि प्रामाणिकं शास्त्रम्। एतमुक्तौ न कोऽपि दोषं गृह्णाति। हारितादिमुनिभि र्माधवाचार्य्यकुल्लूकभट्टादिमनीषिभिश्चापीद-मभ्युपगतम्।

तथा च बृहद्धर्म्मपुराणे शिवं प्रति भगवतीवचनम्—

"आगमस्य भवान् कर्त्ता वेदकर्त्ता स्वयं हरिः।
आदावागमकर्तृत्वे भवान् वै विनियोजितः॥
पश्चाद्वै वेदकर्तृत्वे हरिः सम्यग् नियोजितः।
आगमश्चैव वेदश्च द्वौ बाहू मम पुष्कलौ॥
द्वाभ्यामेव धृतं सर्व्वं त्रैलोक्यं भूभुवादिकम्॥" इति।

हरि र्ब्रह्मा वा विष्णु र्वा। कर्त्ता स्मरणकर्त्ता। विद्यते ह्यत्र शास्त्रवचनम्—'न कश्चिद् वेदकर्त्ताऽस्ति वेदस्मर्त्ता पितामह' इति। अन्यत्रापि स्मृतम्—'ब्रह्माद्या ऋषिपर्य्यन्ताः स्मारका न तु कारका' इति। न हि वेदः पौरुषेयत्वेन ग्रहीतुं शक्यते—"अस्य महतो भूतस्य निःश्वसितमेतद्" इति समाम्नातत्वात्। बुद्धिपूर्व्वकमुदीरितो वेद इत्युक्तौ यो दोषः प्रसज्यते तमधिकृत्य महर्षिकल्पै र्भर्तृहरिपादैस्तदीयवाक्यपदीयेऽप्युक्तम्—

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपद्यते ॥" इति ।

"तर्काप्रतिष्ठानाद्" ( २।१।११ ) इति वेदान्तसूत्रोपरि भामत्यां समुद्धृतः श्लोकोऽयम् ।

येषु वेदोक्तकर्म्मसु पश्वालम्भनं विहितं तेषु पश्वालम्भनमवश्यं कर्त्तव्यं परं तु येषु तन्त्रोक्तकर्म्मसु पशुवलि र्विहितस्तेष्वधिकारिविशेषेऽनुकल्पोऽपि न दोषावह इति पशुवलिविषये वेदतन्त्रयो र्विभेदो वोद्धव्यः। तद्धि वैष्णवैः सात्त्विकभावापन्नैः पुरुषै र्वा तन्त्रोक्तकर्म्मणि कोऽप्येकोऽनुकल्पो गृह्यते। नूनमिदं हृदयदौर्ब्बल्यद्योतकम् । यतो विधिपूर्व्वकनिष्कामपशुवलौ न हि व्याहन्यते धर्म्मो वैष्णवानां सात्त्विकभावो वा सत्त्वगुणसम्पन्नानां जनानाम् । प्रसङ्गेऽस्मिन् समुल्लेखनीयमाख्यानमेकं गोपालोत्तरतापिन्युपनिषद्वर्णितम्—

एकदा पारेयमुनं महर्षि र्दुर्वासा अवतिष्ठत इत्याकर्ण्य गोपीगणो भोज्यद्रव्याणि संगृह्य तमृषिं सेवितुं यमुनायाः परपारं गन्तुं संकल्पयामास। ततश्च ताः सर्वा यमुनां निकषा गत्वा ददृशुस्तत्र नद्यां कूलङ्कषं सलिलमनुपलभ्यमाना नावश्च। अदृष्ट्वा च गत्यन्तरं 'कथं यास्यामो जलं तीर्त्वा यमुनाया'इति सानुनयं ताभिर नुरुध्यमानः श्रीकृष्ण उवाच—"यमुनामुपसृत्य ब्रूहि मे नामग्राहं—अम्ब यमुने ! श्रीकृष्णश्चेद् आजीवितं ब्रह्मचारी तर्हि प्रार्थनायां तस्य देहि पन्थानमस्मभ्यमि"ति। स्मेरमुखा व्रजनार्य्योऽवोचन्—'ननु, एवमुक्ते सति यदि तीरान्तरगमनं नः सम्भवति, तर्हि कथं पुनः प्रत्यागमिष्याम" इति । श्रीकृष्णः प्रत्युवाच— प्रत्यागमनव्यवस्थां युष्मांकमृषिरेव करिष्यतीति। ताभि र्गोपबालाभि र्यमुनायै निर्द्देशानुरूपमुक्त सति देवी यमुना ताभ्यः पन्थानं ददौ। व्रजस्त्रियः परपारे तिष्ठन्तं महर्षिं भूरिभोजनादिना सेवित्वा प्रणभ्य चाहुः—'भगवन् !

असुराणामेवं वाक्यालापमाकर्ण्य मायामोहः कृतार्थः सन् विष्णुसमीपं प्रत्याजगाम। असुरैः शास्त्रोक्तयागादिकर्म्मसु परित्यक्तेषु यद् यज्ञघटे तद्विषयिणी पौराणिकी वार्त्ता वैष्णवे वर्णिता दृश्यते—

"ततो देवासुरं युद्धं पुनरेवाभवद् द्विज।
हताश्च तेऽसुरा देवैः सन्मार्गपरिपन्थिनः॥
स्वधर्म्मकवचस्तेषामभूद् यः प्रथमं द्विज।
तेन रक्षाऽभवत् पूर्वं नेशु र्नष्टे च तत्र ते॥
ततो मैत्रेय! तन्मार्गवर्त्तिनो येऽभवञ् जनाः।
नग्नास्ते तै र्यत स्त्यक्तं त्रयीसंवरणं वृथा॥" इति।

वेदवत् तन्त्रमपि प्रामाणिकं शास्त्रम्। एतमुक्तौ न कोऽपि दोषं गृह्णाति। हारितादिमुनिभि र्माधवाचार्य्यकुल्लूकभट्टादिमनीषिभिश्चापीदमभ्युपगतम्।

तथा च बृहद्धर्म्मपुराणे शिवं प्रति भगवतीवचनम्—

"आगमस्य भवान् कर्त्ता वेदकर्त्ता स्वयं हरिः।
आदावागमकर्त्तृत्वे भवान् वै विनियोजितः॥
पश्चाद्वै वेदकर्त्तृत्वे हरिः सम्यग् नियोजितः।
आगमश्चैव वेदश्च द्वौ बाहू मम पुष्कलौ॥
द्वाभ्यामेव धृतं सर्व्वं त्रैलोक्यं भूभुवादिकम्॥" इति।

हरि र्ब्रह्मा वा विष्णु र्वा। कर्त्ता स्मरणकर्त्ता। विद्यते ह्यत्र शास्त्रवचनम्— 'न कश्चिद् वेदकर्त्ताऽस्ति वेदस्मर्त्ता पितामह' इति। अन्यत्रापि स्मृतम्— 'ब्रह्माद्या ऋषिपर्य्यन्ताः स्मारका न तु कारका' इति। न हि वेदः पौरुषेयत्वेन ग्रहीतुं शक्यते—"अस्य महतो भूतस्य निःश्वसितमेतद्" इति समाम्नातत्वात्। बुद्धिपूर्व्वकमुदीरितो वेद इत्युक्तौ यो दोषः प्रसज्यते तमधिकृत्य महर्षिकल्पै र्भर्त्तृहरिपादैस्तदीयवाक्यपदीयेऽप्युक्तम्—

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपद्यते ॥" इति ।

"तर्काप्रतिष्ठानाद्" ( २।१।११ ) इति वेदान्तसूत्रोपरि भामत्यां समुद्धृतः श्लोकोऽयम् ।

येषु वेदोक्तकर्म्मसु पश्वालम्भनं विहितं तेषु पश्वालम्भनमवश्यं कर्त्तव्यं परं तु येषु तन्त्रोक्तकर्म्मसु पशुवलि र्विहितस्तेष्वधिकारिविशेषेऽनुकल्पोऽपि न दोषावह इति पशुवलिविषये वेदतन्त्रयो र्विभेदो बोद्धव्यः । तद्धि वैष्णवैः सात्त्विकभावापन्नैः पुरुषै र्वा तन्त्रोक्तकर्म्मणि कोऽप्येकोऽनुकल्पो गृह्यते । नूनमिदं हृदयदौर्व्बल्यद्योतकम् । यतो विधिपूर्व्वकनिष्कामपशुवलौ न हि व्याहन्यते धर्म्मो वैष्णवानां सात्त्विकभावो वा सत्त्वगुणसम्पन्नानां जनानाम् । प्रसङ्गेऽस्मिन् समुल्लेखनीयमाख्यानमेकं गोपालोत्तरतापिन्युपनिषद्वर्णितम्—

एकदा पारेयमुनं महर्षि र्दुर्वासा अवतिष्ठत इत्याकर्ण्य गोपीगणो भोज्यद्रव्याणि संगृह्य तमृषिं सेवितुं यमुनायाः परपारं गन्तुं संकल्पयामास । ततश्च ताः सर्वा यमुनां निकषा गत्वा ददृशुस्तत्र नद्यां कूलङ्कषं सलिलमनुपलभ्यमाना नावश्च । अदृष्ट्वा च गत्यन्तरं 'कथं यास्यामो जलं तीर्त्त्वा यमुनाया'इति सानुनयं ताभिर नुरुध्यमानः श्रीकृष्ण उवाच—"यमुनामुपसृत्य ब्रूहि मे नामग्राहं—अम्ब यमुने ! श्रीकृष्णश्चेद् आजीवितं ब्रह्मचारी तर्हि प्रार्थनायां तस्य देहि पन्थानमस्मभ्यमि"ति । स्मेरमुखा व्रजनार्य्योऽवोचन्—'ननु, एवमुक्ते सति यदि तीरान्तरगमनं नः सम्भवति, तर्हि कथं पुनः प्रत्यागमिष्याम" इति । श्रीकृष्णः प्रत्युवाच—प्रत्यागमनव्यवस्थां युष्माकमृषिरेव करिष्यतीति । ताभि र्गोपबालाभि र्यमुनायै निर्द्देशानुरूपमुक्त सति देवी यमुना ताभ्यः पन्थानं ददौ । व्रजस्त्रियः परपारे तिष्ठन्तं महर्षिं भूरिभोजनादिना सेवित्वा प्रणम्य चाहुः—'भगवन् !

यमुनायां जलाधिक्यं वर्त्तते, न च तत्र दृश्यन्ते नावादयः, भवान् कृपया गृहे नः प्रत्यावर्त्तनं व्यवस्थापयतु नोचेन्नितरां विपन्ना वयं भविष्याम' इति। ऋषिरुवाच—'कथमत्र समागता यूयमि'ति। ताभि र्निवेदिते सकलवृत्तान्ते पुनश्च महर्षिराह—'किमिति श्रीकृष्णेन युष्माकं प्रत्यावर्त्तन-व्यवस्था न विहिते'ति। व्रजनारीभिरुक्तम्—'सर्व्वं तस्मै निवेदितमस्माभिः परं तु श्रीकृष्ण आह—'ऋषिरेव निरूपयिष्यति युष्माकं प्रत्यावर्त्तनोपाय-मि'ति। श्रुत्वैतत् सस्मितमृषिरुवाच—"मम नामग्राहं यमुनां ब्रूत यद् दुर्व्वासाश्चिरमभुक्तश्चेत् तर्हि मात र्यमुने! देहि मार्गमस्मभ्यमि"ति। एतेन हतवाचोऽभूवन् व्रजस्त्रियः। अधुनैवाकण्ठं भुक्त्वा कथमृषिणा प्रतिज्ञातं यच्चिरमभुक्तोऽहमिति। यद्वा भवतु, एवमुक्ता यमुना ताभ्यः पुन र्मार्गं ददौ। रहस्यमिदं विज्ञातुं गोपस्त्रियो गृहानप्रत्यावर्त्यैव श्रीकृष्ण-मुपगम्य तमपृच्छन्—"कथं कृष्णो ब्रह्मचारी कथं दुर्व्वासनो मुनिरि"ति। अयमस्याभिप्रायः—अष्टाङ्गमैथुनवैपरीत्यसाधनं विना न कोऽपि ब्रह्मचारी भवितुमर्हति, अस्माभिः सह कृपया स्मरणादिक्रियारतोऽपि भवान् ब्रह्मचारित्वेन गृहीतो यमुनया। मिथ्याभाषणेन न केनापि मुनित्वमधि-गन्तुं शक्यते, परं तु महर्षि र्दुर्व्वासाः समन्नमस्माकं भुक्त्वाप्युवाच—'अभुक्तोऽहमस्मी'ति। तथापि स यमुनया मुनित्वेन गृहीतः। किमिदं रहस्यम्। अस्य प्रतिवचने श्रीकृष्ण आह—"शब्दवानाकाशः शब्दा-काशाभ्यां भिन्नः, तस्मिन्नाकाशस्तिष्ठति, आकाशे तिष्ठति स ह्याकाशस्तं न वेद स ह्यात्मा, अहं कथं भोक्ता भवामि। स्पर्शवान् वायुः स्पर्शवायुभ्यां भिन्नः, तस्मिन् वायुस्तिष्ठति, वायौ तिष्ठति वायुस्तं न वेद, स ह्यात्मा, अहं कथं भोक्ता भवामि।" इति। विषयानिमान् परिस्फुटयितुं पुनश्च स आह—"विद्याविद्याभ्यां भिन्नो विद्यामयो हि यः स कथं विषयी भवति।" इति। एवमुक्त्वा भगवान् कृष्णः सिद्धान्तयति—"यो ह वै

कामेन कामान् कामयते स कामी भवति। यो ह वै त्वकामेन कामान् कामयते सोऽकामी भवति" इति।

भगवतः श्रीकृष्णस्य मुखारविन्देनैवं चेदुद्घोषयति भगवती श्रुतिस्तर्हि प्रागुक्तोपदेशेन देवतामुद्दिश्य बलिप्रदानेन वैष्णवानां सात्त्विक-भावापन्नानां शाक्तानां वा धर्म्मः सत्त्वगुणो वा कथं व्याहन्यते। सुष्ठूक्तं हि वैष्णवकविना—

मज्जयत्युदकं चेद्वा दहति पावकोऽथवा।
ब्रूहि तिलप्रमाणं किं तयोः किञ्चिद् भवत्यघम्॥ इति।

साम्प्रतं वाराणस्याः परात्परोपाध्याय-श्रीयुक्तपञ्चाननतर्करत्नमहोदयप्रमुखैर्नानादेशीयैः पण्डितैः शक्तिपूजायां पशुबलिसमर्थनपूर्व्वकं सर्व्वजनीनं व्यवस्थापत्रं प्रकाशितम्। तत्पत्रमस्माकं प्रागुक्तमतं समर्थयते। व्यवस्था-पत्रस्य तात्पर्य्यमधस्तात् प्रदीयते—

"श्रीरामः।

कालीपूजायां बलिदानस्योपयोगिता तन्त्रशास्त्रसम्मता। यतो मातृका-भेदतन्त्रस्य दशमपटले स्मर्य्यते—पशुदानं विना देवीं पूजयेन्न कदाचनेति। निबन्धतन्त्रस्य तृतीयपटलेऽप्युक्तम्—

"बलिदानं विना ये तु पूजयन्ति हि तारिणीम्।
ज्ञानं मोक्षं कदापि वा प्राप्नुवन्ति न त क्वचित्॥
अज्ञानाचरणात्ते हि कथ्यन्ते पशवः प्रिये॥" इति।

'तारिणी'पदमत्रोपलक्षणमात्रम्। या काली सा हि तारा स्यान्मूर्त्तिभेदास्तु केवलमित्यादिना सर्व्वासां महाविद्यानां ताराया मूर्त्तिभेदत्वं वर्णितं तस्मिन्नेव पटले। गायत्रीतन्त्रेऽपि पुनः स्मृतम्—

"वहुभि र्बलिदानैश्च जपयज्ञैश्च भूपते।
या पूजा क्रियते भक्तैः सात्त्विकी सा निगद्यते॥" इति।

अयमेवाध:स्वाक्षरकारिणां विदुषां परामर्शः—

श्रीपञ्चाननतर्करत्न-महामहोपाध्यायफणिभूषणतर्कवागीश-पण्डितराज-श्रीश्रीशङ्करभट्टाचार्य्यतर्करत्नन्यायकेशरि--पण्डितराजद्रविड़राजेश्वरशास्त्रि--महामहोपाध्यायहाराणचन्द्रशास्त्रि--महामहाध्यापकश्रीशशिभूषणस्मृतितीर्थ-महामहोपाध्यायश्रीवामाचरणन्यायाचार्य्यतर्कतीर्थ-श्रीताराचरणसाहित्याचार्य्य-श्रीश्यामाकान्ततर्कपञ्चानन--श्रीसूर्य्यनारायणन्यायाचार्य्य--महामहोपाध्याय-श्रीकमलकृष्णस्मृतितीर्थ-प्रभृतीनाम् ।

यद्वा भवतु, शाक्तानां धर्म्मं व्याहन्तुं बद्धपरिकरः पण्डित-रामचन्द्र-महोदयो विमार्गपरिचालितः सन्नात्मजिघांसां समाचरतीत्येवं हि भवति नोऽतिमात्रखेदविषयः। यद्यपि ज्ञायतेऽस्माभि र्यन्नावधानं दास्यति सोऽस्माकमुपदेशे तथापि तं सानुनयं स्मारयामः—

"यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥
तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसि ॥" इति

ॐ तत् सत् ।

वक्ता—श्रीगुरुपदहालदारः सरस्वती-
वेदान्तभूषणो दर्शनसागरः ।

---

# श्रीश्रीदशभुजा दुर्गा ।

अथ देवीस्तुतिः

ॐ नारायण्यै विमलमहसे विद्महे सत्तमायै
दुं दुर्गायै रुचिरतनवे धीमहि स्मः प्रपन्नाः ।
भूयो भूयो वयमतितरां सच्चिदानन्दरूपा
तन्नो देवी प्रणुदतु धियो धर्म्मकामार्थमोक्षे ॥

स्कन्दपुराणीयमाहेश्वरखण्डस्थितादरुणाचलमाहात्म्यादवगम्यते यदेकदा मानवोचितकौतुकवशात् पार्व्वतीदेव्या महेश्वरस्य सूर्य्यचन्द्रवह्निरूपनयनत्रये पिहिते सति त्रिभुवनं तमसाच्छन्नं बभूव ततश्च विविधान्यमङ्गलानि प्रादुरासन् । अवसितायाञ्च देव्याः कौतुकप्रवृत्तौ देवाधिदेवेन महादेवेनोक्तम्—सर्व्वमङ्गलया जगज्जनन्यापि भवत्या जगताममङ्गलं विहितम् अत ईदृशमानवोचितकार्य्यकरणात् काञ्चीस्थकम्पानदीं निकषा समवस्थाय कठोरतपसा भवत्यैतदनुष्ठानजनिता हीनता दूरीकर्त्तव्येति । देव्यपि तदनुसारतोऽरुणाद्रीशं सम्पूज्य गौतमाश्रमस्य सत्क्रियादि संगृह्य कामाक्षीति नाम स्वीकृत्य विविधनियमसहकारेण कठोरतपस्यायां व्यापृता संतस्थे ।

तदा भगवान् पत्नीविरहविधुरः सन् कामाक्षीदेव्याः सन्निहिते कस्मिंश्चित् प्रदेशे "आम्रवृक्ष"रूपेणाविर्भूय व्रतचारिण्या भार्य्याया अशनायानिवृत्तये समुचितफलात्मिकां संविधां नित्यं व्यवस्थापयामास । अयमाम्रवृक्ष एव पश्चाद् 'एकाम्रनाथलिङ्ग'नाम्ना प्रसिद्धिं लेभे ।

कालिकापुराणीयषष्टितमेऽध्याये लिखितमस्ति यद् रम्भनामकः कश्चिद् असुरः 'शैवांशे तस्य पुत्रो जनिष्यते स च देवादीन् जित्वा दीर्घायु र्यशस्वी लक्ष्मीवांश्च भविष्यती'ति वरमेकं महादेवाल्लेभे । ततश्च गृहप्रत्यागमनावसरे पथि काञ्चित् सुरम्यां महिषीं समालोक्य पुत्रमचिरमुत्पादयितुं

महामोहवशात् तस्यां महिष्यां समासक्ते तस्मिन् महिषासुरो जज्ञे। कालक्रमेण तेन महिषासुरेण स्वभुजविक्रमतो भुवनत्रयस्य प्रभुत्वमवाप्य दक्षिणभारते काञ्चीसन्निहितमाहिषमण्डलनामकजनपदे यानि नास्तिक्य-मूलकानि पौरशासनानि प्रचारितानि तेषां तात्पर्य्यं वङ्गीयकविगुरुणा भारतचन्द्रेण वर्णितम्—

"शुन्रे गँवारलोग छोड़ दे उपास रोग
मन हुँ आनन्दभोग भैँषराज जोगमें।
आगमें लगाये घिउ काहे को ज्वलाव जीउ
हर् रोज प्यार पिउ भोग एहि लोकमें॥
आप्को लगाव भोग कामको जागाव जोग
छोड़ देव योगको मोह एहि लोकमें।
क्या एग्यान क्या वेग्यान अर्थ नाय अब जान
एहि ध्यान एहि ज्ञान और सब रोगमें॥" इति।

स्थूलतः श्लोकानामयं निष्कर्षः—"भो अनभिज्ञा ग्रामिकाः, शृणुत। मुञ्चत यूयमुपवासरोगम्। वसत च सुखेन महिषराजस्य राज्येऽस्मिन्। आहुतिदानेन होमाग्नौ कथं वृथात्मानं पीड़यथ। पिबत प्रेमामृतं नित्यं, यत ऐहिकभोग एव भोगः। उपभुङ्ग्ध्वं स्वयमेव भोग्यवस्तूनि, कुरु च कामोद्रेकं सततम्। विस्मरत योगं यतो दुःखनिवृत्तिः। मोक्षश्चेत् काम्यते तर्हि वर्त्तते लोकेऽस्मिन्नेव मोक्षः। ज्ञानं वा विज्ञानं वा—अनर्थाः खलु सर्व्वे। अद्य प्रभृति सत्यत्वेनेदमेव जानीत। यदुक्तं मया तदेव ध्येयत्वेन ज्ञेयत्वेन च गृहीत्वा धर्म्मादिकर्म्माणि व्याधिपक्षे निक्षिपत।" 'देहमात्र-चैतन्यमेवात्मे'ति लोकायतिकमतप्रतिष्ठितानि प्रागुक्तवचनानि।

अरुणाचलमाहात्म्यस्य पूर्व्वार्द्धीयदशमाध्यायादवगम्यते यत् काञ्चीं महिषमण्डलञ्चान्तरा शोणपर्व्वतकाननभूमौ महिषराजं मृगयासक्तं दृष्ट्वा-

ऽसुरपीड़िता देवास्तद्वधार्थं गौरीदेवीं प्रार्थयामासुः। सा च प्रत्युवाच—'विना कञ्चिदपराधं कस्यापि हननं तपःप्रतिकूलं भवति। अपराद्धे महिषराज एवाहं त्वां हनिष्यामी'ति। तदनन्तरं भगवती मोहिनीमूर्त्तिं परिगृह्याश्रमं परितो वटुकान् रक्षिरूपेण संस्थाप्य तानादिदेश—'अरुणाद्रीशदर्शनप्रार्थिन स्तपोनिष्ठान् ब्राह्मणांश्च विनैव सर्व्वेषामितरेषामत्रागमनं निवार्य्यतामिति। तस्मिन्नवसरे महिषराजस्यानुचरेषु मृगानुगमने तत्र प्रवेष्टुं यतमानेषु वटुकास्तान् ऊचुः—'इयं हि गौरीदेव्या योगभूमिः, अतो योगविघ्नाशङ्कया भोगभूमिगतलोकानामत्र प्रवेशनं तया निषिद्धमि'ति। श्रुत्वेदं कुतूहलपरवशा स्ते तिरस्करणीविद्ययाऽऽश्रमं प्रविश्य देवीञ्च दृष्ट्वा राज्ञे महिषाय देव्या रूपलावण्यादीनि निवेदयामासुः। मायावी महिषराजश्चाचिरं ब्राह्मणवेषं परिगृह्यारुणाद्रीशभक्तत्वेनाश्रमे लब्धप्रवेशो देवीं ददर्श। कामवशाच्च तेनोक्तम्—'अहं त्रैलोक्याधिपति र्महाराजो महिषः, अतस्ते तपःफलत्वेन वृणीष्व मामेवे'ति। एतेन देवी यथैकदा शुम्भनिशुम्भप्रेरितसुग्रीवमवोचत्—

"यो मां जयति संग्रामे यो मे दर्पं व्यपोहति।
यो मे प्रतिबलो लोके स मे भर्त्ता भविष्यति॥" इति

तथैवाधुनापि महिषमवादीत्—

"अहं बलवतो भार्य्या भविष्यामि तपश्चिरम्।
करोमि यद्यसि बली बलं दर्शय मे निजम्॥" इति।

ततो महिषासुरे रोषात् स्वरूपमवलम्ब्य देवीग्रहणे समुद्युक्त सति देवी दीप्तिमती चाष्टभुजा महिषमर्द्दिनी दुर्गा भूत्वा तं महिषं प्रचण्डमाचक्राम। ततस्त्रस्ते महिषे पलायिते देवा भगवतीं दुर्गां स्तोतुमारब्धाः? ततः किञ्चिदूर्द्ध्वं महिषराजः पुनः संख्यातीतसैन्यादिभिः सह वटुकादिरचितं

व्यूहं भेत्तुं प्रवृत्तोऽभूत्। तात्कालिकदृश्यं वङ्गीयकविवरेण भारतचन्द्रेण यथा वर्णितं तत् प्रदीयतेऽधस्तात् पाठकानां चित्तविनोदाय—

'खट्मट्-खट्मट्-खुरोत्थध्वनिकृत-जगती-कर्ण-पूरावरोधः
फोँ-फोँ-फोँ-फेँति नासाऽनिलचलदचलात्यन्तविभ्रान्तलोकः।
सप्-सप्-सप्-पुच्छाघातोच्छलदुदधिजलप्लावितस्वर्गमर्त्यो
घर्-घर्-घर्-घोरनादैः प्रविशति महिषः कामरूपो विरूपः॥
धो-धो-धो-धो-नागारा गड़्-गड़्-गड़्-गड़्-चौघड़ी-घोरघर्षै
भोँ-भोँ-भोँ-रङ्गशब्दै र्घन-घन-घन-वाजैश्च मन्दीरनादैः।
भेरी-तूरी-दमामा-दगड़्-दड़मसा-शब्द-निस्तब्धदेवै-
र्दैत्योऽसौ घोरदैत्यैः प्रविशति महिषः सार्वभौमः सहैव॥"

इति।

एवंरूपेणाग्रे प्रसरन् महिष स्तस्याऽमङ्गलकामनया देवीं स्तुवतो देवान् व्यलोकयत्। तद्दृष्ट्वा विवृद्धरोषेण महिषेण तस्य योद्धॄन् सेनाध्यक्षांश्च प्रति यच्छासनं प्रदत्तं तद्विषयमधिकृत्य पद्यमयमधस्तनकाव्यं विरचितं श्रीभारतचन्द्रेण—

'भागेगी देवदेवी पाकड़ पाकड़
इन्द्रको बाँध आगे।
नैॠतको रीत देना यमघर यमको
आगको आग लागे॥
वायुको रोध करके करतु वरुणको
जल सो और मागे।
ब्रह्मा सोँ वासुकि सोँ कभि नहि झगड़ो
ज्योँ कुवेरा न भागे॥

महिषस्यैवंविधत्र्व्वैराचरणेन देवी नितरां चुक्रोध। तस्याः क्रोधहेतोः प्रलयकालः प्रत्यासन्न इव प्रतिबभौ। तद्दृश्यवर्णनावसरे कविना लिखितम्—

'कमठ करटत फणिफणा फलटत
दिग्गज उलटत झपटत भभरे॥
वसुमती कम्पत गिरिगण नम्रत
जलनिधि कम्पत वाड़वमयरे॥
त्रिभुवन घुँटत रविरथ टुटत
घन घन छुटत येँ ओ परलयरे।
बिजली चट चट घर घर घट घट
अट अट अट अट यह क्या है रे॥

तदनन्तरं भीषणतमे संग्रामे देव्या दुर्गयाऽष्टभुजमहिषमर्द्दिनीरूपेण महिषस्य शिरसि च्छिन्ने तच्छिन्नशिरःकायात् खड्गपाणि दानवः कश्चित् समुदपादि। तदा सा दशभुजायाः दुर्गाया रूपं परिगृह्य तं दैत्यं नागपाशेन संबध्य हृदयं तस्य शूलेन व्यभिनत्। तस्मिन्नवसरे देव्या दक्षिणपादो 'मनस्ताल'नामकसिंहस्य पृष्ठे तस्या वामपादाङ्गुष्ठश्च 'महिषासुर'-नामकखड्गपाणिदानवस्य स्कन्धे सन्न्यस्तावास्ताम्। वङ्गेषु सर्व्वत्रैव मूर्त्तिरियं दुर्गोत्सवेषु संपूज्यते। कालिकापुराणस्थित ऊनषष्टितमेऽध्याये देव्या ध्यानमेवं समुपदिष्टम्—

"(ॐ) जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम्।
लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम्॥
तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम्।
नवयौवनसम्पन्नां सर्व्वाभरणभूषिताम्॥

८५

सुचारुदशनां तीक्ष्णां पीनोन्नतपयोधराम् ।
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम् ॥
मृणालायतसंस्पर्शदशबाहुसमन्विताम् ।
त्रिशूलं दक्षिणे देयं खड्गं चक्रं क्रमादधः ॥
तीक्ष्णवाणं तथा शक्तिं बाहुसङ्घेषु सङ्गतम् ।
खेटकं पूर्णचापञ्च पाशं चाङ्कुशमूर्ध्वतः ॥
घण्टाञ्च परशुञ्चापि वामेऽधः प्रतियोजयेत् ।
अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ॥
शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिकम् ।
हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ॥
रक्तरक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम् ।
वेष्टितं नागपाशेन भ्रुकुटीकुटिलाननम् ॥
सपाशवामहस्तेन धृतकेशञ्च दुर्गया ।
वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत् ॥
देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ।
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ।
स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत् ॥
उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥
आभिः शक्तिभिरष्टाभिः सततं परिवेष्टिताम् ।
चिन्तयेत् सततं देवीं धर्म्मकामार्थमोक्षदाम् ॥" इति ।

१३५२ वङ्गाब्दीयशारदपूजासंख्यकपूर्णिमापत्रिकाया आदौ देव्या यद् आलेख्यं मुद्रितं वर्त्तते तद्धि प्रागुक्तध्यानानुसारेण चित्रितम् । देव्या वामोर्ध्वहस्ते खेटकमस्ति । खेटकशब्दस्यार्थो ढालं यष्टिविशेषो वा ।

परं तु कालिकापुराणीयपद्धतेरस्त्रपूजायां 'यष्टिरूपेण खटत्वमरिसंहारकारकः' इत्यादिमन्त्रमनुसृत्य खेटकस्य 'ढालार्थकता' प्रत्याख्याता। देव्या वामाधस्तमहस्ते घण्टापरश्वो युगपद् ध्याने वर्णितत्वाद् आवरणपूजाया-ञ्चोभयोः पूजितत्वाच्च चित्रे घण्टालग्नपरशुरङ्कितः। देव्या दक्षिणाधस्तम-हस्ते शक्ति विराजते। एषा ह्यस्त्रभेदः, अतः क्षेपणीया। शक्तिः शक्तिशल्यमित्यर्थः। वङ्गभाषायां या शक्तिशेलेति कथ्यते ( Lance, dart or spear with magical power ). शक्तेराकारप्रकारा-नधिकृत्य वैशम्पायनेनोक्तम्—

"शक्ति र्हस्तद्वयोत्सेधा घण्टानादभयंकरी।
तीक्ष्णजिह्वोग्रनखरा तिर्यग्गतिरनाकुला॥
व्यादितास्या विलीना च शत्रुशोणितरञ्जिता।
अस्त्रमालापरिक्षिप्ता सिंहास्या घोरदर्शना॥
बृहत्सरुर्दूरगमा पर्व्वतेन्द्रविदारिणी।
भुजद्वयप्रेरणीया युद्धे जयविधायिनी॥
तोलनं भ्रामणञ्चैव वल्गनं नामनं तथा।
मोचनं भेदनञ्चैव षण्मार्गाः शक्तिसंश्रिताः॥" इति।

न हि विश्वामित्रस्य मतमेतत् तेन प्रकारान्तरं चिन्तितम्। ईदृशमत-भेदादस्माभिस्तु गोपीनाथस्य 'Iconography'-नामकग्रन्थस्थितशक्ति-चित्रस्य प्रतिरूपं गृहीतम्।

प्रागुक्त-'जटाजूटसमायुक्ताम्'-इत्यादिपौराणिके ध्याने भगवत्या मूल-पूजायां विनियुक्तेऽपि सन्धिपूजायां तस्या ध्यानादि समाश्रित्य महान् मतभेदो वर्त्तते। दुर्गाभक्तितरङ्गिण्यां पञ्चदशखृष्टशताब्दीयमैथिलवैष्णव-कविना विद्यापतिना समुपदिष्टं यत् सन्धिपूजायामपि "ॐ जटाजूट-समायुक्ताम्......" इत्यादिमन्त्रेण दुर्गारूपेण देव्या ध्यानं पूजा च

करणीय इति। कैश्चित्तु कालिकापुराणीय-'नीलोत्पलदलश्यामा चतुर्बाहु-समन्विता…' (६१।८८-९१)—इत्यादिमन्त्रद्वारा चामुण्डारूपेण दुर्गा ध्यायते पूज्यते च।

तृतीयसम्प्रदायेन पुनः सप्तशतीस्थितचण्डमुण्डवधप्रस्तावान्तर्गतेन "काली करालवदना विनिष्क्रान्तासिपाशिनी…' (७।५-७)—इत्यादि मन्त्रेण कालीघट्ट स्थानान्तरेषु च सा देवी चामुण्डारूपेण समुपासिता भवति। परं तु मतानैक्यं निरसितुं सन्धिपूजायां प्रागुक्तमन्त्राणां सप्रमाणविनियोगप्रदर्शनविषये विद्यापतेः श्यामाचरणपर्य्यन्ता सर्व्वं एव नितरां जोषमासते। विद्यापते र्विचारे तु बलवती युक्ति र्दृश्यते। यद्वा भवतु सन्धिपूजाव्यापारेषु कुलाचार एव प्रमाणं 'तथापि कौलिकाचारं मनसापि न लङ्घयेदि'ति स्मृतेः।

भवति च दुर्गानामनिरुक्तिः स्मार्त्तमतेन—

'दैत्यनाशार्थवचनो दकारः परिकीर्त्तितः।
उकारो विघ्ननाशस्य वाचको वेदसम्मतः॥
रेफो रोगघ्नवचनो गश्च पापघ्नवाचकः।
भयशत्रुघ्नवचनश्चाकारः परिकीर्त्तितः॥" इति।

अस्य तात्पर्य्यार्थः। दुर्गाशब्दे पञ्च वर्णाः सन्ति—'द्, उ, र्, ग्, आ'-इति। तेषु दकारो दैत्यनाशार्थकः, उकारो विघ्ननाशवाचकः, रेफ आरोग्य-वाचकः, गकारः पापनाशकः, आकारो भयशत्रूणामपसारकश्च।

तथापि वयमापस्तम्बमतेन ब्रूमः—'धर्म्मज्ञसमयः प्रमाण'मिति। न हि ब्रूमः समयमात्रं प्रमाणं, किन्तु धर्म्मज्ञा य ऋषयस्तेषां समयः प्रमाणं धर्म्माधर्म्मयोरित्यर्थः।

एवम्भूते स्मृतिसिद्धान्ते सत्यपि केचिद्वदन्ति—वेदे दुर्गाया नामादेर-सद्भावान् न भवति श्रुतिसम्मतं दुर्गायाः पूजनमिति। न हि सुचिन्ताप्रसूतं

मतमेतत्। यतो वेदोपनिषदारण्यकेषु न केवलं नाम दुर्गाया अपि तु तस्या गायत्री स्तवादिश्चोपलभ्येते। ऋग्वेदीयरात्रिसूक्ते समाम्नातम्—"स्तोष्यामि प्रयतो देवीं शरण्यां बह्वृचप्रियाम्। सहस्रसम्मितां दुर्गाम्..." इत्यादि, "तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्म्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥' इति च। अमिततेजः-शालिनीम् ऋग्वेदप्रियां दुर्गादेवीं शरणं प्रपन्ना वयं तस्याः सन्तोषविधाने यतमाना भवाम इति प्रथममन्त्रस्यार्थः। द्वितीयमन्त्रस्य सायणभाष्यानु-गततात्पर्य्यमेतत्—वह्निरिव दीप्तिशालिनी प्रत्यक्चैतन्यभूता कर्म्मजनिता-ऽपूर्व्वार्थञ्चोपासिता भवति देवी दुर्गा या स्वतेजसा नाशयति रिपुकुलं तामेव शरणमहं प्रपद्ये। हे संसारतारिणि! त्वामहं भूयो भूयो नमस्करोमि—इति।

रात्रिसूक्तेऽपर एको मन्त्रोऽप्यस्ति—"जातवेदसे सुनवाम सोमम्..." इत्यादिः। सन्ध्याविधावात्मरक्षायां पठ्यतेऽयम्। विष्णुसंहितायां भगवता विष्णुनेयं दुर्गासावित्रीति कथिता, जपहोमेऽस्य पापनाशकत्वञ्चोद्घोषितम् (५६।२-६)। मानवसंहिताया 'नन्दिनी'-नामकटीकाप्रणेत्राऽस्य व्याख्यावसरे लिखितं—'दुर्गासावित्री'—जातवेदसे सुनवाम सोममित्येषा ऋग्" इति। वैजयन्तीकारेण नन्दपण्डितेन समर्थितमेतत्। मन्त्रोऽय-मृग्वेदे (१।६६।१), तैत्तिरीयारण्यके (१०।१।१६), ऐतरेयारण्यके (१।५।२।१३), ऐतरेयब्राह्मणे (४।५।२) च समाम्नातः। इतिहेतो र्दुर्गोत्सवेषु कुलाचारतोऽद्यापि बहुभिरयम् ऋङ्मन्त्रो जपहोमयो र्विनियुज्यते।

रात्रिसूक्तम् ऋग्वेदस्य खैलिकांशविशेषः। अतो नैतद् ऋग्वेदान्तर्गत-मिति कैश्चिदुच्यते। किं तु सायणाचार्य्यादिभिरिव प्रमाणपुरुषैरेतद् ऋग्वेदस्यांशत्वेन गृहीतं यत ऋग्विधानब्राह्मणे (४।१६) रात्रिसूक्तस्य

पाठनियमो विहितो वर्त्तते। तान्त्रिकसम्प्रदायेऽपीदं देवीसूक्तमिवा-चरितम्—

"रात्रिसूक्तं जपेदादौ मध्ये चण्डीस्तवं पठेत्।
प्रान्ते तु जपनीयं वै देवीसूक्तमिति क्रमः ॥" ( गुप्तवती )

इति मरीचिकल्पे स्मृतत्वात्।

तैत्तिरीयारण्यकस्थितदशमप्रपाठकस्य प्रथमानुवाके दुर्गागायत्री समाम्नाता —"कात्यायनाय विद्महे कन्याकुमारि धीमहि। तन्नो दुर्गिः प्रचोदयादि"ति। अस्य पूर्वपीठिकायां सायणाचार्य्येणोक्तम्—"हैमप्रख्यामिन्दुखण्डाङ्क-मौलिमित्यागमप्रसिद्धमूर्त्तिधरीं दुर्गां प्रार्थयते" इति। ततोऽस्य भाष्ये तेनैव लिखितम्—'कृत्तिं वस्त इति कात्यो रुद्रः। ( रेफलोपश्छान्दसः )। स एवायनमधिष्ठानं यस्या दुर्गायाः सा कात्यायनी। कुत्सितमनिष्टं मारयति निवारयतीति कुमारी। कन्या चासौ कुमारी चेति कन्याकुमारी। दुर्गि दुर्गा। लिङ्गादिव्यत्ययः सर्व्वत्र च्छान्दसो द्रष्टव्यः" इति। अत एव सायणाचार्य्यमतेन तन्त्रानुगतायामागमिकभाषायामियं हि मन्त्रस्य रूप-सिद्धि र्भवति—"कात्यायन्यै विद्महे कन्याकुमार्य्यै धीमहि। तन्नो दुर्गा प्रचोदया"दिति। किञ्च देव्युपनिषदि दुर्गायाः स्तोत्रमपि दृश्यते यथा—

"यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्त्तिता।
दुर्गात् संत्रायते यस्माद् देवी दुर्गेति कथ्यते ॥
प्रपद्ये शरणं देवीं दुँ दुर्गे दुरितं हर।
तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् ॥
नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥" इति।

आथर्वणरहस्ये वनदुर्गोपनिषत् समुद्धृता दृश्यते। विराटनगरं प्रति गमनात् प्राग् युधिष्ठिरकृता दुर्गापूजा विदितैव सर्व्वेषाम्। इयमपि वनदुर्गा। सारदातिलकस्यैकादशपटलेऽस्याः पूजापद्धतिरुपनिबद्धा वर्त्तते। महाभारतं

स्मृतिपदवाच्यमतोऽस्य श्रुतिमूलकत्वं नानुपपन्नं भवति। अत एव वेदे दुर्गाया नामादि न विद्यत इति नितराममूलकं हि वचनम्। यतः संहिता-ब्राह्मणारण्यकोपनिषदात्मको वेदश्चेत् तर्हि दुर्गाया नामादि सर्व्वत्रैवोपलभ्यते।

दुर्गाया दुर्गोत्सवस्य वा प्राचीनत्वं सर्व्वजनप्रियत्वमधिकृत्य नास्ति कश्चित् सन्देहावसरः। यो वङ्गेषु दुर्गोत्सवः स हि वङ्गवहिर्भूतभारतीय-प्रदेशेषु नवरात्रव्रतम्। ऐतरेयब्राह्मणे कात्यायनश्रौतसूत्रे च नवरात्रव्रत-विधानं दृश्यते। अयं कात्यायनो न हि पाणिने र्वार्त्तिककारो न वा गोभिलपुत्रो गृह्यासंग्रहकारः। अयं तु यजुर्वेदीयाऽनुक्रमणीप्रणेता जातीय-सूत्रकारश्च। अतः पूर्व्वोक्तकात्यायनद्वयमपेक्ष्य कात्यायनोऽयं महता कालेन प्राचीनो भवति। अपि च शौनककृतबृहद्देवतायां नवरात्रविषयकं दुर्गाया विवरणमप्युपलभ्यते।

वङ्गेषु दुर्गोत्सवपद्धतयो विविधाः प्रचरन्ति यथा मत्स्यसूक्तसम्मता, स्मृतिसम्मता, कालिकापुराणसम्मता, तन्त्रसम्मता चेति। इमा मिश्रपूजाः, यत आसु पठ्यन्ते वैदिकतान्त्रिकपौराणिकस्मार्त्तमन्त्राः। वङ्गवाह्य-प्रदेशेषु नवरात्रव्रतमपि प्रागुक्तरूपं भवति। देवीपुराणे देवीभागवते चास्याः पूजाया विधानमस्ति (३।२४-२७)। एतदपि दुर्गोत्सव इव शरदि मधुमासे चानुष्ठीयते। विष्णुक्रान्तान्तर्गतवङ्गादिदेशेषु देव्या दुर्गायाः पूजनं सर्व्वत्रैव घटं पटं प्रतिकृतिं वा समाश्रित्य सम्पद्यते। रथक्रान्ताया-मश्वक्रान्तायाञ्च प्रायशो दुर्गामन्त्रं विलिख्य तत्रैव पूजाकर्म्म समनुष्ठीयते। अतो हि केचिद् वदन्ति यद् वरेन्द्रभूमेः षोड़शखृष्टशताब्दीयेन राज्ञा कंस-नारायणेन "भातुरिया-परगण"-स्थित-नृपतिकल्प-भूस्वामिवर्य्यजगन्नारायणेन मृन्मय्या धातुमय्या च दुर्गाप्रतिकृतेः पूजनं समारब्धम्। ततः पूर्व्वं भारते प्रतिमागठनं प्रचरन्नासीत्। न हि युक्तिमूलकं वचनमेतत्। यतः

स्मर्य्यते हि सप्तशत्यां—"तौ तस्मिन् पुलिने देव्याः कृत्वा मूर्त्तिं महीमयी-मि"ति ( १३।७ )। तथा पुनः स्मर्य्यते बृहन्नन्दिकेश्वरेऽपि—"महीमयी च मूर्त्तिं मे पुत्त्रायुर्धनवृद्धये'—इति। किञ्च पाणिनिनाऽपि सूत्रितम्—"इवे प्रतिकृतौ" ( ५।३।९६ ), "जीविकार्थे चापण्ये" ( ५।३।९९ ) चेति। सूत्रस्थ'प्रतिकृति'शब्दस्य व्याख्यायाम् अष्टमखृष्टशताब्दीयेन काशिकान्यासकृता जिनेन्द्रबुद्धिना लिखितं—"काष्ठादिमयं हि यत् प्रतिच्छन्दकं सा प्रतिकृतिरुच्यते" इति। सूत्रस्योत्तरार्द्धे प्रयुक्त'स्यापण्य'-शब्दस्यायमाशयः—'विक्रेयप्रतिकृतौ कन्लोपः प्रतिषिध्यते यथा कुम्भकारो विक्रयार्थं रामकं सीतिकां दुर्गिकां शिवकादीन् निर्मिमीते'—इति। अस्य सूत्रस्य प्रौढ़मनोरमायां भट्टोजिदीक्षितेनोक्तम्—"ईदृशमेव विषयमभिप्रेत्य पठन्ति—रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक्। अस्मिन् पद्ये योऽपशब्दान् न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक्। इति। 'अपण्ये' इत्युक्तत्वात् पण्ये हस्तिकानितिवद् रामकं सीतिकां लक्ष्मणकमिति प्रयोगा एव साधव" इति तत्त्वबोधिनी। एतेन समुपपद्यते यत् पाणिनेः पूर्व्वमपि प्रतिमानिर्म्माणप्रथा नूनमेव विद्यमाना आसीत्। एवंरूपायां वस्तुगत्यां षोड़शखृष्टशताब्द्यामेव वङ्गेषु प्रतिमानिर्म्माणं समारब्धमभूदिति मतं कथं स्थैर्य्यमापद्येत। यद्वा भवतु, प्रायेणास्माभि दुर्गारूपेण दुर्गायां पूजितायामपि केवलं सन्धिपूजायां चामुण्डारूपेण वयमुपास्महे। नवरात्र-व्रतिनस्तु तस्मिन्नवसरे देवीमम्बिकारूपेण चामुण्डारूपेण वा पूजयन्ति। एतै र्व्रतिभिश्चण्डीपाठो दुर्गापाठ इत्युच्यते।

देव्याः सिंहवाहिनीत्वं वेदे यद्यपि न दृश्यत तथापि तद्विषयकं श्रौत-प्रमाणं कल्प्यमनुमेयं वा। स्मर्य्यते च देवीपुराणे—

"सिंहमारुह्य कल्पान्ते निहतो महिषो यतः।
महिषघ्नी ततो देवी कथ्यते सिंहवाहिनी ॥ ( ४५अः ) इति।

अविद्यमाने श्रौतप्रमाणे कथमेवं पुराणे स्मर्य्यते। रघुनन्दनतः पूर्व्वभवस्य वेणीनाथस्य दुर्गापूजापद्धतौ समुद्धृतो वर्त्तते श्लोक एकः स्कान्दस्य—

"श्रुतिस्मृती उभे नेत्र पुराणं हृदयं स्मृतम्।
पुराणशून्यो हृच्छून्यः काणान्धावपि तौ नरौ॥ इति।

स्कन्दपुराण एवं स्मृतं यत आथर्व्वणे श्रूयते—

"ऋचः सामानि च्छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्व्वे दिवि देवा दिविश्रितः॥ (११।६।२४)
इति।

शातपथे च श्रूयते—"पुराणं वेदः सोऽयमिति किञ्चित् पुराणमाचक्षीत" (१३।४।३।२३) इति। अत एव प्रत्यक्षस्य क्लृप्तस्य वा श्रुतेरभावेऽपि वेदमूलकत्वमस्य सदैवानुमातव्यमस्माभिः।

महादेवः स्वयमेव दशभुजाया दुर्गायाः सिंहरूपवाहनमिति कैश्चिदुच्यते। नैतत् समीचीनतया प्रतिभाति। यतो महादेवो हि जगद्धात्रीरूपाया दुर्गाया वाहनम्। तस्या आवरणपूजायां स्मर्य्यते—"ॐ वज्रनखदंष्ट्रायुधाय महासिंहासनाय हूँ फट् नमः महासिंहरूपशिवश्रीपादुकां पूजयामि नमः" इति। दुर्गाया दशभुजाया वाहनं तु विष्णोरंशजातो 'मनस्ताल'-नामकः सिंहः। प्रामाणिकी चोक्ति र्वर्त्तते—"सिंहस्तस्या मनस्तालः सख्यौ च विजयाजये" इति। कालीविलासतन्त्रस्याष्टादशपटले स्मर्य्यते—

"सिंह त्वं हरिरूपोऽसि स्वयं विष्णु र्न संशयः।
पार्वत्या वाहनं त्वं हि ततस्त्वां पूजयाम्यहम्॥" इति।

शिवांशेन महिषासुरस्य सम्भूतत्वादत्र महिषासुर एव शिव इति वक्तव्यम्। कालिकापुराणीये षष्टितमेऽध्याये देवीं प्रति भगवतो वचनादेतद्धि समुपपद्यते। स्मृतञ्च तत्र—

"हरि हरिस्वरूपेण न त्वां वोढुं क्षमोऽधुना ।
ममायं माहिषः कायस्तव वोढ़ा भविष्यति ॥" इति ।

देव्या विविधाः शाम्भव्यो गायत्र्यः श्रूयन्ते, ता यथा—

(१) 'ॐ नारायण्यै विद्महे दुर्गायै धीमहि । तन्नो गौरी प्रचोदयात् ॥' यद्यप्येषा जयदुर्गाया गायत्री तथापि कालीघट्टेऽन्यत्र च दुर्गापूजायामियं व्यवह्रियते ।

(२) 'ॐ नारायण्यै विद्महे दुर्गाय धीमहि । तन्नो देवी प्रचोदयात् ॥' श्रीकुलाश्रितैरुपासकै मन्त्रोऽयं प्रयुज्यते । कालीकुले त्वस्य विनियोगो नितरां विरल एव ।

(३) 'ॐ महादेव्यै विद्महे दुर्गायै धीमहि । तन्नो देवी प्रचोदयात् ॥' इयं हि जगद्धात्र्या गायत्री । विष्णुक्रान्तायां कालीकुलेऽस्या विनियोगो दृश्यते । तन्त्रसारमतेनैषा दुर्गागायत्री ।

(४) 'ॐ चण्डिकायै विद्महे दुर्गायै धीमहि । तन्नो गौरी प्रचोदयात् ॥' चण्डीघटमाश्रित्य ये नवरात्रव्रतमाचरन्ति तेषु व्यवहारोऽस्या दृश्यते । केवलं काश्मीरप्रथां सन्दृश्य गौड़क्रमेण कैश्चिदियं विनियुज्यते ।

(५) 'ॐ भगवत्यै विद्महे दुर्गायै धीमहि । तन्नो गौरी प्रचोदयात् ॥' गौड़क्रमस्य कालीकुले कदाचिदस्याः प्रयोगो दृश्यते ।

दशभुजाया दुर्गादेव्याः पूजामन्त्रः—'ॐ ह्रीँ दुँ दुर्गायै नमः ।'

'मायात्रिकर्णविन्द्वाढ्यो भूयोऽसौ सर्गवान् भवेत् ।
पञ्चात्मकः प्रतिष्ठावान् मारुतो भौतिकासनः ।
तारादिहृदयान्तोऽयं मन्त्रो वस्वक्षरात्मकः ॥'

इति मन्त्रकोषस्य वचनादुद्धृतोऽयं मन्त्रः । जगन्मोहनतर्कालंकारकृत-नित्यपूजापद्धतौ 'दुँ'-स्थाने 'दूँ'—इति वक्तव्यमभिप्रायेण लिखितमस्ति—"वरदातन्त्रे—

द-दुर्गावाचकं देवि ऊकारश्चापि रक्षणे ।
विश्वमाता नादरूपा कुर्वर्थो बिन्दुरूपकः ।
तस्मात्तेनैव वीजेन दुर्गामाराधयेच्छिवे ॥ दूँ ।" इति ।

यद्वा वदतु बौद्धपुरुषोत्तमदेव स्तन्त्रे तु केवलं (ह्रस्वस्य) उकारस्यैव रक्षणाधिपत्वं स्वीकृतं न तु (दीर्घस्य) ऊकारस्य । उक्तञ्च वर्णबीज-प्रकाशे—'तवर्गतृतीयपञ्चमस्वरबिन्दुयोगेन' 'रक्षणाधिप उकारः पञ्चम-स्वरः' इति च । अत एव प्रागुक्तश्लोके (दीर्घ)ऊकारः प्रामादिको यतो दुँ-बीजमेव ततः समुद्ध्रियते न तु दूँ-बीजम् ।

'थान्तवीजं समुद्धृत्य वामकर्णाभिभूषितम् ।
इन्दुबिन्दुसमायुक्तं वीजं परमदुर्ल्लभम् ॥

इति विश्वसारीयवचनाद् दूँ-बीजमप्युपलभ्यते, तत्र च यद्यपि 'उभयप्राप्तौ विकल्पः' इति न्यायस्यावकाशोऽस्तीति सत्यं, तथापि 'प्रपद्ये शरणं देवीं दुं दुर्गे दुरितं हर' (देव्युपनिषत्), 'ॐ ह्रीँ श्रीँ दुँ दुर्गायै नमः' (वनदुर्गोपनिषत्) इत्यादिश्रुतिषु "दुँ"—इति समाम्नातत्वाद् 'दुँ-बीज-मेवास्माभि र्ग्रहणीयम् ।

दशभुजाया दुर्गाया नानामूलमन्त्राः प्रचलन्ति । ते यथा—

(१) 'ह्रीँ' । मन्त्रोऽयं हादिमतावलम्बिषु प्रायशः प्रचरति । कादि-मतावलम्बिष्वपि क्वचिदस्य प्रयोगो दृश्यते ।

(२) 'महिषमर्द्दिनी स्वाहा' । पण्डितप्रवरकृष्णचन्द्रस्मृतितीर्थकृत-कालिकापुराणोक्तबृहन्नन्दिकेश्वरपुराणोक्तदुर्गापूजापद्धतावस्य मन्त्रस्य पाठो वर्त्तते । दशभुजाया दुर्गायाः पूजायां तु प्रयोगोऽस्य न संगच्छते । यतोऽष्टभुजाया महिषमर्द्दिन्याः पूजायां "गारुड़ोपलसन्निभां मणिमयकुण्डल-मण्डिताम्……" इत्यादिध्यानमसौ मूलमन्त्रश्च प्रयुज्येते ।

(३) 'ॐ ऐँ ह्रीँ स्वाहा ॐ'। 'प्रणवो वाग्भवो माया वह्निजाया ततो ध्रुवमि'त्यादिवचनादुद्धृतो मन्त्रोऽयम्। वङ्गेषु बहुषु स्थानेषु प्रयोगोऽस्य श्रूयते।

(४) 'ॐ ऐँ ह्रीँ क्लीँ ह्रीँ ह्रीँ क्लीँ नमः।'

"वेदादिवाग्भवश्चैव माया कामस्तथैव च।
शिवः पृथ्वी वामनेत्रं नामबिन्दुविभूषितम्।
माया कामो नमः पश्चान् मूलमन्त्र इति स्मृतः॥"

इति वचनतः समुद्धृतोऽयं मन्त्रः। एष हि चण्डीदेव्या नवार्णकमन्त्र-विशेषः। वङ्गानां नानास्थानेषु मन्त्रोऽयं विनियुज्यते।

(५) "ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे।" दुर्गोपासनाकल्पद्रुमे दुर्गाया मूलमन्त्रत्वेन समुल्लिखितोऽयम्।

"वाङ्माया ब्रह्मसूस्तस्मात् षष्ठं वक्त्रसमन्वितम्।
सूर्य्योऽवामश्रोत्रबिन्दुसंयुक्तष्टात्तृतीयकः॥
नारायणेन संमिश्रो वायुश्चाधरयुक्ततः।
विच्चे नवार्णकोऽणुः स्यान्महदानन्ददायकः॥"

इति श्लोकाभ्यां कृतोद्धारो मन्त्रोऽयम्। एष पुनश्चण्डीदेव्या एकः प्रसिद्ध-नवार्णमन्त्रः। विष्णुक्रान्तान्तर्गतवङ्गेषु प्रयोगोऽस्य नास्ति। मन्त्रगर्भ-श्लोकद्वयस्य त्वयमाशयः—"'वाक्' वाग्भवबीजम् (ऐँ), माया ह्रीँ, ब्रह्मसूः कामः क्लीँ, तस्मात् प्रथमवर्णात् ककारात् षष्ठमक्षरं चकारस्तद्-वक्त्रेण मुखवृत्तेन आकारेण समन्वितं 'चा' इति यावत्, सूर्य्यो मः, अवामश्रोत्रं पञ्चमस्वर उकारः बिन्दुरनुस्वारः (मुँ); टात् तृतीयको वर्णो डकारः स च नारायणेन आकारेण संमिश्रः (डा), वायु र्यकारः स च अधरेण द्वादशस्वरेण युक्तः (यै)"। उक्तञ्च वर्णबीजप्रकाशे—

अधर ऐकारो द्वादशस्वर इति। एतेन 'ऐँ ह्रीँ क्लीँ चामुण्डायै'—इत्यंशपर्य्यन्तं मन्त्रो व्याख्यातः। अधुना 'विच्चे'-पदस्यार्थावधारण-पूर्व्वकं समग्रो मन्त्रो व्याख्येयः—वेत्तिरूपं विदज्ञान इति धातोः सम्पदादित्वाद् भावे क्विपि 'वित्' ज्ञानम्। चकार आत्मशक्तिवाचकत्वाल्लक्षणया-ऽविद्यावाचक एव। आकारश्च ब्रह्मविष्णुमहेश्वरवाचक इति 'विचा' इति रूपसिद्धिस्तत्समृद्धौ विच्चे। अत उक्तं भवति—ऐँ वागीश्वरि ह्रीँ महामाये क्लीँ कामदायिनि विच्चे तुरीयब्रह्मतच्छक्तिस्तदुपहित-ब्रह्मविष्णु-शिवात्मिके तुभ्यं चामुण्डायै धीमहि योऽहं सोऽसौ योऽसौ सोऽहमिति वयं ध्यायेम। 'त्वं वा अहमसि भगवो देवते, अहं च त्वमसि भगवो देवते' इति श्रुतेः। तथा हि मन्त्रवर्णाः—

'नमस्तुभ्यं नमो मह्यं तुभ्यं मह्यं नमो नमः।
अहं त्वं त्वमहं सर्व्वं जगदेतच्चराचरम्॥' इति। इति।

(६) 'जयन्ती मङ्गला काली भद्रकाली कपालिनी।' अस्य मन्त्रस्य प्रथमार्द्धमधिकृत्य नास्ति कश्चिद् मतभेदः। उत्तरार्द्धविषये तु यन्मतानैक्यं वर्त्तते तदुपरिष्टात् समुपन्यस्यते—'दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते'—इति कालिकापुराणमतेन, 'दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते'—इति मार्कण्डेयपुराणमतेन वा, 'दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते'—इति मत्स्यसूक्त-देवीपुराणमताभ्यां वा पठनीयं भवति।

दुर्गाभक्तितरङ्गिण्यां मैथिलकविना विद्यापतिनोक्तम्—"स्वधापूजानन्तरं स्वाहापूजालिखनात् स्वाहान्तपाठनिर्णयो युक्तः' इति। अतस्तन्मतेन मन्त्रस्य चरमार्द्धस्थितेऽन्तिमचरणे "स्वधा स्वाहा नमोऽस्तु ते" इति पठनीयम्। तिथितत्त्वे तु पाठोऽयं प्रत्याख्यातः। तत्र रघुनन्दनेन लिखितम्—"तन्न, मत्स्यसूक्तविरोधात्। तथा च

'पञ्चोपचारै र्विधिवज्जयन्त्याद्यास्ततः परम् ।
जयन्ती मङ्गला काली भद्रकाली कपालिनी ॥
दुर्गा शिवा क्षमा धात्री पूजनीया प्रयत्नतः ।
दक्षप्रान्ते ततो देव्याः स्वाहां चैव स्वधां तथा ॥'

इति ( मत्स्यसूक्तम् ) ।

न च तत्रापि तथापाठक्रमः, तथात्वे पञ्चमाक्षरस्य लघुत्वानुपपत्तेः । दुर्गामाहात्म्यान्तर्गतार्गलायां तथापाठदर्शनात् ।" इति ।

रघुनन्दनस्यायमाशयः—मार्कण्डेयपुराणे पठितम्—"दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते" इति । अतो विद्यापतिसूचितः "स्वधा स्वाहा नमोऽस्तु ते" इति पाठो हेयः । कालिकापुराणे तु स्मर्य्यते—

"जयन्तीं मङ्गलां कालीं भद्रकालीं कपालिनीम् ।
दुर्गां क्षमां शिवां धात्रीं स्वधां स्वाहां च पूजयेत् ॥" इति ।

एवं हि कालिकापुराणोपरि प्रतिष्ठितो विद्यापतेः सिद्धान्तः । अत एव विद्यापतिमनादृत्य कालिकापुराणमेव प्रत्याख्येयम् । देवीपुराणे पुनः स्मृतम्—"दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते" इति । श्लोकोऽयं तिथितत्त्वस्थितप्रसङ्गे समुद्धृतो वर्त्तते । एवञ्च दुर्गायाः पूजानन्तरं मत्स्यसूक्तमतेन देवीपुराणमतेन वा शिवाया उत वा मार्कण्डेय-पुराणादिमतेन क्षमायाः पूजनं भविष्यतीति विषये कथं रघुनन्दन-स्तूष्णीमास्ते । विषयेऽस्मिन् रघुनन्दनस्य समाधानं कथमपि नोपादेयं प्रतिभाति ।

स्वाहान्ततां स्वधान्तताञ्चाश्रित्य व्यवस्थितविकल्पो बोद्धव्य इत्यस्माभि र्मन्यते । एतदुक्तं भवति यत् कालिकापुराणसम्मतपूजायां 'स्वधा स्वाहा

नमोऽस्तु ते' इति पठितव्यं चण्डीघटं दुर्गायन्त्रं वा समाश्रित्य ये नवरात्रव्रतमाचरिष्यन्ति तैरवश्यं 'स्वाहा स्वधा नमोऽस्तु ते' इति वक्तव्यमिति। क्षमाशिवयोः पूजाविषयेऽपि व्यवस्थितविकल्पः समाश्रयनीयः। एतदप्युक्तं भवति यत् कालिकापुराणसम्मतायां पूजायां नवरात्रव्रते वा 'दुर्गा क्षमा शिवा धात्री'—इति पठितव्यं देवीपुराणसम्मतायां मत्स्यसूक्तसम्मतायां वा पूजायां तु 'दुर्गा शिवा क्षमा धात्री' इति वक्तव्यमिति। स्मार्त्तपूजायां पुन 'स्तुल्यबलविरोधे विकल्पः'—इति न्यायेन प्रागुक्तो यः कोऽपि पाठो ग्रहणीयः। तत्र च लेशतोऽपि फलन्यूनता न शङ्कनीया।

मन्त्रस्थितजयन्तीप्रभृतीनेकादशशब्दानधिकृत्य दुर्गाप्रदीपे शैवनीलकण्ठेनोक्तम्—"एतादृशपूर्वोक्तमहागुणवती या त्वमसि ततस्ते तुभ्यं नमः"—इति। अस्यायमाशयः—जयन्तीप्रभृतीनि पदानि देव्या गुणवाचकानि। गुणनिर्द्दिष्टशब्दैः सह तु नामापि संसृष्टं दृश्यते, यथा जगद्धात्री सर्व्वमङ्गला चेत्यादि। यद्वा भवतु, पदानामेषामत्र व्याख्याकरणं सर्व्वथा नैवाप्रासङ्गिकम्।

(क) जयन्ती। अतिशयेनारीन् जयतीति जयन्तः (उण् ३।१२८) शिवः (मत्स्यपु० ५।३०) क्रमदीश्वर इति यावत्, तत्पत्नी जयन्ती। अकर्म्मक'जि'धातोरुत्कर्षार्थत्वं तु समालोक्य नीलकण्ठेनोक्तम्—'जयन्ती सर्वोत्कृष्टेत्यर्थः'—इति। परं तु कथं सा सर्वोत्कृष्टेत्यनुसन्धेयम्। जयन्तीदेवी भगवतः क्रमदीश्वरस्य शक्तिः। क्रमदीश्वरोऽनुलोमविलोमपरिणामस्याधिष्ठात्री देवता (presiding deity of evolution and involution). श्रीहट्टान्तर्गतजयन्तीपुरं निकषा 'फालयोड़े'त्याख्ये ग्रामे क्रमदीश्वरभैरवेण समं देवी जयन्ती प्रकटिता वर्त्तते। आनुलोम्येन क्रमविकाशत्वात् प्रातिलोम्येन च क्रममुक्तिदातृत्वाच्चास्याः सर्वोत्कृष्टत्वं कल्पनीयम्। 'अपां स्वरूपस्थितया त्वयैतदाप्याय्यते कृत्स्नमलङ्घ्यवीर्य्ये'

(चण्डी ११।४)—इति मन्त्रः क्रमविकाशं प्रमाणयति। क्रममुक्तिदातृत्वस्य प्रमाणानि, यथा—

'धर्म्म्याणि देवि सकलानि सदैव कर्म्मा-
ण्यत्यादृतः प्रतिदिनं सुकृती करोति।
स्वर्गं प्रयाति च ततो भवतीप्रसादा-
ल्लोकत्रयेऽपि फलदा ननु देवि तेन॥'
(चण्डी ४।१५) इति।

'ततो विष्णुपुरं गत्वा पुनः सायुज्यमाप्नुयात्॥'
(स्मृति) इति।

'तदुपर्यपि वादरायणः सम्भवात्' (वेदान्तसूत्रम् १।२।२५) इति च।

(ख) मङ्गला सर्व्वमङ्गला। नामैकदेशग्रहणे नाममात्रग्रहणम्, यथा भामा सत्यभामेति (कलाप—आ-२, टीका)। "सर्व्वमङ्गला"—इत्यभिधानस्य निरुक्ति र्वर्त्तते देवीपुराणे—

'सर्वाणि हृदयस्थानि मङ्गलानि शुभानि च।
ददाति चेप्सितांल्लोंके तेन सा सर्वमङ्गला॥"
(४५ अध्याये) इति।

(ग) काली कालिकेति पर्य्यायशब्दौ। तथा च महानिर्व्वाणतन्त्रम्—

"कलनात् सर्व्वभूतानां महाकालः प्रकीर्त्तितः।
महाकालस्य कलनात् त्वमाद्या कालिका स्मृता॥" इति।

(घ), (ङ) भद्रकाली कपालिनी च। रहस्यागमे नामद्वयस्यार्थो द्रष्टव्यः।

(च) दुर्गा दुर्गतिनाशिनी (दुर्गोपनिषत्)। तथा च देवीपुराणम्—

"स्मरणादभये दुर्गे तारिता रिपुसङ्कटे।
देवाः शक्रादयो यस्मात् तेन दुर्गा प्रकीर्त्तिता॥"
(३७ अ०) इति।

(छ) क्षमा। क्षमो विष्णुः (विष्णुसहस्रनाम—महाभारतम् १३।१४६।६०)। क्षमा नारायणी दुर्गा। सर्वमङ्गलमाङ्गल्ये···नारायणि नमोऽस्तु ते॥' (मार्कण्डेयपु० ६१।६)।

(ज) शिवा दुर्गा।

"शिवो हि मोक्षवचनश्चाकारो दातृवाचकः।
स्वयं निर्व्वाणदात्री या सा शिवा परिकीर्त्तिता॥"

(झ) धात्री जगद्धात्री। नामैकदेशग्रहणे नाममात्रग्रहणम्, यथा भामा सत्यभामेति। (कलाप—आ २, टीका)।

(ञ) स्वाहा। 'आ'कारः पितामहः। सुष्ठु आं पितामहं ब्रह्माणं जिहीते गच्छति (ओहाङ् गतौ—पा० १०६८) या सा स्वाहा ब्रह्माणी। 'आतोऽनुपसर्गे कः' (पा० ३।२।३)। 'ब्रह्माणी कुरुते सृष्टिं न तु ब्रह्मा कदाचन' (कुब्जिकातन्त्रस्य प्रथमपटले)। 'विसृष्टौ सृष्टिरूपा त्वम्' (चण्डी); 'हंसयुक्तविमानस्थे ब्रह्माणीरूपधारिणि (चण्डी)। (ट) स्वधा। 'अकारो वासुदेवः। सुष्ठु अं वासुदेवं दधाति पोषयतीति स्वधा लक्ष्मीः। तथा च कुब्जिका—'वैष्णवी कुरुते रक्षां न तु विष्णुः कदाचन' इति। 'या देवी सर्व्वभूतेषु लक्ष्मीरूपेण संस्थिता···' इति सप्तशती च।

(७) "ॐ दक्षयज्ञविनाशिन्यै महाघोरायै योगिनीकोटिपरिवृतायै भद्रकाल्यै नमो ह्रीँ दुर्गायै नमः।" इत्येवं पाठोऽस्य मन्त्रस्य वर्त्तमान-पद्धतिग्रन्थे लभ्यते। रघुनन्दनकृत-पूजाप्रामाणतत्त्वे तु 'ह्रीँ'-पदात् परम् 'ॐ'मितिपदं दृश्यते। आकारोऽस्य मन्त्रस्य न ज्ञातोऽस्माभिः।

"भद्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी।
आविर्भूता महाघोरा योगिनीकोटिभिः सह॥"

इति ब्रह्मपुराणीयश्लोकं सन्दृश्य प्राचीनै र्मान्त्रिकैरस्य समुद्धरणं कृतमिति सम्भाव्यते। वङ्गेषु मन्त्रोऽयं बहुषु स्थानेषु प्रचलति।

(८) 'ह्रीँ दुर्गे दुर्गे रक्षणि स्वाहा।' केरलक्रमेऽस्य बहुलप्रचलनमस्ति। कालीविलासतन्त्रस्य विंशतिमपटले मन्त्रोऽयमुद्धृतः। दशाक्षरोऽयं मन्त्रः।

(९) 'ॐ ह्रीँ श्रीँ दुँ दुर्गायै नमः।' किरातरूपशिवस्य शक्तिरियम्। 'हेमप्रख्या इन्दुखण्डाङ्कमौलिः"—इति श्रुतिप्रसिद्धमूर्त्तिमत्या वनदुर्गाया मूलमन्त्रोऽयम् ( Unpublished Upanishads—अप्रकाशितोपनिषद्-ग्रन्थस्य ४३१ पृष्ठे वनदुर्गोपनिषद् द्रष्टव्या )।

(१०) 'ॐ दुर्गे दुर्गे रक्षणि स्वाहा।' दशाक्षरविद्यात्वेन प्रसिद्धोऽयं मन्त्रः। मन्त्रकोषोऽस्योद्धारप्रकारं दर्शयति—

"तारो 'दुर्गे' युगं रक्तमन्त्यं ढान्तं सलोचनम्।
द्विठान्ता जयदुर्गेयं विद्या वेद्या दशाक्षरी॥" इति।

सारदातिलकस्य ११ पटलेऽयं प्रकारान्तरेण समुद्धृतः। यद्यपि जयदुर्गाया मन्त्रोऽयं तथापि दशभुजाया दुर्गायाः पूजायामयं प्रायशो विनियुज्यते। रघुनन्दनकृततिथितत्त्वे लिखितमस्ति—'ध्यायेद्दशभुजां देवीं दुर्गातन्त्रेण पूजयेदि"ति। अस्य व्याख्यायां काशीरामवाचस्पतिनोक्तम्—"दुर्गातन्त्रसंज्ञको दशाक्षरदुर्गामन्त्रः…। तेन हि 'ॐ दुर्गे दुर्गे रक्षणि स्वाहे'ति मन्त्रेण पूजयेदि'ति। मन्त्रस्यायमर्थः—'हे दुर्गे हे दुर्गे हे रक्षणि देवादिपोषिणीत्वात् तुभ्यं स्वाहा'—इति। 'रक्षणि'पदस्य निरुक्तिः—'रक्षणमस्य पोषणादिगुणविशेषत्वेन विद्यत इति मत्वर्थीयाचा रक्षणस्ततो व्यत्ययेन ङीपि स्त्रियां रक्षणी तत्सम्बुद्धौ 'रक्षणि' इति। भगवतीगीतायां देवी स्वयं प्रोवाच—"भूत्वा जगदिदं कृत्स्नं पालयामि महामते" इति ( ४।१३ )।

## दुर्गाया हवनमन्त्राः ।

(१) 'ॐ दुर्गे दुर्गे रक्षणि स्वाहा ।' कालीघट्टेऽन्यत्र चानेन मन्त्रेण हूयते ।

(२) 'ॐ जयन्ती मङ्गला काली भद्रकाली कपालिनी···नमोऽस्तु ते ॥ स्वाहा ।' साम्प्रदायिकनियमानुसारतो मन्त्रस्योत्तरार्द्धं पठ्यते ।

(३) 'ॐ अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ स्वाहा ।'

अयं हि मुद्रितयजुर्वेदस्य मन्त्रांशः ( २३।१८ ) । औवटभाष्यमतेनैतस्य मन्त्रस्य पाठ एवंरूपो भवति—'अम्बे अम्बिके अम्बाले'—इति । सुप्राचीनकाले तु याज्ञिकाः पेठुः—'अम्बे-अम्बाले-अम्बिके' इति (पाणिनि-प्रोक्त-६।१।११८-सूत्रीयकाशिका द्रष्टव्या ) । हवनक्रियायां मन्त्रस्यास्य विनियोगो हलायुधेन प्रवर्त्तितोऽभूत् ।

(४) वङ्गेषु बहुत्रैव दुर्गासावित्रीद्वारा हवनं निष्पाद्यते । 'ॐ जातवेदसे सुनवाम सोमम्······' इत्यादिरात्रिसूक्तमेव दुर्गासावित्री । स्मृतिकारस्य विष्णो र्मतेन दुर्गाहोमेषु मन्त्रोऽयं प्रयुज्यते । स्मार्त्त दुर्गोत्सवेषु च व्यवहारोऽस्य प्रायशो दृश्यते ।

आख्यानान्ते गायत्रीमन्त्रादे र्विवरणं प्रदत्तम् । अधुना तु पूजाप्रयोग-पद्धतेः संशयावृतस्थलानां सन्देहनिरासे यतमाना भवामः । कुलार्णवमतेन सर्व्वपूजास्वपरिहार्य्याः पञ्च शुद्धयो यथा—आत्मशुद्धिः, स्थानशुद्धिः, मन्त्रशुद्धिः, द्रव्यशुद्धिः, देवताशुद्धिश्चेति । एतेषु भूतशुद्धिरात्मशुद्धे-रन्तर्गणिता भवति । विशुद्धेश्वरतन्त्रे लिखितमस्ति—

"शरीराकारभूतानां भूतानां यद् विशोधनम् ।
अव्ययब्रह्मसंयोगाद् भूतशुद्धिरियं मता ॥" इति ।

अथानुलोम्येन व्यक्तानि चतुर्विंशतितत्त्वानि ( 24 evolutional series ) प्रातिलोम्येन ( in retrograde process ) प्रकृतिनामकेऽव्यक्ते समर्प्य परमात्मनि विलीयन्ते ।

तन्त्रसारे भूतशुद्धिरुपदिष्टा, यथा—'( स्वाङ्क उत्तानकरौ कृत्वा सोऽहमिति जीवात्मानं परमात्मनि संयोज्य ) तत्रैव पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्दनासिकाजिह्वाचक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायूपस्थप्रकृतिमनोबुद्ध्यहंकाररूपचतुर्विंशतितत्त्वानि विलीनानि विभाव्य......' इति । एतेनैतदुक्तं भवति यत् परमात्मनि जीवात्मनः संयोगं कल्पयित्वा तत्र क्षित्यप्तेजोमरुद्व्योमगन्धरसरूप-स्पर्शशब्दनासिका-जिह्वाचक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायूपस्थप्रकृतिमनोबुद्ध्यहंकारा इत्येतच्चतुर्विंशतितत्त्वानां विलयं विभाव्येति । एष आत्मयोगप्राप्तेरुपायविशेषः । तन्त्रसारे तु तत्त्वानां सन्निवेशो नितरां व्यस्तविपर्य्यस्तभावेन दृश्यते । न कोऽपि तत्र क्रम उपलभ्यते । अस्त्यत्र शास्त्रवचनं—'भणनं परिपाट्या यत् स क्रमः परिकीर्त्तितः" इति । अत्र क्रमाक्रमयोरकिञ्चित्करत्वमिति न्यायस्य नास्ति कश्चिदवकाशः । यतो यादृशक्रमेण सृष्टि वितर्ति प्राप्ता, तस्य वैपरीत्यमनवलम्ब्य मुक्तिमार्गेऽग्रेसरणं न भवति साध्यं साधकानाम् । तन्त्रसारोपदिष्टक्रमो न हि सांख्यसम्मतो न वा योगसंगतो न चापि तन्त्राभिप्रेतो भवति ।

तन्त्रसारे चतुर्विंशतितत्त्वानां (of 24 categories of existence) सन्निवेशावसरे सांख्ययोगयो र्विविधाः परिणामा ( evolution of similars and dissimilars ) आगमवागीशेनावश्यं चिन्तिताः । परं तु प्रकृतिश्च बुद्धिश्चान्तरा मनः समानीय बीजभावेन च ( यस्माद्

यदुत्पन्नं तत्तद्भावेन ) तत्त्वानि वैलोम्येन योजयित्वा लयोपदेशप्रदानाभावात् तस्य त्रुटिः सञ्जाता। सांख्यस्य परिणामवाद ( stadium of evolution ) एवंविधो भवति। प्रकृते बुद्धितत्त्वं बुद्धितत्त्वादहंकारः। त्रिविधस्तावदहंकारो वैकारिकः सात्त्विको वा, तैजसो राजसो वा, भूतादिस्तामसो वेति ( three modifications of egohood )। ततो हि वैकारिकापरपर्य्यायात् सात्त्विकाहंकारात् पञ्चज्ञानेन्द्रियाणि (cognitive senses ) श्रोत्रत्वक्चक्षुर्जिह्वानासिकारूपाणि, पञ्च कर्म्मेन्द्रियाणि वाक्पाणिपादोपस्थपायुरूपाणि मनश्चेत्येकादशेन्द्रियाण्याविर्भूतानि। भूताद्यपरपर्य्यायात् तामसाहंकारात् पञ्च तन्मात्राणि ( subtle elements i.e. states of mere thatness ) शब्दस्पर्शरूपरसगन्धरूपाणि समुत्पद्यन्ते। पञ्चतन्मात्राभ्यः पुनः पञ्च महाभूतानि ( grosser elements ) आकाशवायुतेजोऽप्पृथिवीरूपाणि चाविर्भूतानि। चरमोक्तपञ्चमहाभूतानि तथैकादशेन्द्रियाणि विशिष्टानीति ( thoroughly specialised ) चाभिधीयन्ते। यतस्तेभ्यो नास्ति कश्चित् तत्त्वान्तरपरिणामः। अतः प्रसङ्गेऽस्मिन् महर्षिणा कपिलेन सूत्रितम्—"षोड़शविकाराः"—इति। प्रागुक्तपञ्चतन्मात्रा अहंकारो बुद्धितत्त्वञ्चेति सप्तानामविशिष्टत्वात् ते प्रकृतिविकृतित्वेनोच्यन्ते। एतेनोक्तं भवति यत् ते हि मूलप्रकृते र्विकृतयः षोड़श-विकृतीनां प्रकृतय इति। मूलप्रकृति र्न भवति कस्यापि विकृतिः परं तु सा सप्तप्रकृतिविकृतीनां षोड़शविकृतीनाञ्च कारणस्वरूपा, पुरुषः पुन र्निष्परिणामत्वान्न हि प्रकृति र्न चापि विकृतिः। एष हि सांख्यस्य सञ्चरः सृष्टिमूलकपरिणाम इत्यर्थः। परं तु प्रतिसञ्चरापरपर्य्याये विपरिणामे ( अन्तरावर्त्तने वा in involution ) सकारणां पृथिवीं सकारणे जले, सकारणं जलं सकारणे तेजसि, सकारणं तेजः सकारणे वायौ, सकारणं वायुं सकारण आकाशे

विलाप्यैकादशभिरिन्द्रियैः सह तेऽहंकारे ( in egohood ) परिणमयितव्याः। इयं हि भूतशुद्धेः प्रथमा भूमिका। सत्तामात्रसार इवाहमित्यनुभूयतेऽस्यामवस्थायाम् ( cogito, ergo sum )। द्वितीयभूमिकायामसौ पिण्डीकृतोऽहंकारो ( egohood with other 21 categories rolled into a ball ) बुद्धितत्त्वे संह्रियते। सर्व्ववस्तुषु परिव्याप्त इवाहं, नास्ति मत्तः काचित् सत्ता चेतरेषां वस्तूनामिति बोधस्तदा विना चिन्तनमुत्पद्यते। एषैव प्रजापतेरेकत्वकल्पना। तृतीयभूमिकायां ज्ञातृज्ञयभावविलोपपूर्व्वकं तत् पिण्डीकृतं बुद्धितत्त्वं ( great egohood of pure Be-ness ) सर्व्ववस्तूनामाधारस्वरूपायां प्रकृत्यां समर्पयितव्यम्। अत्र च वर्त्तते देवाधिदेवमहादेवस्य वचनम्—"चतुर्विंशतितत्त्वानि वीजभावेन योजयेदि"ति। ततश्चतुर्थभूमिकायां पुरुषार्थत्वे समाप्तिं गते पुरुषदर्शनं सुगमं भवति। एष हि सांख्यस्य विपरिणामो विलोमपरिणामोऽन्तरावर्त्तनं वा ( involution )। शाक्तवेदान्तिनस्त्वाहु र्यत् केवलं परमात्मैव लीलया प्रकृतिपुरुषाभ्यां विभज्यते। अतः पिण्डीकृते बुद्धितत्त्वे प्रकृतौ समर्पिते पुरुषार्थताजनितसर्व्वविधाभिमन्तव्याभावात् सा प्रकृतिः स्वत एव परमात्मनि तिरोधत्ते। जड़विज्ञाने सत्यपि निरवकाशे प्रागुक्तमतवादानां मोक्षशास्त्रे तेषां परमार्थता सर्व्वथैव समभ्युपगम्यते।

प्रागुक्तमतवादेन तन्त्रसारस्यानैक्याद् भूतशुद्ध्यन्तर्गततत्त्वविलयविषये वयं ब्रूमः—( "जीवात्मानं……परमात्मनि संयोज्य ) ततः प्रातिलोम्येन क्रमशः कारणीभूतगन्धादिना सह पृथिवीमप्सु संहृत्य, कारणीभूतरसादिना सहापस्तेजसि संहृत्य कारणीभूतरूपादिना सह तेजो वायौ संहृत्य कारणीभूतस्पर्शादिना सह वायुमाकाशे संहृत्य सशब्दमाकाशं तथा नासिकाजिह्वाचक्षुस्त्वक्श्रोत्रपायूपस्थपादपाणिवाचश्चाहंकारे समुपहृत्य पिण्डीकृतं तमहंकारं बुद्धौ बुद्धिमपि मूलकारणरूपायां प्रकृतौ विलाप्य तामेव प्रकृतिं कुतश्चिदभि-

मन्तव्याभावात् स्वत एव परमात्मनि विलीनां च विभाव्य……" इति। यद्यप्यस्माकमुक्तिस्तन्त्रसारप्रतिकूला भवति तथापि न हि सा तन्त्रविरुद्धा। तथा हि महानिर्व्वाणतन्त्रस्य पञ्चमोल्लासे…"भूतशुद्धिमथाचरेदि"त्युक्त्वा स्मर्य्यते—

"स्वाङ्के विधाय च करावुत्तानौ साधकोत्तमः।
मनो निवेश्य मूले च हूङ्कारेणैव कुण्डलीम्॥
उत्थाप्य हंसमन्त्रेण पृथिव्या सहितां तु ताम्।
स्वाधिष्ठानं समानीय तत्त्वं तत्त्वे नियोजयेत्॥
गन्धादिघ्राणसंयुक्तां पृथिवीमप्सु संहरेत्।
रसादिजिह्वया सार्द्धं जलमग्नौ विलापयेत्॥
रूपादिचक्षुषा सार्द्धमग्निं वायौ विलाप्य च।
स्पर्शादित्वग्युतं वायुमाकाशे प्रविलापयेत्॥
अहंकारे हरेद् व्योम सशब्दं तन्महत्यपि।
महत्तत्त्वं च प्रकृतौ तां ब्रह्मणि विलापयेत्॥" (९३-९७) इति।

कठश्रुतिरप्युद्घोषयति—

"यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेज् ज्ञान आत्मनि।
ज्ञानं नियच्छेन् महति तद् यच्छेच्छान्त आत्मनि॥" इति।

'ज्ञान आत्मनि' विशेषाहंकार इत्यर्थः। 'शान्त आत्मनि' परमात्मनि प्रकृतिद्वारेणेति ज्ञेयम्। पातञ्जलोक्तकैवल्येन सह श्रुतेरस्या ऐक्यमस्मदीय-सनत्सुजातीयशास्त्रस्य कालिकायां कालिकाभासे च ४४-४८-२५१ प्रभृति-पृष्ठेषु वैशद्येन दर्शितम्। अत एव वैलोम्येन तत्त्वविलयमधिकृत्य श्रुति-स्मृतितन्त्राणां नास्ति कश्चिद् मतविरोध एव।

'ॐ पञ्चाशल्लिपिभि र्विभक्तमुखदोःपन्मध्यवक्षःस्थलाम् …' इति मन्त्रो बाह्यमातृकान्यासीयध्याने पठ्यते। प्रयोगकाले तु 'अ'-इत्यस्मात्

'क्षं'-पर्य्यन्तानामेकपञ्चाशद्वर्णानां न्यासः क्रियते। अतो विषयोऽयं व्याख्येयो भवति। अत्र 'पञ्चाशल्लिपि'शब्देन 'एकपञ्चशल्लिपि'रिति बोद्धव्यं यथा पञ्चाशच्च ल् च पञ्चाशल्लौ। पञ्चाशल्लौ लिपयः पञ्चाशल्लिपयस्ताभिः। 'हलो यमां यमि लोपः (पा० ८।४।६४)। पाणिनिशिष्येण व्याघ्रभूतिना चोक्तम् —

"आदिलोपश्चान्तलोपो मध्यलोपस्तथैव च।
विभक्तिपदवर्णानां क्रियते शब्दवेदिभिः॥" इति।

तथा च मौग्धबोधाः—'त्रयो यत्रैकवर्गीया मध्यमस्तत्र लुप्यते' इति। पद्धतिकृद्भिः संहारमातृकाध्यानादि यत् प्रदर्शितं तत् खलु योगिनां विधेयं न तु गृहमेधिनाम्।

पूजायामर्घ्यस्थापनस्य विविधा विधयो दृश्यन्ते, ते यथा सामान्यार्घ्यं दानार्घ्यं विशेषार्घ्यं विलोमार्घ्यमित्यादयः। कालीकुले विशेषार्घ्यं निषिद्धमतस्तद्विषयकपूजायां पूजको द्वारपूजायाः प्राक् सामान्यार्घ्यस्थापनं, प्रथमध्यानान्ते दानार्घ्यस्थापनं, समर्थश्चेत् तत्पार्श्वेऽधिकारवशाद् विशेषार्घ्यं विलोमार्घ्यं वा स्थापयिष्यति। कालीकुले विशेषार्घ्यं निषिद्धम्। श्रीकुले तु विशेषार्घ्यस्य स्थापनीयत्वाद् विलोमार्घ्यस्थापनं निष्प्रयोजनम्। दुर्गापूजायाः पद्धतिग्रन्थेषु विशेषार्घ्यत्वेन विलोमार्घ्यमेव स्थाप्यते। एष हि मिथ्यासंज्ञात्वस्यैक उदाहरणविशेषः (misnomer)। श्रीकुलसाधकै र्दानार्घ्यस्थापनात् परं दानार्घ्यमिव विशेषार्घ्यं संस्थाप्य गौतमीयवचनानुसारत स्तत्र "ॐकारो वै सर्वा वाक्" इत्येवंरूपप्रमाणात् प्रणवजपादयः क्रियन्ते। विलोमार्घ्ये पुन र्वैलोम्येन सबिन्दुमातृकाद्वारा जलादि प्रदीयते। कालीकुलस्य तु देवपूजायां श्रीकुलसाधकानां विशेषार्घ्यस्थापनं न कर्त्तव्यम्। कालीकुलं श्रीकुलञ्चाधिकृत्य निरुत्तरतन्त्रस्य प्रथमपटले स्मर्य्यते—

"काली तारा च्छिन्नमस्ता भुवना महिषमर्दिनी ।
त्रिपुटा त्वरिता दुर्गा विद्या प्रत्यङ्गिरा तथा ॥
कालीकुलं समाख्यातं श्रीकुलं च ततः परम् ।
धूमावती च मातङ्गी विद्या स्वप्नावती प्रिये ॥
मधुमती महाविद्या श्रीकुलं परिभाषितम् ॥" इति ।

अर्घ्यविषयको नियमोऽयं यद् उपचारदानकाले देव्या मस्तके दानार्घ्यं देयम् आत्मसमर्पणकाले तु देव्याश्चरणेऽधिकारानुसारतो विशेषार्घ्यं विलोमार्घ्यं वा प्रदाय ततः समान्यार्घ्यं स्वमस्तके देवीसमीपे वा समर्प्य मन्त्रदेवतयोरैक्यं भावयेत् ।

"गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात् सुरेश्वरि (महेश्वरि वा) ॥"

इति जपसमर्पणस्य साधारणो मन्त्रः । एतन्मन्त्रस्य चरमार्द्ध विषये पाठान्तर-मेकमस्ति—"सिद्धिर्भवतु मे देवि त्वत्प्रसादात् त्वयि स्थिरा ॥" इति । उत्तरार्द्धपाठस्य प्रचलनं नितान्तं विरलं दृश्यते । जपसमर्पणमधिकृत्य नानावादानुवादा वर्त्तन्ते । जपफलं जपजनिततेजःपुञ्जं वा देवीहस्ते समर्प्य साधको निःस्वः जायत इत्यनेकराक्षिप्यते । अत एव सिंह-वाहिनीतन्त्रे देव्याः प्रतिवचने भगवता प्रोक्तं—'जपावसाने साधकैः कामिनीध्यानं * कर्त्तव्यम् । कामिनीं कंबीजं विभाव्य तन्मध्ये चानुलोम्य-वैलोम्याभ्यां दशधा सबिन्दुवर्णां जपेदिति । ततः कंबीजस्थं हौँ-नामक-

---

* कामिनीध्यानं यथा—
"ॐ सिंहस्कन्धसमारूढां रक्तवर्णां चतुर्भुजाम् ।
नानालंकारभूषाढ्यां रक्तवस्त्रविभूषिताम् ॥
शङ्खचक्रधनुर्बाणविराजितकराम्बुजाम् ।
कामिनीं प्रथमं ध्यात्वा जपपूजां समारभे ॥" इति ।

ज्योतिस्तत्त्वं विभाव्य तेषां सर्व्वेषामेकीभूतत्वं विचिन्त्य च तद्वाह्यजपफलं देव्या वामहस्ते समर्पयतः साधकस्य मूलमन्त्रजपजनिततेजसो न काचिद्धानि र्भवति।

अस्मन्मते तु "कृपणाः फलहेतवः" (गीता २।४६) इत्येवं-जपविचार-वशाद् ऐश्वर्य्यलिप्सुसाधकस्य सन्तोषविधानार्थं भगवता चैवमुक्तम्। अन्तर्यागे तु स्मर्य्यते—"गृहाणान्तर्जपं मातः" इति। कर्म्मसमाप्तौ चोच्यते—"एतन् नारायणचरणे समर्पितमि"ति। तथा च स्मृतिः—

"कामकामो यजेत् सोममकामः पुरुषं परम्।
अकामः सर्व्वकामो वै मोक्षकाम उदारधीः॥
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्॥" इति।

अत एव नैःस्वार्थ्येन सर्व्ववस्तूनि देव्यै समर्पयते साधकाय देव्या अदेयं नास्ति किञ्चित्। अतो हि नीलतन्त्रस्य "तेजोमयं जपं दिव्यमर्पयेद् भक्तियोगतः" इति प्रमाणानुसारतो देवीहस्ते मूलजपसमर्पणमेव कर्त्तव्य-मित्यस्यौचित्यं सर्व्वथैव मन्यामहे।

मुक्तमालारुद्रयामलशाक्तक्रमादिमतेन जपसमर्पणात् परं प्रदक्षिणाच्च पूर्व्वं स्तवकवचौ ह्यवश्यं पठनीयौ। तदनन्तरं वामहस्ते घण्टां सव्येतर-हस्ते च विलोमार्घ्यं तदभावेन सामान्यार्घ्यं वाऽऽदधतो पूजकस्य प्रदक्षिण-काले स्तोत्रपाठस्यापर एको नियमोऽस्ति। हरदत्तदीधितेः २७२-७३ पृष्ठयोरेतद्विषयानुकूलानि नानाप्रमाणानि दृश्यन्ते। श्यामाचरणकृष्ण-चन्द्रादिप्रणीतपद्धतिषु प्रदक्षिणकाले "ॐ दुर्गां शिवां शान्तिकरीम्......" इत्यादिशिवरहस्यस्थितदुर्गास्तोत्रे प्रदत्तेऽपि तत्पूर्व्वं स्तवकवचादिपाठविषयो न हि तत्र चिन्तितः।

कालीपूजावर्जमन्यान्यदेवतानां पूजायां प्रथमतः स्तोत्रं ततश्च कवचः पठ्यते। अत एवास्मन्मतेन दुर्गोत्सवेषु सप्तम्यादिपूजावसरे जपसमर्पणात्

परं प्रदक्षिणाच्च पूर्व्वं विश्वसारीयापदुद्धारकल्पस्थितस्य "ॐ नमस्ते शरण्ये शिवे सानुकम्पे नमस्ते जगद्व्यापिके विश्वरूपे"—इत्यादि 'दुर्गास्तवराज'-नामक-दुर्गाष्टकस्तोत्रस्य, ततः कुब्जिकातन्त्रोक्तस्य "शृणु देवि प्रवक्ष्यामि कवचं सर्व्वसिद्धिदम्..." इत्यादिकवचस्य च पाठ एकान्तत आवश्यकः। स्तवकवचमालादिग्रन्थेषु द्वयमेव मुद्रितं वर्त्तते। सामर्थ्यस्थले दुर्गायाः सहस्रनामपाठे फलाधिक्यं स्मर्य्यते।

ॐ नमो महिषमर्द्दिन्यै दुर्गायै नमः।

देव्या यया ततमिदं जगदात्मशक्त्या
निःशेषदेवगणशक्तिसमूहमूर्त्त्या।
तामम्बिकामखिलदेवमहर्षिपूज्यां
भक्त्या नताः स्म विदधातु शुभानि सा नः॥

यस्याः प्रभावमतुलं भगवाननन्तो
ब्रह्मा हरश्च न हि वक्तुमलं बलं च।
सा चण्डिकाऽखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु॥

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि विश्वम्॥

किं वर्णयाम तव रूपमचिन्त्यमेतत्
किं चातिवीर्य्यमसुरक्षयकारि भूरि ।
किं चाहवेषु चरितानि तवाद्भुतानि
सर्व्वेषु देव्यसुरदेवगणादिकेषु ॥

हेतुः समस्तजगतां त्रिगुणापि दोषै-
र्न ज्ञायसे हरिहरादिभिरप्यपारा ।
सर्व्वाश्रयाखिलमिदं जगदंशभूत-
मव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥

यस्याः समस्तसुरतासमुदीरणेन
तृप्तिं प्रयाति सकलेषु मखेषु देवि ।
स्वाहासि वै पितृगणस्य च तृप्तिहेतु-
रुच्चार्यसे त्वमत एव जनैः स्वधा च ॥

या मुक्तिहेतुरविचिन्त्यमहाव्रता त्वम्
अभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः ।
मोक्षार्थिभि र्मुनिभिरस्तसमस्तदोषै-
र्विद्यासि सा भगवती परमा हि देवी ॥

शब्दात्मिका सुविमलर्ग्यजुषां निधान-
मुद्गीथरम्यपदपाठवतां च साम्नाम् ।

देवि त्रयी भगवती भवभावनाय
वार्त्ता च सर्व्वजगतां परमार्त्तिहन्त्री ॥

मेधासि देवि विदिताखिलशास्त्रसारा
दुर्गासि दुर्गभवसागरनौरसङ्गा ।
श्रीः कैटभारिहृदयैककृताधिवासा
गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा ॥

ईषत्सहासममलं परिपूर्णचन्द्र-
बिम्बानुकारि कनकोत्तमकान्तिकान्तम् ।
अत्युद्भुतं प्रहृतमात्तरुषा तथापि
वक्त्रं विलोक्य सहसा महिषासुरेण ॥

दृष्ट्वा तु देवि कुपितं भ्रुकुटिकराल-
मुद्यच्छशाङ्कसदृशच्छबि यन्न सद्यः ।
प्राणान्मुमोच महिषस्तदतीव चित्रं
कै र्जीव्यते हि कुपितान्तकदर्शनेन ॥

देवि प्रसीद परमा भवती भवाय
सद्यो विनाशयसि कोपवती कुलानि ।
विज्ञातमेतदधुनैव यदस्तमेत-
न्नीतं बलं सुविपुलं महिषासुरस्य ॥

ते संमता जनपदेषु धनानि तेषां
तेषां यशांसि न च सीदति धर्म्मवर्गः ।
धन्यास्त एव निभृतात्मजभृत्यदारा
येषां सदाभ्युदयदा भवती प्रसन्ना ॥

धर्म्म्याणि देवि सकलानि सदैव कर्म्मा-
ण्यत्यादृतः प्रतिदिनं सुकृती करोति ।
स्वर्गं प्रयाति च ततो भवतीप्रसादा-
ल्लोकत्रयेऽपि फलदा ननु देवि तेन ॥

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्व्वोपकारकरणाय सदार्द्रचित्ता ॥

एभिर्हतैर्जगदुपैति सुखं तथैते
कुर्व्वन्तु नाम नरकाय चिराय पापम् ।
संग्राममृत्युमधिगम्य दिवं प्रयान्तु
मत्वेति नूनमहितान् विनिहंसि देवि ॥

दृष्ट्वैव किं न भवती प्रकरोति भस्म
सर्व्वासुरानरिषु यत् प्रहिणोषि शस्त्रम् ।

लोकान् प्रयान्तु रिपवोऽपि हि शस्त्रपूता
इत्थं मति र्भवति तेष्वपि तेऽतिसाध्वी ॥

खड्‍्गप्रभानिकरविस्फुरणैस्तथोग्रैः
शूलाग्रकान्तिनिवहेन दृशोऽसुराणाम् ।
यन्नागता विलयमंशुमदिन्दुखण्ड-
योग्याननं तव विलोकयतां तदेतत् ॥

दुर्वृत्तवृत्तशमनं तव देवि शीलं
रूपं तथैतदविचिंन्त्यमतुल्यमन्यैः ।
वीर्य्यं च हन्तृ हृतदेवपराक्रमाणां
वैरिष्वपि प्रकटितैव दया त्वयेत्थम् ॥

केनोपमा भवतु तेऽस्य पराक्रमस्य
रूपं च शत्रुभयकार्यतिहारि कुत्र ।
चित्ते कृपा समरनिष्ठुरता च दृष्टा
त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥

त्रैलोक्यमेतदखिलं रिपुनाशनेन
त्रातं त्वया समरमूर्द्धनि तेऽपि हत्वा ।
नीता दिवं रिपुगणा भयमप्यपास्त-
मस्माकमुन्मदसुरारिभवं नमस्ते ॥

शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥

प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥

सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ये ।
यानि चात्यन्तघोराणि तै रक्षास्मांस्तथा भुवम् ॥

खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ।
करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्व्वतः ॥

एवं स्तुता सुरै र्दिव्यैः कुसुमै र्नन्दनोद्भवैः ।
अर्च्चिता जगतां धात्री तथा गन्धानुलेपनैः ॥

भक्त्या समस्तै स्त्रिदशै र्दिव्यै र्धूपैस्तु धूपिता ।
प्राह प्रसादसुमुखी समस्तान् प्रणतान् सुरान् ॥

ॐ नमो महिषमर्द्दिन्यै दुर्गायै नमः ।

---

# सनत्सुजातीयं व्याकरणदर्शनं वैद्यकवृत्तान्तश्चाधिकृत्य विद्वद्भिः प्रेरितानां पत्राणां सूची ।

| पत्रसंख्याः | पत्रलेखकानां नामादयः | सनत्सुजातीय-व्याकरणदर्शन-वैद्यक-वृत्तान्तानां यद्विषयकं पत्रं तस्य निर्द्देशकत्वेन प्रथमवर्णः प्रदत्तः |
|---|---|---|
| १७० | अनन्तकृष्णायुर्व्वेदशास्त्री, कविराजः | वै० |
| १२० | अन्नदाकुमारसांख्यतीर्थः, अध्यापकः, वर्द्धमानान्तर्गत-नर्त्तनवास्तव्यः | व्या० |
| १२ | अन्नदाचरणशर्म्मा, महामहोपाध्यायः, काशीवास्तव्यः | स० |
| १३० | अन्नदाचरणशास्त्री, चट्टलवास्तव्यः | व्या० |
| १६ | अन्नदाप्रसादसुरः, व्यवहाराजीवः, डिहि-श्रीरामपुररोड-वास्तव्यः | स० |
| ७२ | अमरचन्द्रस्मृतिसांख्यतीर्थः, दिनाजपुरस्थधर्म्मसभाया अध्यापकः | स० |
| १०३ | " " | व्या० |
| १५८ | अमरनाथ-झाः (Chairman, Bihar Public Service Commission) | वै० |
| १६३ | अमूल्यरतनकाव्यव्याकरणतीर्थः, सांख्यवेदान्तरत्नः, आयुर्व्वेदशास्त्री | वै० |
| ११३ | अमृतबाजारपत्रिका, कलिकातास्थिता | व्या० |
| १४७ | अम्बिकाचरणचक्रवर्त्ती, काव्यतीर्थः, आयुर्व्वेदाचार्य्यः, काशीवास्तव्यः | वै० |

१०७ आनन्दबाजारपत्रिका, कलिकातास्थिता व्या०
१५६ " " वै०
१६६ आयुर्व्वेदपत्रिका वै०
२० आर, एम्, ठाकुरः, आलिपुरान्तर्गतटेगोरपार्कवास्तव्यः स०
१६१ आर्य्यपत्रिका वै०
१६५ आशुतोषदेवशर्म्मा विश्वासः, वेदशास्त्री, अध्यापकः वै०
३० आशुतोषशास्त्री, एम्-ए, पि. एइच. डि, स०
१०६ ईश्वरचन्द्रशास्त्री पञ्चतीर्थः, दर्शनाचार्य्यः, कलिकातावास्तव्यः व्या०
१३७ " " वै०
१२३ ईश्वरचन्द्रस्मृतितीर्थः, बगुड़ाजिला-वास्तव्यः व्या०
४३ उमापदचक्रवर्त्ती, कालीघट्टवास्तव्यः स०
४७ उपेन्द्रचन्द्रशेठः, वङ्गीयकायस्थसमाजपत्रिकायाः सम्पादकः स०
७८ उपेन्द्रचन्द्रस्मृतितीर्थः, कालीघट्टस्थकालिकासाङ्गवेद-
विद्यालयाध्यापकः स०
४० उपेन्द्रनारायणमुखोपाध्यायः, एम्-ए, बि-एल्, भूस्वामी,
उत्तरपाड़ावास्तव्यः स०
१०५ ए, पि, शर्म्मा, काशीस्थितभारतमहामण्डलस्य सम्पादकः व्या०
१४५ एइच्, आर, कृष्णन्, आइ. सि. एस् वै०
१११ एस्, दत्तः, एम्-ए, पि, एइच्, डि, द्वारवङ्गस्थमिथिल-
विद्यालयाध्यापकः व्या०
८५ ओयाइ, काइजार्, राणाबाहादुरमहोदयः, नेपालान्तर्गत-
काट्मुण्डवास्तव्यः व्या०
५३ कमलकृष्णस्मृतितीर्थः, महामहोपाध्यायः, भट्टपल्लीवास्तव्यः स०
४ कमलेश्वरानन्दः, गदाधराश्रमस्थः, भवानीपुरवास्तव्यः स०

१२६ करुणापतित्रिपाठी, एम्-ए, बि-टि, वाराणसीहिन्दुविश्व-
विद्यालयपारिषद्यः व्या०

५ कालिकानन्दः कुलावधूतः स०

१६४ कालिदासचट्टोपाध्यायः, वेदशास्त्री, कलिकातावास्तव्यः वै०

७१ कालिदासनागः, एम्-ए, डि-लिट्, कलिकातावास्तव्यः स०

११६ „ „ „ व्या०

१७७ कालिदासवन्द्योपाध्यायः, रायसाहेबोपाधिकः नागपुरवास्तव्यः वै०

३७ कालीप्रसन्नभट्टाचार्य्यः, लवपुरस्थितकालीमन्दिरसेवाभृत् स०

११२ कालीप्रसन्नविद्यापञ्चाननः, चातूरा-वास्तव्यः व्या०

२३ किरणचन्द्रदत्तः, वाग्‌बाजारस्थ'रीडिं'-पुस्तकागारसम्पादकः स०

४२ कृष्णकिङ्करदेः, कलिकातान्तर्गत-"हावड़ा"-वास्तव्यः स०

७ कृष्णमहाराजो ब्रह्मर्षिः, मायापुराख्यकुलाश्रमवासी स०

३ कृष्णवामनमुखोपाध्यायः, काशीस्थितभारतधर्म्ममहामण्डल-
सभ्यः स०

१८ क्षितीन्द्रनाथठाकुरः, तत्त्वबोधिनीपत्रिकायाः सम्पादकः स०

३५ गङ्गानाथझाः, महामहोपाध्यायः, एम्-ए, डि-लिट्
(Vice-Chancellor, Allahabad University) स०

६७ गणनाथसेनः, महामहोपाध्यायः, एम्-ए, एल् एम् एस्;
कलिकातावास्तव्यः स०

२ गम्भीरानन्दमहाराजः, वैद्यनाथस्थरामकृष्णमिशनविद्या-
पीठाध्यक्षः स०

१३६ गीष्पतिभट्टाचार्य्यः, कालीघट्टवास्तव्यः वै०

४६ गोपालचन्द्रगङ्गोपाध्यायः, एम्-ए, कटकस्थरवामेन्शमहा-
विद्यालयस्य भूतपूर्व्वोऽध्यापकः स०

६६ गोपालचन्द्रगङ्गोपाध्यायः ; एमूए, कटकस्थरयाभेन्समहा-
विद्यालयस्य भूतपूर्व्वोऽध्यापकः स०

८२ „ „ व्या०

१६ गोविनलालवन्द्योपाध्यायः, रायवाहादुरोपाधिकः, कलिकाता-
वास्तव्यः स०

१२५ चन्दननगरीयपुस्तकागारसम्पादकः व्या०

१४८ चारुचन्द्रविश्वासः, एम्-ए, बि-एल, केन्द्रीयव्यवहारमहा-
सचिवः वै०

१ चिद्घनानन्दपुरी, काशीवास्तव्यः स०

१ „ „ व्या०

६४ जयगोपालवन्द्योपाध्यायः, एम्-ए, कलिकाताविश्वविद्यालयस्य स०

६६ „ „ भूतपूर्व्वोऽध्यापकः स०

८६ „ „ „ व्या०

१६७ जयदेवसिंहः, (Principal, Y. D. College) वै०

२७ जीवनकृष्णशर्म्मा तर्कतीर्थः, ढाकास्थसारस्वतचतुष्पाठ्या
अध्यापकः स०

१५४ „ „ वै०

१५५ „ „ वै०

१५७ ज्योतिःप्रसन्नसेनशर्म्मा, कविकेशरी वै०

१३२ ज्योतिषचन्द्रघटकः, एम्-ए ( triple )

१२७ टि. शिवशंकरशास्त्री, गोदावरीजिलान्तर्गतराजमन्द्रि-
नगरवास्तव्यः व्या०

१२८ „ „ व्या०

१२६ „ „ व्या०

१०८ डि. एन्. चौधुरी, एम्-ए, श्रीहट्टान्तर्गतहविगञ्जस्थित-वृन्दावन-
महाविद्यालयाध्यापकः व्या०

१०१ ताराचरणसाहित्याचार्य्यः, काशीस्थितटीकामणिमहा-
विद्यालयस्याध्यापकः व्या०

१७५ तारानाथन्यायतर्कतीर्थः, कलिकातासंस्कृतमहाविद्यालयस्य
भूतपूर्व्वोऽध्यापकः वै०

६३ तारानाथसप्ततीर्थः, पावनाचतुष्पाठ्या अध्यापकः व्या०

११० तारामोहनवेदान्तशास्त्री, काशीवास्तव्यः व्या०

६६ तेजसानन्दस्वामी, बेलुड़मठस्थरामकृष्णमिशनविद्यालयाध्यक्षः व्या०

४१ दयालकृष्णतर्कतीर्थः, श्रीहट्टवास्तव्यः स०

६६ दिनेशझाः, परजुयारीपछवारीटोलाध्यापकः व्या०

१४० दुर्गाचरणमित्रः, एम्-ए, बि-एल्, व्यवहाराजीवः वै०

६ दुर्गाचरणसांख्यवेदान्ततीर्थः, महामहोपाध्यायः, भागवत-
चतुष्पाठीपरमाचार्य्यः स०

५१ दुर्गाप्रसन्नविद्याभूषणः, पावनास्थसारस्वतविद्यालयाध्यापकः स०

१४ देवप्रसादसर्व्वाधिकारी, सूरिरत्नः, विद्यारत्नाकरः, स्यर्,
के. टि., सि. आइ. इ, एम्-ए, डि-लिट्, कलिकाताविश्वविद्या-
लयस्य भूतपूर्व्व उपाध्यक्षः ( Vice-chancellor ) स०

१४ " " (द्वितीयपत्रम्) स०

१७४ देवीपददेवशर्म्मा, ज्योतिर्विनोदः, कालीघट्टस्थित-श्रीश्रीकालिका-
देवायतनपुरोहितः वै०

१४६ देशपत्रिका वै०

५६ दैनिकवसुमती स०

३४ द्वारकानाथचक्रवर्त्ती, एम्-ए, बि-एल, कलिकातास्थप्रधान-
विचाराधिकरणस्य भूतपूर्व्वो विचारपतिः स०

| | | |
|---|---|---|
| ४४ | द्वारकानाथ मित्रः, एम्-ए, डि-एल, भूतपूर्व्वो विचारपतिः | स० |
| १४४ | नटराजशास्त्री, आयुर्व्वेदाचार्य्यः, वैद्यविशारदः, वैद्य-वाचस्पतिः, तिरुचिरापल्लीवास्तव्यः | वै० |
| २२ | नरेन्द्रनाथलाहाः, एम्-ए, पि, एइच्. डि, पि.आर्.एस् | स० |
| १३८ | नरेन्द्रनाथसिद्धान्तशास्त्री, वङ्गीयब्राह्मणसभा-सम्पादकः | वै० |
| ८ | नारायणतीर्थस्वामी, वृन्दावनस्थकात्यायनीपीठवास्तव्यः | स० |
| ११४ | नीलमाधवस्मृतितीर्थः, वरिशालवास्तव्यः | व्या० |
| १७६ | नृत्यगोपालतर्कस्मृतिपुराणकाव्यव्याकरणतीर्थः | वै० |
| १३५ | नृपेन्द्रनाथशास्त्री, अष्टतीर्थः | वै० |
| १३ | पञ्चाननतर्करत्नः, त्यक्तमहामहोपाध्यायः, सकलदर्शनाचार्य्यः, भट्टपल्लीभास्करः | स० |
| ११ | पद्मनाथभट्टाचार्य्यः, एम्-ए, त्यक्त-महामहोपाध्यायः, गोहाटी-स्थितकटन्महाविद्यालयस्य भूतपूर्व्वोऽध्यापकः | स० |
| २८ | पुलिनविहारिहालदारः, एम्-ए, शिवपुरवास्तव्यः | स० |
| १४३ | पि. के. गोड़ेः, एम्-ए, डि.लिट्, पुण्यपत्तनवास्तव्यः | वै० |
| ४८ | प्रियनाथविद्याभूषणः, ढाकास्थसारस्वतसमाजसम्पादकः | स० |
| १२४ | फटिकलालदासः, बि-ए, चन्दननगरवास्तव्यः | व्या० |
| १७१ | ,, ,, ,, | वै० |
| ६० | फणिभूषणतर्कवागीशः, महामहोपाध्यायः, काशीवास्तव्यः | स० |
| ५७-५८ | फर्वयार्ड-पत्रिका, अमृतबाजारपत्रिका च | स० |
| १५० | बलरामस्मृतितीर्थः, पूर्व्ववङ्गसारस्वतसमाजसम्पादकः | वै० |
| ५७ | भगवद्दत्तः, बि-ए, दयानन्दमहाविद्यालयस्य गवेषकः | व्या० |
| ५२ | भट्टपल्लीस्थविद्वत्समाजः (सरस्वती-दर्शनसागरोपाधिदाता) | स० |
| १४१ | मञ्जूषापत्रिका, डाक्तारक्षितीशचन्द्रचट्टोपाध्यायसम्पादिता | वै० |

१६२ मणीन्द्रचन्द्रदेवशर्म्मा ( चाकूलादार ), L. A. M. S.
भिषग्रत्नः, विद्याभूषणः, "गाञ्जाम"-वास्तव्यः वै०
४६ मधुसूदनव्याकरणतीर्थः, ढाकास्थितरौहाटोलाध्यक्षः स०
५४ मन्मथनाथतर्कतीर्थः, भट्टपल्लीवास्तव्यः स०
६५ मन्मथनाथपञ्चतीर्थः, मूलायोड़संस्कृतविद्यालयाध्यक्षः व्या०
३ महाराजो द्वारवङ्गस्य, भारतधर्म्ममहामण्डलस्य प्रधान-
सभापतिः स०
३१ मुक्तेशनाथवसुः, डाः, कलिकातावास्तव्यः स०
१०६ यतीन्द्रमोहनभट्टाचार्य्यः, गौहाटिस्थकटन्महाविद्यालया-
ध्यापकः व्या०
१४२, यतीन्द्ररामानुजदासः ( डाः इन्दुभूषणवसु एम्-डि ),
खड़दहवास्तव्यः वै०
२६ रतिकान्तसांख्यतीर्थः, शिवपुरचतुष्पाठ्या अध्यापकः स०
५६ रमाकान्तभट्टाचार्य्यः, पावनान्तर्गत-"गुणाइगाछा"-वास्तव्यः स०
१५३ रमाप्रसादसुखोपाध्यायः, आयुर्व्वेदाचार्य्यः, कविरत्नः,
कलिकातावास्तव्यः वै०
१७ रमेशचन्द्रसेनः, एम्-ए, बिए-ल्, "ल-कलेज"-अध्यापकः स०
१३६ रवीन्द्रनाथचक्रवर्त्ती, आयुर्व्वेदशास्त्री, कलिकातावास्तव्यः वै०
११७ "रयेल एसियाटिक् सोसाइटि अब् वेङ्गल"नामकपुस्तकागारः व्या०
६५ रसिकमोहनशर्म्मा, वाग्नान-वास्तव्यः स०
६ रामकृष्णमण्डपभक्तवृन्दः, चेत्लास्थितः स०
६१ रेवतीकुमारस्मृतितीर्थः, ढाकास्थवन्दनाचतुष्पाठीपरमाचार्य्यः व्या०
३२ लक्ष्मणस्वरूपः, एम्-ए, डि-फिल्, लवपुरवास्तव्यः पाञ्जाव-
विश्वविद्यालयाध्यापकः स०

६८ वटकृष्णघोषः, एम्-ए, डि. फिल् ( मिउनिक् ), डि-लिट् ( प्यारिस् ), कलिकाताविश्वविद्यालयाध्यापकः व्या०

६८ ,, ,, (द्वितीयपत्रम्) व्या०

७६ वनमालिवेदान्ततीर्थः, एम्-ए, कलिकातासंस्कृतमहाविद्यालयस्याध्यापकस्ततो गौहाटिकटनमहाविद्यालयस्य भूतपूर्व्वोऽध्यापकः व्या०

२६ वसन्तकुमारचट्टोपाध्यायः, एम्-ए, भवानीपुरवास्तव्यः स०

१६० विजयकालीभट्टाचार्य्यः, श्यामादासवैद्यशास्त्रपीठपरिषदोऽध्यक्षः वै०

१० विजयचन्द्रसिंहः, लोकविश्रुत-"होमिओप्याथि"-चिकित्सकः स०

४५ विद्याधरसिंहदेवः, बि-ए, बि-एल्, एम्. आर. ए.एस् स०

६० विधुभूषणशर्म्मा, "जलपाइगुड़ि"-वास्तव्यः व्या०

६३ वीरराघवाचार्य्यः, एम्-ए, दाक्षिणात्यवास्तव्यः, कोकनदस्थितपीठापुरराजमहाविद्यालयस्याध्यापकः व्या०

७० वीरेशनाथविद्यासागरः, मूलायोड़स्थसंस्कृतविद्यालयाध्यापकः स०

७६ ,, ,, ,, स०

११५ ,, ,, ,, व्या०

१३४ ,, ,, ,, व्या०

५० वीरेश्वरतर्कतीर्थः, महामहोपाध्यायः, वर्द्धमानवास्तव्यः, विजयचतुष्पाठीपरमाचार्य्यः स०

८३ ,, ,, ,, व्या०

२७३ व्रजराजमहन्तः, आयुर्व्वेदशास्त्री वै०

२१ व्रजेन्द्रकिशोररायचतुर्धुरीणः, भूस्वामी, मयमनसिंहान्तर्गतगौरीपुरवास्तव्यः स०

५५ शरच्चन्द्रचट्टोपाध्यायः, औपन्यासिकः स०

८० शशिभूषणस्मृतितीर्थः, महामहोपाध्यायः, काशीवास्तव्यः व्या०

७७ शशिमोहनतर्कशास्त्री, "नोयाखाली"-वास्तव्यः स०

१५२ शिवदासवन्द्योपाध्यायः, एम्-ए, बि-एल्, आशुतोषमहाविद्यालयस्य प्रधानसंस्कृताध्यापकः वै०

१५ शैलेन्द्रनाथमुखोपाध्यायः स०

८१ शैलेन्द्रनाथसेनगुप्तः, एम्-ए, बि-एल्, वीरभूमस्थदुब्राजपुरस्य विचारकः व्या०

७५ श्यामाकान्ततर्कपञ्चाननः, काशीराजपण्डितः, काशीवास्तव्यः स०

१२१ ,, ,, ,, स०

१२२ ,, ,, ,, स०

१०४ श्यामापदकाव्यव्याकरणस्मृतितीर्थः, पाट्टुलीचतुष्पाठ्या अध्यापकः व्या०

६२ श्रीजीवन्यायतीर्थः, एम्-ए, भट्टपल्लीसंस्कृतविद्यालयस्य कलिकाताविश्वविद्यालयस्य चाध्यापकः व्या०

१४६ ,, ,, ,, वै०

१७२ श्रीधरचन्द्रदेवशर्म्मा काव्यपाणिनिस्मृतितीर्थः वै०

७३ श्रीशङ्करतर्करत्नः, प्रत्याख्यात-महामहोपाध्यायः, न्यायकेशरी, वाराणसीहिन्दुविश्वविद्यालयाध्यापकः स०

८७ ,, ,, ,, व्या०

८८ ,, ,, ,, व्या०

८६ ,, ,, ,, व्या०

१३३ ,, ,, ,, व्या०

१०२ सत्यचरणलाहाः, एम्-ए, पि. एइच्. डि, कलिकातावास्तव्यः व्या०

६१ सनत्कुमाररायचतुर्धुरीणः, एम्-ए, बि-एल, कलिकातापौरप्रतिष्ठानस्य भूतपूर्व्वोऽध्यक्षः ( Mayor ) स०

१६८ ,, ,, ,, वै०

१६६ सिद्धेश्वरसेनः, वैद्यशिरोमणिः, भिषग्रत्नः, "डाल्टन्गञ्ज"-वास्तव्यः वै०

६० "सिल्भार-जुबिलि-सुभेनिर्"-ग्रन्थः स०

६२ सीतानाथतर्कवागीशः, ढाकान्तर्गत-हल्दियाख्यग्रामवास्तव्यः स०

२५ सुधीरकुमारदासः, एम्-ए, स्कटिश्चार्च महाविद्यालयस्याध्यापकः स०

१३१ "सुप्रभातम्" ( पत्रिका ) स०, व्या०

३३ सुरेन्द्रनाथदासगुप्तः, एम्-ए, डि.लिट् (रोम), पि. एइच्-डि ( क्यान्टाव् ), सि. आइ. इ., कलिकातासंस्कृतमहाविद्यालयस्याध्यक्षः स०

१०० सुरेशचन्द्रमैत्रेयः, एम्-ए, डि-जे-महाविद्यालयस्याध्यापकः व्या०

३६ सुरेशचन्द्रसरकारः, "ष्टेट्स्म्यान"-पत्रिकाया ग्रन्थ-समालोचकः ( Reviewer ) स०

११६ सुशीलकुमार-देः, एम्-ए, पि.आर्. एस्, डि-लिट् (लण्डन), ढाकाविश्वविद्यालयस्याध्यापकः व्या०

११८ हरसुन्दरसांख्यरत्नः, श्रीहट्टवास्तव्यः व्या०

१५६ हरिगोरालचट्टोपाध्यायः, एम्-ए, एम्-डि (Homoeo), आयुर्व्वेदवाचस्पतिः, विद्यारत्नः, ज्योतिषार्णवः, तन्त्राचार्य्यः ( Lassa ) वै०

३६ हरिपदवन्द्योपाध्यायः, कालीघट्टवास्तव्यः, २४ परगणा-विचारपतिः स०

३८ हरेन्द्रकृष्णमुखोपाध्यायः, एम्-ए, बि एल्, एलाहावादवास्तव्यः स०

१५१ हारीतकृष्णदेवः, एम्-ए वै०

२४ हीरेन्द्रनाथदत्तः, एम्-ए, पि. आर्. एस् स०

---

मात जंगदम्ब—

रहस्योद्घाटनाद्देवि संरम्भो मावलम्ब्यताम् ।
दोषवन्तः सुताः सन्ति क्षमाशीला हि मातरः ॥

ॐ तत् सत् ।

---

